Publisher
**Dr. C. Giri**
Registrar
**RASHTRIYA SANSKRIT SANSTHAN**
Deemed University
56-57, Institutional Area, Janakpuri
New Delhi-110058

Reprinted, 2006

Price 1293 00 (set of six vols)



*Printer*
**CHOWKHAMBA SANSKRIT SERIES OFFICE**
K 37/99, Gopal Mandir Lane
Near Golghar (Maidagin)
Post Box No 1008, Varanasi-221 001 (India)
Phone Off 333458, Resi 334032 & 335020
e-mail cssoffice@satyam net in

| वर्णः | स्वरः | कालः | स्थानम् | आभ्यन्तरप्रयत्नः | बाह्यप्रयत्नाः । |
|---|---|---|---|---|---|
| अ | उदात्तानुदात्तस्वरिताः | एकमात्रो ह्रस्वः | कण्ठ | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| आ | उदा० १ | द्विमात्रो दीर्घः | कण्ठ | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| अ३ | उदा० १ | त्रिमात्र प्लुतः | स | तत् | ते च |
| इ | उदा० १ | एकमात्रो ह्रस्वः | तालु | तत् | ते च |
| ई | उदा० १ | २ द्विमात्रो दीर्घः | तत् | तत् | ते च |
| इ३ | उदा० १ | त्रिमात्र प्लुत | तत् | तत् | ते च |
| उ | उदा० १ | एकमात्रो ह्रस्वः | ओष्ठौ | तत् | ते च |
| ऊ | उदा० १ | द्विमात्रो दीर्घः | तौ | तत् | ते च |
| उ३ | उदा० १ | त्रिमात्र प्लुत | तौ | तत् | ते च |
| ऋ | उदा० १ | एकमात्रो ह्रस्वः | मूर्द्धा | तत् | ते च |
| ॠ | उदा० १ | द्विमात्रो दीर्घः | सः | तत् | ते च |
| ऋ३ | उदा० १ | त्रिमात्र प्लुत | स | तत् | ते च |
| ऌ | उदा० १ | एकमात्रो ह्रस्वः | दन्तमूलम् | तत् | ते च |
| ऌ३ | उदा० १ | त्रिमात्र प्लुत | तत् | तत् | ते च |
| अस्य दीर्घाभावेऽपि लकारद्वययोगात् द्विमात्रता | | | दन्तमूलम् | तत् ईषत्स्पृष्टं च | ते च |
| ए | उदा० १ | द्विमात्रो दीर्घः | कण्ठतालुनी | विवृतम् | ते च |
| ए३ | उदा० १ | त्रिमात्र प्लुत | कण्ठतालुनी | तत् | ते च |
| ऐ | उदा० १ | द्विमात्रो दीर्घः | कण्ठतालुनी | तत् | ते च |
| ऐ३ | उदा० १ | त्रिमात्र प्लुत | कण्ठतालुनी | तत् | ते च |
| ओ | उदा० १ | द्विमात्रो दीर्घ | कण्ठोष्ठौ | तत् | ते च |
| ओ३ | उदा० १ | त्रिमात्र प्लुतः | कण्ठोष्ठौ | तत् | ते च |
| औ | उदा० १ | द्विमात्रो दीर्घ | कण्ठोष्ठौ | तत् | ते च |
| औ३ | उदा० १ | त्रिमात्र प्लुत | कण्ठोष्ठौ | तत् | ते च |
| एषामनुनासिकत्वे उदा० | | यथाप्राप्तम् | यथास्थानं नासिकाऽपि | तत् | यथाप्राप्त बाह्याः |
| अनुस्वारस्य | ० | ० | नासिका | स्पृष्टम् | संवारनादघोषा महाप्राणश्च |
| विसर्गस्य | ० | ० | कण्ठ | स्पृष्टम् | विवारश्वासाघोषा महाप्राणश्च |
| ᳵक ᳵख | ० | ० | जिह्वामूलम् | स्पृष्टम् | विवारादय महाप्राणश्च |
| ᳶप ᳶफ | ० | ० | ओष्ठौ | स्पृष्टम् | विवारादयः महाप्राणश्च |
| क | ० | अर्द्धमात्रा | कण्ठमूलम् | स्पृष्टम् | विवारश्वासाघोषा अल्पप्राणश्च |
| ख | ० | अर्द्धमात्रा | तत् | तत् | विवारादयः महाप्राणश्च |
| ग | ० | सा | तत् | तत् | संवारनादघोषा अल्पप्राणश्च |
| घ | ० | सा | तत् | तत् | संवारादयः महाप्राणश्च |
| ङ | ० | सा | तत् नासा च | तत् | संवारादयः अल्पप्राणश्च |
| च | ० | अर्द्धमात्रा | तालु | तत् | विवारादयः अल्पप्राणश्च |
| छ | ० | सा | तत् | तत् | विवारादय महाप्राणश्च |
| ज | | सा | त | तत् | संवारादयः अल्पप्राणश्च |

१ वा० भाग ३

उ "उकारं परमेशानि अधःकुण्डलिनीं स्वयम्। पीतचम्पक-सङ्काशं पञ्चदेवमयं सदा। पञ्चप्राणमयं देवि! चतु-र्वर्गप्रदायकम्।

ऊ "शङ्खकुन्दसमाकारमूकारं परकुण्डलीम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं पीत-विद्युल्लता यथा। धर्मार्थकाममोक्षस्य सदा सुखप्रदा-यकम्"।

ऋ "ऋकारं परमेशानि कुण्डलीमूर्त्तिधारकम्। अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने!। सदाशिवमयं वर्णं सदा-ईश्वरसंयुतम्। पञ्चवर्णमयं वर्णं चतुर्वर्गमयं तथा। रक्त-विद्युल्लताकारमृकारं प्रणमाम्यहम्।

ॠ "ॠकारं परमेशानि! स्वयं परमकुण्डलीम्। पीतवि-द्युल्लताकारं पञ्चदेवमयम् सदा। चतुर्वर्गमयं वर्णं पञ्चप्राणयुतं सदा। त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये।

ऌ "ऌकारं चञ्चलापाङ्गि! कुण्डली परदेवताम्। अत्र ब्रह्मादयः सर्व्वे तिष्ठन्ति सततं प्रिये!। पञ्चदेवमयं वर्णं चतुर्वर्गमयं सदा। पञ्चप्राणयुतं वर्णं तथा गुण-त्रयात्मकम्। बिन्दुत्रयात्मकं वर्णं पीतविद्युल्लतां यथा।

ॡ ॡकारं परमेशानि! पूर्णचन्द्रसमप्रभम्। पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा। गुणत्रयात्मकं वर्णं तथा बिन्दु-त्रयात्मकम्। चतुर्वर्गप्रदं देवि! स्वयं परमकुण्डलीम्। एकारादीनां ध्येयरूपाण्येकारादिशब्देषु उक्तानि"।

## इति वाचस्पत्ये स्वरविभागादि।

---

## व्यञ्जनवर्णविभागादि

व्यञ्जनवर्णा त्रिविधा स्पर्शान्तस्थोष्मभेदात् तत्र कादयो मावसाना स्पर्शाः, यरलवा अन्तःस्था शषसहा ऊष्माणः। "आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः। स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" इति शिक्षोक्तेः सर्वेषां वर्णानां प्राणवायुजन्यत्वम्। तथाहि चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रे-रितमनः करणं मूलाधारस्थितमनलं ताडयति तत्ताडित-स्तानलस्तत्स्थवायुमभिहन्ति तेनाभिहत्वात् प्रभवति तत्ताडितेन वायुनाभिहत्य तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः परा वा-गित्यभिधीयते। ततो नाभिदेशपर्य्यन्तं चलितेन तेन तद्देश-संयोगादुत्पादितः शब्दः पश्यन्तीति कीर्त्त्यते एतद्द्व-यस्य सूक्ष्मसूक्ष्मतरतया ईश्वरयोगिमात्रगम्यता नास्म-दीयश्रुतिगोचरता। ततस्तेनैव हृदयदेशं परिसरता हृ-दयसंयोगेन निष्पादितः शब्दो मध्यमेत्युच्यते सा च स्वकर्णपिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्मा-कमपि समधिगम्या। ततो मूर्द्धपर्य्यन्तमाक्रमता तेन आहत्य मूर्द्धनि तत्प्रतिघातेन ततः परावृत्य मुखविवरे कण्ठादितत्तत्स्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीत्युच्यते। इत्येवं वर्णोत्पत्तिस्तेषाञ्च विभागः पञ्चधा तद्यथा स्वरतः १ उदात्तानुदात्तस्वरितभेदात् त्रै-विध्यम् तथा कालतोऽपि २ त्रैविध्यम् "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वोदीर्घः प्लुत इति कालतो नियमा अचि" इत्युक्तेः अचामेव स्वरवत्त्वात्तथात्वम् कालस्तु उच्चारणकालभेदः स च यद्यपि अचामेवोक्तस्तथापि "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम्" इत्युक्तेः व्यञ्जनाना-मपि मात्राकालेनोच्चार्य्यत्वात् कालकृतविभागोऽस्त्येव। मात्राकालस्तु "दशगुर्वक्षरैः प्राणः षड्भिः प्राणैर्विनाडिका" इत्युक्तेः विनाडिकायाः पलात्मिकायाः षष्टितमभागरूपका-लार्द्धभागो मात्रा "द्विमात्रो दीर्घ उच्यते" इत्युक्तेः दीर्घस्य गुरुतया पलषष्टितमभागत्वात् तथा च १५ पञ्चदशानु-पलात्मककालः अर्द्धमात्राकालः त्रिंशदनुपलात्मकः कालः एकमात्राकालः, विपलात्मकः कालः द्विमात्रकालः सार्द्धविपलात्मकः कालः त्रिमात्रकालः। तत्तत्कालो-च्चार्य्यत्वात् वर्णानां कालकृतविभागवत्त्वम्। इयांस्तु विशेषः स्वराणामिव व्यञ्जनानां न ह्रस्वादिविभागः किन्तु सर्वेषामर्द्धमात्रत्वमेवेति। स्थानतो (३) विभागो यथा "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु चेति" सामा-न्यत उक्त्वा वर्णभेदेन स्थानविशेषः शिक्षायामुक्तः यथा "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यन्तं विजानीयात् कण्ठ्यमाहुरसंयुतम्। कण्ठ्यावहाविचुय-शास्तालव्या ओष्ठजावुपू। स्युर्मूर्द्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः। जिह्वामूले तु कुः प्रोक्तः दन्त्योष्ठ्यो वः स्मृतो बुधैः। ए ऐ तु कण्ठ्यतालव्यौ ओऔ कण्ठो-ष्ठजौ स्मृतौ। अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयो

## स्वरवर्णविभागादि ।

स्वरवर्णा अकारादय औकारान्ताः शिक्षामते द्वाविंशतिस्त्रयोविंशतिर्वा "स्वरा विंशतिरेकश्च दुःस्पृष्टश्चेति विज्ञेय लृकार प्लुत एव चेति" च शिक्षोक्तेः । तथाहि ह्रस्वदीर्घप्लुतभेदेन अ, इ, उ, ऋ, इत्येते द्वादश लृकारः ह्रस्व एव तस्य दीर्घाभावात् । ए, ऐ, ओ, औ, इत्येते दीर्घप्लुतभेदात् अष्टौ इत्येकविंशतिः लृकारस्य लकारद्वययुक्तत्वेन ईषत्स्पृष्टतया दुःस्पृष्टत्वेन द्वाविंशतिः प्लुतस्य त्रयोविंशतिर्भेदा स्मृताः । तेषां च प्रत्येकमुदात्तानुदात्तस्वरितभेदैः त्रैविध्येन ६६ भेदा ६९ वा भेदाः । पुनस्तेषामनुनासिकाननुनासिकभेदाभ्यां द्वैविध्यात् १३२ । १३८ वा सूक्ष्मा भेदाः सर्व्वेषामेषां स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वरशब्दवाच्यता ।

तन्त्रमते तु अनुस्वारविसर्गरहिताः अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ, ॡ, इत्येते दश ए, ऐ, ओ, औ, इत्येते चत्वारः इत्येते षोडश । पाणिनीयमते लृकारस्य यथा दीर्घत्वाभावेऽपि लकारद्वययुक्तह्रस्वलृकारैकमात्रया द्विमात्रत्वसाम्यात् दीर्घत्वव्यवहारस्तथा लृकारादिशब्दे उक्तः । अनुस्वारविसर्गयोश्च अक्षरसमाम्नायसूत्रेषु अ, इ, उण्, इत्यादिषु माहेश्वरेषु चतुर्दशसु सूत्रेषु आम्नानाभावेऽपि भाष्यकृता अट्सूपसंख्यानेऽपि न स्वरवर्णत्वम् "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इत्युक्त्या स्वयंविराजमानत्वाभावात् उदात्तादिस्वरवत्त्वाभावाच्च । तयोः स्वरवर्णत्वाभावेऽपि अट्सूपसंख्यानञ्च णत्वषत्वकार्य्यार्थम् । तेन उर्वीणि इत्यादौ अनुस्वारव्यवधानेऽपि णत्वम् । अत्र च नुम्स्थानिकानुस्वारस्यैव निमित्तता न तद्भिन्नस्य, तेन बृंहि पुंस इत्यादौ न णत्वम् । अस्य तु सर्व्वानुस्वारव्यवायेऽपि तेन तृंहणं बृंहणमित्यादौ णत्वम् "अट्कुप्वाङ्नुम्व्यवायेऽपीत्युक्ते तत्र अट्प्रत्याहारेणैवानुस्वारप्राप्तेरनुस्वारमात्रव्यवाये णत्वार्थं नुम्ग्रहणम् न तु नत्वस्य नुम्स्थानिकस्यैव ग्रहणमित्युक्तोदाहरणे णत्वम् । सर्व्वेषां स्वरवर्णोच्चारणे विवृतं दूरावस्थानरूपम् आभ्यन्तरप्रयत्नः "विवृतमूष्मणां स्वराणाञ्च" इति "अचोऽस्पृष्टा इति चोक्तेः । एषां बाह्यप्रयत्नास्तु घोषनादसंवाराः "कण्ठमध्ये तु घोषाः स्युः संवृता नादभागिनः" इत्युक्तेः । यथा चैषां दूरावस्थानं तथा सरस्वत्यामस्माभिरुक्तं तच्च आभ्यन्तरप्रयत्नशब्दे उक्तम् । एतेषामुच्चारणस्थानानि प्रदर्श्यन्ते । अ इति वर्णः कण्ठमूलोच्चार्य्यः "जिह्वामूले तु कुः प्रोक्त" इत्युक्तेः । तत्र अ इति ह्रस्ववर्णः एकमात्रत्वात् । स च उदात्तानुदात्तस्वरितभेदात् त्रिधा, त्रिविधोऽपि अनुनासिकाननुनासिकरूपद्वैविध्यात् षड्विधः । एवं आ इति दीर्घः द्विमात्रत्वात् तस्य च तथैव षड्विधत्वम् । अ३ प्लुतवर्णः त्रिमात्रत्वात् तस्यापि उक्तरीत्या षाड्विध्यम् तथा च अ इत्येतत् अष्टादशानां संज्ञा पारिभाषिकी कारतकारपरत्वे स्वरूपपरता । एवम् इ, इति तालव्यः "इचुयशानां तालु" इत्युक्तेः । तस्यापि इ, ई, इ३ इति ह्रस्वदीर्घप्लुतसंज्ञा एकमात्रद्विमात्रत्रिमात्रताभेदात् तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यमित्यष्टादशविधता । तथाच इ, इति अष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । उ इति वर्णः ओष्ठोच्चार्य्यः "ओष्ठजाउपू" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः एकमात्रद्विमात्रत्रिमात्रताभेदात् त्रिविधः तेषां प्रत्येकमुक्तरीत्या षाड्विध्यमित्यष्टादशविधता । एवञ्च उ, इत्यष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । ऋ, इति मूर्द्धस्थानोच्चार्य्यः "ऋटुरषाणां मूर्द्धा" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः त्रिधा एकमात्रत्वादिभेदात् । तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यात् अष्टादशविधता । "ऋलृवर्णयोर्मिथः सावर्ण्यम्" इत्युक्ते लृकारस्य वक्ष्यमाणद्वादशभेदसहिता अष्टादशभेदाः तेन ऋ इति त्रिंशतां संज्ञा इति भेदः । तपरत्वे कारपरत्वे च स्वरूपपरता । लृवर्णः दन्तमूलोच्चार्य्यः "लृतुलसानां दन्ताः" इत्युक्तेः तस्य दीर्घाभावात् ह्रस्वप्लुतभेदेन द्वैविध्यम् तयोश्च प्रत्येकमुक्तरीत्या षाड्विध्यात् द्वादशविधतेति लृवर्णः द्वादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । अ, इ, उ, ऋ, लृ, इत्येषां वर्णपरत्वे अष्टादशादीनामुक्तानां संज्ञा । अधिकं सुपद्मे द्रष्टव्यम् एषामन्येषां विभागादि तत्तच्छब्दादौ उक्तः

अकारादीनामुक्ता वाचकशब्दाः तन्त्रोक्ता वर्णाभिधाने दर्शितास्तेऽत्र क्रमेणोच्यन्ते यथा

अ "अः श्रीकण्ठः शरेशश्च ललाटं चैकमात्रकः । पूर्णोदरी वृत्तिवेशो सारस्वतमिव नदः । महामाला वासुदेवोधमेश केशवोऽमृतम् । कीर्त्तिर्निवृत्तिर्वागीशो मरुत्तारिर्हरोमरुत् । ब्रह्मा रामानुजोह्रस्व कामश्च प्रणवाद्यक । मध्याद्यो कामरूपश्च कामेशीवाशिनी वियत् । विश्वः श्रीविष्णुकण्ठौ प्रतिपत्तिर्विरजिनी । कर्मेन्द्रियं ग्यादौ मात्मपः कामकर्णिका" ।

त्स्थस्तेन स स्मृतः" हरिवं० १० अ०। "शाशदोऽभे हरि यस्मै शशादः इति विश्रुतः। पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः। ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः। कृतान्त आसीत् समरो देवानां सह दानवैः। पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः। वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः। वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः। स सन्नद्धो धनुर्दिव्यमादाय विशिखान् शितान्। स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः। तेजसाप्यायितो विष्णोः पुरुषस्य परात्मनः। प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम्। तैस्तस्य चाभूत् प्रधनं तुमुलं लोमहर्षणम्। यमाय भल्लैरनयद्दैत्यान् येऽभियुर्मृधे। तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम्। विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम्। जित्वा पुरं धनं सर्वं सवज्रं वज्रपाणये। प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः" भाग० ९, ६, ११ "इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्" रघु। तस्यापत्यम् शिवा० अण्। काकुत्स्थ तदपत्ये। "काकुत्स्थ ईषत् स्मयमान आस्त" भट्टिः।

ककुद् स्त्री कं सुखं कौति कु-शब्दे क्विप् तुक् च पृषो० तस्य दः। वृषस्कन्धस्थमांसपिण्डाकारे, (झुंट) इति ख्याते १वृषाङ्गभेदे २श्वेतच्छत्रादौ नृपचिह्ने, ३प्रधाने, ४पर्वताग्रभागे च। "आस्य शिवत्य ककुदि पार्थिवा प्राक्षिपच्छरैः" भा० अनु० २९ अ०। ककुदि स्थित ककुत्स्थशब्दे उदा०।

ककुद पु० न० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा-क। (झुंट) इति ख्याते १वृषाङ्गभेदे, २प्रधाने, ३नृपचिह्ने, छत्रादौ, ४पर्वताग्रभागे च। "इक्ष्वाकुवंश्यः ककुदं नृपाणाम्" रघु। "नृपतिककुदं दत्त्वा यूने सितातपवारणम्" रघुः। "स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः" रघु। बहु० अवस्थायामन्त्यलोपः समा०। अजातककुत् बालवयाः वृषः। पूर्णककुत् तरुणः। पर्वतभेदे चान्त्यलोपः त्रिककुत् त्रिकूटगिरिः।

ककुदाक्ष त्रि० ककुदं राजचिह्नमक्ष्णोति धारकत्वेन व्याप्नोति अक्ष-अण् उप० स०। राजचिह्नधारके। तस्यापत्यम् रेवत्या० ठक्। काकुदाक्षिक तदपत्ये पुं०स्त्री

ककुदावर्त्त पु० ककुदि आवर्त्तः। ककुदिस्थे दुष्टरोमावर्त्तभेदे। तस्य प्राणिस्वत्वात् निन्द्यत्वाच्च मत्वर्थे इनि। ककुदावर्त्तिन् तद्विह्नयुक्ते निन्द्ये वृषे।

ककुद्मत् पु० ककुदस्त्यस्य मतुप् यवादि० न मस्य वः। १वृषे। "दर्पकलः ककुद्मान्" कुमा०। "अथोत्ततोऽशीर्नदितं ककुद्मताम्" माघ। "मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः" "हृष्टः ककुद्मानिव चित्रकूटः" रघु। ककुद् शाहस्रो नास्त्यस्य मतुप्। २ककुत्सदृशे स्थूलोदकसङ्घातयुक्ते। "ऊर्म्मिं मधुमन्तं ककुद्मान्" यजु० ९ ६, ककुद्मान् ककुच्छब्देन उपलक्ष्ये उन्नतप्रदेश उच्यते शाहस्रे मतुप् तमुत्तमान्यादुदकनिचयैर्युक्त" वेददी०। ३ऋषभौषधौ" राजनि० ४पर्वते स्वामी

ककुद्मती स्त्री ककुदिव मांसपिण्डोऽस्त्यस्याः मतुप् यवा० न मस्य वः ङीप्। कट्याम् अमर

ककुद्मिन् पु० ककुद्+अस्त्यर्थे मिनि। १वृषे २पर्वते च। "अष्टौ सहस्राणि ककुद्मिनामहम्" भा० आश्व० १०२ अ०। ४रैवते नृपे पु०। "आनर्त्तस्य तु दायादो रेवोनाम महाद्युतिः। आनर्त्तविषयश्चासीत् पुरी चास्य कुशस्थली। रेवस्य रैवत पुत्रः ककुद्मी नाम धार्म्मिकः" हरिव० १० अ०।

ककुद्मिसुता स्त्री ६त०। बलराममार्य्यायां रेवत्याम्। ककुद्मिकन्यादयोऽप्यत्र "ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया" माघः।

तस्याः पूर्व्वकालिकायामपि बलदेवपरिणयकथा यथा "रेवस्य रैवत पुत्रः ककुद्मी नाम धार्मिकः। ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम्। स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके। मुहूर्त्तभूतं देवस्य मर्त्त्यं बहुयुगं प्रभो। आजगाम युवैवाथ स्वां पुरीं यादवैर्वृताम्। कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमाम्। भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः। ततस्तद्रैवतो ज्ञात्वा यथातत्त्वमरिन्दम। कन्यां तां बलदेवाय सुव्रतां नाम रेवतीम्। दत्त्वा जगाम शिखरं मेरोस्तपसि संश्रितः। रेमे रामोऽपि धर्म्मात्मा रेवत्या सहितः सुखी" १० अ०। युधिष्ठिर उवाच "बहुयुगे काले समतीते द्विजोत्तम। न जरा रेवतीं प्राप्ता रैवतं वा ककुद्मिनम्। मेरुं गतस्य वा तस्य शर्य्यातेः सन्ततिः कथम्। स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः। नारद उवाच। न जरा क्षुत्पिपासा वा न मृत्युर्भरतर्षभ। ऋतुचक्रं न भवति ब्रह्मलोके सदाऽनघ। ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य ह। हृता पुण्यजनैः स्थानं राक्षसैः सा कुशस्थली" भा० हरि० ११ अ०।

ककुन्दर न० कस्य शरीरस्य पृष्ठदेशस्य कुं भूमिं दृणाति दृ-बा० खच्। पृष्ठवंशाधस्थे गर्त्ताकारे कूपके "

एवं केशपाशादयोऽप्यत्र । "केशपाशे मनाथे" विक्र० "तं केशपाशं प्रसमीक्ष्य कुर्य्युः" कुमा० ।

**कचमाल** पु० कच कचकान्तिं मलते मल-धृतौ अण् । उप० स० । धूमे हारा० ।

**कचरिपुफला** स्त्री कचस्य रिपु फलमस्याः । शठीवृक्षे राजनि० । [ केशहस्तादयोऽप्यत्र ।

**कचहस्त** पु० कचानां समूहः कच+हस्त । केशसमूहे अमर

**कचाकचि** अव्य० कचेषु कचेषु गृहीत्वा प्रवृत्तं युद्धम् कर्म्म-व्यतिहारे ब० इच् समा० पूर्वदीर्घश्च । केशेषु केशेषु ग्रहणपूर्व्वके प्रवृत्ते युद्धे एवं केशाकेशिप्रभृतयोऽप्यत्र अव्य० ।

**कचाकु** त्रि० कच इव अकति वक्रं गच्छति अक-उण् । १दुःशीले तस्य हि वक्रगतित्वात्तथात्वम् २सर्पे पु० ३दुरा-धर्षे त्रि० मेदि० । तयोः कुटिलगतित्वात् तथात्वम् ।

**कचाग्र** न० ६त० । १केशाग्रभागे २तत्परिमिते त्रसरेण्वष्ट-कभागे च । बालाग्रादयोऽप्यत्र "बालाग्रशतभागस्य शत-धा कल्पितस्य च भागोजीवः स विज्ञेयः" श्रुतिः ।

**कचाचित** त्रि० कचैरालुलायितैः आचितः । विकीर्णकेशे "कचाचितौ विष्वगिवागजौ गजौ" किरा० । [ङीप् ।

**कचाटुर** पु स्त्री कच इवाटति अट+उरच् । दात्यूहे स्त्रियां

**कचामोट** पु० कचमामोदयति आ+मुद णिच्-अच् । (वाला) इति ख्याते गन्धद्रव्ये । [दिशादौ ।

**कचिक** त्रि० कच+चतुरर्थ्यां कुमुदा० ठक् । केशादूरभव-

**कचु** स्त्री कच-उन् । स्वनामख्याते कन्दभेदे "कदली दाडिमी धान्य हरिद्रा मानक कचु । विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका" दुर्गो० त० । कचुस्था कालिका ।

**कचेल** न० कच्यते बध्यतेऽनेन कच-बा० एलच् । लेख्यपत्र बन्धने सूत्रादौ त्रिका० । [षिते मेदिन्यमरौ ।

**कच्चट** न० कुत्सितं चटति चट अच् बा० कौ कत् । कुत्

**कच्चर** त्रि० कुत्सितं चरति चर अच् कौ कद् । कुत्सिते मेदिन्यमरौ ।

**कच्चित्** अव्य० काम्यते कम-णिच्-कन् चीयते निश्चीयते यस्मात् कम्+चि-क्विप् पृषो० मस्य दः । खाभिलषित ज्ञापनाय कृते कामप्रवेदनरूपे १प्रश्ने, २हर्षे, ३मङ्गले च । "कच्चिन्मृगीणामनघा प्रसूतिः" "कच्चित्पथि क्लान्तिविघं तपस्तत्" "कच्चिदुपप्लवेन" इति च रघु ।

**कच्चिदध्याय** पु० भारतान्तर्गते नारदेन कृतप्रश्नेन भङ्ग्या रा-जनीतिज्ञापके ग्रन्थभेदे स च भा० सभा० ५ अ० "नारद उवाच । कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः । सुखानि चानुभूयन्ते मनश्च न विहन्यते । कच्चि-दाचरिता पूर्व्वैर्नरदेव ! पितामहैः । वर्त्तसे वृत्तिमक्षुद्रां धर्म्मार्थसहितां त्रिषु । कच्चिदर्थेन वा धर्म्मं धर्म्मेणार्थ-मथापि वा । उभौ वा प्रीतिसारेण न कामेन प्रबा-धसे । कच्चिदर्थञ्च धर्म्मञ्च कामञ्च जयतां वर ! । विभज्य काले कालज्ञ ! समं वरद ! सेवसे । कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथानघ ! । बलाबलेन सम्यक् त्वं चतुर्दश परीक्षसे । कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ! । तथा सन्धाय कर्म्माणि अष्टौ भारत ! सेवसे । कच्चित् प्रकृ-तयः सप्त न लुप्ता भरतर्षभ ! । आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्व्वशः । कच्चिन्न कृतकैर्दूतैर्ये चाप्यपरि-शङ्किताः । त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितं तथा । मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् । कच्चित् सन्धिं यथाकालं विग्रहं चोपसेवसे । कच्चिद्वृत्तिमुदासीने मध्यमे चानुमन्यसे । कच्चिदात्मसमा वृद्धाः शुद्धाः सम्बोधन-क्षमाः । कुलीनाश्चानुरक्ताश्च कृतास्ते वीर ! मन्त्रिणः । वि-जयो मन्त्रमूलो हि राज्ञो भवति भारत ! । कच्चित् संवृत मन्त्रैस्ते अमात्यैः शास्त्रकोविदैः । राष्ट्रं सुरक्षितं तात ! शत्रुभिर्न विलुप्यते । कच्चिन्निद्रावशं नैषि कच्चित् कालेऽपि बुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् । कच्चिन्मन्त्र-यसे नैकः कच्चिन्न बहुभिः सह । कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति । कच्चिदर्थान् विनिश्चित्य लघुमूलान् महोदयान् । क्षिप्रमारभसे कर्त्तुं न विघ्नयसि तादृशान् । कच्चिन्न सर्व्वे कर्म्मान्ताः परोक्षास्ते विशङ्किताः । सर्व्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम् । आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः । कच्चिद्राजन् ! कृतान्येव कृत-प्रायाणि वा पुनः । विदुस्ते वीर ! कर्म्माणि नानवाप्तानि कानि चित् । कच्चित् कारुणिका धर्मे सर्व्वशास्त्रेषु कोविदाः । कारयन्ति कुमारांश्च योधमुख्यांश्च सर्व्वशः । कच्चित् सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् । पण्डि-तो ह्यर्थकृच्छ्रेषु कुर्य्यान्निःश्रेयसं परम् । कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः । यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्द्धरैः । एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः । राजानं राजपुत्रं वा प्रापयेन्महतीं श्रिय-म् । कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च । त्रिभि-स्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः । कच्चिद्द्विषाम-विदितः प्रतिपन्नश्च सर्व्वदा । नित्योद्युक्तो रिपून् सर्वान् वीक्षसे रिपुसूदन ! । कच्चिद्विनयसम्पन्नः कुलपुत्रो बहु-श्रुतः । अनसूयुरसङ्कीर्णः सत्कृतस्ते पुरोहितः ।

कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः । हुतञ्च होष्यमाणञ्च काले वेदयते सदा । कच्चिदङ्गेषु निष्णातो ज्योतिषः प्रतिपादकः । उत्पातेषु हि सर्व्वेषु दैवज्ञः कुशलस्तव । कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः । जघन्याश्च जघन्येषु भृत्याः कर्म्मसु योजिताः । अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् । श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्म्मसु । कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः । राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ॥ कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा । उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः । कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमान् शुचिः । कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव । कच्चिद्बलस्य ते मुख्याः सर्व्वयुद्धविशारदाः । धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः । कच्चिद्बलस्य भक्तञ्च वेतनञ्च यथोचितम् । सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि । कालातिक्रमणादेते भक्तवेतनयोर्भृताः । भर्त्तुः कुप्यन्ति दौर्गत्यात् सोऽनर्थः सुमहान् स्मृतः । कच्चित् सर्व्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः । कृत्स्नाः प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि । कच्चिन्नैको बहूनर्थान् सर्व्वशः साम्परायिकान् । अनुशास्ति यथाकामं कामात्मा शासनातिगः । कच्चित् पुरुषकारेण पुरुषः कर्म्म शोभयन् । लभते मानमधिकं भूयो वा भक्तवेतनम् । कच्चिद्विद्याविनीतांश्च नरान् ज्ञानविशारदान् । यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे । कच्चिद्दारान् मनुष्याणां तवार्थे मृत्युमीयुषाम् । व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतम् । युद्धे वा विजितं पार्थ पुत्त्रवत् परिरक्षसि । कच्चित्त्वमेव सर्व्वस्याः पृथिव्याः पृथिवीपते । समश्चानभिशङ्क्यश्च यथा माता यथा पिता । कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ॥ अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् । यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम ॥ पार्ष्णिमूलञ्च विज्ञाय व्यवसाय पराजयम् । बलस्य च महाराज दत्त्वा वेतनमग्रतः । कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परन्तप । उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः । कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रिय । परान् जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् । कच्चित्ते यास्यतः शत्रून् पूर्व्वं यान्ति स्वनुष्ठिताः । साम दानञ्च भेदश्च दण्डश्च विधिवद्‌या । कच्चिन्मूलं दृढं कृत्वा परान् यासि विशाम्पते । तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि । कच्चिदष्टाङ्गसंयुक्ता चतुर्व्विधबला चमूः । बलमुख्यैः सुनीता ते द्विषतां प्रतिबाधिनी । कच्चिल्लवञ्च मुष्टिञ्च परराष्ट्रे परन्तप । अविहाय महाराज निहंसि समरे रिपून् । कच्चित् स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव । अर्थान् समधितिष्ठन्ति रक्षन्ति च परस्परम् । कच्चिदभ्यवहार्य्याणि गात्रसंस्पर्शकानि च । घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव । कच्चित् कोषञ्च कोष्ठञ्च वाहनं द्वारमायुधम् । आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः । कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते । रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् । कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च । प्रतिजानन्ति पूर्व्वाह्णे व्ययं व्यसनजं तव । कच्चिदायस्य चार्द्धेन चतुर्भागेन वा पुनः । पादभागैस्त्रिभिर्व्वापि व्ययः संशोध्यते तव । कच्चिज्ज्ञातीन् गुरून् वृद्धान् वणिजः शिल्पिनः श्रितान् । अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् । कच्चिच्चायव्यये युक्ताः सर्व्वे गणकलेखकाः । अनुतिष्ठन्ति पूर्व्वाह्णे नित्यमायव्ययं तव । कच्चिदर्थेषु सम्प्रौढान् हितकामाननुप्रियान् । नापकर्षसि कर्म्मभ्यः पूर्व्वमप्राप्य किल्विषम् । कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् । त्वं कर्म्मस्वनुरूपेषु नियोजयसि भारत । कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते । अप्राप्तव्यवहारा वा तव कर्म्मस्वनुष्ठिताः । कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा । त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीबलाः । कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च । भागशो विनिविष्टानि न कृषिर्देवमातृका । कच्चिन्न बीजं भक्तञ्च कर्षकस्यावसीदति । पादिकञ्च शतं वृद्ध्या ददास्यृणमनुग्रहम् । कच्चित् स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः । वार्त्तायां संश्रितस्तात लोकोऽयं सुखमेधते । कच्चिच्छूराः कृतप्रज्ञाः पञ्च पञ्च स्वनुष्ठिताः । क्षेमं कुर्व्वन्ति संहत्य राजन् जनपदे तव । कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत् कृताः । ग्रामवच्च कृताः प्रान्तास्ते च सर्व्वे त्वदर्पणाः । कच्चिद्बलेनानुगताः समानि विषमाणि च । पुराणि चौरा निघ्नन्तश्चरन्ति विषये न ते । कच्चित् स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः । कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे । कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च । प्रियाण्यनुभवन् शेषे न त्वमन्तःपुरे नृप ॥ कच्चिद्द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते । संचिन्तयसि

धर्मार्थौ याम उत्थाय पश्यसे । कच्चिद्वेषधरो नित्यं मनुजान् समलङ्कृतः । उत्थाय काले कालज्ञैः सह पाण्डव मन्त्रिभिः । कच्चिद्रक्ताम्बरधरा खड्गहस्ताः स्वलङ्कृताः । उपासते त्वामभितो रक्षणार्थमरिन्दम ॥ कच्चिद्दण्डेऽनु यमवत् पूज्येषु च विशाम्पते । परीक्ष्य वर्त्तसे सम्यगप्रियेषु प्रियेषु च । कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा । मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि । कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः । सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा । कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशाम्पते ॥ अर्थिप्रत्यर्थिनः प्राप्तान् पश्यसि कथञ्चन । कच्चिन्न लोभान्मोहाद्वा विश्रम्भात् प्रणयेन वा । आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि वै । कच्चित् पौरा न सहिता ये च ते राष्ट्रवासिनः । त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन । कच्चित्ते दुर्बलः शत्रुर्बलेन परिपीडितः । मन्त्रेण बलवान् कश्चिदुभाभ्यां वा कथञ्चन । कच्चित् सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः । कच्चित् प्राणांस्त्वदर्थेषु संत्यजन्ति त्वयादृताः । कच्चित्ते सर्वविद्यासु गुणतोऽर्च्चा प्रवर्त्तते । ब्राह्मणानाञ्च साधूनां तव निःश्रेयसी शुभा । कच्चिद्धर्मे त्रयीमूले पूर्व्वैराचरिते जनैः । वर्त्तमानस्तथा कर्त्तुं तस्मिन् कर्म्मणि वर्त्तसे । कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः । गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् । कच्चित् क्रतूनेकचित्तो वाजपेयांश्च सर्व्वशः । पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्त्तुमात्मवान् । कच्चिज्ज्ञातीन् गुरून् वृद्धान् दैवतांस्तापसानपि । चैत्यांश्च वृक्षान् कल्याणान् ब्राह्मणांश्च नमस्यसि । कच्चिच्छोको न मन्युर्वा त्वया प्रोत्पाद्यतेऽनघ ॥ अपि मङ्गलहस्तश्च जनः पार्श्वेऽनुतिष्ठति । कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ । आयुष्या च यशस्या च धर्म्मकामार्थदर्शिनी । एतया वर्त्तमानस्य बुद्ध्या राष्ट्रं न सीदति । विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते । कच्चिदार्य्यो विशुद्धात्मा क्षारितश्चौरकर्म्मणि । अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचिः । दृष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः । कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ उत्पन्नान् कच्चिदाढ्यस्य दरिद्रस्य च भारत । अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः । नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् । एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् । निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् । मङ्गलस्याप्रयोगञ्च प्रसङ्गं विषयेषु च । कच्चित्त्वं वर्ज्जयस्येतान् राजदोषांश्चतुर्दश । प्रायशो यैर्विनश्यन्ति कृतमूला हि पार्थिवाः । कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् । कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् । युधिष्ठिर उवाच । कथं वै सफला वेदाः कथं वै सफलं धनम् । कथं वै सफला दाराः कथं वै सफलं श्रुतम् । नारद उवाच । अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् । वैशम्पायन उवाच । एतदाख्याय स मुनिर्नारदो वै महातपाः । पप्रच्छानन्तरमिदं धर्म्मात्मानं युधिष्ठिरम् । नारद उवाच । कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् । यथोक्तमवहार्य्यन्ते शुल्कं शुल्कोपजीविभिः । कच्चित्ते पुरुषा राजन् पुरे राष्ट्रे च मानिताः । उपानयन्ति पण्यानि उपधाभिरवञ्चिताः । कच्चिच्छृणोषि वृद्धानां धर्म्मार्थसहिता गिरः । नित्यमर्थविदां तात ! तथा धर्मार्थदर्शिनाम् । कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च । धर्मार्थञ्च द्विजातिभ्यो दीयते मधुसर्पिषी । द्रव्योपकरणं किञ्चित् सर्व्वदा सर्व्वशिल्पिनाम् । चातुर्मास्यावरं सम्यङ् नियतं संप्रयच्छसि । कच्चित् कृतं विजानीषे कर्त्तारञ्च प्रशंससि । सतां मध्ये महाराज ! सत्करोषि च पूजयन् । कच्चित् सूत्राणि सर्व्वाणि गृह्णासि भरतर्षभ ॥ हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो । कच्चिदभ्यस्यते सम्यग्गृहे ते भरतर्षभ ॥ धनुर्व्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरम् । कच्चिदस्त्राणि सर्व्वाणि ब्रह्मदण्डश्च तेऽनघ । विषयोगास्तथा सर्व्वे विदिताः शत्रुनाशनाः । कच्चिदग्निभयाच्चैव सर्व्वं व्यालभयात्तथा । रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि । कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान् । पितेव पासि धर्म्मज्ञ ! तथा प्रव्रजितानपि । षडनर्था महाराज ! कच्चित्ते पृष्ठतः कृताः । निद्रालस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता । वैशम्पायन उवाच । एतां कुरूणामृषभो महात्मा श्रुत्वा गिरो ब्राह्मणसत्तमस्य । प्रणम्य पादावभिवाद्य हृष्टो राजाब्रवीन्नारदं देवरूपम् । युधिष्ठिर उवाच । एवं करिष्यामि यथा त्वयोक्तं प्रज्ञा हि मे भूय एवाभिवृद्धा । उक्त्वा तथा चैव चकार राजा लेभे महीं सागरमेखलाञ्च" ।

कच्छ त्रि॰ केन जलेन छृणाति दीप्यते छाद्यते वा छद्–छद–मा॰ अ । जलप्राये देशे । "सकच्छेऽसितदच्छ-

कटकेषु घटेषु च" भारते विराटपर्वणि ८७२ श्लोक ।

**कटकट** त्रि॰ कटप्रकार प्रकारे द्वित्वम् । १अत्यन्तातिशयिते वर्णोत्कटे २महादेवे पु॰ "नमो नामाय नाम्नाय नमः कटकटाय च" भा॰शा॰२८६अ॰शिवनामोक्तौ । अव्यक्तानुकरणे डाच् कटकटा तदनुकरणशब्दे अव्य॰। "तत्र कटकटाशब्दो बभूव सुमहास्वनः" भा॰व॰ १५७अ॰ ।

**कटकार** त्रि॰ कटं करोति कृ-अण् उप॰स॰ । १कटकारिणि शिल्पिभेदे "शूद्रायां वैश्यतश्चौर्यात् कटकार इति स्मृतः" उशनसोक्ते २वर्णसङ्करभेदे पुंस्त्री स्त्रियां ङीप् । "वणिक्प्रायतश्चैव केचित् पारशवास्तथा । वैखानसेन केचित्तु केचिद्भागवतेन च । वेदाध्ययनव्याजेन भविष्यन्ति कलौ युगे । कटकारास्तत मयानुमारावशगाः स्मृताः" । उशनसा तेषां कलौ वैखानसादिवर्णैरेव वेदधर्माधिकारप्राप्तिः वैष्णवत्वप्राप्तिरोक्ता । कृ-क्विप् । कटकृदप्यत्र "एरका कटकृद्यथा" भाग॰ १,९,१८ ।

**कटकिन्** पु॰कटकोऽस्त्यस्य इनि । १पर्वते त्रिका॰ २कटकयुक्ते त्रि॰

**कटकीय** त्रि॰ कटकाय सैन्याय हितं अपूपा॰ छ । सैन्यसाधने खर्जादौ पक्षे यत् । कटक्य तत्रार्थे त्रि॰ ।

**कटकोल** पु॰ कटति वर्षति स्रवति कट-अच् कटस्य निष्ठीवनरूपजलस्य कोलं कलीभावो यत्र कुल-संस्त्याने आधारे घञ् वा । पतद्ग्रहे (पिकदानी) त्रिका॰ ।

**कटखादक** त्रि॰कटमपि खादति-खाद-ण्वुल् । १सर्वभक्षके भक्षादके २शृगाले ३ स्त्री कटखादरपात्रे च । मध्यस्थितमिक्षुमत्ति अद-ण्वुल् । काचनिर्मितकलशे तस्य सिद्धाभावात् तथात्वम्" मेदि॰ ।

**कटघोष** पु॰कटप्रधानोघोषः आभीरपल्ली । प्राग्देशभवे ग्रामभेदे तत्र "प्राचां कटादेः" पा॰जातादौ ञ । काटघोषीय तज्जातादौ त्रि॰। एवं कटपल्वल कटनगरी कटपल्ली प्रभृतयः प्राग्देशस्थितग्रामभेदेषु । तत्र जातादौ च काटपल्वलीय काटनगरीय काटपल्लीय इत्यादयः तत्तद्ग्रामजातादौ त्रि॰

**कटङ्कट** पु॰ कटं शव कटति आवृणोति आवृणोति कट-बा॰ खच् । १वह्नौ "कटङ्कटाय भीमाय नमः पशुपताय च" अग्निपु॰ "कटो कालकटङ्कट" भा॰अनु॰१७अ॰। शिवनामसु कालाग्निरूपतया तस्य कालकटङ्कटनामता । उपचारात् वह्निजे २स्वर्णे ३चित्रकवृक्षे तस्य तन्नामनामत्वात् ४गणेशे च । गणपतिकल्पे मातृ॰ स्तौ "मितश्च वस्तिनश्चैव तथा मालकटङ्कटौ । कूष्माण्डो राजपुत्रश्च मातृकामिति" "मितवसिर्मादिनिर्विनायकस्य मार्गमिः साक्षान्नैकुण्ठवादिति" मिताक्षरायामुक्तेः ।

**कटङ्कटेरी** स्त्री कटङ्कटं वह्निं स्वर्णं तद्वत्कान्तिमीरयति ईर-गतौ अच् उप॰स॰ अचन्तत्वात् ङीप् गौ॰ ङीष् वा । १हरिद्रायां त्रिका॰ तस्याः स्वर्णवत्पीतवर्णत्वात् तथात्वम् । २दारुहरिद्रायां रत्नमाला "पीतोद्रुमश्चोमीरकटङ्कटेरी" इत्यु॰

**कटदानम्** न॰ कट देहावरणं दीयतेऽत्र दा-ल्युट् । भगवत पार्श्वपरिवर्त्तने (करोटदेवोत्थया)कर्म्मणि । तन्निमित्तोत्सवादि भाद्रशुक्लैकादश्यादौ सन्ध्यायां श्रवणनक्षत्रमध्यपादयोगेन कार्य्यम् । "मासि भाद्रपदे मासि एकादश्यां सितेऽहनि । कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते" एका॰त॰वराहपु॰। "कटदानं पार्श्वपरिवर्त्तः" रघु॰ । अत्र कालव्यवस्था उत्थानैकादशीशब्दे ११०७पृ॰ उक्ता ।

**कटपूतन** पु॰कटस्य शवस्य पूत पवित्रतां तनोति तन+अच् । प्रेतभेदे । "वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात् स्वकाच्च्युतः। अमेध्यकुणपाशी च क्षत्रियः कटपूतनः" मनुः अमेध्यकुणपमश्नत्वं तस्य धर्मोऽनेन दर्शितः ।

**कटप्रू** पु॰ कटे श्मशाने प्रवते प्रु गतौ क्विप् नि॰ दीर्घश्च । १महादेवे तस्य श्मशानवासित्वात् तथात्वम् । कटं श्मशानं प्रवते कटेन शवेन प्रवते वा । २राक्षसे ३विद्याधरे च मेदि॰ तयोः यथाक्रमं श्मशानवासित्वात् प्रेतवाहनत्वाच्च तथात्वम् । कटेन देवनसाधनद्रव्येण प्रवते । ४अक्षदेवके त्रि॰मेदि॰। कटात् समयात् आचारात् तमतिक्रम्य प्रवते । ५कामचारिणि त्रि॰ । कट मनुष्यं प्रवते । ६कीटभेदे च उज्ज्वलदत्त

**कट(टि)प्रोथ** पुंन॰कटस्य कट्या कटेर्वा प्रोथो मांसपिण्ड । :स्फिचि कटिदेशस्थे मांसपिण्डे, अमर ।

**कटभङ्ग** पु॰ कटस्य सैन्यस्य भङ्गो यस्मात् । १सैन्यसंभङ्गहेतौ नृपक्षौ । कटानामोषधीनां भङ्गः छेदनम् । २शस्यानां हस्तादिना छेदने च मेदि॰ ।

**कटभी** स्त्री कट इव भाति भा-क गौरा॰ ङीष् । १ज्योतिष्मतीलतायाम् राजनि॰ २लताभेदे भावप्र॰ । सा च "कटभी स्यादुष्णा च मधुरेषु कटभर । कटभी तु प्रमेहार्शोनाडीव्रणविषक्रमीन् । हन्त्युष्णा कफकुष्ठघ्नी कटूष्णा च कीर्त्तिता । तत्फलं तुवरं प्रोक्तं विशेषात् कफशुक्रकृत्" भा॰प्र॰ उक्तपर्यायगुणा । ३अपराजितायाञ्च श्वेतापराजिता (कोटामिरीच) वृक्षभेदे रत्नमाला ।

**कटमालिनी** स्त्री कटाना किलाद्योषधीनां माला सम्बन्धे-

तथा कण्डूयनम्" कात्या०७,२,२८ २० उक्तम् । "यदा कण्डूरुत्पद्यते दीक्षितेन तदा कण्डूयनं कार्य्यम्" कर्कः। अशमानपत्न्यास्तु कण्डूयने । "प्रथमं स्त्रीयजमानयजुः कण्डूयने" कात्या० ७ ५,८ । "विषाण्यो यजमानस्त्रीडुम्बरपलाशे: यजु: पत्न्या: कण्डूयनकर्मणि भवति स च प्रादेशमात्र" कर्कः । करणे ल्युट् । २ कण्डूयनसाधने स्त्रियां ङीप् । "कण्डूयन्यभिषेकेण प्रक्षिप्यते "प्र पर्वतस्येति"कात्या० १५,६,८ । कण्डूयनी कृष्णविषाणा" कर्कः ।

**कण्डूया** स्त्री कण्डू व-अ-स्त्रीत्वात् टाप् । कण्डूयने ।

**कण्डूरा** स्त्री कण्डू राति रा-क । (आलकुशी) कपिकच्छ्वाम् अमर । [राजनि०२कण्डूयुक्ते त्रि० ।

**कण्डूल** पु०कण्डू+अस्त्यर्थे लच् । १कण्डूकारके सूरणे ।

**कण्डोल** पु०कडि—ओलच् । १नडादिनिर्मिते धान्यादिस्थापनपात्रे (डोल) अमरः । २उष्ट्रे पुंस्त्री० उणा० स्त्रियां ङीप् । स्वार्थे कन् तत्रार्थे । कण्डोलकस्य पादाविव पादावस्य हस्त्या०नान्त्यलोपः। कण्डोलकपादः उष्ट्रपात् ।

**कण्डोलवीणा** स्त्री कण्डोल इव वीणा ।(केँदरा) चण्डालवीणायाम् अमरः । कचित् कटोलवीणेति पाठः ।

**कण्डोली** स्त्री कण्डोलस्तदाकारोऽस्त्यस्याः अच् गौ० ङीष् । चण्डालवीणायां (केँदरा ) शब्दच० ।

**कण्डोष** पु० कण्डूनामोषो यस्मात् । १शूककीटे शब्दच० (शुओयापोका) तत्स्पर्शे हि देहे कण्डूसंघस्य जायमानत्वात्तस्य तथात्वम् ।

**कण्व** त्रि०कण-क्वन् । १मेधाविनि निघ० । २स्तोतरि त्रि० "प्रदक्षिणो दिव्यः कण्वहोतारः" ऋ०५,४१,४। "कण्वा:-स्तोतारः होतारः" भा० । "आतर्षेण कण्वमन्त प्रचाविद्या"ऋ०८,२,१२, "कण्वमन्तम् कणतिः शब्दकर्मा कण्वः स्तोतारः कण्वोता वा तैर्युक्तम्"भा०। येदे मस्य न वः । लोके कण्ववत् इत्येव । कण्यते अपोद्यते क्वन् । ३पापे न०"कण्वविलोबाधाम्" वार्त्ति० । पौरवे ४नृपभेदे पु० । "अप्रतिरथोरन्तिनावोऽभूत्त्रयस्तस्यात्मजा नृपा: । सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः । तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः" भाग० ९,२०,२,९ । काश्यपगोत्रोत्पन्ने ५मुनिभेदे स च गोत्रप्रवर्त्तक । "कण्वानामाद्गिरसाजमीढकाश्वेति" आश्व० श्रौ०१२,१०१, "यामस्य कण्वोऽअदुहत् प्रपीनां सहस्रधारां पयसा मही गाम्" यज़०१७,७४, एतदधीतशाखाया: काण्वशाखात्वेन प्रसिद्धिः ।"यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः । जगृहुर्वाजसंन्यस्ता: काण्वमाध्यन्दिनादयः" भाग०१२,६,६७ । तदपत्यस्य काण्वस्य शुक्लयजुर्वेदाध्येतृत्वमुक्तम् बहुषु अणो लुक् । "पिबतो अश्विना मधु कण्वानां सवने सुतम्" ऋ० ८,८,२ अयञ्च मुनिः काश्यपगोत्रः "महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम्"भा०आ०६०। तस्य चाश्रम । "मालिनीमभितो राजन्नदीं पुण्यजलां तथा" तत्रोक्ते कण्वस्याश्रमे वक्ष्यमाणात् भा०वाक्याच्च हिमवत् प्रस्थे मालिनीनदीतीरेऽस्ति । तस्याश्रमयात्रादौ पुण्यविशेषो यथा । "कण्वाश्रमं ततो गच्छेत् श्रीजुष्टं लोकपूजितम् । धर्मारण्यं हि तत् पुण्यमाद्यञ्च भरतर्षभ ।। यत्र प्रविष्टमात्रोवै सर्व्वपापैः प्रमुच्यते । अर्च्चयित्वा पितॄन् देवान् नियतोनियताशन: । सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते" भा०व०८२अ०।६स्तुत्ये त्रि० "स इदग्निः कण्वतम कण्वसखार्य्यः" ऋ०१०,११५,५, "कण्वतमः स्तुत्यतमः" भा०

**कण्वरथन्तर** न० कण्वेन गीतं रथन्तरम् । सामगानभेदे । वैश्यस्तोमे "कण्वरथन्तर पृष्ठ भवति" श्रुति तच्च साम "पुनानः सोम" इत्यादिषु गीतम् उत्तरार्चि० ४प्र ब०२० द्रष्टव्यम् ।

**कण्वसुता** स्त्री कण्वस्य कृते प्रतिपालिता सुता । शकुन्तलायाम् सा च विश्वामित्रात् मेनकायामुत्पन्ना जातमात्रा च तया परित्यक्ता शकुन्तै रक्षिता कण्वेन प्रतिपालिता दुष्मन्तेन गान्धर्व्वविधिना व्यूढा । कण्वदुहितेत्याद्योप्यत्र । तज्जन्मकथा भा० आ० ७१अ० "तप्यमानः किल पुरा विश्वामित्रो महातपा । भृशं वै तापयामास शक्रं सुरगणेश्वरम् । तपसा दीप्तवीर्य्योऽयं स्थानान्मां च्यावयेदिति । भीत पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् । गुणैरप्सरसां दिव्यैर्मेनके ! त्वं विशिष्यसे । श्रेयो मे कुरु कल्याणि । यत्त्वां वक्ष्यामि तच्छृणु । असावादित्यसङ्काशो विश्वामित्रो महातपा । तप्यमानस्तपो घोरं मम कम्पयते मनः । मेनके ! तव भारोऽयं विश्वामित्र सुमध्यमे ।। संशितात्मा सुदुर्धर्ष उग्रे तपसि वर्त्तते । स मां न च्यावयेत् स्थानात्तं वै गत्वा प्रलोभय । चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् । रूपयौवनमाधुर्य्यचेष्टितस्मितभाषितै । लोभयित्वा वरारोहे ! तपसस्तं निवर्त्तय" तत्सहायतया वायुं प्रेषणमुक्ता "कण्व उवाच । एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम् । प्रातिष्ठत तदा काले मेनका वायुना सह । अथापश्य-

कतिपय त्रि० त्रि० कति+अयच् पुक् च । कतिशब्दार्थे २प- रिमिते च । "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघ "कतिपये परिमिते" मल्लि०। "स पतृस्तत्र कतिपयदि- वसान्यतिगह्वा दयार्त्ता" मेघ० "पोटायुवतिस्तोककतिपये- त्यादि० पा० स्वतस्य मायिकत्वात्र उत्तरनिपातः" मल्लि०। अन्यत्र तु भाष्यप्रयोगात् कतिपय इत्यादि । अस्य जसि वा पौ कतिपये कतिपया वा "परिष्कृदैन्याशनु समुदय पुरोया कतिपये" रसगङ्गा० । "एवमेव मन्त्रद्वाः सु कतिपये वावदा" शत० ब्रा० ५,१,२,१०। अद्रव्यवाचित्वे अकात् वा करणे पञ्चमी । कतिपयेन मुक्तः कतिपयान्मुक्तो वा समासे तत्र पञ्चम्या अलुक् । द्रव्यपरत्वे तु कतिपयेन विषेण मुक्त इत्येव "षट्कतिकतिपयचतुरामिति" पा० निर्देशात् तस्यास्य व्याख्यावाचकत्वेऽपि प्रत्यय डट् युक् च । कति- पयथ कतिपयपूरणार्थे त्रि० स्त्रियां ङीप् ।

कत्तृण क्ली० कुत्सितं तृणं प्रा०स०को कदादेशः । १रोहिषे (भाकुचिया) मेदिनिः । २कुम्भिकायां(पाना)रत्नमाला ३सुग- न्धितृणे अमर । अस्य गुणादि भावप्र० उक्तम् "कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा । भूतिकं ध्या- मपौरञ्च श्यामकं धूमगन्धिकम् । रौहिषं तुवरं तिक्तं कटु पाकं व्यपोहति । कफकण्ठव्याधिपित्तास्रशूलकासकफ ज्वरान्" (सौगंधिया हिन्दिभाषा)।

कत्तोय न० कुत्सितं तोयम् ईषद्वा तोयं यत्र । मद्ये त्रिका०

कत्त्रि त्रि० ब०व० कुत्सितास्त्रयः प्रा०स०को. कद् । कुत्सितेषु त्रिषु । ततो जातादौ ढकञ् कात्त्रेयक तज्जातादौ त्रि०।

कत्त्र्यादि पु० पाणिन्युक्ते जातादर्थे ढकञ्प्रत्ययनिमित्ते शब्दसमूहे स च गण कत्त्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम । (कुड्याया यलोपश्च) गणसूत्रम् ।

कत्थ श्लाघायाम् (आत्मगुणाविष्करणे) स्वीकृतकर्मकत्वात् अक० भ्वा० आ० सेट् । कत्थते अकत्थिष्ट चकत्थे । कत्थमान कत्थनम् कत्था कत्थितम् । "गर्जितेन हया किं ते कत्थितेन च मातुल । कत्थते तत् कर्मणा सर्वं कथया मा चिरं लघा" भा०आ० १,१५१ अ० । "परो- क्षमिव मे राजन् कत्थसे भीत कर्षत" भा० व० ३२ अ० "कत्था कत्थिष्यते न क" भट्टिः "जगद्गुणोपायाभिकत्थ- मानः" भाग० ५,१२,७ । आर्षप्रयोगे परस्मैपदत्वात् पर० । "तयाऽभिगम्य वित्तानि को विकत्थेद्विचक्षण" भा० वि० ५० अ० । प्रशमनेऽपि सक० । कत्थन । "उपयनं निरत प्रयाने" भाग० ८,७,२७ । "कत्थन्ते प्रलपन्ति" श्रीधर० । विवेकेन कथने । "कौशिकस्तिष्ठ कत्थति" भा० प० २५,३३ । कर्त्तरि युच् कत्थन ।

कत्पय न० क सुखमिवाचरति क+क्विप् शतृ कत् सुखकर पयोऽस्य वेदे नि०ङ समा०। सुखकरजले । "त्वं चिविदया कत्पय पयानम्" ऋ० ५,३२,६ । "कत्पयं सुखकरं पयो यस्य तम्" भा० । निरुक्ते ६,१ इमान्तरमधि- कृत्योक्तम् "सुखपयस सुखमस्य पय" इति लोके तु कत्- पयस् इत्येव ।

कत्र शैथिल्ये अद० चुरा० उभ० अक० सेट् । कत्रयति ते अचकत्रत् त । "तद्दुष्यादत्र्यदीर्घस्य युक् चेत्यनुप्रायप्यपि" इत्युक्ते वा दीर्घ; युक् च । कत्रापयति ते इत्यपि । कत्राम् बभूव आस चकार चक्रे । एव कत्रापयाम् बभूवेत्यादि ।

कत्सवर न० कद्-वैक्लव्ये स कत्सु विक्लवता ग्रियते ए- अच् । स्कन्धे शब्दच० ।

कथ वाक्यरचनायाम् अद० चुरा० उभ० सक० सेट् । कथ- यति ते अचीकथत् त अचकथत् त । कथयाम् बभूव आस चकार चक्रे । कथितः कथयित्वा कथयितुम्-कथनम् । कथा "तं जना कथयन्तीह यावत् भवति गौरियम्" भा० अनु० ३१९८ "हन्त ते कथयिष्यामि सुमितिस्रास पुरा- तनम्" भा० ४,४५,८ । "कथाच्छलेन बालाना नीतिस्तदिह कथ्यते" हितो० "यो मनु कथयतेऽष्टम." देवी० "मत्तेक कथितान्येता सं क्षेपेण द्विसप्तति" मनुः ।

अनु+अनुवादे कथितस्य कथने अन्वादेशे अनुकथयति अनुवदति प्रायु पसर्गे प्रकर्षादिना कथने अस्य प्र वचनतया द्विकर्म- कत्वम् तत्र गौणे कर्मणि लकार ।

कथक त्रि० कथ-ण्वुल् । १वाचके २तत्त्वनिर्णयार्थं वाद- रूपकथाकर्त्तरि च कथकस्य कथायां नियमविशेष ख- ण्डने दर्शितः यथा ।

"वाद कथाया वादिनोर्नियममेतादृशं मन्यन्ते प्रमाणा दय सर्वतन्त्रसिद्धान्ततया सिद्धा, पदार्थाः सन्तीति कथ- काभ्यामभ्युपेयम् इति । तदपरे न क्षमन्ते । तथाहि प्रमा- णादीनां सत्त्वं यदभ्युपेयं कथकेन, तत् कस्य हेतो ,? किं तदनभ्युपगच्छता वादिप्रतिवादिभ्यां तदभ्युपगमसमाहित्य- नियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात् १, उत कथकाभ्यां प्रव- र्त्तनीयवाग्व्यवहार प्रति हेतुभावात्२, उत लोकसिद्ध- त्वात्३ अथ वा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसङ्ग- कत्वात्४ । न तावदाद्य. तदनभ्युपगच्छतोऽपि चार्वाकमा-

वादीना सत्तापीत्यमेव तावामङ्गीकर्त्तुमुचिता तादृश व्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्ताभ्युपेयापि तथा व्यवहारनियमव्यतिरेके कथाप्रवृत्ति विना तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्यवसानात् । नापि तृतीय लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा । नाद्य । विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् तद्वर्मेव च पूर्वं नियमस्य गवेषणात् । नापि द्वितीय शरीरात्मतादीनामपि तथा सति भवता लोकसंव्यताऽऽपातात् । पचात्तद्विचारबाध्यतया नाभ्युपेयतद्वति चेत् तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यतद्वति तावन्न भवति । नापि चतुर्थः वाद्यन्योभयता प्रमाणादीन्यभ्युपगम्य व्यवहारनियम कथायामाश्रयते तथैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनैरस्माभिरभ्युपगमनात् । तस्य यदि मा प्रति प्रमाणादिप्रामाण्यकत्वं तदा त्वां प्रत्यपि समान प्रसङ्गः” ।

‘वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्य” अनु०चि० । १कथोपजीविनि नाटकाचार्ये कथाप्राणे । चन्द्रवा० ।

कथङ्कथिक त्रि० कथङ्कथमिति, प्रत्येनास्यास्य कथम् कथम् +वा०ठन् टिलोप । कथ कथमिति प्रश्नकारके । तस्यभाव तल् । कथङ्कथिकता पृच्छायां स्त्री हेमच० ।

कथङ्कारम् अव्य०कथम्+णमुल् ।१कथंकृत्वेत्यर्थे“कथङ्कारमनालम्बा कीर्त्तिर्द्यामधिरोहति’’ माघ “अन्यथैवकथमित्थं सु सिद्धाप्रयोगश्चेत्” पा० सिद्धाप्रयोग: अर्थत्वात् प्रयोगानर्हे” सि०को० उक्तेः अनर्थकात् कृञ णमुल् । २कथमित्यर्थे च ।

कथञ्चन अव्य० कथम्+चन मुग्धबोध “यथाकथञ्चित्तु चिन्ह”इत्यमरोक्तेः पा०तादृशप्रत्ययाभावात् चन शब्दे—अच् । कथम् चनकसकर्षणमिति पदद्वयमिति भेद । चनशब्दे विवृति । १यथकथे २कथमित्यर्थे एकायेनेत्यर्थे च । “न विभाग, कथञ्चन’ स्मृति । “न वै जनोजातु कथञ्चन व्रजेत्”भाग०।५,२०। ‘’अनतिक्रमणीयो हि विधी राजन् कथञ्चन” भा० स्त्री०८अ० । ‘’पदार्थ वामात्मेति विभागो न कथञ्चन’ हरिकारिका ।

कथञ्चित् अव्य० । कथम्+चित् मुग्धबो० पा०न चित् प्रत्ययः “किञ्चु चिदधर्म”यथाकथे चिन्ह इत्यमरोक्तेः ।“किं इत्थं चित्तरम्’’पा०उक्तेश्च पदद्वयमिदम् । १यथाकथञ्चिते कथमित्यर्थे २कष्टेनेत्यर्थे च “अथ कथञ्चिद्गतभूमिभाग” कुमा०।‘‘कथञ्चित् फणिना गणैरथ “भाव । तत स्वार्थे त्रिमया०ठक् तान्तत्वात् क । कथञ्चित्क । कष्टभवे त्रि० ।

कथन्ता स्त्री कथम्+भावे तल् । किम्प्रकारतायाम् ।

कथम् अव्य० किम्+प्रकारार्थे थमु कादेशश्च । कस्मिन् प्रकारेइत्यर्थे । “हातुमन्था कथं न खु सम्पदोऽपि निरापद’’ रघु “अवाप्यते वा कथमन्यथा द्वय तथाविधं प्रेम पतिश्च तादृश ” कुमा० ‘‘कथं तु शक्तोऽनुनयो महर्षे ” रघु ‘‘सा प्रक्रिया या कथमित्यपेक्षा” मीमा० तत्र “कथमितीतिकर्त्तव्याकाङ्क्षा” कात्या० १, २,१८सू०भा० कर्क । प्रसङ्गात् तत्र कुत्र कर्मणि कथमाकाङ्क्षोत्यापितिकर्त्तव्यरूपाङ्गस्यग्रहणमेवास्ति कुत्र वा नास्ति तदेतत् कात्यायनसूत्रभाष्ययोर्दर्शितमत्र प्रदर्श्यते । ‘‘अथेदं विचार्यते द्विप्रकार कर्म नित्यं काम्यं च तत्र नित्यं प्रकृत्येदं विचार्यते कि सर्वाङ्गोपेत कर्त्तव्यम् ? उत यावन्त्यङ्गानि कर्त्तुं शक्नोति तावद्भिरङ्गैरुपेतमिति ? किं तावत् प्राप्तम् ? सर्वाङ्गोपेतमेव कर्त्तव्यमिति कुत ? नावर्जयस्य कथम्भावस्य सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वात् अन्यथा अङ्गाम्नानस्य वैयर्थ्यापत्ते तस्मात् सर्वाङ्गोपेतमेव कर्त्तव्यमित्येवं प्राप्तेऽभिधीयते । ‘‘विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात्” कात्या०१,२,१८,सू० “नित्यकर्मणि अग्निहोत्रदर्शपूर्णमासादिके विगुणेऽपि अङ्गहीनेऽपि कृते फलनिर्वृत्ति’ प्रत्यवायपरिहाररूपस्य फलस्य निष्पत्तिर्भवत्येव अङ्गप्रधानभेदात् यतोऽङ्गानि च प्रधानानि च भिन्नानि नित्येषु चेतिकर्त्तव्यता नास्ति । कुत इतिकर्त्तव्यता नास्ति ? अपूर्वाभावात् अपूर्वप्रयुक्ता हीति कर्त्तव्यता, सा च तस्मिन्नसति न भवितुमर्हति कथम् अपूर्वाभाव ? फलाभावात् कालान्तरभाविफलसिद्ध्यर्थं ह्यपूर्वं कल्प्यम् तच्चावति फले कल्पयितु न शक्यते तस्मात् नित्येषु यागस्यैव भाव्यत्वम् न फलस्य। तस्मात् पौर्णमास्याममावास्यायां वाग्निरुद्दिश्य पुरोडाशस्त्वकाल्य इत्येतदुपदिश्यते तेन इष्टार्थानि याज्याङ्गानि स नियतोपकारकाणि तैर्विना प्रधानभूतयागनिष्पत्तिर्न भवति, अन्यथानुपपत्त्या, तावद्भिरुपेत प्रधानं कर्त्तव्यम् नाङ्गानि । अङ्गान्यङ्गानि तु काम्यप्रयोगार्थम् । अतोऽग्निकालपुरोडाशमात्रमादरणीयम् अन्यदङ्गजातमदृष्टार्थं नादरणीयमिति । कथं तर्हीदं नित्यत्वे इष्टवत्प्रवृत्ति ? इति चेत् उच्यते प्रत्य-

ल्युट्। २मर्दने, ३भक्षणे च। आधारे ल्युट्। ४युद्धे। "तथा प्रजानां कदनं विदधुः कदनप्रियाः" भाग० ७,२,११। "स सारचक्रकदनात् प्रसृता प्रणीत" भाग० ७,९,१६। कद—भावे ल्युट्। ५विक्लवतायाम्।

**कदन्न** न० कुत्सितमन्नं कोः कदादेशः। कुत्सितान्ने। शास्त्रेऽभक्ष्यत्वेन वैद्यकेऽपथ्यत्वेन च कीर्त्तितमन्ने च कदन्नम्।

**कदपत्य** न० कुत्सितमपत्यं कोः कदादेशः। मूर्खादिरूपे कदाचारयुते चापत्ये। "कदपत्यभृतं दुःखं येन विन्दन्ति दुर्भरम्" भाग० ४,१३,२७। "कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात्" भा० ४, १३,४२।

**कदम्ब** पु० कद—करणे अम्बच्। दर्शनेन विरहिवैक्लव्यसाधने (कदम) वृक्षे अमरः। "एकद्वारि चतुश्चक्रं वनमालाविभूषितम्। कदम्बकुसुमाकारं लक्ष्मीनारायणं विदुः" शालग्रामलक्षणे पुरा०। "कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः" रघु "कदम्बमुकुले हृदि समारोपिता" उद्भटः। "कदम्बो मधुरः शीतः कषायो लवणो गुरुः। सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः" भावप्र० तद्गुणा उक्ताः। तस्य भेदास्तत्रैव। "नीपो महाकदम्बः स्यात् धारा कदम्ब इत्यपि। द्वितीयोऽल्पप्रमाणश्च हस्तपुष्पः कदम्बकः"। हारिद्रस्तु रजोगन्धः। धूलीकदम्बको धाराकदम्बः षट्पदप्रियः। हस्तपुष्पः केशराढ्यः प्रावृषेण्यः कदम्बकः। नीपो महाकदम्बोऽपि तथा भङ्गफलो मत" इति भरतः। अत्र प्रावृषेण्य इत्युक्तिर्गौडादिदेशाभिप्रायेण मथुरादौ चैत्रेऽपि तत्पुष्पप्रादुर्भावस्याभिभूतत्वतो बहुशो दृष्टत्वात् अत एव "यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः" काव्यप्र० चैत्रमासे तत्पुष्पवर्णनमुपपद्यते। एतेन कदम्बपदं केलिकदम्बपरमिति" सा० द० रामचरणव्याख्यानं मथुरादिदेशानभिगमनमूलकम्। तेन देशभेदात्तस्य वसन्तप्रावृडुभयभवत्वमिति ध्येयम्। कविभिस्तु वर्षाकाल एव तद्वर्णनं क्रियते यथा माघे रैवतकपर्व्वतवर्णने। वर्षर्त्तुवर्णनमधिकृत्य "विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम्। भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः"। वर्षावर्णने च तत्रैव "अयमनेकपनीपवनीरभि" तत्र च प्राशस्त्यादेव "कदम्बं चूरणं तथार्द्रिकादिना हरिशयने भोजननिषेधः। इति" "त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः" मेघदू०। आषाढमधिकृत्यैव तत्पुष्पप्रभवमाह। इति तस्य प्रावृषेण्यत्वमपि।

कदम्बवृक्षश्च मेरुविष्कम्भपर्वतरूपमन्दरस्य विशेषचिह्नवृक्षः "विष्कम्भशैलाः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सुपार्श्वः। तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलकाख्याः"। सि० शि०। अस्य सुमेरोः।

**कदम्बक** पु० स्वार्थे कन्। १कदम्बवृक्षे। सञ्चाया कन् संघर्षेण विक्लवीकरणसाधने २समूहे न० अमरः। "गजकदम्बकमेचकमुच्चकैः" माघ। "पृथुकदम्बकदम्बकराजितम्" किरा०। "कदम्बकं वातमजं मृगाणाम्" भट्टि। कदम्ब इव कायति कै—क। ३हरिद्रौ ४सर्षपे च राजनि०। कदम्बकोरकोपरिस्थसूक्ष्मांशतुल्यफलत्वात्तस्य तथात्वम्। ५देवताड़वृक्षे न० रत्नमा०।

**कदम्बकोरकन्याय** पु० कदम्बपुष्पस्य यथा सर्व्वावयवेषु युगपत्कोरकाणामुत्पत्तिसादृश्ये एकदोत्पत्तौ दृष्टान्तभेदे शब्दानामुत्पत्तिर्हि द्विविधा। "वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता। कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते" भाषा० उक्ता। दशदिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा इत्येवं कदम्बकोरकोत्पत्तिवत् सर्व्वासु दिक्षूपर्य्युपरि शब्दानामुत्पत्तिरिति कस्यचिन्मतम् न्यायमते तु वीचितरङ्गन्यायेनैव तदुत्पत्तिरिति भेदः।

**कदम्बद** पु० कदम्ब तदुपरिस्थः सूक्ष्मांश इव दीयते खण्ड्यते दो—खण्डने कर्म्मणि घञर्थे क। सर्षपे शब्दचन्द्रिका तस्य कदम्बकोरकोपरिस्थितसूक्ष्मांशतुल्यफलत्वात्तथात्वम्।

**कदम्बपुष्पा** स्त्री कदम्बस्येव पुष्पमस्त्यस्याः अर्श० अच्। मुण्डितिका वृक्षे (मुण्डेरी) रत्नमाला तत्र पुष्पमिव पुष्पमस्याः निपाते तु ङीप्। कदम्बपुष्पी तत्रैवार्थे राजनि०।

**कदम्बभ्रमवृत्त** न० कदम्बवत् भ्रमस्य वृत्तं गोलक्षेत्रम्। सि० शि० उक्ते गोलवृत्तभेदे। तल्लक्षणप्रकारस्तत्रैव "तत्रापमवृत्तप्राच्या याम्या सौम्या च दिक् सदा। कदम्बभ्रमवृत्तं च कथीयास् परितो भ्रमात्। लोके तु जिनतुल्यांशैस्तत्र स्यात् क्रान्तिपक्षिणो। सर्व्वत्र समवृत्ताच्च याम्योदक्कुजसंगमे। तत्तिर्य्यग्गतसूत्राणां योगः स समपातकः। समभुवः कदम्बाख्यास्तुपरि द्युचरात्रयेत्। सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे। अयनं वलनं मध्ये स्यात् समभुवस्तयोः। कदम्बभ्रमवृत्तान्तरायनं च भिन्नपातात्। कदम्बसमवृत्तान्तः स्फुटं सर्वदिशां च तत्"।

**कदम्बवादिन्** पु० कदम्ब इति वादः स नास्त्यस्य णिनि। कदम्बवायुक्ते नीपे। "कदम्बवादिनो नीपान् हृष्टा कष्टकितैरिव। वनान्ततो भ्रमकामं कदम्बकपदम्बकै."

कम्बोर्भित्वा जलविरहितं स्वारजम्बीरयुक्तं । मध्ये मध्ये ततुपरि चितेमार्द्रकेणातिपूर्णं स्वादुस्तूर्णं भवति सुतरां गर्भदण्डः कदल्याः । योनिदोषहरोदण्ड कादल्योऽसृक्प्रदरं जयेत् । रक्तपित्तहरः शीत गुरु र्योऽग्निप्रदर्शनः" भावप्र० तद्गुणाद्युक्तम् ।

कदा अव्य० कस्मिन् काले किम्+दा—कादेशः । कस्मिन्काले इत्यर्थे अनद्यतने काले तु तत्रार्थे वा हिल् कर्हि कदा वा । "कदा काश्यां गमिष्यामि कदा द्रक्ष्यामि शङ्करम् । इति ब्रुवाणः सततं काशीवासफलं लभेत्" काशीख० । "न पादौ भावयेत् काश्ये कदा चिदपि भाजने" भत्त "कदा वाराणस्यामिह सुरधुनीरोधसि वसन्" "कदा वृन्दारण्ये विमलयमुनातीरपुलिने" "कदायोध्यामध्ये विमलसरयूतीरपुलिने । "विभाषा कदाकर्ह्योः" पा० एतद्योगे भव्ये लट् । "कदा कर्हि भुङ्क्ते भोक्ष्यते भोक्ता वा" सि० कौ० । अव्ययत्वात् ततो भवार्थे च्युल् तुट् च । कदातन कस्मिन् काले भवे त्रि० स्त्रियां ङीप्

कदाकार त्रि० कुत्सिताकारोऽस्य को॰ कद् । १कुत्सिताकारे कुमति ब० । २कुत्सिताकारे पु० ।

कदाख्य पु० कुत्सिता आख्या यस्य कादेशः । (कुड़) १द्रव्ये कुष्ठौषधौ शब्दच० । २कुत्सिताख्ये त्रि० । कुमतिश० । ३कुत्सिताख्यायां स्त्री ।

कदाचन अव्य० कदा+चन मुग्ध० । अनिर्द्धारिते कस्मिंश्चित् काले इत्यर्थे "कदाचन स्तरीरसि" श्रुतिः । "पश्चाचन-मते भाषौ पक्षयोरुभयोरपि । चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन" ति०त० पु० । कदा+चित् मुग्ध० ।

कदाचित् कदापीत्यर्थे अव्य० । "ततः कदाचिद्दुर्व्यस्तां भैरवो मैथुनं ययौ" कालिका० "अक्षसमानेन कटं कदाचित्" रघु । पा० चिद्रनपनयामावात् "अव्याकरणे तु चिद्रनेकमरोक्ते व पदद्वयमिति विवेक्तव्यम् ।

कदामत्त पु० कदाचिन्मत्तः । ऋषिभेदे तत गोत्रापत्ये इञ् । कादामत्ति तदपत्ये पु स्त्री तस्य बह्वुत्वे उपका० वा इञो लुक् । कादामत्तय कदामत्ता ।

कदुष्ण न० ईषत् उष्णम् ईषदर्थकस्य कोः कद् । १ईषदुष्णे स्पर्शे २तद्वति त्रि० । "भवन् कदुष्णः पुरमाविवेश" भट्टि । "कदल्या स्तरयं न्यस्तं कदुष्णं कर्णपूरकम्" "कदुष्ण कर्णयोर्दद्यमेतद्धा वेदनापहम्" सुश्रु० । पक्षे कादेश कोष्ण तदर्थयोः "भुवं कोष्णेन कुण्डोध्नी" रघुः । पक्षे कवादेश कवोष्ण तन्नार्थयो ।

कदुड कार्कश्ये अक० कदुवत् दोपधत्वात् क्विप् कद् इति भेद

कद्रथ पु० कुत्सितो रथः कोः कद् । कुत्सिते रथे "युधि कद्रथवद्भीम बभञ्ज ध्वजशालिनम" भट्टि ।

कद्रु पु० कद—रु । १पिङ्गलवर्णे । २तद्वति त्रि० "प्राजापत्य कद्रुमालभेत" तैत्ति० २,१,४,२, ३कर्वुरवर्णे पु० ४तद्वति त्रि० "माषः कृष्णाय कद्रु" काल्वा० २२,४,१२, "कद्रु कर्वुर श्वास" वेदभाष्या० । संज्ञायामूङ् । कद्रू दैनाममातरि दक्षप्रजापतेः कन्याभेदरूपे कश्यपपत्नीभेदे स्त्री "कद्रूस्तु सुषुवे नागान्" भा० आ० । काद्रवेयशब्दे विवृतिः । "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश । अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा । क्रोधा प्रधा च विश्वा च विनता कपिला मुनि । कद्रूश्च मनुजव्याघ्र ! दक्षकन्यैव भारत" भा० आ० ६५ अ० । "ओका भारतशार्दूल ! कश्यपस्य निबोध मे । अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खशा । सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा । कद्रुर्मुनिश्च राजेन्द्र ! तास्वपत्यानि मे शृणु भा०हरि० ३अ०

कद्रुण त्रि० कद्रुरस्त्यस्य पामा० न । पिङ्गलवर्णान्विते ।

कद्रु(द्रू)पुत्र पु० ६त० ष्टषो० वा ह्रस्व । १सर्पे । कद्रु(द्रू)सुतादयोऽप्यत्रार्थे । तस्य कद्रूतनयत्व ..वयशब्दे वक्ष्यते ।

कद्र्यञ्च् त्रि० कञ्चिदञ्चति किम्+अञ्चु—क्विप् अद्र्यादेश किमः कः । अनिश्चितदेशगन्तरि कश्चित् गन्तरि अनिश्चितदेशगमने । शसादावचि अल्लोपदीर्घौ । कद्रीचः कद्रीचा इत्यादि । स्त्रियां ङीप् अल्लोपदीर्घौ । कद्रीची । "सा कद्रीची कं स्विदर्द्धं परागात्" ऋ० १,१६४,१७ । "कद्रीची कगतेसृग्निश्चितगमनादित्य प्राप्नुवतो" भा० ।

कद्वत् त्रि० कः कशब्दोऽस्त्यस्य मतुप् मस्य व पृषो० । कशब्दयुक्ते मन्त्रादौ स्त्रियां ङीप् । "कद्वत्यो वाक्यानुवाक्याः कोहि प्रजापतिः" शत०ब्रा० ६,२,२,५ ।

कद्वद त्रि० कुत्सितं वदति वद—अच् कोः कदादेशः । गर्हितवाक्यवादिनि अमर "तेन जात प्रियापाये कद्वदं हंसकोकिलम्" भट्टिः । २दुःस्वरशब्दयुक्ते च "वरगुणिदा वरककद्वदो नृप" माघ ।

कद्वर न० क जलमिवाचरति क+क्विप् सन् कता व्रियते इ-कर्मणि अप् । दधिस्नेहे तक्रभेदे कदरे त्रिकाण्डशे० ।

कधप्रिय पु० कस्य मीणाति मी—क वेदे पृषो० । अकस्मप्रिये । "कध त्वम् कधप्रिये भुजे" ऋ० १,३० २ । अस्य प्रीणाति प्री—क्विप् वेदे पृषो० । कधप्री अत्रैवार्थे । "कह

घञ् वा । १सूरणे (ओल) २मस्तमात्रमूले, ३गृञ्जने च (गाँजर) ४मेघे पु॰मेदि॰ । मेघनामनामके ५कर्पूरे च पु॰ "कन्दमूलफलाशिन." चातुर्मास्यव्रतविधि "कन्दोद्भेदा वेणुभा वारिधीव" माघ "वने निवसतां तेषां कन्दमूलफलाशिनाम्" भा॰अनु॰ ४१अ॰ । कन्दभेदास्तेषां विशेषगुणाश्च सुश्रु॰दर्शिताः यथा "कन्दानत ऊर्द्ध्वं वक्ष्याम । विदारीकन्दशतावरीबिसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ।

रक्तपित्तहराण्याहुः शीतानि मधुराणि च । गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च । मधुरो वृंहणो वृष्य शीतः स्वर्य्योऽतिमूत्रलः । विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः । वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी । महती चैव हृद्या च मेधाग्निबलवर्द्धिनी । ग्रहण्यर्शोविकारघ्नी वृष्या श्वेता रसायनी । कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः । बिसं विदाहि विष्टम्भि रक्तपित्तप्रसादनम् । विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् । गुरुविष्टम्भिशीतौ च शृङ्गाटककशेरुकौ । पिण्डालुकं कफकरं गुरु वातप्रकोपणम् । सुरेन्द्रकन्दं श्लेष्मघ्नो विपाके कटुपित्तकृत् । वेणोः करीरा गुरवः कफमारुतकोपनाः । स्थूलसूरणमाणकप्रभृतयः कन्दा ईषत्कषाया कटुका रूक्षा विष्टम्भिनो गुरवः कफवातघ्नाः पित्तहराश्च । माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम् । स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकीलहा । कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः । कषायाः पित्तशमना विपाके मधुरा हिमाः । वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः । मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायन" । भावप्र॰ उक्तगुणादि तत्तच्छब्दे दृश्यम् । माधवनिदानोक्ते ६योनिरोगभेदे पु॰ । "दिवास्वप्नादति क्रोधाद्व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा । पूयशोणितसङ्काशो लकुचाकृति, सन्निभः । उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिज" स च चतुर्विधः वातपित्तकफसन्निपातजभेदैः । "रूक्षं विवर्णं स्फुटितं वातिकं तम् विनिर्द्दिशेत् । दाहरोगज्वरयुतं विद्यात् पित्तात्मकन्तु तम् । नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् । सर्व्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः । सन्निपातात्मकोऽसाध्यः शेषाः कृच्छ्रसाधना" ।

कन्दगुडुची स्त्री कन्दोद्भवा गुडूची शाक॰ । १गुडूचीभेदे, राजनि॰(गुलञ्ची) इति ख्याते २कन्दे च शब्दच॰

कन्दट न॰ कदि-अटन् । श्वेतोत्पले (शादासुँदि) शब्दरत्ना॰

कन्दफला स्त्री कन्दात् फलं यस्याः । कुष्माण्डीलतायाम् । (छोटकुम्डा) राजनि॰

कन्दबहुला स्त्री कन्दैर्बहुला । त्रिपर्णिकायां राजनि॰

कन्दमूल न॰ कन्दरूपं मूलमस्य । मूलके (मूलो) राजनि॰

कन्दर न॰ कम् जलेन दीर्य्यते दृ-कर्म्मणि अप् । १आर्द्रके २अङ्कुशे च राजनि॰ ३गुहाकारे पर्वतनितम्बस्थाने पुं स्त्री अमर॰ । स्त्रीत्वे गौरा॰ ङीष् कन्दरी । ४गुहायां स्त्री टाप् अमरटीकान्तरम् "निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनि स्यात्" मेघ॰ । "विदूरम प्रतिमवलग्नकन्दरम्" माघ॰ "नानाबलप्रसवैर्नानाकन्दरसानुभिः" भाग॰ ३,६,१०, "अम्भार्णवेन शरणार्दितमाद्रिकन्दरम्" भाग॰ ७,१२,१८, कन्दस्य जलिकटदेशादि कप्रादि॰ चतुरर्थ्यां र । कन्दर ५कन्दसन्निकृष्टदेशादौ त्रि॰ । कं गजशिरोदीर्य्यतेऽनेन करणे अप् । ६अङ्कुशे मेदि॰

कन्दराकर पु॰ ६त॰ । पर्व्वते मेदिनिः ।

कन्दराल पु॰ कन्दराकाङ्कारावाणाति-अल-अच् । १गर्द्दभाण्डवृक्षे २प्लक्षवृक्षे(पाकुड़) ३अक्षोटवृक्षे च राजनि॰ संज्ञायां कन् । ४प्लक्षवृक्षे पु॰शब्दरत्ना॰ ।

कन्दरोद्भवा स्त्री कन्दरे उद्भवति उद्+भू-अच् । १गुरुपाषाणभेदीष्टके राजनि॰ २कन्दरोद्भवमात्रे त्रि॰ । ३गुडूचीभेदे स्त्री राजनि॰ [राजनि॰

कन्दरोहिणी स्त्री कन्दात् रोहति रुह-णिनि । गुडूचीभेदे

कन्दर्प पु॰ कम् सुखं तस्मै तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । १कामदेवे अमरः । "तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः" कुमा॰ । २सङ्गीतोक्ते ध्रुवभेदे । "लघोर्विंशतिवर्णाभिर्भवेत् कन्दर्पसंज्ञकः । वीरे वा करुणे वा स्यात् सत्कृताबे विधीयते" सङ्गी॰दा॰

कन्दर्पकूप पु॰ कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे जटाधरः ।

कन्दर्पकेलि पु॰ कन्दर्पस्य केलिः । कामकेलौ केलौ तत्कालिकत्वात्तोपमा. अच् आख्यायिकायां तस्य लुक् । प्रकृतभेदे ।

कन्दर्पजीव पु॰ कन्दर्पं जीवयति सञ्जीवयति जीव-णिच्-अच् । कामवृद्धिकारफलके वृक्षभेदे राजनि॰ ।

कन्दर्पमथन पु॰ कन्दर्पं मथ्नाति मथ-ल्यु । १महादेवे कन्दर्पदमनकामदहनादयोऽप्यत्र पु॰ । [त्रिका॰ ।

कन्दर्पमुषल पु॰ कन्दर्पं मुषल इव । पुरुषचिह्नभेदे ।

"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम जायते" "निषादः शूद्रकन्यायां यः पारशव उच्यते"। "क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रोनाम प्रजायते" मनुः तत्र अनूढदुहितरि "कन्याया दत्तशुल्काया म्रियेया-सेत् वर आव्रजेत्" कात्या० स्मृतिः "पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया हरस्तां न विदुष्यति, विष्णुः। ऋतुत्रयमुपास्यैव कन्या कुर्य्यात् स्वयंवरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा" विष्णुः। ५ अनूढस्त्रीमात्रे "प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते"। "योऽकन्यां दूषयेत् कन्याम्"। "अभिषह्य तु यः कन्यां कुर्य्यात् दर्पेण मानवः" इति च याज्ञ०। "कन्यैव कन्यां या कुर्य्यात् तस्याः स्याद्द्विशतो दमः"। "या तु कन्यां प्रकुर्य्यात् स्त्री सद्योमौण्ड्यमर्हति" मनुः "कन्यैवाक्षतयोनिर्या" स्मृतिः। "सह कन्यया स्थविरराजकन्यया" माघः। "सैकान्ते पुनःकन्याभिस्तृणयोक्ष्मितहृच्चकम्" रघुः। कन्याया भावः। कन्यात्व संज्ञात्वान्न पुंवद्भावः। पुरुषसङ्गरहितावस्थायां "कन्यात्वे दूषिते चापि कथं यास्ये द्विजोत्तम।" भा० आ० ६०। विवाहयोग्यावस्थायाञ्च। "प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः" भा० आ० १११अ०। कन्यादानविक्रययोर्गुणदोषौ यथा। "कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्। विवाहकाले संप्राप्ते यथोक्तगुणशे वरे। क्रमात् क्रमं क्रतुशतमनुपूर्वं लभन्ति ते। श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः। विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते। ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति। ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः। दिव्येन तु विवाहेन यस्तु कन्यां प्रयच्छति। भित्त्वा द्वारन्तु सूर्य्यस्य स्वर्गलोकञ्च गच्छति। गान्धर्व्वेण विवाहेन यस्तु कन्यां प्रयच्छति। गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम्। शुल्केन दत्त्वा यो कन्यां तां पश्चात् सम्यगर्ज्जयेत्। स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम्। (शुल्केन गोमिथुनरूपशुल्कोपलक्षितेनार्षेण) न मन्युं कारयेत्तासां पूज्याश्च सततं गृहे। ब्रह्मदेया विशेषेण ब्राह्मी भोज्या सदा भवेत्। कन्याया ब्रह्मदेयायामभुञ्जन् सुखमश्नुते। अथ भुञ्जीत यो मोहात् भुक्त्वा स नरकं व्रजेत्। अप्रजायाश्च कन्याया न भुञ्जीयात् कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि"। यः कन्यापालनं कृत्वा करोति यदि विक्रयम्। विक्रेता धनलोभेन कुम्भीपाकं स गच्छति। कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश। मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति" ब्रह्मवैवर्त्तपुराणम्। विवाह्यकन्यात्वस्तुपरमशब्दे उक्तम्। उद्वाहशब्देऽधिकं दृश्यम्। "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु" इत्युक्तेः सुतपदस्य पुंस्त्वाविवक्षया कन्यापुत्रसंस्कारेषु वृद्धिश्राद्धे प्राप्ते "स्त्रीणामप्येवमेव स्यात्" मनूक्तेश्च सर्वसंस्कारेषु च प्राप्तेषु च निष्क्रमभिन्नकन्यासंस्काराणाममन्त्रकतया कर्त्तव्यता तत्रापि वृद्धिश्राद्धनिषेधमाह महानि० त० ८५ प०। "कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते"। वृद्धिश्राद्धनिषेधेऽपि विवाहे वृद्धिश्राद्धमिष्यत एव "कन्यापुत्रविवाहेषु वृद्धिश्राद्धं विधीयते इति" स्मृतेः। "नामान्नप्राशनं चूडां कुर्य्यात् स्त्रीणाममन्त्रकम्"। इति "जातकर्मादि चूडान्तं कुमार्य्याश्चाप्यमन्त्रकम्। कर्त्तव्यं पञ्चभिर्वर्षैरेकं निष्क्रमणं विनेति" च। तेन निष्क्रमणभिन्नाः संस्काराः अमन्त्रकाः कार्य्याः। विवाहस्य चोपयमस्थानीयत्वात् न तदाचरणम् इति भेदः ईषत्कुमार्य्याम् मेदि० ७ स्थूलैलावायां दशारात्रीकन्दे ८ वन्ध्याकर्कोट्याञ्च राजनि०। "म्नौ चेत् कन्या" इत्युक्तलक्षणे चतुरक्षरपादके १० छन्दोभेदे च। कन्याराशिश्च उत्तरफाल्गुन्याः शेषपादत्रयहस्तचित्रार्द्धनक्षत्रघटितः राशिचक्रे षष्ठ १५० सार्द्धशतांशोत्तराशीत्युत्तरशतांशपर्य्यन्तस्त्रिंशदंशात्मकः। तदधिष्ठातृदेवतास्वरूपञ्च। "कन्या प्लवस्था स्मृता। कन्या शस्यहुताशयुक्" इति जातकप०। उक्तम् तस्य राशेः वर्णादिकमुक्तम् नील०ता० यथा। "पाण्डुर्द्विपात् स्त्री द्वितनुर्यमाशा निशा मरुत् शीतसमोदयः क्षमा। कन्यार्द्धशब्दा शुभभूमिर्वैश्यरूक्षाल्पसङ्ग प्रसवा शुभा च"। ततश्चास्य राशेः पाण्डुवर्णः द्विपदराशिता स्त्रीराशिता द्विस्वभावात्मकता दक्षिणदिगभिमुखता रात्रिरूपता वातप्रकृतित्व शीतवीर्य्यं समराशित्वम्। भूमिरूपता। अर्द्धशब्दः शुभस्वामिकत्वम् वैश्यवर्णत्वम् रूक्षत्वम् अल्पसङ्गोऽल्पप्रसवः अक्रूररूपत्वञ्च। तस्य जन्मप्रश्नजन्मफलाद्युपयोगार्थमुक्तम् अस्य स्वामी बुधः। अन्यत्रास्य शीर्षोदयत्वमुक्तम्। "कन्यागते पूषणि" "असम्प्राप्ते भास्करे कन्याम्" इति च ज्यो०।

कन्याका स्त्री कन्यैव कन् अतुक्तपुंस्कत्वात् न ह्रस्वः। कन्यायाः शब्दर०।

कन्याकाल पु० कन्यात्वोपलक्षितः कालः शा०त०। अविवा-

"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम जायते" "निषादः शूद्रकन्यायां यः पारशव उच्यते"। "क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रोनाम प्रजायते" मनुः तत्र अनूढदुहितरि "कन्याया दत्तशुल्काया म्रियेत यदि दायकः। देवराय प्रदातव्या यदि कन्याऽनुमन्यते" याज्ञ० "अन्यस्यै चेद्यथा कन्या व्रजेत् वर आव्रजेत्" कात्या० स्मृतिः "पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया हरन्तां न विदुष्यति, विष्णुः। ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा" विष्णुः। ५ अनूढस्त्रीमात्रे "प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते"। "योऽकन्या दूषयेत् कन्याम्"। "अभिषद्य तु यः कन्यां कुर्यात् दर्पेण मानवः" इति च याज्ञ०। "कन्यैव कन्या या कुर्यात् तस्याः स्याद्विगुणो दमः"। "या तु कन्यां प्रकुर्यात् स्त्री सद्योवै मौण्ड्यमर्हति" मनुः "कन्यैवाक्षतयोनिर्या" स्मृतिः। "सह चान्यया स्थविरराजकन्यया" माघ। "ते कान्ते पुनः कन्याभिस्तुष्णोऽभ्रुतलक्षकम्" रघुः। कन्याया भावः। कन्यात्व संज्ञात्वान्न पुंवद्भावः। पुरुषसङ्गरहितावस्थायां "कन्यात्वे दूषिते चापि कथं यास्ये द्विजोत्तम।" भा० आ० ६०। विवाहयोग्यावस्थाययाञ्च। "मादाय तस्मै कन्यात्वं पुनः स परमद्युतिः" भा० आ० १११अ०। कन्यादानविक्रययोर्गुणदोषौ यथा। "कन्या ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्। विवाहकाले संप्राप्ते यथोक्तहरणे परे। क्रमात् क्रमं क्रतुशतमनुपूर्वं लभन्ति ते। श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः। विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते। ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति। ब्रह्मलोकं व्रजेत्सोऽपि ब्रह्माद्यैः पूजितः परैः। दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति। भित्त्वा द्वारन्तु सूर्यस्य स्वर्गलोकञ्च गच्छति। गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति। गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम्। शुल्केन दत्त्वा यो कन्यां तां पश्चात् सम्प्रवर्द्धयेत्। स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम्। (शुल्केन गोमिथुनरूपशुल्कोपलक्षितेनार्षेण) न मन्तुं कारयेत्तासां पूज्यास्ताः सततं गृहे। ब्रह्मदेया विशेषेण ब्राह्मी भोज्या सदा भवेत्। कन्याया अप्रदेयायामभुञ्जन् सुखमश्नुते। यश्च भुञ्जीत यो मोहात् भुक्त्वा स नरकं व्रजेत्। अप्रजायाश्च कन्यायां न भुञ्जीयात् कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि"। यः कन्यापालनं कृत्वा करोति यदि विक्रयम्। विक्रेता धनलोभेन कुम्भीपाकं स गच्छति। कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश। मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति" ब्रह्मवैवर्त्त पुराणम्। विवाह्यकन्यालक्षणमुपयमशब्दे उक्तम्। उद्वाहशब्देऽधिकं दृश्यम्। "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु" इत्युक्तेः सुतपदस्य पुंस्त्वाविवक्षया कन्यापुत्रसंस्कारेषु वृद्धिश्राद्धे प्राप्ते "स्त्रीणामप्येवमेव स्यात्" मनूक्तेश्च सर्वसंस्कारेषु च प्राप्तेषु च निष्क्रमभिन्नकन्यासंस्काराणाममन्त्रककर्तया कर्त्तव्यता तत्रापि वृद्धिश्राद्धनिषेधमाह महानि० त० ८५ प०। "कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते"। वृद्धिश्राद्धनिषेधेऽपि विवाहे वृद्धिश्राद्धमिष्यत एव "कन्यापुत्रविवाहेषु वृद्धिश्राद्धं विधीयते इति" स्मृतेः। "नामान्नप्राशनं चूड़ां कुर्य्यात् स्त्रीणाममन्त्रकम्"। इति "जातकर्मादि चूड़ान्तं कुमार्य्याश्चाप्यमन्त्रकम्। कर्त्तव्यं पञ्चभिर्वर्षैरेकं निष्क्रमणं विनेति" च। तेन निष्क्रमणभिन्ना संस्काराः अमन्त्रकाः कार्य्याः। विवाहस्य चोपयमस्थानीयत्वात् न तदाचरणम् इति भेदः ईषत्कुमार्य्याम् मेदि० अस्य लैंवायां दशाराम्रीकन्दे दृक्वन्ध्याकर्कोट्याञ्च राजनि०। "म्नौ चेत् कन्या" इत्युक्तलक्षणे चतुरक्षरपादके १० छन्दोभेदे च। कन्याराशिश्च उत्तरफाल्गुन्या शेषपादत्रयहस्तचित्रार्द्धनक्षत्रघटितः राशिचक्रे षष्ठ १५० सार्द्ध शतांशोत्तराशीत्युत्तर शतांशपर्य्यन्तस्त्रिंशदंशात्मकः। तदधिष्ठातृदेवतास्वरूपञ्च। "कन्या शुक्लस्या स्मृता। कन्या शस्यकृतायुक्" इति जातकप०। उक्तम् तस्य राशेश्च वर्णादिकमुक्तम् नील०ता० यथा। "पाण्डुर्द्विपात् स्त्री द्वितनुर्यमाशा निशा मरुत् शीतसमोदय च। कन्यार्द्धशब्दा शुभभूमिवैश्यरूक्षाल्पसङ्ग प्रसवा शुभा च"। तत्रयास्य राशेः पाण्डुवर्णः द्विपदराशिता स्त्रीराशिता द्विस्वभावात्मकता दक्षिणदिगभिमुखता रात्रिरूपता वातप्रकृतित्व शीतवीर्य्यं समराशित्वम्। भूमिरूपता। अर्द्धशब्दः शुभस्वामिकत्वम् वैश्यत्वं रूक्षत्वम् अल्पसङ्गोऽल्पप्रसवः शुक्ररूपत्वञ्च। तत्र जन्मप्रश्नजन्मफलाद्युपयोगार्थमुक्तम् अस्य स्वामी बुधः। अन्यदास्य शीर्षोदयत्वमुक्तम्। "कन्यागते पूषणि" "अप्राप्ते भास्करे कन्याम्" इति च ज्यो०

कन्याका स्त्री कन्यैव कन् अनुकम्पायाम् न ह्रस्वः। कन्या-वा मव्टर०।

कन्याकान्त पु० कन्यात्वोपलक्षितः काम ग०त०। कविता-

क्षेपणविहिते काले शिवाङ्काङ्कन उपशमनञ्च उक्त॰।

**कान्यकुब्ज** पु॰ कन्या कुब्जा यत्र। कान्यकुब्जदेशे हेम॰ "कन्याकुब्जेऽपिबत् सोममिन्द्रेण सह कौशिकः" भा॰ व॰ ८७अ॰। कन्यानां वध्वः अत्र कान्य तत् कुब्जं यत्र वा न्यकुब्जोऽस्मात्। यथा च तद्देशे कन्यानां वायुना कुब्जत्वं कृतं तथा वर्णितम् रामा॰ आ॰ काण्डे। "कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम्। जनयामास धर्म्मात्मा घृताच्यां रघुनन्दन!। तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः। उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः। गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव!। आमोदं परमं जग्मुर्वराभरणभूषिताः। अथ ताश्चारु-सर्वाङ्ग्यो रूपेणाप्रतिमा भुवि। उद्यानभूमिमागम्य तारा इव घनान्तरे। ताः सर्वा गुणसम्पन्ना रूपयौवनसंयुताः। दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत्। अहं वः कामये सर्वा भार्य्या मम भविष्यथ। मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ। चलं हि यौवनं नित्यं मानुषेषु विशेषतः। अक्षयं यौवनं प्राप्ता अमर्य्यश्च भविष्यथ। तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः। अपहस्य ततो वाक्यं कन्याशतमथाब्रवीत्। अन्तश्चरसि भूतानां सर्वेषां सुरसत्तम!। प्रभावज्ञाश्च ते सर्वाः किमस्मानवमन्यसे। कुशनाभसुता देव! समस्ताः सुरसत्तम!। स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम्। मा भूत् स कालो दुर्मेधः! पितरं सत्यवादिनम्। अवमन्य स्वधर्मेण स्वयं वरमुपास्महे। पिता हि प्रभुरस्माकं दैवतं परमञ्च सः। यस्य नो दास्यति पिता स नो भर्त्ता भविष्यति। तासां तु वचनं श्रुत्वा हरिः परमकोपनः। प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः। ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम्। प्रविश्य च सुसम्भ्रान्ताः सलज्जाः साश्रुलोचनाः। स च ता दयिता भग्नाः कन्याः परमशोभनाः। दृष्ट्वा दीनास्तदा राजा सम्भ्रान्त इदमब्रवीत्। किमिदं कथ्यतां पुत्र्यः! को धर्म्ममवमन्यते। कुब्जाः केन कृताः सर्वाश्चेष्टन्त्यो नाभिभाषथ"।

**कन्याकूप** पु॰ तीर्थभेदे। "कन्याकूपे उपस्पृश्य महाकायो कृतोदक" भा॰ अनु॰ २५ अ॰।

**कन्याट** पु॰ कन्या अटत्यत्र आधारे घञ्। वासभवने त्रिका॰ स्त्रीणां वासगृहे एव गतिविधानात् अन्यत्र गतिनिषेधाच्च तस्य तथात्वम्।

**कन्यातीर्थ** न॰ १कुरुक्षेत्रस्थे कुञ्जरसमीपस्थतीर्थभेदे कुञ्जर-तीर्थमुपक्रम्य "ततो गच्छेत धर्म्मज्ञ! कन्यातीर्थमनुत्तमम्। कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्" भा॰ व॰ ८३ अ॰। २कावेरीसङ्गमनिकटस्थे २तीर्थभेदे च। "ततो गच्छेत कावेरीं वृतामप्सरसां गणैः। तत्र स्नात्वा नरो राजन्! गोसहस्रफलं लभेत्। ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत्। तत्रोपस्पृश्य राजेन्द्र! सर्वपापैः प्रमुच्यते" ८५ अ॰। अधरोक्तपञ्चाद्युतत्वेन तस्य कन्यातीर्थत्वम्।

**कन्याधन** न॰ कन्याकाले लब्धं धनम्। स्त्रीधनभेदे मुक्तादौ। अनूढावस्थायामेव तादृशधने भ्रातुरधिकार "भगिनी शुल्कं सोदर्य्याणाम्" गौतमोक्तेः।

**कन्यापति** पु॰ ६त॰। जामातरि जटाधर।

**कन्यापाल** पु॰ कन्याप्रधानं पालः। १माताध्ये वणिग्-जातिभेदे त्रिका॰ स्त्रियां ङीप्। उप॰ स॰। २कन्यायाः पालके त्रि॰।

**कन्याभर्त्तृ** पु॰ कन्याभिः भार्य्यात्वेन भर्त्ता। १कार्त्तिकेये तस्य सौन्दर्य्यातिशयात् सर्वकामिनीभिर्भर्त्तृत्वेन प्रार्थनात् तथा-त्वम्। "आग्नेयश्चैव स्कन्दश्च" इत्युपक्रम्य "कन्याभर्त्ता विभुश्चैव गाङ्गेयो रेवतीसुत" भा॰ व॰ २३१ कार्त्ति-केयनामसु तन्नाम पठितम्। ६त॰। २जामातरि पु॰।

**कन्यामय** न॰ कन्या+प्राचुर्य्ये मयट्। कन्याप्रचुरे अन्तःपुरे।

**कन्याराम** पु॰ बुद्धभेदे त्रिका॰।

**कन्यावेदिन्** पु॰ कन्यां दुहितरमाविन्दति आ+विद्-णिनि। जामातरि। "कन्यां कन्यावेदिनश्च पशून् मुख्यान् सुतानपि" स्मृ॰ द्वितीयाश्राद्धस्य प्रशस्त-जामातृलाभरूप फलमुक्तम्।

**कन्याश्रम** न॰ तीर्थभेदे। "ततः कन्याश्रमं गच्छेत् नियतो ब्रह्मचर्य्यवान्। त्रिरात्रोपोषितो राजन्! नियतो नियताशन। लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति" भा॰ व॰ ८३।

**कन्यासंवेद्य** न॰ तीर्थभेदे। "कन्यासंवेद्यमासाद्य नियतो नियताशनः। मनोः प्रजापतेर्लोकानाप्नोति पुरुषर्षभ!। कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत!। तदक्षयमिति प्राहुर्ऋषयः संशितव्रताः" भा॰ व॰ ८४।

**कन्याह्रद** पु॰ तीर्थभेदे। "यस्य कन्याह्रदे वासो देवलोकं स गच्छति" भा॰ अनु॰ २५ अ॰।

**कनिका** स्त्री कन्यैव कन् कात्पूर्वस्यात इत्त्वम्। कन्यायां शब्दरत्ना॰।

**कनुप्र** न० कन–इन् कन्या दीप्त्या ओषति उष–क । हस्त-पुच्छे शारा० । [काप प्रनिकर्पात न खलम् कपोल ।

**कप** चलने (सौत्र) पर० अक० सेट् । कपति अका(क)पीत् च-

**कप** चलने भ्वादि० इदित् आत्म० अक० सेट् । कम्पते अक-म्पिष्ट चकम्पे । कम्पा कम्पनम् क.म्पत: कम्पमान कम्पितम् कम्पन: कम्पित्वा । "समुद्राव चकम्पिरे" देवीमा० "चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वर "रघु । 'महाकटितटश्रोण्य: कम्पमाना पयोधरै:' भा० व० ४१। णिचि कम्पयति अचिकम्पत् । अत्र फलवत्कर्त्तर्य्यपि पर० "क्ष्मा कम्पयन्त्योनिपतन्ति चोल्का:"। आर्षे क्वचित् न पर० "अकम्पयत मेदिनीम्" रामा० ।

अनु+दयायामनुग्रहे सक० "प्रकम्पेनेनानुचकम्पिरे सुरा" माघ' आर्षे णिच् तदर्थे "प्रथमा हरिविधानुकम्पयत" कुमा० । कर्म्मणि अनुकम्प्यते 'अनुकम्प्यतामयं जन:' पुनर्दर्शनेन शकु०।

आ+ईषच्चलने । "अशोकशाखाकम्पितपुष्पगन्धि·" रघु । सम्यक्कम्पने च 'यत' विश्वामवतामेको धनवानाकम्पयते' का० उप० । [ १४,२,२,१७ ।

उद्+ऊर्द्धचालने । "कुत्सोर्द्ध उत्कम्पयति" शत० ब्रा०

प्रति+प्रतिरूपकम्पने यथा यस्य कम्पनं तस्य तथाविधस्य कम्पन प्रतिरूपकम्पनम् । "गतेन भूमिं प्रतिकम्पयन्निव" भा० वि० २० । [कम्पि" गीता ।

वि+विशेषेण चलने । "स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि" गीता ।

सम्+सम्यक् चलने । "तस्य ज्यातलनिर्घोषात् समकम्पन्त मानव."भा० विरा० १८अ० ।

**कप** पु० कानि जलानि पाति पा–रक्षणे–क । १वरुणे जलपतित्वात् तस्य तथात्वम् पा–पाने क । २जलपायिनि त्रि० । ३असुरविशेषेषु तेषां धर्म्मविशेषप्रतिपादनं ब्राह्मणकर्त्तृकवधकथा च यथा ।

"देवाजग्मु: महात्मव्यतिविक्रमामरवाक' लोकपूजित ! । वनेन हृता भूमिः कपैश्च त्रिदिव प्रभो ! । ब्रह्मोवाच । गच्छध्वं शरणं विप्रानाशु सेन्द्रादिवौकस. । प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा । ते ययुः शरणं विप्रानूचुस्ते कान् जयामहे । इत्युक्तास्ते द्विजान् प्राहुर्जयतेह कपानिति । भूगतान् हि विजेतारो वयमित्यब्रुवन् द्विजान् । तत कर्म समारब्धं ब्राह्मणै. कपनाशनम् । तच्छ्रुत्वा प्रेषितोदूतो ब्राह्मणेभ्यो धनी कपै । (धनो तन्नामा दूत·) धनवान् ब्राह्मणानाह धनी कपवचो यथा । भवद्भि· सदृशा. सर्व्वे कपा किमिह वर्त्तते । सर्व्वे-वेदविद· प्राज्ञा· सर्व्वे च क्रतुयाजिन । सर्व्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः। श्रीश्चैव रमते तेषु धारयन्ति श्रियञ्च ते । वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते । दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिता । सर्व्वे च नियतात्मानो बालानां संविभागिन । उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम् । स्वर्गतिञ्चैव गच्छन्ति तथैव शुभकर्मिण । अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु । रमन्ते न च दीव्यन्ति दिवा चैव न शेरते । एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान् कथं कपान् । विजेष्यथ ? निवर्त्तध्वं निवृत्तानां शुभं हि व । ब्राह्मणा ऊचु । कपान् वयं विजेष्यामोये देवास्ते वयं स्मृता·। तस्माद्वध्या कपास्माकं धनिन् । याहि यथागतम्। धनी गत्वा कपानाह न वोविप्रा: प्रियङ्करा· गृहीत्वा ऽस्त्राण्यतोविप्रान् कपा· सर्व्वे समाद्रवन् समुद्यतध्वजान् दृष्ट्वा कपान् सर्वे द्विजातय । व्यसृजन् ज्वलितानग्नीन् कपानां प्राणनाशनान् । ब्रह्मसृष्टाहव्यभुजः कपान् हत्वा सनातना । नभसीव यथाऽभ्राणि व्यराजन्त नराधिप । । हत्वा वै दानवान् देवा· सर्व्वे सम्भूय संयुगे । तेनाभ्यजानन् हि तदा ब्राह्मणैर्निहतान् कपान् । अथागम्य महातेजा नारदोऽकथयद्विभो । यथा हता महाभागैस्तेजसा ब्राह्मणै कपा । नारदस्य वच श्रुत्वा प्रीता सर्व्वे दिवौकस: । प्रशशंसुर्द्विजांश्चापि ब्राह्मणाञ्च यशस्विन: । तेषां तेजस्तथा वीर्य्यं देवानां ववृधे ततः । अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम्" । भा० अनु० १५७अ० ।

**कपट** स्त्री कप–अटन्, क ब्रह्माणमपि पटति आच्छादयति पट–अच् ६त० वा अर्द्धर्चादि । यथास्थितवस्तुनोऽन्यथा प्रकाशनरूपे हृदयस्थभावनिगूहनरूपे च व्याजे अमर । "मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने" सा० द० । "नरेन्द्रसिंह । कपटं न वोढुं त्वामिहार्हसि" भा० आ० ७४ । कपटस्य भाव· ष्यञ् । कापट्य न० तस्य कपटता स्त्री त्व कपटत्व न० कपटभावे । कापट्यञ्च अन्यथास्थितवस्तुनोऽन्यथाप्रकाशनरूपव्यापारभेदः हृद्गतभावस्य प्रच्छादनञ्च । कपटमस्त्यस्य ठन् । कपटिक कपटयुक्ते शब्द-र० । इनि कपटिन् कपटयुक्ते त्रि० स्त्रियां ङीप् । शाक (चिडा) नामगन्धद्रव्ये राजनि० । कप–अटन् । गौरा० ङीष् कपटी । परिमाणभेदे (एक आँजला) शब्दर०।

**कपटधारिन्** त्रि० कपटं धारयति धृ–णिनि । कपटयुक्ते शब्दर० स्त्रियां ङीप ।

रुपाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां पयस्या इन्द्रस्तये, पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिंशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै, विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः" यजु० २९,६० । क्षुद्ररोगभेदे न० हेमच० तल्लक्षणम् यथा । "कृष्णारुणकणाभासं यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम्" माधवनि० । सुश्रुते महाकुष्ठानन्यरुणोदुम्बरर्ष्यजिह्वकपाल काकणकपुण्डरीकदद्रुकुष्ठानीति विभज्य कृष्णकपालिकाप्रकाशानि कपालकुष्ठानीति लक्षितम् ।

**कपालनालिका** स्त्री कपालस्य छत्रमूलस्य नालिकेव भिरचहेतुत्वात् । छत्रमनि शारचहेतौ तर्कौ (टोको) तिका० ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ—क्विप् । १शिवे महादेवे अमर । तस्य यथा ब्रह्मशिरःकपालभृत्ता तथा कपालमोचनशब्दे वक्ष्यते २कपालधारके भिक्षुके च त्रि० । कपालधारकादयोऽप्यत्र ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि । १शिवे कपालमोचनशब्दे विवृतिः "कपालमालिने नित्यं सुवर्णमुकुटाय च" भा० आनु० ८७ अ० । २दुर्गायां स्त्री ङीप् ।

**कपालमोचन** न० कपालं मुच्यतेऽत्र मुच—आधारे ल्युट् । काशीस्थे तीर्थभेदे । आमूलं तत्कथा काशीख० ३१अ० यथा "पुरा पितामहं विप्र ! मेरुशृङ्गे महर्षयः । प्रोचुः प्रणम्य लोकेशं किमेकं तत्त्वमव्ययम् । स मायया महेशस्य मोहितो लोकसम्भवः । अविज्ञाय परं भावमात्मानं प्राह धर्षितम् । अहं धाता जगद्योनिः स्वयम्भूरेक ईश्वरः । अनादिमदहं ब्रह्म मामनभ्यर्च्य न मुच्यते । प्रवर्त्तको हि जगतामहमेव निवर्त्तकः । नान्यो मदधिकः सत्यं कश्चित् क्वापि सुरोत्तमाः । तस्यैवं ब्रुवतो धातुः क्रतुर्नारायणांशजः । प्रोवाच प्रहसन्वाक्यं रोषताम्रविलोचनः । अविज्ञाय परन्तत्त्वं किमेतत् प्रतिपाद्यते । अज्ञानं योगयुक्तस्य नचैतदुचितन्तव । अहं कर्त्ता हि लोकानां यज्ञो नारायणः परः । न मामनादृत्य विधे ! जीवनं जगतामज ! । अहमेव परं ज्योतिरहमेव परा गतिः । मत्प्रेरितेन भवता सृष्टिरेषा विधीयते । एवं विमतयो मोहात् परस्परजयैषिणौ । पप्रच्छतुः प्रमाणज्ञानाम्नायांश्चतुरोऽपि तौ । विधिक्रतू जयार्थिनौ । वेदाः प्रमाणं सर्वत्र प्रतिष्ठां परमाश्रिताः । यूयमेव न सन्देह किन्तत्त्वं प्रतितिष्ठत । श्रुत्वा यजुः । यदि मान्याश्रयन्ते वौ । सृष्टिस्थितिकरौ ! विभू ! । तदा प्रमाणं वक्ष्यामो भवत्सन्देहभेदकम् । इत्युक्तमिदमाकर्ण्य प्रोचतुस्तौ श्रुतीः प्रति । युष्मदुक्तं प्रमाणं नौ तत्त्वं तत्सम्यगुच्यताम् । ऋग्वाच । यदन्तःस्थानि भूतानि यतः सर्वं प्रवर्त्तते । यदाहुस्तत् परं तत्त्वं स रुद्रस्त्वेक एव हि । यजुरुवाच । योऽयं सर्वैरखिलै रीज्यो यो योगेन समीक्ष्यते । येन प्रमाणं वयं वां हि स एकः सर्वदृक् शिवः । सामोवाच । येनेदं भ्राम्यते विश्वं योगिभिर्यो विचिन्त्यते । यद्भासा भासते विश्वं स एकस्त्र्यम्बकः परः । अथर्वोवाच । यं प्रपश्यन्ति सर्वेशं भक्त्यानुग्राहिणो जनाः । तमाहुरेकं कैवल्यं शङ्करं दुःखतस्करम् । श्रुतेरितं निशम्येत्थं तावतीव विमोहितौ । स्मिताननौ क्रतुविधी महामर्षयुतौ मुने ! । कथं प्रमथनाथोऽसौ रममाणो निरन्तरम् । दिगम्बरः पितृवने शिवया धूलिधूसरः । विटङ्कवेशो जटिलो वृषगो व्यालभूषणः । परं ब्रह्मत्वमापन्नः क्व तत्सङ्गविवर्जितम् । तदुदीरितमाकर्ण्य प्रणवात्मा सनातनः । अमूर्त्तो मूर्त्तिमान् भूत्वा प्रहसन्निदमुवाच तौ । प्रणव उवाच । न ह्येष भगवान् शक्त्या आत्मनो व्यतिरिक्तया । कदाचिद्रमते रुद्रो लीलारूपधरो हरः । असौ हि भगवानीशः स्वयं ज्योतिः सनातनः । आनन्दरूपा तस्यैषा शक्तिर्नागन्तुका शिवा । इत्येवमुक्तेऽपि तदा मखमूर्त्तेरजस्य हि । नाज्ञाननगमत्तावत् श्रीकण्ठस्यैव मायया । प्रादुरासीत्ततो ज्योतिरुभयोरन्तरे महत् । पूरयन्निजया भासा द्यावाभूम्योर्यदन्तरम् । ज्योतिर्मण्डलमध्यस्थोऽदृश्यत पुरुषाकृतिः । प्रजज्वालाथ कोपेन ब्रह्मणः पञ्चमं शिरः । आवयोरन्तरं कोऽसौ बिभृयात् पुरुषाकृतिम् । विधिः सम्भावयेद्यावत्तावत् सहि विलोकितः । क्षणेन च महान् पुरुषो नीललोहितः । त्रिशूलपाणिर्भालाक्षो नागोडुपविभूषणः । हिरण्यगर्भस्तं प्राह जाने त्वां चन्द्रशेखरम् । भालस्थलान्मम पुरा रुद्रः प्रादुरभूद्भवान् । रोदनाद्रुद्रनामापि योजितोऽसि मया पुरा । मामेव शरणं याहि पुत्र ! रक्षां करोमि ते । अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम् । स कोपतः समुत्पाद्य पुरुषं भैरवाकृतिम् । प्राह पङ्कजजन्माऽसौ शास्यस्ते कालभैरव ! । कालवद्राजसे यस्मात् कालराजस्ततो भवान् । विश्वं भर्त्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः । त्वत्तो भेष्यति कालोऽपि

महाप्रलये संप्राप्ते सदेवानखिलान् सुरान्। लोकान् सर्व्वानथमतो हरिष्यसि यदा हर!। तदा क्व ते महादेव! पापं ब्रह्मवधादिकम्। पारतन्त्र्यं न ते शम्भो! स्वैरं क्रीडस्ततो भवान्। व्यतीतब्रह्मणामस्थ्नां स्रक् कण्ठे तेऽवभासते। यदा तदा क्वानुगता त्वां हत्या ब्रह्मणोऽनघ!। कृत्वापि सुमहत् पापं त्वां यः स्मरति भावतः। आधारं जगतामीश! तस्य पापं विलीयते। यथा तमो न तिष्ठेत सन्निधाने गुमालिनः। तथा च तव भक्तस्य पापं न स्यात् तत्क्षणम्। यश्चिन्तयति पुण्यात्मा तव पादाम्बुजद्वयम्। ब्रह्महत्याभवमपि पापन्तस्य व्रजेत् क्षयम्। तव नामानुरक्ता वाग्यस्य पुंसो जगत्पते!। अप्यद्रिकूटतुलितं नैनस्तमनुधावति। रजसा तमसा दिग्धं क्व नु पापं परितापदायकम्। क्व च ते शिवनाम मङ्गलं जनजीवातु जगत्क्लमापहम्। यदि जातु चिदन्धकद्विषस्तव नामौष्ठपुटाद्विनिःसृतम्। शिव! शङ्कर! चन्द्रशेखरेत्य सकलाम न च स्मृतिः पुनः। परमात्मन्! परं धाम स्वेच्छाविहितविग्रह!। कुतूहलं तवैवेदं क्व पराधीनता शिवे। अद्य धन्योऽस्मि देवेश! यत् पश्यन्ति न योगिनः। पश्यामि त्वां जगन्मूलमव्ययं परमेश्वरम्। अद्य मे परमो लाभस्तदद्य मे मङ्गलं परम्। त्वद्दृश्यमतत्प्रसत्त्वं स्वर्गापवर्गकम्। इत्थं वदति गोविन्दे विमला पद्मया तथा। मनोरथवती नाम भिक्षा पात्रे समर्पिता। भिक्षाटनाय देवोऽपि निरगात् परया मुदा। इहानुयायिनीन्तान्तु समाहूय जनार्द्दनः। स माधवं ब्रह्महत्या विसृष्टेति त्रिशूलिनम्। ब्रह्महत्योवाच। क्षणमपि शिवेनाहं संसेव्याद्य वृषध्वजम्। आत्मानं पावितवान् क्व पुनर्भवदर्शनम्। सा तत्याज न तत्पार्श्वं व्याहृतापि पुरारिणा। तमूचेऽथ हरिं शम्भुः करोऽसौ वचनं शुभम्। त्वद्वाक्यामृतपानेन तुष्टोऽस्मि मधुसूदन!। वरं वृणीष्व गोविन्द! वरदोऽस्मि तवानघ!। न याचन्ति तथा भक्तैर्भिक्षितोऽप्यतिसंस्तुतैः। यथा भाम समापात्रैर्नतु भिक्षाटनक्षराः। विष्णुरुवाच। एष एव वरः श्लाघ्यो यदहं देवताधिपम्। पश्यामि त्वां देव देवं मनोरथपथातिगम्। अमुष्येदं सुधावृष्टिर्नामाचो महोत्सवः। अयमो निधिलाभोऽयं पीयूषं हरते सताम्। अवियोगस्तु मे देव! त्वदङ्घ्रियुगलेन वै। एष एव वरः शम्भो! नान्यं कञ्चिद्वरं वृणे। श्रीभैरव उवाच। एवं भवतु ते देव! यत्त्वयोक्तं महामते!। सर्व्वेषामेव देवानां वरदस्त्वं भविष्यसि। अनुगृह्येति दैत्यारिं चेन्द्रादिभुवने चरन्। भेजे विमुक्तिजननीं नाम्ना वाराणसीं पुरीम्। यत्र स्थितानां जन्तूनां कला नार्हन्ति षोडशीम्। अपि ब्राह्माणि देवानां पदानि विपदास्पदम्। वरं वाराणसीवासो जटामुण्डोदिगम्बरः। नान्यत्र छत्रसम्पन्नवसुधामण्डलेश्वरः। वरं वाराणसी भिक्षा न लक्ष्माधिपतान्यतः। लक्षाधीशोऽपि गर्भे तद्भिक्षार्थी न गर्भभाक्। भिक्षापि यत्र भिक्षुभ्यो दत्ताऽमलकसम्मिता। सुमेरुणापि तुलिता वाराणस्यां गुरुर्भवेत्। वर्णयन्ति यो दद्यात् काश्यां सीदत्कुटुम्बिने। यावन्त्यन्नानि तावन्ति युगानि स दिवीज्यते। वाराणस्यां क्षपभोक्ष्ययोद्याविरूपायिने। स कदाचित् तटक्षुधा नो दुःखं भुङ्क्ते नरर्षभ!। वाराणस्यां नियमतो यत् पुण्यमुपजायते। तदेव संचयित्वा फलं स्वविकलं भवेत्। ब्रह्महत्यादिपापानि यस्या नाम्नोऽपि कीर्त्तनात्। त्यजन्ति पापिनं काशी सा केनेहोपमीयते। क्षेत्रे प्रविष्टमात्रेऽथ भैरवे भीषणाकृतौ। हाहेत्युक्ता ब्रह्महत्या पातालतलमाविशत्। कपालं ब्रह्मणो रुद्रः सर्व्वेषामेव पश्यताम्। हस्तात् पतितमालोक्य ननर्त्त परया मुदा। शिवं कपालं नामुञ्चत् करमान्तदुस्त्यजम्। हरस्य भ्रमतः क्वापि तत् काश्यां च्यवतोऽपतत्। भ्रूणघ्नो ब्रह्मणो हत्या नापैति क्वैव या क्वचित्। सा काश्यां च्यवतो नष्टा कथं काशी न दुर्लभा। वाराणसीति काशीति महामन्त्रमिमं जपन्। यावज्जीवं त्रिसन्ध्यन्तु जन्तुर्जातु न जायते। अविमुक्तं महाक्षेत्रं स्मरन् प्राणांस्तु यस्त्यजेत्। दूरदेशान्तरस्थोऽपि सोऽपि जातु न जायते। आनन्दकाननं यस्य चित्ते स्मरते सदा। तत्पत्तनामस्मरणात् सभूयोऽभिजायते। षण्मासं वसेन्नित्यं नरो नियतमानसः। एकमासमपि समारं कृत्वा तस्माद्विमुच्यते। महाक्षमामासाद्य यदि दैवाद्विपद्यते। पुनः स्मशानशयनं न क्वापि लभते पुमान्। कपालमोचनं काश्यां ये स्मरिष्यन्ति मानवाः। तेषां विनश्यति क्षिप्रमिहान्यत्रापि पातकम्। आगत्य तीर्थप्रवरे स्नानं कृत्वा विधानतः। तर्पयित्वा पितॄन् देवान् मुच्यते ब्रह्महत्यया”।

भैरवमहादेवयोरभेदात् महादेवे कपालभृत्त्वादिव्यपदेशः। “कपालमोचनं तीर्थं सर्व्वपापप्रमोचनम्। तत्र स्नात्वा नरव्याघ्र! सर्व्वपापैः प्रमुच्यते” भा०व०८२ अध्याये।

कपालशिरस् पु० कपालं शिरसि यस्य। महादेवे “अप्यय-

च राजनि०।२करभप्रियमात्रे त्रि० । स्त्रियां टाप् ।

**करभादनी** स्त्री करभैरद्यते अद-कर्म्मणि ल्युट् ङीप्। उष्ट्रप्रियायां दुरालभायाम् राजनि०

**करभिन्** पुंस्त्री करभ, कराग्रवयभेदस्तदाकारः शुण्डेऽस्यस्य इनि । गजे राजनि० तस्य शुण्डे करभाकारत्वात् तथात्वम् । स्त्रियां ङीप् । [ अण् । शिवे शब्दर० ।

**करभोर** पु०करभिण गजमीरयति पलायनाय प्रेरयति ईर-

**करभूषण** न० करोभूष्यतेऽनेन भूष-करणे ल्युट् । १कङ्कणे (काङ्गनि) हस्तभूषणे अमरः । करं भूषयति भूष-णिच्-ल्यु । २हस्तभूषणमात्रे त्रि० । [उत्तमस्त्रियाम् ।

**करभोरु** स्त्री करभ इव ऊरुर्यस्याः ऊङ् । प्रशस्तोरुकायां

**करमट्ट** पु० कर हस्तिशुण्डमट्टति अट्ट-अनादरे अ० स त्वम् च । १गुवाकवृक्षे त्रिका० तस्य हस्तिशुण्डवत् काण्डत्वात्तथात्वम् ।(पाणिया आमला) २वृक्षे इत्येके ।

**करमरिन्** त्रि० क्रियते दस्यून् मृ-आधारे अप् करो-बन्धनागारः तत्र म्रियते मा० इनि । (कयेदी) बन्दिनि त्रिका० तस्य बन्धनागारे मरणात्तथात्वम् ।

**करमर्द्द** पु०कर मृद्नाति मृद-अण् उप०स०।(पाणियायामला) वृक्षे राजनि०। खलु करमर्दकोऽप्यत्र । तत्स्पर्शे हि करकण्डूरिति तस्य तथात्वम् ।"लघुदीर्घफलाभ्यां तु करमर्द्द द्वय मतम् । करमर्द्दद्वय त्वाममम्लं गुरु तृषाहरम् । उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत् पक्वं मधुरं रुच्यं लघु पित्तसमीरजित्" भावप्र० "करमर्द्दी लघुफला सा ज्ञेया करमर्द्दिका" इति तत्रोक्ते लघुफलकेऽप्य स्त्री

**करमर्द्दिन्** पु० कर मृद्नाति णिनि ईत० । करमर्द्दे (पाणिया आमला) वृक्षे रत्नमा० ।

**करमाल** पु० कर हस्तिशुण्डेव तदाकृतिर्मालाऽस्य । धूमे हेम०क्रमेण हस्तिशुण्डाकारेण प्रसरणात्तस्य तथात्वम्

**करमाला** स्त्री कर० कराङ्गुलिपर्वं मालेव जपसंख्यापेक्षत्वात् । "आरभ्यानामिकामध्यं दक्षिणावर्त्तयोगतः । तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता" इत्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्वरूपायां मालायाम् । अत्र विशेषस्तन्त्रसा० उक्तः यथा सनत्कुमारसंहितायाम् "तर्ज्जनी मध्यमानामा कनिष्ठा चेति ता क्रमात् । तिस्रोऽङ्गुल्यस्त्रिपर्वाण्यो मध्यमा चैकपर्विका । पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्" । क्रममाह तत्रैव "अनामामध्यमारभ्य कनिष्ठादित एव च । तर्ज्जनीमूलपर्य्यन्तं दशपर्वसु संजपेत्" । तत्रैव । "अनामामूलमारभ्य कनिष्ठादित एव च । तर्ज्जनीमध्यपर्य्यन्तमष्टपर्वसु संजपेत्" । एतद्वचनन्तु अष्टोत्तरशतविषयम् विष्णुविषयञ्च । शक्तिविषये तु "अनामिकात्रयं पर्व कनिष्ठा च त्रिपर्विका । मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्वणि । तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्" । अन्यच्च "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्य्यन्तं संजपेदष्टपर्वसु" । इदमपि अष्टोत्तरशतविषयम् । कुलपरमेश्वरे "पर्वत्रयमनामाया परिवर्त्तेन वै क्रमात् । पर्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत् । पर्वद्वयन्तु तर्ज्जन्या मेरुं तद्विद्धि पार्वति । शक्तिमाला समाख्याता सर्वतन्त्रप्रदीपिता । श्रीविद्याविषयं विशेषः । "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्य्यन्तं दशपर्वसु संजपेत्" । अन्यच्च "मध्यमाया अनामाया मूलाग्रञ्च द्वयं द्वयम् । कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व महेश्वरि ।। अनामामध्यमयोश्च मेरुःस्यात् द्वितयं शुभम् । प्रादक्षिण्यक्रमाद्देवि । जपेत् त्रिपुरसुन्दरीमिति" यामलात् "कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण तु । तर्ज्जनीमूलपर्य्यन्तं जपेदष्टसु पर्वसु" इति श्रीक्रमवचनाच्च । इदमपि तथैव । मुण्डमालातन्त्रे "अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु । तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता । अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले । अङ्गुलीनां वियोगाच्च छिद्राच्च स्रवते जपः" । अन्यत्रापि । "अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्वसन्धिषु यज्जप्तं तत् सर्वं निष्फलं भवेत् । गणनाविधिमुल्लङ्घ्य यो जपेत् तज्जपं यतः । गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः । जपसंख्या तु कर्त्तव्या नाम स्यात् जपेत् सुधीः । असंख्याकारकस्यास्य सर्वं भवति निष्फलम् । हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः । आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्" । गायत्रीजपे विशेषः विधानपा० गायत्रीहृदये "अनामिकामध्यरेखाधःक्रमेण च । तर्ज्जन्यादिगतान्ते च अक्षमाला करे स्थिता" अनामिकाया मध्यरेखामादिं कृत्वा तर्ज्जन्या आदिरेखा अन्ते यस्याः सेयं करे स्थिता मालेत्यर्थः विधानपा० । तत्रैव यम । "सहस्रपरमा देवीं शतमध्यां दशावराम् । गायत्रीं तु जपेन्नित्यं सर्वकल्मषनाशिनीम् । एवमिस्तु जपेद्धीमन्यत्रानियमः स्मृतः । गायत्र्यावेदजननात् गदितं ब्रह्मणा स्वयम् । अङ्गुल्यग्रेण यज्जप्तं यज्जप्त

मेरुलङ्घनात् । असंख्यातं तथा जप्तं तत्सर्वं निष्फलं भवेत्" मदनपारिजाते तु मध्यमाया द्वयं पर्वेति पाठ । आ० त० मञ्ज । "तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्विका । अनामामध्यमारभ्य जप एवमुदाहृतः" काम्ये मालाऽभावे एतासामावश्यता नित्ये तु सर्वथैव आवश्यकता यथाह योगिनीत० । 'नित्यं जप करे कुर्य्यान्न काम्यमवरोधनात् । काम्यमपि करे कुर्य्यात् मालाऽभावे प्रियंवदे' । तत्राङ्गुल्या जपं कुर्यात् साङ्गुष्ठाङ्गुलिभिर्जपेत् । अङ्गुष्ठेन विना कर्म कृतं तन्निष्फलं भवेत्" उत्पत्तितन्त्रे १प० "नित्यं नैमित्तिकं काम्यं करे कुर्य्यादिह जप । करमाला महादेवि ! सर्वदोषविवर्जिता । छिद्रभिन्नादिदोषोऽपि करे नास्ति कदाचन । अन्यया तु करे देवि ! माला भवति तादृशी । यन्त्रिं सा कुण्डलीशक्तिः पञ्चाशद्वर्णरूपिणी । अतएव महेशानि ! करमाला महाफला" । ततश्च दक्षिणेनेति प्रागुक्तेः दशदशपर्वभिरेव दशसंख्यजपः कार्य्यः । शतादिजपे तु दक्षिणहस्तेन कृतजपदशसंख्यायाः प्रत्येकं दशकसंख्यागणना वामहस्तस्थितनिर्दिष्टपर्व्वक्रमेण कार्य्या तथा च दशकस्य दशकेन गणने शतसंख्यापूर्त्तिः । अधिकाष्टसंख्या तु दक्षहस्तेनैव प्रागुक्तरीत्या कार्य्येति तत्त्वम् ।

**करमुक्त** न० करे स्थापयित्वा मुच्यते यत् प्रति क्षिप्यते मुच–क्त (वड्‌शी) अस्त्रभेदे हेमच० ।

**करम्ब** त्रि० क्र–कर्मणि अम्बच् । १मिश्रिते । भावे अम्बच् । २मिश्रणे पु० हेमच० । ३करम्भे इत्यमरटीकायां नीलकण्ठः

**करम्बित** त्रि० करम्बो मिश्रणं जातोऽस्य तार० इतच् । मिश्रिते "मधुकरनिकरकरम्बितेति" जयदेवः ।

**करम्भ** पु० केन जलेन रभ्यते मिश्यते रभ भञ् मुम् च । १दधिमिश्रितसक्तुषु अमर "धानावन्तं करम्भिणमपूपवन्तम्" ऋ० ३,५२,१, । "पूषण्वते ते चक्रमा करम्भम्" ऋ० ३,५२,७, "अतयानिव यवान् कृत्वा तानीषद्भर्जयित्वा करम्भपात्राणि तेषां कुर्व्वन्ति" शत० ब्रा० २,५,२,४, २उदमन्थे "धाना करम्भः सक्तवः परिवापः पयो दधि" यजु० १८,२१, "करम्भ उदमन्थ" वेददी० । "रूप मदरणपथाका करम्भस्" २२ । "करम्भादिति पूषणम्" ऋ० ६,५६,१ । ३अवयवमात्रे । "कामधियस्त्वयि रचिता न परमारोहन्ति यथा करम्भबीजानि" भाग० १०,८७,२७, "करम्भबीजानि भर्जितयवबीजानि" श्रीधर । "करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्" मनु० । करम्भपाकार्थं वालुकास्वदातापोयेषु इति । "करम्भवालुका तप्तासायसीश्च शिलाः पृथक्" भा० स्वर्गा० २अ० । निरयभेदे । द्रव्यावयववैषम्यात् ४मिश्रगन्धे । "करम्भपूतिसौरभ्यशान्तोपाम्लादिभिः पृथक्" एकोविमिद्यते गन्ध "भाग० ३,२६,४२, "करम्भोमिश्रगन्ध" श्रीधरः । ५प्रियङ्गुवृक्षे ६शतावर्य्याञ्च राजनि० । स्वार्थे कन् करम्भक तत्रार्थे

**करम्भि** पु० यदुवंश्ये न्टपभेदे । "करम्भिः शकुनेः पुत्रोदेवरातस्तदात्मज " भाग० ६,२४,२,

**करराह** पु० करे रोहति रुह–क । १नखे अमरः । वामशाखा करराहपदैर्ल्यमानो मदीयैः" मेघ० । २कृपाणे च (तरवार)

**कररि** स्त्री करेण ऋच्छति र्च्छति ल । १करताड़नाम् । त्रिका० १ईत० । २इस्तसम्पत्तौ च ।

**करवी** स्त्री करो मायो रयो ज्ञ गौ० ङीष् । १हिङ्गुपत्रे करेण वीयते यो–क्विप् । २कमर्य्यार्यञ्च त्रिका०

**करवीर** पु० कर वीरयति चु० वीर विक्रान्तौ अण् । १कृपाणे खड्गे, २स्वनामख्याते वृक्षे, ४दैत्यभेदे च मेदि० । ५श्मशाने, हेम० । ब्रह्मावर्त्तदेशवहतीनदीतीरस्थचन्द्रशेखरराजपुरे च । करवीरदृक्षभेदगुणाश्च भाव० उक्ता यथा । "करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः । द्वितीयोरक्तपुष्पश्च चण्डकोष्ठ शुभस्तथा । करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् । वीर्य्योष्णं क्रमिकण्डूघ्नं भक्षितं विषवन्मतम् । । ७तीर्थभेदे । "करवीरपुरे स्नात्वा विशालायां कृतोदकः । देवहृदमुपस्पृश्य ब्रह्मभूतो विराजते" भा० अनु० २५अ० । करवीरपुरञ्च चेदिदेशसन्निकृष्टं गोमन्तपर्व्वतात् त्रिदिनगम्यमार्गे स्थितम् । यथोक्तं हरिव० १००अ० "राजा पराजयं युद्धे गोमन्ते ऽवलब्धतमे । अयमाक्कारणाञ्चास्य स्वर्गलोकं व्रजन्ति ते । ततगच्छाम महाराज करवीरं पुरोत्तमम् त्वयादिष्टेन मार्गेण चेदिराज । शिवाय च । ते स्यन्दनगता सर्व्वे पवनोत्पातिभिर्हयैः । भेजिरे दीर्घमध्वानं मूर्त्तिमन्त इवाग्नयः । ते त्रिरात्रोषिता प्राप्ताः करवीरं पुरोत्तमम् । शिवाय च शिवे देशे शिष्टाक्तिदशोपमा " तत्पुराधीश्च शृगालनाम्ना न्टपतिस्तदभ्याह तत्रैव १०१अ० "तानागतान् विदित्वाऽथ शृगालो युद्धदुर्मदः । पुरस्य धर्म्यं मत्वा निर्जगामेन्द्रविक्रम " ।

**करवीरक** पु० करवीर इव कायति कै–क । १अर्ज्जुनदक्षे राजनि० स्वार्थे कन् । २करवीरार्थे । करं वीरयति ण्वुल् । ३खड्गे शब्दमा० । करवीरे भवः कन् । ४करवीरमूलज

कन्दे विषभेदे न० हेमच० [ कन्दे राजनि० ।

**करवीरकन्दसंज्ञ** पु० करवीरकन्दस्य संज्ञा संज्ञाऽस्य । तैल

**करवीरभुजा** स्त्री करवीरस्य भुज इव भुजोऽस्याः । आढ-
क्याम् (अरहर) राजनि० [ (अरहर) शब्दचि०

**करवीरभूषा** स्त्री करवीरस्य भूषेव भूषा यस्याः । आढक्याम् ।

**करवीराद्य** न० करवीरमाद्यं यत्र । "करवीरपुष्प
जात्यसनमल्लिकायाः । एतैः समन्तु तैलम् नामार्शो-
नाशनश्च श्रेष्ठम्" इति चक्रदत्तोक्ते तैलभेदे ।

**करवीरी** स्त्री कृ-भावे अप् कराय विक्षेपाय वीरः पुत्रोऽ-
स्याः । १अदितौ तत्पुत्राणां सुरक्षेपकत्वात्तस्यास्तथात्व-
म् । कं सुखं राति रा-क करः सुखदः वीरः पुत्रोऽस्याः ।
२पुत्रवत्यां स्त्रियाञ्च मेदि० सर्वतः गौरा० ङीष् ।

**करवीर्य** पु० करवीरे पुरे भवः यत् । धन्वन्तरि प्रति आयु-
र्वेदज्ञानाय प्रश्नकारके ऋषिभेदे । "काशिराजं दिवोदासं
धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्यगोपुरर-
क्षितसुश्रुतप्रभृतय ऊचुः" सुश्रु० ।

**करशाखा** स्त्री करस्य शाखेव । अङ्गुलौ अमर । अङ्गु-
लशब्दस्य परिमाणविशेषे पारिभाषिकत्वेऽपि अस्य तदर्थे
पारिविभाषिकत्वकल्पनं शब्दकल्पद्रुमे निर्मूलमेव ।

**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः । हस्तिहस्तात्
निर्गते जलकणे अमर ।

**करशुद्धि** स्त्री ६त० । फडितिमन्त्रेण गन्धपुष्पाभ्यां हस्तयोः
शोधने । "आदावस्त्रादिकन्यास करशुद्धिकृत परम्"
तन्त्रसा० ।

**करशूक** पु० करस्य शूक इवाग्र । नखे । त्रिका० ।

**करस्** न० कृ-असुन् । कर्मणि । "प्र ते पूर्वाणि करणानि
विप्रा विद्वाँ आह विदुषे करांसि" ऋ० ४,१९,१० ।
"करांसि कर्माणि" भा० ।

**करसूत्र** न० ६त० । विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे ।

**करस्थालिन्** पु० करः स्थालीवाऽस्य ब्रीह्या० इनि । महा-
देवे "दण्डश्च करस्थाली अर्द्धेन्दुनगो महान्" भा०
अनु० १७ अ० शिवसहस्रनामकथने । तस्य कालरू-
पेण सर्वभूतानां करस्थपस्थाल्यैव पचमानत्वात्तथात्वम् ।

**करस्न** पु० करस्य कर कृ-बा० अप् त स्नाति करोति धातू-
नामनेकार्थत्वात् स्ना-क । कर्मकरे बाहौ निघ० "रेवत्-
स्नुषा करस्ना दधिषे वपूंषि" ऋ० १,१८,५ । करस्ना
कर्माणि प्रस्नातारौ बाहू" भा० "पृथू करस्ना बहुला
गभस्ती" ऋ० ६,१९,३ । एतावन्तमभिलक्ष्य "करस्ना बाहू
कर्मणां प्रस्नातारौ" निरु० ६ १६ निरुक्तिर्दर्शिता ।

**करहाट** पु० करैः सूर्यकिरणैः हाट्यते दीप्यते हट-दीप्तौ णिच्
कर्मणि घञ् । १पद्मादिमूले, अमर कर हाटयति
हट-णिच् अण् । २मदनद्रुमे, ३देशभेदे च ।
मेदि० । ४पिण्डीतकतरौ राजनि० ।

**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच्-ण्वुल् ।
१मदनवृक्षे । करहाटकार्जुनककुभेत्यादि सुश्रु० । ६त० ।
२हस्ताभरणे सुवर्णे । अमर० । [हारा० ।

**कराङ्गण** न० करस्य राजस्वादानस्याङ्गणम् । राजस्वादानस्थाने ।

**कराघात** पु० ६त० । करतलाघाते चपेटाघाते (चापडमारा)

**कराट** त्रि० कराय विक्षेपायाटति-अट्+अच् । विकटे शब्दचि०

**करामर्द** पु० करमामर्दयति आ+मृद-अण् उप० स० ।
करमर्दे शब्दर० ।

**कराम्लक** पु० कीर्य्यते कॄ-कर्मणि अप् करमम्लं यतः कप् ।
(पाणिया आमला) करमर्दभेदे शब्दच० । [राजनि० ।

**काराम्लक** पु० करं कीर्य्यमाणमम्लं यतः कप् । करमर्दवृक्षे

**करायिका** स्त्री कर इवाचरति कर+आचारे क्यङ् ण्वुल् ।
१बलाकायाम् तस्याः सङ्कुचितहस्तवत् प्रकाशमानत्वात्तथा-
त्वम् । २कूटपूर्य्याम् शब्दचि० [त्रिका० ।

**करारोट** पु० करे आरोटते रुट-दीप्तौ अच् । अङ्गुरीयके

**कराल** पु० कराय विक्षेपायालति पर्य्याप्नोति करं लाति ला-
क वा । १सर्जरसयुक्ततैले (तेलधुना) २कृष्णकुठेरके
(कालतुलसी)३वक्रे ४दन्तुरे उन्नतदन्ते (दाँतो) ५भया-
नके त्रि० मेदि० । "करालदंष्ट्रा घोराम्" "घोरदंष्ट्रा
करालास्याम्" श्यामाध्यानम् । "वपुर्महोरगस्येव करा-
लफणमण्डलम्" रघु "लम्बा कराला विनता तथैव बहु-
पुत्रिका" "दुर्दर्शना सुदुर्गन्धा कराला मेघका-
लिका" (पूतना) सुश्रु० । (अनन्तमूल) ६शारिवौष-
धौ स्त्री राजनि० । गौरा० ङीष् । ७अग्नेर्जिह्वाभेदे जटा
धर । सा च तामसी यथाह शा० ति० "विश्वमूर्त्ति-
स्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा । लोहिताख्या करा-
ली च काली तामस ईरिता" । तन्त्रान्तरे तु अन्य-
थात्वम् । कराली राजस्फुलिङ्गिजिह्वायाम् । "पद्मरागा
सुवर्णाख्या तृतीया भद्रलोहिता । लोहितानन्तरं श्वेता
धूम्रिणी च करालिका । राजस्योरसना वह्नेर्विहिता
काम्यकर्मसु" अग्निजिह्वाशब्दे दर्शितवाक्यन्तु सामान्य-
विषयम् । ८दन्तरोगभेदे पु० । "शनैः शनैर्विकुरुते यानु-
र्दन्तसमाश्रित । करालान् विकटान् दन्तान् करालो न स

सिध्यति"भावप्र०। गाढशरोगयुक्तत्वात् दन्तुरस्य तथात्वम्। "तप्रस्ते हे पचेत् पूर्ब वेसवारकस साकम्। पाकमापिततस्तौ-रश्यं करास स्वदकर्मतस्"पाकशास्त्रोक्ते स्नेहपके १०वेसवारे न०।(कहि)११कस्तूरीमृगे पुंस्त्री"एणहरिणर्श्यकुरङ्गकरा-लकृतमालशरभश्वदंष्ट्रापृषतचारुपृकमृगमातृकाप्रभृततयो जङ्घाला मृगा कषया मधुरा लघवो वातपित्तहराश्चोष्णा हृद्या वस्तिशोधनाय"सुश्रुते मृगभेदानुक्त्वा तद्गुणा उक्ताः। १२दैत्यभेदे पु०। "सृमरः कालवदनः करालः कौशिकः शरः" हरिवं ४२ असुरनामकथने। "सृमरः कालवदनः करालः केशिरेव च"हरिवं० २६२ अ०। स्वार्थे कन् करालक उक्तार्थे तण्डुलस्याम् पु०रत्ना०।

**करालत्रिपुटा** स्त्री करालानि त्रीणि पुटान्यस्याः। लङ्का-धान्ये त्रिकाशिखकायाम् राजनि०।

**करालभैरव** न० तन्त्रभेदे। म०त०। कूर्मपु० हिमालयं प्रति देवीवाक्यम्। "करालभैरवञ्चापि यामलं वाममाश्रितम्। एवंविधानि चान्यानि मोहनार्थानि यानि तु। मया सृष्टानि चान्यानि मोहायैषां भवार्णवे" [इत्युक्ते हेमच०।

**करालिक** त्रि० करायां करतुल्यशाखानामालिर्यत्र कप्।

**करास्फोट** पु०करेण आस्फोटः शब्दो यत्र। वक्षःस्थले सङ्कु-चितरूपेण स्थापिते एकबाहौ इतरकराघातेन तादृगे (तालठोका)। ईत०। २कराघाते।

**करिक** पु० करो विक्षेपोऽस्त्यस्य ठन्। विट्खदिरे शब्दच०

**करिकणवल्ली** स्त्री करिकण गजपिप्पल्यवयव इव वल्ली। चविकाख्ये (चई) राजनि०।

**करिका** स्त्री करोविलेखनमस्त्यस्याम् अर्श० अच् अत-इत्त्वम्। नखरेखायाम् वैज०। [चूर्णे शब्दचि०

**करिकुसुम्भ** पु०करो नागकेशरस्तस्य कुसुम्भइव। नागकेशर-

**करिज** पुस्त्री करितोजायते जन—ड। हस्तिशिशौ शब्दरत्ना०

**करिणी** स्त्री करिन्+स्त्रियां ङीप्। १हस्तिन्याम् अमरः "आसायसङ्गमदधारकपोलभागाः सम्पादयन्ति करिणः करणीभ्रमं न" धनञ्जयविज०। २देवताभेदे शब्दचि०।

**करिदारक** पु०१करिणं दयाति हिनस्ति दृ-ण्वुल्। सिंहे। शब्दर०स्त्रियां टाप् अत इत्त्वम्। [शब्दचि०

**करिनासिका** स्त्री करिणोनासेवाकारोऽस्याः। यन्त्रभेदे

**करिन्** पुंस्त्री करः शुण्डः प्रशस्त्येमाऽस्त्यस्य इनि। हस्तिनि गजे "दंहितं करिगर्जितम् अमरः 'मुक्ताफलाय करि-णाम् हरिण प्रसाद" व्या०उदा०। "अरिकरिहरणार्थं योजनानामयोध्या" सीता०। "करीव सिक्तं दृपतैः पयोमुचाम्" "कटप्रभेदेन करीव पार्थिवः"रघु० "आवा-सवृक्षैः करिणा घटायतैः"माघ०। २अष्टसंख्यायाम् एका-क्षादिशब्दे विवृतिः। करिभेदादिकम् पृ० ९५८ इभशब्दे उक्तम्। तन्नामनामके ३नागकेशरे पु०।

**करिप** पु० करिणं पाति पा—क। हस्तिपके (माहुत)। चू-र्णादि० अप्राणिवाचकषष्ठ्यन्तात् असाद्युदात्तता। वन-करिप इत्यादि। [राजनि०

**करिपत्र** न० करी तत्कर्ण इव पत्रमस्य। तालिशपत्रवृक्षे

**करिपथ** पु० ईत०अच् समा०। हस्तिगमनयोग्ये पथि ततः संज्ञायां कन् देवपथादि०तस्य लुक्। करिपथनामके देशभेदे पु०। [पिप्पल्याम् अमरः

**करिपिप्पली** स्त्री करिपूर्वपदयुक्ता पिप्पली शा०त०। गज

**करिपोत** पु० ईत०। हस्तिशावके हारा०।

**करिबन्ध** पु० करिणं बध्नात्यत्र बन्ध-आधारे घञ्। १हस्ति बन्धस्तम्भे हारा०। भावे घञ् ईत०। २गजबन्धने च

**करिभ** न० करीव भाति भा—क। कुष्ठभेदे त्रिका०।

**करिमाचल** पुंस्त्री मच-शाठ्ये घञ् करिणि माचं शाठ्यं लाति ला-क। १सिंहे त्रिका० गजमाचलाद्योऽप्यत्र स्त्रियां जातित्वात् ङीष्।

**करिमुख** पु० करिणोमुखं मुखमस्य। १गणेशे तथा चास्य गजमुखता तथा इभाननशब्दे ९८१पृ०उक्तम्। ईत०। २गजस्य मुखे न०।

**करिर** पुंन० कृ—इरन्। मूढफले उष्ट्रप्रिये मरुभूमिजे करीरे वृक्षभेदे। शब्दरत्ना०। करीरशब्दे गुणादि।

**करिरत** न० "भूगतस्तनभुजास्यमस्तकामुन्नतां समधोमुखीं स्त्रियम्। क्रामति स्वकरलक्ष्मेहने वल्लभे करिरतं तदु-च्यते" इत्युक्तलक्षणे १रतिबन्धभेदे शब्दचि०। करिपदमिति पाठान्तरे"करिपदमित्यपि तत्रार्थे। ६त०२गजरमणे च।

**करिव** त्रि० करिणं वाति वा—क। करिगते समाविषय-न्तास्य चूर्णा० आद्युदात्तता। वनकरिव इत्यादि

**करिशावक** पु० गजशिशौ "यावत्पञ्चाब्दमेतस्मिन् क-रभ कलभोऽपि च" शब्दर० उक्ते पञ्चाब्दपर्यन्ते हस्ति बालके।

**करिष्ठ** त्रि० अतिशयेन कर्ता इष्ठन् तृणोलोपः। कर्तृतमे "पुरु वरिष्ठ्य आयुति करिष्ठः" ऋ०७,९७,७। ईय-सुन्। करीयस् कर्तृतरे त्रि० स्त्रियां ङीप्।

**करिष्यमाण** त्रि०कृ—भविष्यति शानच् स्यट्। कर्त्तव्ये। वेदे तु नि० मानलोपः। "यानि करिष्वा कृणुहि मवह।"

ऋ० १,१६५,६, "करिष्या कर्त्तव्यामि" भा० । द्वितीया-स्थाने आट् ।

**करिसुन्दरिका** स्त्री करीव सुन्दरी संज्ञायां कन् । गा गयष्टौ यस्त्रशोषणार्थमङ्कस्थापियन्त्रभेदे हारा० ।

**करिस्कन्ध** न० करिणां समूह स्कन्धच् । गजसमूहे । ६त० । गजस्य २स्कन्धे पुंन० ।

**करीर** पु० कृ—ईरन् । १घटे मेदि० । २वंशाङ्कुरे अमर० । (गाँधेरकोँड)३अङ्कुरमात्रे भावप्र० वंशस्कन्धे "तत्करीर. कटु पाके रसे रूक्षो गुरुः सरः । कषायः कफहृत् स्वादुर्विदाही वातपित्तलः" तद्गुणा उक्ताः । "हिमांशुवंशस्य करीरमेव सा निशस्य किन्नासि फलेग्रहिग्रहा" नैष० । "ध्यानिन्थिरे वंशकरीरनीलैः" माघ० । "वंशशब्दस्याम्नानताहेतोरलूनतायाः प्रतिपत्त्यर्थत्वाच्च पौनरुक्त्यम् अतएव एकार्थं पदम् न प्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः" मल्लि० । तेन वंशाङ्कुरार्थकस्यापि करीरशब्दस्य प्रतिपत्तिविशेषार्थं वंशशब्दप्रयोग इति तत्त्वम् । ३गूढपत्रे मरुभूमिजे उष्ट्रप्रिये वृक्षभेदे भावप्र० । "करीर कटुकस्तिक्त स्वेद्युष्णोभेदन स्मृत । दुर्नामकफवातामगरशोथव्रणप्रणुत्" भावप्र० ४चीरिकायां झिल्लयाम् (झिंझिपोका) ५हस्तिदन्तमूले च स्त्री उणा० । अस्य प्रस्थशब्देन समासे करीरप्रस्थे कर्क्यादि० माद्युदात्तता । मध्वा० चतुरर्थ्यां मतुप् मस्य व । करीरवत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप् ।

**करीरकुण** न० करीरस्य पाक पील्वा० पाके कुणच् । तत्पाके

**करीरिका** स्त्री करीरमिवाकारोऽस्त्यस्य ठन् । हस्तिदन्तमूले त्रिका० ।

**करीरी** स्त्री कृ—ईरन् गौरा० ङीष् । चीरिकायां (झिंझिपोका) १झिल्लयाम् २गजदन्तमूले च मेदि० ।

**करीष** पुन० । कृ—ईषन् । १शुष्कगोमये (घुटिया । "करीषमिष्टकाङ्गारान् शर्करा वालुकास्तथा" मनु । २पशुपुरीषमात्रे च "उष्ट्रपकलमगपुरीषपांशुला" कादम्ब० । करीषाग्नि (घुटेर आगुन) ।

**करीषगन्धि** पु० करीषस्येव गन्ध इव गन्धोऽस्य इत् समा० । करीषवद्गन्धयुक्ते तस्यापत्यमण् स्त्रियां ष्यङ् कारीषगन्ध्या तदीयस्त्र्यपत्ये । तस्याः पुत्रपतिशब्दाभ्यां समासे स म० दीर्घश्च । कारीषगन्धीपुत्र कारीषगन्धीपति एव परमकारीषगन्धीपुत्र इत्यादि उपसर्ज्जने तु न अतिकारीषगन्ध्यापुत्र इत्याद्येव सि० कौ० ।

**करीषङ्कषा** स्त्री करीषं कषति छिनत्ति कष-खच् मुम् च । वात्यायाम् तस्या गोमयशोषणात्तथात्वम् ।

**करीषिन्** त्रि० करीषस्य देश पुष्करा० इनि न मतुप् । १करीषयुक्तदेशे स्त्रियां ङीप् । करीषमाश्रयत्वेनास्त्यस्या इनि ङीप् । गोमयाधिष्ठात्र्देव्या २लक्ष्म्याम् स्त्री । "गन्धद्वारा दुराधर्षां नित्यपुष्टां करीषिणीम्" श्रीसूक्तम् ।

**करुण** त्रि० करोति मन आनुकूल्याय कृ—उनन् । दयायुक्ते २रसभेदे पु० तल्लक्षणाद्युक्तं सा० द० यथा "इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् । धीरैः कपोतवर्णोऽयं कथितो यमदैवत । शोकोऽत्र स्थायिभाव स्यात्शोच्यमालम्बनं मतम् । तस्य दाहादिकावस्था भवेदुद्दीपन गुण । अनुभावा दैवनिन्दा भूपातक्रन्दितादय । वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च । निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमा । विषादजडतोन्मादचिन्ताद्या व्यभिचारिण" ।

शोच्य विनष्टबन्धुप्रभृति । यथा राघवविलापे । "विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपु । अनयोर्घटना विधे स्फुटं ननु खड्गेन शिरीषकर्त्तनम्" । अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा । एव बन्धुवियोगविभवनाशादावप्युदाहार्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्य । अस्य करुणविप्रलम्भाद्भेदमाह । शोकस्थायितया भिन्नो विप्रलम्भादय रस । विप्रलम्भे रति स्थायी पुनः सम्भोगहेतुक "३परदुःखहरणेच्छायां दयायां स्त्री । "अहो विधे त्वां करुणा रुणद्धि न" नैष० । "प्राय सर्वोभवति करुणावृत्तिरार्द्रान्तरात्मा" मेघ० । "करुणाविमुखेन मृत्युना" रघु । दुःखितेषु दया करुणा साऽस्त्यस्य अर्श० अच् विषयत्वेन । ४करुणाविषये दीने त्रि० । "अभिधाय निजैरकरुणं करुणम्" माघ० । "करुण दीन यथा तथेति" मल्लि० । "अनुरोदितीव करुणेन पत्रिणा विरुतेन" माघ । "विरुतैः करुणैः स्वनैरिव" कुमा० । (करवकनेबु)५वृक्षभेदे पु० त्रिका० । "पिकात् वने श्रृण्वति भृङ्गहुङ्कृतैर्दशामुदञ्चत्करुणे वियोगिनाम्" नैष० । "करुणस्य फल स्निग्धवातामघ्नं सदा गुरु, नाशन पित्तकोपस्य शमन परिकीर्त्तितम्" इति न तृफलगुणाच वैद्यकोक्ता । ६बुद्धभेदे पु० त्रिका० । ७परमेश्वरे ८भूताभयकारके परिव्राजके पु० शब्दचि० ।

**करुणमल्ली** स्त्री करुणा करुणाविषय मल्ली । १नवमल्लिकायाम् शब्दच० । तत्पुष्पस्यातिसुकुमारत्वात् करुणावि-

प्रयत्नेन सदय चीयमानतया तस्यास्तथात्वम् ।

**करुणविप्रलम्भ** पु० शृङ्गाररसभेदे । शृङ्गारशब्दे” सा०द० उक्तः यथा

“विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः । तत्र यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । अभीष्टं नायकं नायिका वा । स च पूर्व्वरागमान-प्रवासकरुणात्मकश्चतुर्द्धा स्यात्” ।

**करुणानिधि** पु० करुणा निधीयतेऽत्र नि+धा-आधारे कि उप०स० । करुणाधारे दयायुक्ते करुणानिधानादयो ऽप्यत्र । [ यस्य । अत्यन्तकरुणायुक्ते ।

**करुणापर** त्रि० करुणायां परः आसक्तः करुणा परा वा

**करुणामय** त्रि० करुणा+प्राचुर्य्ये मयट् । प्रचुरकरुणावति “काकुत्स्थं करुणामय गुणनिधिम्, विप्रप्रिय धार्मिकम्” महाना० स्त्रियां ङीप् करुणामयी ।

**करुणिन्** त्रि० करुणाऽस्त्यस्य सुखा० इनि । कृपायुक्ते स्त्रियां ङीप् । सिद्धे सुखादिग्रहणम् ठनादिनिवृत्त्यर्थमिति सि०कौ० । तेन सुखादिभ्यो न मतुप् । आर्षे तु क्वचि-दिष्यते ।

**करुत्थाम** पु० तुर्व्वसुवंश्ये दुष्मन्तपुत्रभेदे । “तुर्व्वसोश्च सुतो-ऽभवदि”त्युपक्रम्य “दुष्मन्तस्य तु दायाद करुत्थामः प्रजे-श्वर ”हरिव०३२अ० ।

**करुन्धम** पु० तुर्व्वसुवंश्ये त्रैसानोः पुत्रे नृपभेदे । “करुन्ध-मस्तु त्रैसानोर्मरुत्तस्य चात्मज ” हरिव ० ३२अ० ।

**करुम** पु० पिशाचभेदे । ये शालाः परिनृत्यन्ति सायं गर्दभ-नादिनः । कुसूला ये च कुक्षिला ककुभाः करुमाः स्रिमाः । तानोषधे ! त्वं गन्धेन विषूचीनान् विनाशय” अथ०८,६,१० ।

**करू** स्त्री ऊ-हिंसायाम् कू । १कर्त्तने । “चतुर्दश वा आसां करूकराणि”शत०ब्रा०२२,२,४,१० । कर्म्मणि कू । २कृत्ते च । “वामं देवः करूलती”ऋ०६,२०,२४ । “करूलतो कृत्तदन्तः’ भा०इषो०दन्तस्य लतादेशः पृषोदरत्वात् भग्नदन्तत्वेन तथात्वम् ।

**करूष** पु० कृ-ऊषन् । १देशभेदे यस्याधिपतिर्दन्तवक्र “एष महान् वधे तात्र कुरुष्व शुह सोमकैः । चेदि-काशिकरूषांश कुरुलक्ष्मीं बहिष्यति” भा०उ०१२२ अ० । “शिशुपाल सहस्रत करूषाधिपतिस्तथा’ भा० स०४अ० । करूषाणां जनपदानां राजा अण् तद्राजत्वात् बहुषु तस्य लुक् । करूषा तद्राजेषु “दन्तवक्र करूषश्च करभोमेघवाहन ”भा०स०१३अ० । एकत्वेऽपि लुक् आर्षः अस्य तालव्यमध्यताऽपि भर्गादिगणे तथापाठात् ततो भर्गा० स्त्रियां न तद्राजप्रत्ययस्य लुक्’ सि० कौ० ।

**करूषज** पु० करूषदेशे जायते जन-ड । दन्तवक्रे नृपभेदे “तावेवाथ पुनर्जातौ शिशुपालकरूषजौ” भा० भा०७ १०,३० । तौ जयविजयौ विष्णोः पार्षदौ ।

**करूषाधिपति** पु०६त० । दन्तवक्रे नृपे । “काशीश्वरराजो-गोनर्द करूषाधिपतिस्तथा’ हरिव० ६ । करूषाधिपा-दयोऽप्यत्र ।

**करेऽट** पु० करे अटति अट-अच् अलुक् स० । नखे त्रिका०

**करेऽटव्या** स्त्री करेऽटनं व्ययति व्ये-ड टाप् । धनच्छूय-चिणि त्रिका० । [ ख्याते खगे । अमर ।

**करेटु** पु० केन मस्तकेन रेटति रेट-कु । (करकटिया) इति

**करेणु** पु०कृ-एणु(नु)के मस्तके रेणुरस्य वा । १गजे अमरः । “वन्तः समस्तजनहासकर करेणो ” माघ । उत्-क्षिप्तगात्रः स विडम्बयन्नभः—करेणुरारोहयते निषादि-नम्” माघ “स्वातन्त्र्यमुज्ज्वलमवाप करेणुराज ”माघ । २कर्णिकारवृक्षे विश्व । ३गजस्त्रियां स्त्री अमर ।“ ग-जाय गण्डूषजलं करेणु ”कुमा० । “करेणुभिर्दन्तनृणा-लभङ्गाः” रघु । करेणुदुग्धगुणाश्च सुश्रुते “अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत् पयः । तच्चनेकौषधिरसप्रसादं प्राणदं गुरु । मधुरं पिच्छिलं शीतं स्निग्धं श्ल-क्ष्णं मृदु स्मृतम्”सामान्यत उक्ता । “हस्तिन्याः मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं स्थैर्य्यकरं शीतं च-क्षुष्यं बलवर्द्धनम्” उक्ता । “करेणुः सवङ्गश्च रा कन्दे-न गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णि-नी”सुश्रुतोक्तलक्षणायाम् ४ओषधौ स्त्री तदुत्पत्तिकालश्च तत्रैवोक्तः । “करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा । गोलोमी चाजलोमी च महती श्रावणा तथा । वसन्ते कृष्णसर्पाख्यो गोलोमी च प्रजायते” स्वार्थे कन् करेणु-काप्यत्र स्त्री । रायमुकुटस्तु करेणुशब्दं दीर्घान्तं पठित्वा हस्तिनि पुंस्त्रीत्याह ।

**करेणुभू** पु० करेणौ भवति भू-क्विप् । १हस्तिशास्त्रप्रवर्त्तके पालकाव्यमुनौ हेमच० । २हस्तिजातमात्रे त्रि० ।

**करेणुमती** स्त्री नकुलस्य भार्य्याभेदे । “नकुलस्तु चैद्यां करे-णुमतीं भार्य्यामुदावहत्तस्यां पुत्रं निरमित्रं नामाजनयत्’ भा० आ० ६५ अ० ।

**करेणुसुत** पु० ६त० । पालकाव्ये मुनौ त्रिका० ।

**करेनर** पु० तुरष्कनामगन्धद्रव्ये करेवरोऽप्यत्र राजनि० ।

**करेन्दुक** पु० करेण किरणेनेन्दुरिव भायति कै–क । भूतृणे राजनि० ।

**करोट** न० के शिरसि रोटते रुट्–दीप्तौ अच् । शिरोऽस्थ्नि । (माथारखुलि) इन् करोटिरप्यत्र स्त्री वा ङीप् अमर । "वपुषि भटकरोटिन्यस्तकीलालसिन्धु" धनञ्ज० ।

**करोटक** पु० नागभेदे "आप्त करोटकश्चैव शङ्खो वालिशिख-स्तथा" भा०आ० ३५ अ० नागनामकीर्त्तने । अत्र क-र्कोटार्थाभिधानं प्रामादिकमेव । उपक्रमे ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" इति कर्कोटकस्य पृथगुक्तेस्ततो भिन्न एवायमिति तत्त्वम् । [ प्रनिकर्कति ।

**कर्क** हासे सौत्र० पर०अक० सेट् । कर्कति अकर्कीत् । चकर्क

**कर्क** पु० कृणोति करोति क्रियते वा कृ–क तस्य नेत्वम् कर्क–अच् वा । १वह्नौ २श्वेताश्वे अमर ३दर्पणे ४घटे ५मेषा-वधिचतुर्थे राशौ ६कुलीरे ७कर्कटवृक्षे (काँकडाशिङा) च हेम० । ८कात्यायनश्रौतसूत्रभाष्यकारे पु० ।

**कर्कखण्ड** पु० कर्क श्वेताश्वयुक्तं खण्डं भूमिखण्डो यत्र देशभेदे । "मागधान् कर्कखण्डांश्च निवेश्य विषये तन." भा० व० २५२ अ० ।

**कर्कचिर्भटि** स्त्री कर्कवर्णा चिर्भटी । कर्कटीभेदे । राजनि० ।

**कर्कट** पु० सौ०कर्क–अटन् । वाह्यामलकवत्तुच्छफलके १वृक्ष-भेदे २जलजन्तुभेदे कुलीरे । ( काँकडा ) "गणनाटत् करकर्कटोत्करम्" नैष० राजनि० । ( करकटिया ) ३पक्षिभेदे । ४अलाबूवृक्षे च मेदि० । ५पद्मकन्दे जटा० मेषादितश्चतुर्थे ६राशौ "पाद पुनर्वसोरन्त्यं पुष्यो ऽश्लेषा च कर्कटः" ज्यो०त०उक्तसपादनक्षत्रद्वयात्मकः । तथा च २६०अंशात्मके राशिचक्रे ९०अं शोत्तरम् ३० त्रिंशदंशात्मक स राशिः । "शेषा खनामसदृशाकृतयो भवन्ति"ज्यो०त०उक्तेस्तस्य कुलीराकृतित्वम् । अस्य वर्णाद्युक्त नीलक०ता० "बहुप्रजासङ्गपद कुलीरचरो-ऽङ्गना पाटलहीनशब्दः । शुभ कफी स्निग्धजलोऽम्बु-चारी समोदयी विप्रनिशोत्तरेशः" तथा च अस्य बहु-प्रजावत्त्विता बहुपदता चरराशित्व स्त्रीरूपता पाटलवर्णता क्षीणशब्दता शुभत्वं शुभस्वामिकता च । कफप्रकृतित्वं स्निग्धजलत्वम् जलचरत्वम् समराशित्वम् विप्रवर्णत्वम् निशाबलित्वम् उत्तरदिगधीशत्वञ्च । अयं च कीटराशि 'कर्कटवृश्चिकमीना धनुषश्चान्त्यार्द्धञ्च कीटसंज्ञाः स्युः" इत्युक्तेः तत्र समत्वं युग्मराशित्वं सम-परिमाणञ्च । "ओजोऽथ युग्मं विषमं समञ्च" "क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च" इत्युक्ते "सुखाक्षिनिगोऽश्विघटा मिथुनधनु कर्किमृगाश्चखाश्च समा "इत्युक्तेश्च । "पृष्ठोदयाविमिथुना दिवा शीर्षोदयाः परे"इत्युक्ते अस्य शीर्षोदयत्वम् । अस्याधिप चन्द्रः ।कुजगुरुसौम्यभृगुमन्दजीवा भौम्य शुक्रार्कवनीभुजाम् ।—क्षेत्राणि स्युरजादय इत्युक्ते "मेष कर्कटयोर्मध्ये गाढं तपति भास्कर " तिथि० पु० । "कर्कटे प्रथमं देवी त्र्यहं गङ्गा रजस्वला" स्मृति । ( काँकुड ) ७एर्वारौ स्त्री गौरा० ङीष् भावप्र० । तस्या गुणा भावप्र० उक्तायथा । "एर्वारु कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ । कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा साऽपक्वा तृष्णाग्निपित्तकृत्" । अस्याः पाकप्रकारस्तु । "त्वग्बीजरहिता प्रौढा गुलिकाकारखण्डिता । तलिता घृष्टते तप्ते कर्कटी पाचवेष्टिता । विपाचव्यक्तव्य ष्टतदुग्धघाते त्रिभावितं वह्निजशर्कराभ्याम् । कर्तव्या-सञ्च कटुष्णमेतत् प्रतिक्षणं रोचनमातनोति" । ङी-मन्तः । ८शाल्मलौ मेदि० । ९सर्पे शब्दरत्ना० । १०देव-दालीलतायां १२घोषिकायां १३ छत्रे राजनि० । १४कर्कट-जातिस्त्रियाञ्च । "यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मन "भा०शान्ति०२७२श्लो० । कर्कटस्य कोषस्थता तन्नामगुणाश्च भावप्रका० उक्ता यथा । "मद्गु मद्गुलकश्चापि शुक्तिशम्बूककर्कटा । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिता । कोषस्था मधुराः स्निग्धा वातपित्तहरा हिमा । "ताम्रचूडकर्कटकणमत्स्यशिशुमारवराहवसा " सक्षीरं कर्कटरसे सिद्धं चाल घृतं पिबेत्"सुश्रु० । स्वतो चारामध्यप्रातोक्ता तत्रासभ्यशब्दे दर्शितम् । कर्कट शृङ्गाकारोऽस्त्यस्य अर्श०अच् । तुलाप्रान्तनिबद्धे कर्कट शृङ्गाकारे आयसे १५कीलकभेदे"शु०मिता०१६करपटके पु० च । तत्पादाश्रयत्वापत्तस्य तथात्वम् । १७कर्कट-शृङ्ग्याम् स्त्री ङीष् भाव०प्र० ।

**कर्कटक** न० कर्कटइव कायति कै–क । १अस्त्रभेदे (कम्बाख) "फलिसुकाकलीसंदंशकपुरकशीर्षकलोमगूढलोकनर्ति-कामानकर्कटकरज्जूदीमभाजनभ्रमरकरणक प्रभ-लो नैकोपकरणयुक्त "दशकुमा० । कर्कटः इव इव कायतिकै क । २इक्षुभेदे शब्दचिन्ता० । स्वार्थे कन् । ३कुलीरे अमर० ।

**कर्कटशृङ्गी** स्त्री कर्कट इव शृङ्गं यस्याः । (काँकडाशिङा) १वृक्षभेदे । स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र । "शृङ्गी

कर्कटशृङ्गी च स्यात् कुलीरविषाणिका। अजशृङ्गी च वक्रा च कर्कटाख्या च कीर्त्तिता। शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान्। श्वासोर्द्ध्ववाततृट्कास हिक्कारुचिवमीन् हरेत्” भावप्र० तद्गुणादि उक्तम्

कर्कटाक्ष पु० कर्कट इवाक्षि यस्य पक्षिभेदोऽस्य। कर्कशाम् (कांकुड) रत्नमाला। [शृङ्ग्याम् भावप्र०।

कर्कटाख्या स्त्री कर्कटस्याख्याख्या यस्याः। (काकडाशिङा)

कर्कटाङ्गा स्त्री कर्कटस्याङ्ग शृङ्गमिव शृङ्गमग्रमस्याः अजा० टाप्। शृङ्ग्याम्। राजनि०। [बिल्वहक्ष्ये राजनि०।

कर्कटाह्व पु० कर्कटमाह्वायते-कण्टकारत्वात् आ+ह्वे—क।

कर्कटि स्त्री कर्क कण्टकमटति इन् शक०। (काँकुड) १एर्वारौ शब्दचि०। वा ङीप् अत्रार्थे, २शाल्मलीवृक्षे ३कर्कटशृङ्ग्यां च। मेदि०।

कर्कटिनी स्त्री कर्कटस्तदाकारोऽस्त्यस्या इनि ङीप्। दारुहरिद्रायाम् राजनि०। [शब्दरत्ना०।

कर्कटु पु० कर्क—ब्रगवा० नि०। (करकटिया) पक्षिभेदे

कर्कन्धु स्त्री कर्क कण्टकं दधाति धा—कू नि०सम्। १वदर्य्याम् (कुल) “कर्कन्धूफलमुच्चिनोति शवरी सक्ताफलाशङ्कया” सा०द०। तस्य पुंस्त्वमपि। “पुंसि स्त्रियाञ्च कर्कन्धूः बदरी कोलमित्यपि। फेनिलं कुवलं घोण्टा सौवीरं बदरं महत्। अजप्रिया कुहा कोली विषमोभयकण्टका। पच्यमानं सुमधुरं सौवीरं वदरं महत्। सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम्। वृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्। सौवीरं लघु सम्यक् मधुरं कोलमुच्यते। कोलन्तु वदरं याहि रुच्यमुष्णञ्च वातलम्। कफपित्तकरञ्चापि गुरु सारकमीरितम्। कर्कन्धूः क्षुद्रवदरं कथितं पूर्व्वसूरिभिः। अम्लं स्यात् क्षुद्रवदरं कषायं मधुरं मनाक्। स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्। शुष्कं भेद्यग्निकृत् सर्वं लघु तृष्णाक्लमास्रजित्” फले न०। “दर्भोरूपं कर्कन्धूनि” यजु० १६,२१, कर्कन्धूनां पाकः पीलवादि० कुणच्। कर्कन्धूकुण तत्पाके न०। प्रस्थपरे कर्क्यादि० कर्कन्धूप्रस्थइत्यादौ नाद्युदात्तता। ततः मध्वा० चतुरर्थ्यां मतुप्। कर्कन्धूमत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। कर्कन्धूमती। तस्या अदूरभवः सुवास्वा० अण्। कार्कन्धूमत तददूरदेशभवे त्रि०।

कर्कफल न० कर्क—हासे अच् कर्कं प्रकाशान्वितं सत् फलति फल-अच्। क्षुद्रामलके राजनि०।

कर्कर पु० कर्क—हासि—अरन्। १दर्पणे,मेदि० २चूर्णसाधने क्षुद्रपाषाणखण्डे काङ्करे, (काँकर)। कर्क—अच् कर्कं हासं राति—रा—क। ३दृढे ४कठिने त्रि० मेदि०। “किं नो वर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते” अमरुश०। “करीरः कर्करोऽर्करुक्” माघः। ५मुद्गरे शब्दचि०।

कर्कराङ्ग पु० कर्करङ्गवाङ्ग यस्य। खञ्जने कालकण्ठविहङ्गमे शब्दमा०।

कर्कराटु पु० कर्कं हासं रटति रट—कु। कटाक्षे भटाधर।

कर्कराटुक पु० कर्कं कठिनं रटति रट—उकञ्। (करकटिया) विहङ्गभेदे शब्दर०।

कर्कराम्बुक पु० कर्करः कठोरः अतिशयितान्धाकारवत्त्वात् अन्धुः कूपः संज्ञायां कन्। अत्यन्तान्धकारवति कूपे। त्रिका०।

कर्कराल पु० कर्करं यन् अलति अल—अच्। चूर्णकुन्तले हेमच०। तस्य इतरकेशापेक्षया कठिनत्वात्तथात्वम्।

कर्करिका स्त्री कर्कर इवास्त्यस्याः अच् संज्ञायां कन् अत इत्त्वम्। नेलवर्णभेदे शब्दचि०। तत्र हि नेले काङ्करयुक्ततेवोपलभ्यत इति तस्यास्तथात्वम्।

कर्करी स्त्री कर्कं हासं राति रा—क गौरा० ङीष्। (झारी) १गलन्तिकापात्रे, अमरः कन्दोर्द्ध्वतादिपक्वनिष्काशनसाधने (आजरा) २द्रव्ये च शब्दचि०। कर्कं राति रा—ईकन्। कर्करीकोऽप्यत्र। कर्करी+स्वार्थे कन् न ह्रस्वः कर्करीका तत्रार्थे स्त्री। [उज्ज्वल०।

कर्करीक न० कर्क—फर्फरीका० ईकन् नि०। शरीरे

कर्करेट पु० कर्क कर्कति शब्दं रेटत्यस्मात् रेट—अपादाने घञ्। अर्द्धचन्द्रे गलहस्ते (गलाटिपि) गलामर्द्दने हि कर्कशब्दकरणात्तस्य तथात्वम्।

कर्करेटु पु० कर्केति शब्दं रेटति उन् उप० स०। (करकटिया) पक्षिभेदे अमरः।

कर्कश पु० कृञ् हिंसायां विच् कः सन्+कशति—कर्क—अच् कर्क+लोमादि० श, करे कशति कश—शब्दे अच् शक० वा। १काम्पिल्लवृक्षे (गुड़ारोचनी) अमरः। २कासमर्द्दे। (कालकासेन्दा) ३इक्षुभेदे ४खड्गे च हेम०। ५साहसिके कठोरे च त्रि० अमरः “भेणुकर्कशपर्वया” रघुः। “ऐरावतास्फालनकर्कशेन” कुमा०। “कृष्णा श्यावाथलिप्ता वा जिह्वा शूना च यस्य वै। कर्कशा वा भवेद्यस्य सोऽचिरात् द्विजपद्मावरुद्धन्” सुश्रु०। कर्कशं परिजीर्णञ्च क्रिमिजुष्टमदेशजम्। वर्जयेत् पत्रशाकन्तु” सुश्रु० “सुरद्विपास्फालन-

करेन
करे

कर्कशाङ्गुलौ" रघु०। ६कठिनस्पर्शवति त्रि० अमरः ७क्रूरे ८निर्दये च त्रि० मेदि०। ९दुर्बोधे च "तर्के वा भृशकर्कशे मम समं लीलायते भारती" प्रसन्न०। १०अत्यन्ते च "तस्य कर्कशविहारसम्भवम्" रघुः कर्कशस्य भावः त्व। कर्कशत्व न० तल् कर्कशता स्त्री। ष्यञ्। कार्कश्य न० इमनिच् कर्कशिमन् पु० कर्कशभावे "नागेन्द्रहस्तास्त्वचि कर्कशत्वात्" कुमा०। "आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम्" माघः। कार्कश्यञ्च स्पर्शभेदः। "स्पर्शनेन्द्रियविषयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनाः" इत्यादिसुश्रुतोक्तेस्तस्य स्पर्शेन्द्रियग्राह्यता। स च पार्थिवगुणभेदः। अन्यद्रव्ये तु कार्कश्यव्यवहारोभाक्तः। सुश्रुतोक्तेषु चिकित्सोपयोगिविंशतिगुणेषु ११गुणभेदे ते च गुणा यथा

"अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम्। कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः। ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित्। उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः। स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा। रूक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः। पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः। विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः। दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा। सादोपलेपबलकृद्बृंहणस्तर्पणो गुरुः। लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा। दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः। दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे। द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः। श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा। सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः। दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः। सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः। व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते। विकाशी विकसन्नेवं धातुबन्धान् विमोक्षयेत्। आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत्। सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतस्स्वनुसरः स्मृतः। गुणा विंशतिरित्येवं यथावत्परिकीर्त्तिताः"। १२वृश्चिकालीवृक्षे स्त्री राजनि०

कर्कशच्छद कर्कशः छदः पत्रमस्य। (शेओड़ा) १शाकोटवृक्षे शब्दमा० २पटोले च त्रिका०। कर्कशदलोऽप्यत्र। ३कोषातक्यां स्त्री टाप् राजनि०। कर्कशदला दुग्धवृक्षे राजनि०।

कर्कशवाक्य न० कर्म०। निष्ठुरवाक्ये परुषवाक्ये शब्दर०।

कर्कशिका स्त्री कर्कश—संज्ञायां कन् अत इत्वम्। वनको-लिवृक्षे रत्नमा०। [मिश्रितसक्तुषु हारा०।

कर्कसार न० कर्कं कठिनं सारोऽस्य। करम्भे दधि-

कर्कारु पु० कर्कं हास श्वेततामृच्छति ऋ—उण्। १कुष्माण्डे। (पाडकुमड़ा)। अमरः तस्य पक्वे फले श्वेततायुक्तत्वात् तथात्वम्। अस्य स्त्रीत्वमपि "कर्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः। पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्" इति भावप्र० उक्तेः। २एर्वारुककर्कारूष्माण्डसम्भवानां तैलानि मधुराणि" सुश्रु० तयोर्भेदनिर्देशात् विशेषकुष्माण्डे एव एर्वारुरिति बोध्यम्। "एर्वारुकं सकर्कारु पक्वं स्यात् कफवातकृत्। सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम्। सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम्। भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु वपुः"। इति कर्कारौ "पित्तघ्नं तेषु कुष्माण्डम् बालं मध्यं कफावहम्। पक्वं लघूष्णं क्षारं च दीपनं वस्तिशोधनम्"। इति कुष्माण्डस्य च भेदेन गुणभेदोक्तेस्तयोर्भेदः

कर्कारुक पु० कर्क हासमृच्छति ऋ—उकञ् नि०। कालिन्दफले (खेड़ो) हारा० कालिन्दशब्दे गुणादि वक्ष्यते

कर्कि पु० कर्क—इन्। कर्कटराशौ। "कर्किमीनधनुर्भ्याञ्च हरिः कीटघटेन च" ज्यो०त०।

कर्की कर्क—हासे अच् गौरा० ङीष्। शुभ्र घटाम् (खांकुड)

कर्केतन पु न० रत्नविशेषे। "रत्नान्याह गरुड़पुराणे आ०त० "तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानि च। प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च। वज्रं मुक्तामणयः पद्मरागाश्च मरकताः प्रोक्ताः। अपि चेन्द्रनीलमणिवैदूर्य्याः पुष्परागाश्च। कर्केतनपुलकविल्वौ रुधिराख्यसमन्वितं तथा स्फटिकम्। विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः" इत्युक्तिश्च। "वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सासाद्य वनेषु हृष्टः। ततः प्रसूतं पवनोपपन्नं कर्केतनं पूज्यतमं पृथिव्याम्। वर्णेन तद्रुधिरसोमसधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति। नीलं पुनः शुक्लसितं परुषं विभिन्नं व्याध्यादिदोषहरणेन न तद्विभाति। स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः। त्रासव्रणव्याधिविवर्जिताश्च कर्केतनास्ते परमाः पवित्राः। पत्रेण काञ्चनमयेन तु वेष्टयित्वा हुते गतेऽथ हुतमेतदतिप्रकाशम्। रोगप्रणाशनकरं कलिनाशनञ्च आयुष्करं कुलकरञ्च सुखप्रदञ्च। एवंविधं बहुगुणं मणिमावहन्ति कर्केतनं शुभमलं कतरे नरा ये। ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति। एके विमल

विक्षताकुश्चनीलभास प्रस्नानरागलुलिताः कलुषा विरू-पाः । तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः कर्केतनस्य सदृशं वपुरुद्वहन्ति । कर्केतन यदि परीक्षितवर्णरूपं प्रत्य-ग्रभास्वरदिवाकरसम्प्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदां महिम्ना तुल्यन्तु मूल्यमुदितं तुलितस्य कार्यम्" ७५अ०

कर्कोट(क) पु० कर्क—क्वाट । १नागभेदे स च अष्टनागान्तर्गतः । "अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः । कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः" त्रिका० । ति०त० पुराणान्तरे गारुड़े च द्वितीयार्द्धे "कुलिक कर्कटः शङ्ख इति पाठः । अयञ्च नागपञ्चम्यां पूज्यः यथाह तत्रैव । "शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः । वासुकिः शङ्खकश्चैव कालियो मणिभद्रकः । ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ" इति । अयञ्च कद्रूपुत्रभेदः । "शेषः प्रथमतो जातो वासुकिस्तदनन्तरम् । ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" भा० आ० ३५अ० नागनामकथने । कर्कोटकनागस्य नारदशापेन जडतामाप्तिकथा नलेन सह संवादश्च भा० व० ६६अ०

"उत्सृज्य दमयन्तीन्तु नलो राजा विशाम्पते ! । ददर्श दावं दह्यन्तं महान्तं गहने वने । तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् । अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् । मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् । ददर्श नागराजानं शयानं कुण्डलीकृतम् । स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा । उवाच विद्धि मां नाम्ना नागं कर्कोटकं नृप ! । मया प्रलब्धो महर्षिर्नारदः सुमहातपाः । तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ! । तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् । इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् । तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् । उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् । सखा च ते भविष्यामि मत्समो नास्ति पन्नगः । लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् । एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः । तं गृहीत्वा नलः प्रायादुद्देशं दावविवर्जितम् । आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना । उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् । पदानि गणयन् गच्छ स्वानि नैषध ! कानिचित् । तत्र तेऽहं महाबाहो ! श्रेयो धास्यामि यत् परम् । ततः सङ्ख्यातुमारब्धमदशद्दशमे पदे । तस्य दष्टस्य रूपं तत् क्षिप्रमन्तरधीयत । स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः । स्वरूपधारिणं नागं ददर्श स महीपतिः । ततः कर्कोटको नागः सान्त्वयन् नलमब्रवीत् । मया तेऽन्तर्हितं रूपं न त्वा विद्युर्जना इति । यत्कृते चासि निकृतो दुःखेन महता नल ! । विषेण स मदीयेन दुःखं त्वयि निवत्स्यति । विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति । तावत्त्वयि महाराज ! दुःखं वै स निवत्स्यति । अनागा येन निकृतस्त्वमनर्हो जनाधिप ! । क्रोधादसूययित्वा तं रक्षा मे भवतः कृता । न ते भयं नरव्याघ्र ! दंष्ट्रिभ्यः शत्रुतोऽपि वा । ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ! । राजन् ! विषनिमित्ता च न ते पीड़ा भविष्यति । संग्रामेषु च राजेन्द्र ! शश्वज्जयमवाप्स्यसि । गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् । समीपमृतुपर्णस्य स हि वेदाक्षनैपुणः । अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर ! । स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै । इक्ष्वाकुकुलजः श्रीमान् मित्रञ्चैव भविष्यति । भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा । समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः । राज्येन तनयाभ्याञ्च सत्यमेतद्ब्रवीमि ते । स्वं रूपञ्च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ! । संस्मर्त्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः । अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे । इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा । एवं नलं समादिश्य वासो दत्त्वा च कौरव ! । नागराजस्ततो राजंस्तत्रैवान्तरधीयत" ।

७२अ० "तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः । कर्कोटकविषं तीक्ष्णं मुखात् सततमुद्वमन्" । ७६अ० । "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्" स्मृतिः । कन् २बिल्ववृक्षे पु० राजनि० । ३फललताभेदे (काँकुड़) गौरा० ङीष् "कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् । ईषद्विभिन्नमरिचैः परिपूर्णगर्भं तैलेन रञ्जितमुखैर्बहुपाकयोगम् । बाह्लीकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तदन्यम्" । वैद्यके तद्गुणपाकादि । ४पीतघोषावृक्षे स्त्री राजनि० । स्वार्थे कन् अत इत्त्वम् । कर्कोटिका (काकरोल) वृक्षे (काँकुड़) ५कुष्माण्डशाखे स्त्री राजनि० ।

कर्कोटवापी स्त्री कर्कोटनागवासेन कृता वापी । काशीस्थे

ती भेदे । "कर्कोटकाख्या दैयाने मरीचे गुच्छकसमम्" काशीख० ।

**कर्कादि** पु० प्रस्थेपरे अष्टकपूर्व्वपदस्य आद्युदात्ततापर्य्युदासविषये पाणिन्युक्ते शब्दगणभेदे स च "कर्की मघी मकरी कर्कन्धू करीर कन्दुक करण बदरी" कर्कीप्रस्थ ।

**कर्च्चरिका** स्त्री पूरिकाभेदे (कचुरी) पाकराजेश्वरः । तत्पाकप्रकार भावप्र० उक्तो यथा "माषाणां पिष्टिका पूर्वा लवणार्द्रकहिङ्गुभिः । तया पिष्टिकया पूर्णा समिता कृतपोलिका । ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः । रुच्या स्वाद्वी गुरुः स्निग्धा बल्या पित्तास्रदूषिका । चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी । तथैव घृतपक्वापि चक्षुष्या रक्तपित्तहृत्" ।

**कर्च्चुरी** स्त्री कं जलं चुर्य्यतेऽत्र चुर-घञ्० क गौरा० ङीष् । जलशून्ये गुड़कफलशकले (कचुरी) पायसाभावप्रसिद्धे द्रव्ये "क्षीराम्लकतकस्यारा शुष्का स्नेहविपाचिता । अरोचकादिरोगाणां कर्च्चुरी कण्ठकर्त्तरी । कर्च्चुरी रुचिकृत् बल्या सुस्वादुरतिवेसनी । उष्णा पित्तकरी प्रोक्ता कफहृत् सारिका स्मृता" भावप्र० ।

**कर्च्चूर** न० कर्ज्ज उर+घञ्० । १स्वर्णे । २कर्च्चूरवस्तु ३तद्वति लि० अमरटीका (कचूर)प्रसिद्धे ४गन्धसारे शठ्याम् पु० भावप्र० । तद्गुणादि "कर्च्चूरो वेधमुख्यश्च द्राविडः कल्पक शठी । कर्च्चूरो दीपनो रुच्य कटुकस्तिक्त एव च । सुगन्धिः कटुपाक स्यात् कुष्ठार्शोव्रणकासनुत् । उष्णोलघुर्हरेच्छ्वास गुल्मवातकफक्रिमीन्" ५हरिताले न० वैज० । "रराज कर्च्चूरपिशङ्गवाससम्" माघ । "कर्च्चुरं हरितालम्" मल्लि० ।

**कर्च्चूरक** पु० कर्च्चूर+स्वार्थे कन् स इव कायति कै-क वा । (कांचा) १हरिद्रायाम् जोरसा० । तस्याः शठ्याकृतिस्यात् तथात्वम् । २कर्च्चूरशब्दार्थे च । [चकर्ज्ज मगिकर्जीति ।

**कर्ज्ज** पीडायाम् भ्वा० पर० सक० सेट् । कर्जति अकर्जीत् ।

**कर्ण** भेदने अदन्तचुरादि० उभ० सक० सेट् । कर्णयति ते अचकर्णत् त । कर्णयाम्-बभूव आस चकार चक्रे । कर्णयिता कर्णयिष्यति । कर्णनम् कर्णः कर्णित कर्णयितुम् । कर्णयन् कर्णयमानः । कर्णयित्वा आकर्ण्य कर्णी । कर्ण्यते अकर्णि अकर्णिषाताम् अकर्णयिषाताम् आ+कर्ण-श्रवणे । "आकर्णयन्नुत्सुककर्णमादात्" भट्टि । "मिथस्तदाकर्णनसज्जकर्णया" देवाकर्णेन सुस्तेन परकर्णोक्तेन आनेर्जितम् । "अदलदाऽकर्णि फलाढ्यजीवितम्" इति च नैष० । "आकर्ण्य बभाषे ह तं चराचरगुधाराम्" सा०द० ।

**कर्ण** पु० । कर्ण्यते आकर्ण्यतेऽनेन कर्ण करणे अप् कीर्य्यन्ते शब्दा वायुनाऽत्र कॄ-नन् वा । १श्रोत्रे शब्दज्ञानसाधने इन्द्रियभेदे तदाधारे २गोलके च । श्रोत्रञ्च कर्णशष्कुल्यवच्छिन्नमभोरूपमिति नैयायिकादयः । सात्त्विकाकाशस्यशांश इति वेदान्तिनः सांख्यादयश्च सोचक्रुः । तन्नाद्यमते शब्दोत्पत्तिदेशे श्रोत्रस्य गमनाभावेन अन्यत्रोत्पन्नशब्दग्रहणासम्भवः । तथा हि आकाशस्यैकत्वेऽपि उपाधिभेदेन भेदात् वदीयकर्णशष्कुलीप्रदेशे शब्दसमवायसत्त्वेन श्रावणम् नान्यस्य, ततश्च वीचितरङ्गन्यायेन कदम्बकोरकन्यायेन वा शब्दोत्पत्तावपि शब्दोत्पत्तिदेशस्य श्रोत्रस्य विभिन्नदेशस्थतया न शब्दोपलब्धिः स्यात् । अतस्तद्देशस्थस्य श्रोत्रं प्रत्यागतस्य वायोः संयोगविभागादयः श्रोत्र शब्दादभिव्यञ्जकाः । तदेतत् शङ्कापूर्व्वकम् मीमांसाभाष्ये समर्थितम् यथा ।

"यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति न कुर्व्वन्ति, आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, य एवापरस्य श्रोत्राकाश, स एव देशान्तरेष्वपीति सुशस्यैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत ? । यस्य पुनः कुर्व्वन्ति, तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति । यथा, तन्तव तन्तुष्वेव पटं, तस्य पाटलिपुत्रे नुपलम्भो युक्तः, सुघ्नस्थत्वात्तेषाम् । यस्याप्यभिव्यञ्जन्ति, तस्याप्येव न दोष, दूरे सत्त्वा कर्णशष्कुल्या अनुपकारका संयोगविभागाः । तेन दूरे सन्नपि तेन नोपलभ्यते" इति । नैतदेवं, अप्राप्ताश्च संयोगविभागाः श्रोत्रस्योपकुर्युः सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् न च युगपदुपलभेते । तस्मात्प्राप्ताः उपकुर्व्वन्ति, न चेदुपकुर्व्वन्ति, तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागौ इति" । नैतदेवं, अभिघातेन हि प्रेरिता वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्व्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते । ते च (संयोगविभागाः) वायोरप्रत्यक्षत्वात् नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते, नोपरतेषु । अतो न दोष । अत एव चानुवातं दूरादुपलभ्यते शब्दः" ।

वेदान्त्यादिमते शब्दस्य पञ्चभूतगुणतया शब्दाधारं वायुना झटिति कर्णदेशे गमनेन भासमानेन कर्णप्रापकप्रभ-

त्वेन शब्दोपलम्भः। तन्मते श्रवणेन्द्रियस्य प्राप्यकारित्वोक्तिरप्येतत्परेति बोध्यम्।

कर्णस्याधिष्ठातृदेवश्च दिक् इति कर्णाधिपशब्दे उक्तम्। कर्णग्राह्यश्च शब्दास्तद्धर्माश्च "कर्णे कृतं कनकपत्रमनालपन्त्या" चौरप०। "नियतदाकर्ण्य नवाब्जकर्णया" नैष० "तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः" रघुः श्रवणेन्द्रियस्य सूक्ष्मत्वेऽपि तदाधाराभिप्रायेण "अवलम्बितकर्णशष्कुलीकलशीकं रचयन्नवोचत" नैष० वाक्यम्। २सुवर्णालीवृक्षे मेदि०। त्रिकोणादिक्षेत्रे ४भुजकोटिसंयोजकरेखाभेदे तद्रेखामानज्ञानोपायश्च लीला० उक्तः यथा "इष्टाद्बाहोर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरो बाहुः। त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः। तत्कृत्योर्योगपदं कर्णो दोःकर्णवर्गयोर्विवरात्। मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात् पदं बाहुः" इति उदा० दिङ्मात्रमत्रोच्यते भुजः ४ कोटिः ३ अनयोर्वर्गौ १६, ९, तयोर्योगः २५ तस्य मूलम् ५ तथाच चतुर्हस्तबाहुके त्रिहस्तकोटिके क्षेत्रे कर्णमानम् पञ्च हस्ताः। अधिकं क्षेत्रव्यवहारशब्दे वक्ष्यते। अस्य च भुजकोटिभेदनात् कृतिद्वारा तयोर्वर्गव्यापनाच्च कर्णत्वम्। ५कुटिले च "व्याघारवत् प्राप्नुतः कर्णसहिताः" कात्या० १७,६,०। "कर्णेन वक्रतया सहिताः" सं० व्या० "वक्रतया कौटिल्येन" इति कात्या० ५, ४,१५ सू० व्या० कर्क०। कुन्त्या कन्यावस्थायां सूर्य्यात् जाते स्वनामख्याते ६वसुषेणे तदुत्पत्तिकथा यथा "शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्। तस्य कन्या पृथा नाम रूपेणासदृशी भुवि। पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान्। अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा। अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया। अददत् कुन्तिभोजाय स तां दुहितरं तदा। सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने। उग्रं पर्य्यचरद्घोरं ब्राह्मणं संशितव्रतम्। निगूढनिश्चयं धर्म्मे यन्तं दुर्वाससं विदुः। तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत्। तस्यै सोऽभिचारसंयुक्तमाचचक्षे यथाविधि। उवाच चैनां भगवान् प्रीतोऽस्मि सुभगे! तव। यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तस्य तस्य प्रसादात्त्वं देवि! पुत्रान् जनिष्यसि। एवमुक्ता च सा बाला तदा कौतूहलान्विता। कन्या सती देवमर्कमाजुहाव यशस्विनी। प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा। अजीजनत् सुतं तस्यां सर्वशस्त्रभृतां वरम्। सकुण्डलं सकवचं देवगर्भं श्रियान्वितम्। दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम्। निगूहमाना जातं वै बन्धुपक्षभयात् तदा। उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम्। तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः। राधायाः कल्पयामास पुत्रं सोऽधिरथिस्तदा। चक्रतुर्नामधेयञ्च तस्य बालस्य तावुभौ। दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम्। स वर्द्धमानो बलवान् सर्वास्त्रेषूत्तमोऽभवत्। वेदाङ्गानि च सर्वाणि समाप जयतां वरः। यस्मिन् काले जपन्नास्ते धीमान् सत्यपराक्रमः। नादेयं ब्राह्मणेष्वासीत्तस्मिन् काले महात्मनः। तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः। ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजम्। उत्कृत्य कर्णो ह्यददत् कवचं कुण्डले तथा। शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत्। देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्। यस्मिन् क्षेप्स्यसि दुर्द्धर्ष! स एकोन भविष्यति। पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ। ततो वैकर्त्तनः कर्णः कर्मणा तेन सोऽभवत्। आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः। स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः। स तु सूतकुले वीरो ववृधे राजसत्तम!। कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम्। दुर्य्योधनस्य सचिवं मित्रं शत्रुविनाशनम्। दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम्"। तस्याङ्गदेशाधिपताप्राप्तिः अङ्गाधिपशब्दे उक्ता। कर्णोऽस्त्यस्य प्राशस्त्येन अर्श० अच्। ७लम्बकर्णे त्रि०। "षड्गोश्वैदेवः श्वा कृष्णः कर्णो गर्दभः" यजु० २४,४०। "कर्णो लम्बकर्णः" वेददी०। ८अरित्रे च पु० कर्णे "श्रोत्रमरित्रं श्चेति" दुर्गः। कर्णधारः। "कृतकर्ण इव नौर्जले" रामा०।

कर्णिक पु० कर्णयति विभिद्य जायते कर्ण—ण्वुल्। वृक्षादीनां १पत्रशाखादौ तेषां दारुस्फोटनेन जायमानत्वेन तथात्वम्। "अथोदुम्बरोमादधाति ऊर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः" "यदि कर्णकवतीं न विन्देत् दधिद्रप्समपहत्यादध्यात्" शत० ब्रा० ९,२, ३,४०। "कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते" भा०। पशूनाञ्च कर्णकशब्दवाच्यत्वञ्च पत्रशाखादिना पुष्टिमत्त्वात् इत्यपि तत्रैवोक्तम् पत्राणाञ्च कर्णाकारत्वादपि कर्णकत्वमित्यपि बोध्यम् वृक्षाणां दारुस्फोटे २रोगे च। "प्रत्यञ्चस्तुत्वा सकर्णकाः" कात्या० १८,४,६। "कर्णकोदारुस्फोटोरोगस्तद्वती औदुम्बरी" सं० व्या०। "कर्णकाभावे दधिद्रप्साः" कात्या० १८,४,७। तत तारादि० इतच्। कर्णकितजातपत्रादौ त्रि०।

कर्णकण्डू स्त्री ७त०। कर्णगतरोगभेदे कर्णगतरोगशब्दे विवृतिः।

पृथिवी शून्येव प्रतिभाति मे । गते दशरथे स्वर्गे रामे च दण्डमाश्रिते" रामा० ।

कर्णनाद पु० कर्णे अङ्गुल्यापिहितकर्णे नादः ध्वनिभेदः । अङ्गुल्यापिहितकर्णे (भों भों) इत्याकारे मध्यमाशब्द-स्वरूपे ध्वनिभेदे । "मध्यमा श्रुतिगोचरा" इत्युक्ते रस्या-स्तथात्वम् ।

कर्णपत्रक पु० पत्रमिव कायति कै—क कर्णे पत्रक इव । कर्णपाल्याम् । "कनीनिके चालिकूटे शङ्खकुली कर्णपत्रकौ । कर्णौ शङ्खौ भ्रुवौ दन्तावेष्टावोष्ठौ ककुन्दरे" याज्ञ० । "कर्णपत्रकौ कर्णपाल्यौ" मिता० ।

कर्णपथ पु० कर्णः एव पन्था अच् समा० । कर्णरन्ध्ररूपे शब्दप्रवेशनयोग्ये मार्गे ।

कर्णपरम्परा स्त्री ६त० । श्रवणपरम्परायाम् । (काणा काणि) "तेनैव च क्रमेणैव गत कर्णपरम्पराम् । प्रवादोऽयं बहुलीभाव सर्वत्रापि पुरे ययौ" कथासरित्सा० । एकस्य सकाशादन्येन श्रुतस्यान्यस्मै कथने तेनापि पुनरन्यस्मै कथने एव परम्परया श्रवणे चास्य वृत्तिः

कर्णपराक्रम पु० अपभ्रंशयोग्यबहुच्छन्दोयुक्ते काव्यभेदे ।

कर्णपर्वन् न० भारतान्तर्गते अष्टमे पर्वणि । तत्पर्वणि कथासंग्रहश्च भा०आ०१अ० यथा

"अत परं कर्णपर्व प्रोच्यते परमाद्भुतम् । सारथ्ये विनियोगश्च मद्रराजस्य धीमत । आख्यानं यत्र पौराणं त्रिपुरस्य निपातनम् । प्रयाणे परुषश्चात्र संवादः कर्णशल्ययो । हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् । वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना । दण्डसेनस्य च ततो दण्डस्य च वधस्तथा । द्वैरथे यत्र कर्णेन धर्मराजो युधिष्ठिरः । संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् । अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः । तत्रैवानुनयः प्रोक्तो माधवेनार्जुनस्य हि । प्रतिज्ञापूर्वकञ्चापि वक्षोदारणं दुःशासनस्य च । भित्त्वा वृकोदरो रक्तं पीतवानत्र संयुगे । द्वैरथे यत्र पार्थेन हतः कर्णो महारथः । अष्टमं पर्व निर्दिष्टमेतद्भारतचिन्तकैः । एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि । चत्वार्येव सहस्राणि नव श्लोकशतानि च । चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः" ।

"कर्णपर्वण्यपि तथा भोजनं सार्वकामिकम् । विप्रेभ्यः सक्तं सम्यग्दद्यात् स यतमानस" भा०स्वर्गा० ६अ० ।

कर्णपाक पु० सुश्रुतोक्ते कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः ।

कर्णपालि(ली) स्त्री ६त० । कर्णपाशके कर्णावयवभेदे । (काणेरपाता) तदवयवस्य चाप्रमेयीभेद यथाह भावप्र० मांसपेशीसंख्याविभागे "यथार्थभूमध्या युक्तोपायु स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । मांसपेश्यः समाख्याताः तासां पञ्च शतानि च" इत्युपक्रम्य "गण्डयोश्चतस्र. कर्णयोर्द्वे" इत्युक्तम् । "कर्णशोथो भवेत् पाल्याम्" "कुर्वन्ति पाटिका पाल्याम्" "छिन्द्यात् स यवकुलान् पाल्ये" । कर्णरोगे भावप्र० "छिन्द्यात् निर्मांसीकुर्य्यात्" भावप्र० । कर्णं पालयति पाल+अण् उप०स० गौरा० ङीष् । (काणवाला) २कर्णालङ्कारभेदे हारा०

कर्णपाल्यामय पु० ७त० । कर्णव्यधदोषजे सुश्रुतोक्ते कर्णपालिरोगभेदे स च सुश्रुते सोपद्रवो दर्शित यथा "कर्णपाल्यामयाञ्छृणु पुनर्व्वक्ष्यामि सुश्रुत । कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः । द्विधा वाप्यथ समस्ता कुर्व्वन्ति विविधा रुजः । विस्फोट स्तब्धता शोथ पाल्यां दोषे तु वातिके । दाहविस्फोटजननं शोथ पाकश्च पैत्तिके । कण्डूः सश्वयथुस्तम्भो गुरुत्वञ्च कफात्मके । यथादोषञ्च संशोध्य कुर्य्यात्तेषां चिकित्सितम् । स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः । मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा । य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति । अत ऊर्द्ध्वं नामलिङ्गैर्व्वक्ष्ये पाल्यामुपद्रवान् । उत्पाटकश्चोत्पुटक श्यावः कण्डूयुतो भृशम् । अवमन्थ. सकण्डूको ग्रन्थिको जम्बुलस्तथा । स्रावी च दाहवांश्चैव इत्युक्ता क्रमशः क्रियाम्" ।

कर्णपिशाची स्त्री देवीभेदे । तन्त्रसारे मन्त्र दृश्यम् ।

कर्णपुर न० ६त०अच् समा० । चम्पानगर्य्याम् हेमच० ।

कर्णपुष्प पु० कर्ण इव पुष्पं यस्य । मोरटालतायाम् राजनि० ।

कर्णपूर पु० कर्णं पूरयति पूर-अण् । १कर्णाभरणे, २नीलोत्पले, ३शिरीषवृक्षे मेदिनिः । ४अशोकवृक्षे राजनि० । एतेषां पुष्पं. स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् । "यस्याश्चौरश्चिकुरनिकर कर्णपूरो मयूर" प्रसन्नरा० । "प्रत्यग्रमशोकाङ्कुरकर्णपूर" "विलम्बिनीलोत्पलकर्णपूरा रघु ।

कर्णपूरक पु० कर्णं पूरयति पूर—ण्वुल् । १कदम्बवृक्षे राजनि० । स्वार्थे कन् । २कर्णाभरणे ३नीलोत्पले, ४शिरीषवृक्षे ५अशोकवृक्षे च राजनि० । एतेषां पुष्पं स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् ।

कर्णपूरण न० ६त० । सुश्रुतोक्ते तैलादिना कर्णस्य पूरणे

संस्कारः किन्तु श्राद्धादौ पात्रतासम्पादकोऽदृष्टविशेषजनकः क्रियाभेद इत्याकरे स्थितम्। शलाकामानं कर्णवेधनीशब्दे वक्ष्यते। अत्र कालादिप्रतिप्रसवः ज्यो॰त॰ मार्कण्डेयवृद्धगार्ग्यवचनमात्रं कृत्यचिन्तामणौ "यदा पत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च। षट्कर्णं तं विजानीयात् गर्हितश्चैतयस्य च। इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्याथ वत्सरे। कर्णवेधो हितस्तस्य मासे ज्येष्ठविचारणा। षट्कर्णोत्पत्तिमाशङ्क्य मासो शुद्धा शुभेऽपि च। कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणं भवेत्"

**कर्णवेधनी** स्त्री कर्णौ विध्यते अनया विध–करणे ल्युट् ङीप्। कर्णवेधसाधने शलाकायां तन्मानादिः मदनरत्ने ह॰प॰। "सौवर्णी राजपुत्रस्य, राजती विप्रवैश्ययोः। शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका"। अस्य त्रिकाण्डप्रमाणतया शब्दकल्पद्रुमे हस्तिकर्णवेधन्यर्थकतोक्तिः नालीकर्णारेतिपर्य्यायोक्तिश्च प्रामादिकी। त्रिकाण्डशेषे हि "नन्द्या गात्रावरे नाली कर्णरोकन्तु वेधनी" त्येव पाठस्यैव दर्शनात् कर्णच्छिद्रस्य वेधनीपर्य्यायतायाः नालीशब्दस्य गात्रावरपर्य्यायतायाश्च ततः प्रतीतेः इत्थमयथार्थकशब्दकथनप्रकरणे तत्कर्णवेधन्यस्तपर्य्यायकथनानौचित्यात्।

**कर्णवेष्ट** पु॰ कर्णौ वेष्ट्येते अनेन। १कुण्डले। क्रोधवशासुरांशे २द्वापरयुगीयनृपभेदे च। "गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। तत्र सञ्जज्ञिरे वीराः-क्षिताविह नराधिपाः। मद्रकः कर्णवेष्टश्च सिद्धार्थः कीचकस्तथा" भा॰ आ॰ ६७अ॰। स्वार्थे कन्, कर्णवेष्टकोऽप्यत्र। कर्णवेष्टाय हितम् छ यत् वा। कर्णवेष्टकीय–कर्णवेष्ट्य तद्धिते शरणादौ त्रि॰। भावे ल्युट्। कर्णवेष्टन कर्णभूषणे न॰। करणे ल्युट्। कुण्डले अमरः। तत्र ताभ्यां शम्भ्वादौ ठक्। कार्णवेष्टकिक कार्णवेष्टनिक कर्णवेष्टन(के)न शोभमाने त्रि॰ "कार्णवेष्टनिकं मुखम्" भट्टिः।

**कर्णव्यधविधि** पु॰ कर्णव्यधस्य कर्णवेधस्य विधिः। सुश्रुतोक्ते कर्णवेधप्रकारभेदे स च प्रकारः सुश्रुते दर्शितो यथा "अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः। रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेन ऋजु विध्येत् प्रतनुकं सूच्या बहलमारया पूर्वं दक्षिणं कुमारस्य, वामं कन्यायास्ततः पिचुवर्त्तिं प्रवेशयेत् सम्यक् विद्धमामतैलेन परिषेचयेत्। शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति। तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्म्मरिकालोहितिकास्तूपद्रवा भवन्ति। तत्र कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति। मर्म्मरिकायां वेदना ज्वरो ग्रन्थयश्च। लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्वीत। क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्त्तित्वाद्दोषप्रकोपादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्त्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत्तावद्यावत् सुरूढ इति सुरूढं चैनं पुनर्विध्येत् विधानन्तु पूर्वोक्तमेव। तत्र सम्यग्विद्धं वर्त्तिं स्थूलतरां दद्यात्परिषेकं तमेव। अथ व्यपगतदोषोपद्रवे कर्णे वर्द्धनार्थं लघुवर्द्धनकं कुर्यात्। भवति चात्र। एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्। दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु।

तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः। तद्यथा-नेमिसन्धानकः उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्व्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। बाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्व्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्याः तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। संक्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्व्वल्लीकर्णः, ग्रथितमांसस्तब्धसिराततसूक्ष्मपालिर्यष्टिकर्णः। निर्म्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति। बद्धेष्वपि तु शोथदाहरागपाकपिड

शास्त्रवयुक्ता न सिद्धिमुपयान्ति । भवन्ति चात्र । यस्य पालिद्वयमपि कर्णस्य न भवेदिह । कर्णपीठं समे मध्ये तस्य विद्धा विवर्द्धयेत् । बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् । आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः । एकैव तु भवेत्पालिः स्थूला पृथ्वी स्थिरा च या । तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् । गण्डादुत्पाद्य मांसेन सानुबन्धेन जीवता । कर्णपालिमपालेस्तु कुर्यान्निर्लिख्य शास्त्रवित् । अतोऽन्यतम बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसम्भारं विशेषतश्चात्रोपहरेत् सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णं चेति । ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नमुपपाद्य कर्णशोणितमवेक्षेत दुष्टमदुष्टं वेति । तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां, पित्तदुष्टे शीतोदकपयोभ्यां, श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात् । ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्याचारिकमुपदिशेद्द्विव्रणीयोक्तेन विधानेनाचरेत् । भवतश्चात्र । विवर्जयेद्दिवास्वप्नं व्यायाममतिभोजनम् । व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्जयेत् । आमतैलपरीषेकं त्रिरात्रमवचारयेत् । ततस्तैलेन ञ्चूर्ण्य तृतीयादपनयेत् पिचुम् । न चासंशुद्धरक्तमतिप्रवृत्तरक्तं वा सन्दध्यात् । स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान् । क्षीणोऽल्पमांसो न वृद्धिमुपैति । स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैः शनैरभिवर्द्धयेत् । अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा । अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः । तद्यथा गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौरसर्षपजञ्च यथालाभं सम्भृत्यार्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गप्रतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् । स्वेदितोन्मर्दितं कर्णं स्नेहेनानेन योजयेत् । अथानुपद्रवः सम्यक् बलवांश्च विवर्द्धते । यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् । शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः । तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्द्धनम् । ये तु कर्णा न वर्द्धन्ते विधिनानेन योजिताः । तेषामपाङ्गदेशे तु कुर्यात् प्रच्छानमेव तु । बाह्यच्छेदं न कुर्वीत व्यापदस्तु ततो ध्रुवाः । बद्धमात्रन्तु यः कर्णं सहसैवाभिवर्द्धयेत् । आमकोषीसमाध्मातः क्षिप्रमेव विमुच्यते । जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः । सुरूढोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः । अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह । यो यथा सुनिविष्टः स्यात्तं तथा विनियोजयेत्" । एवं वेधप्रकाराभिज्ञेनैव भिषजा कर्णवेधः कारयितव्यः

**कर्णशष्कुली** स्त्री कर्णस्य शष्कुलीव । १कर्णगोलके, "अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत" नैष० । "कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्" मुक्ता० २तन्मध्याकाशे च ।

**कर्णशूल** न० ६त० । कर्णरोगभेदे । कर्णगतरोगशब्दे विवृतिः

**कर्णशोभन** त्रि० कर्णं शोभयति शुभ–णिच्–ल्यु । कर्णाभरणे "उत नः कर्णशोभना पुरूणि" ऋ० ८,७८,३.

**कर्णश्रव** त्रि० श्रूयते श्रवः शब्दः कर्णेन श्रवः श्रवणयोग्यः शब्दोयत्र । श्रवणयोग्यशब्दधारे वाय्वादौ "कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने" मनुः ।

**कर्णसंस्राव** पु० कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः ।

**कर्णसू** स्त्री कर्णं सूते सू–क्विप् । पृथायां कुन्त्याम् तत्प्रसवकथा कर्णशब्दे उक्ता । कर्णजनन्यादयोऽप्यत्र ।

**कर्णस्फोटा** स्त्री कर्णे स्फोटो विदारणं यस्याः । (काणफाटा) लताभेदे राजनि० । "कर्णस्फोटा कटुस्तिक्ता हिमा च परिकीर्त्तिता । सर्वपद्मभूतविषदोषघ्नाधिविनाशिनी" राजनि०

**कर्णस्रोतस्** न० कर्णस्य स्रोत इव । कर्णमले

**कर्णस्रोतोभव** पु० कर्णस्रोतसो विष्णुकर्णमलाद्भवति भू–अच्,भवत्यस्मात् अपादाने अप् कर्णस्रोतो भवोयस्य वा । विष्णुकर्णमलोद्भूते मधुनामके कैटभमधुके असुरे । "कर्णस्रोतोभवश्चापि मधुं नाम महासुरम् । तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम् । नकृष्णोऽधर्षितं कुर्वन् जघान पुरुषोत्तमः" भा० अनु० ६६अ० यथाचास्य विष्णुकर्णाद्भवः तथा कैटभशब्दे वक्ष्यते ।

**कर्णहीन** त्रि० ३त० । १बधिरे बाधिर्य्यमाप्तेच पावरिहेवलक्षा दत्ताह याता०स० । "बाकपातो कर्णहीनोदयाद्यार्कसुतमभाम्"। २सर्पे च पु स्त्री चक्षुःश्रवस्त्वात्तस्य तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

कर्णाकर्णि पु० कर्णे कर्णे गृहीत्वा प्रवृत्तं कथनम् कर्म-व्यतिहारे स०इच् समा० । (कायाकायि) कर्णपरम्परया श्रवणयोग्येऽन्योन्यकथने "कर्णाकर्णि हि कथय० कथ-यन्ति च तत्कथाम्" रामा० ।

कर्णाट पु० "रामनाथं समारभ्य श्रीरङ्गान्तं शिवेश्वरि । कर्णाटदेश इत्युक्तो राज्यसाम्राज्यदायकः" शक्तिसङ्ग० उक्ते देशभेदे अयञ्च देशः कूर्म्मविभागे बृ०सं०दक्षिणस्या-मुक्तः । "अथ दक्षिणेन लङ्केत्युपक्रम्य "कर्णाटमहाटवि-चित्रकूटेत्यादि" "कोङ्कवेङ्कटकान् दक्षिणकर्णाटान् देशान् यदृच्छयोपगतः" भाग०५,६,८, "तेषां मूर्द्ध्नि ददाति वामचरणं कर्णाटराजप्रिया" उद्भटः । कर्णाटजनपदे भव अण् । कर्णाटभवे त्रि० स्त्रियां ङीप् "कार्णा-टीपीनपीनस्तनतटनटदान्दोलहारत्नदन्दः" उद्भटः । बहुषु तस्य लुक् । कर्णाटा तद्देशवासिषु । तस्य राज-न्यपि अण् । कार्णाट तद्देशनृपे । तस्य बहुषु लुक् । एकत्वे न । "अरण्ये कार्णाटस्तदरिवनितानां विधिवशात्" उद्भटः । लुमपाठे कर्णाटशब्दस्य तद्भूमे अवयवेति भेदः । २तृणपदीलतायां स्त्री राजनि० । ३रागिणीभेदे सं-गीतदामो० । सा तु मालवरागस्य भार्या । कर्णाटे भविता अण् ङीप् कार्णाटी । अनुप्रासाङ्गवृत्तिभेदे "कार्णाटी क-वर्गैवानुप्रासवतीति सरस्व०तदाकरञ्च अलङ्कारशब्दे ३८६ पृ०दर्शितम् ।

कर्णाटक पु० गोत्रप्रवर्त्तके ऋषिभेदे तस्य गोत्रापत्यम् इञ् । कार्णाटकि । यस्कादि० तस्यास्त्रियां बहुषु लुक् । कर्णाटकास्तद्गोत्रापत्येषु । स्त्रियां तु कार्णाटक्यि इत्येव

कर्णाट्ट न० कर्ण० तिर्य्यगेषाकारवान् इत्याट्टम् । गट्टभेदे तच्चिह्नलक्षणम् "त्रिभिट्टके भविसम्भान् कर्णाट्टयैव-रायि च" भा० व० २६४ अ० २० श्लोकव्याख्याया नीलकण्ठेनोक्तं यथा । "कर्णतिर्यग्भागं तेन प्रकार-रेण यत्पाषाणादिविस्तरेण क्रियते तत्तद्दृष्टवृत्तियोगैः क-र्णाट्टमिति वदन्ति तद्वि दिक्कोणस्य चतुरस्रस्योपरि विदिक्कोण-चतुरस्रं तदुपरिदिक्कोण तदुपरि पुनर्विदिक्कोणमित्येवं क्र-मेणोत्सरोत्तरमल्पमानं चतुरस्रं समानम् इति प्रसि-द्धम्" । तत्र कर्णाटेति पाठः प्रामादिक नीलकण्ठेन क-र्णाट्टपदस्यैव व्याख्यानात् ।

कर्णादि त्रि० पाणिन्युक्ते चाकृत्प्रत्ययनिमित्ते १शब्दगणे स च गणः । कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू दन्त दृग्य ओष्ठ पृष्ठ, कर्णजाहम् अक्षिजाहमित्यादि । आङ्गर्थ्या फिञ्प्रत्ययनिमित्ते पाणिन्युक्ते २शब्दगणे च स च गणः "कर्णवसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिज् कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् जव जैत्र आनक" कर्णस्य सन्निकृष्टदेशादि । कार्णायनि तत्सन्निकृष्टदेशादौ त्रि० ।

कर्णानुज पु० ६त० । युधिष्ठिरे त्रिका० । [(कार्णरपाता)

कर्णान्दू (न्दू) पुंस्त्री कर्णस्यान्दूरिव । कर्णपाली । हेम०

कर्णाभरणक पु० कर्णाभरणमिव कायति पुष्पद्वारा कै—क । आरग्वधे द्रुमे । (सोन्दाल) राजनि०

कर्णारा स्त्री छिद्रकर्णवेधन्याम् शब्दकल्पद्रुमे त्रिकाण्डशेषा-दयेनोक्तं तन्न मूले न दृश्यते इत्युक्तं कर्णवेधनीशब्दे ।

कर्णारि पु०६त०। १अर्ज्जुने कर्णजिच्छब्दे तत्कथा (कालन) २नदीसर्ज्जद्रुमे राजनि० । [रिया कर्णकाचने त्रिका०

कर्णास्फाल पु० आ+स्फुर—णिच्—स्फालादेशः ६त० । क-

कर्णि पु०कर्ण—इन् । १कर्णाकारफलके शरभेदे शब्दचि० । भावे इन् । २भेदने च

कर्णिका स्त्री कर्ण—स्तु कर्णे भवः अलङ्कारः ठन् अत इत्वम् । १कर्णाभरणभेदे (काण) २करिशुण्डाग्रमध्य-स्थित्याङ्गुल्याकारे पदार्थे ३पद्मबीजकोषे च अमरः । "यस्यामवस्थितः सर्वत सौवर्णः कुलगिरिराजो मेरुर्द्वीपा-यामसमुन्नाहः कर्णिकाभूतः" भाग० ५,१६,७, ४कलम-कादिदृढाग्रपरम्परायाम् (कड़ा) ५करमध्याङ्गुलौ च मेदि० । ६लेखन्या हारा० । ७अग्निमन्थवृक्षे ८ब्र-ह्मदण्डीवृक्षे च राजनि०कर्णौ दृष्टोऽस्यास्य ठन् । ८दृढ० कर्णे त्रि० ।

कर्णिकाचल पु० कर्णिकायां स्थितोऽचलः । सुमेरुपर्वते हेमच० । यथा चास्य तथाकृतेव स्थिति तथा कर्णिका-शब्दे" भाग०५,१६,७श्लो०उक्तं तत्र कर्णिकाशब्दे उक्तम् कर्णिकापर्वतादयोऽप्यत्र ।

कर्णिकार पु० कर्णिं भेदनं करोति कृ—अण् उप० स० । (गणियारी)१वृक्षभेदे,२आरग्वधवृक्षभेदे च(कोट सोन्दाल) मोधनरूपमखभेदकत्वात् तयो तथात्वम् । "कर्णिकारः परिव्याधः पादपोत्पल इत्यपि । कर्णिकारः कटुस्तिक्तस्तुवरः शोधनो लघुः । रञ्जन सुखद शो-थश्लेष्मामयकुष्ठनुत्" भावप्र० गुणादि उक्तम् "वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः" कुमार० । "अमन्तरस्य कश्चित् कर्णिकारमौर " दशकु० ।

कर्णिकिन् पु० कर्णिका हस्ताग्रं कुविरस्त्यस्य इनि । ह-

**कर्त्तरी** स्त्री कृत–घञ् कर्त्तं राति रा–क गौरा० ङीष् । कृपाण्याम् पत्रीकृतछुरिकादेः छेदनसाधने (कातारी) २अस्त्रभेदे "दृष्ट्वा कर्त्तरीयन्त्रमस्तोपरि संस्थितम् । वन पवनवेगेन भ्रममाण महारवम् । अपि सृयन्तं मयकं यत् खलखलयति कोटिश" काशी० । केशादिकर्त्तनसाधने (काँचि) ३अस्त्रे, "क्रूरमध्यगतचन्द्रो लग्नं वा क्रूरमध्यगम् । कर्त्तरी नाम योगोऽयम्" इति ज्योतिषोक्ते ४योगभेदे च । कर्त्तरीयोग उपनयनशब्दे १२५६,६० तत्प्रतिप्रसवविशेषोऽपि उक्तः । कृत–णिच्–कर्त्तरिरित्यप्यत्र स्त्री । "क्षुरकर्त्तरिसंदंशैस्तस्य रोमाणि निर्हरेत्" सुश्रु०। "मामो कर्त्तरिकारको" मुग्ध०चि० । अत्र "ङ्याप्योरिति" पा० ह्रस्वः" पीयू० । वस्तुतः कृ(?)कर्त्तरिसदृशैरिक्तन ह्रस्वह्रस्वाप्रसक्तेः ह्रस्वान्तोऽपि कर्त्तरिशब्दोऽस्तीति गम्यते । स्वार्थे कन् । कर्त्तरिकाप्यत्र स्त्री ।

**कर्त्तव्य** त्रि० कृ–अवश्यार्थे तव्य । कर्त्तुं योग्ये । "हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रय" चाणक्य० । "शौचं यथाहि कर्त्तव्यं धाराम्भोदकवारिभिः" "महाव्याहृतिभिर्होम कर्त्तव्यः स्वयमन्वहम्" मनुः "मनस्याहितकर्त्तव्या" कुमा०। कृत–कर्मणि तव्य । २छेद्ये त्रि०। "पुत्र सखा वा भ्राता वा पिता वा यदि वा गुरुः । रिपुस्थानेषु वर्त्तन्त कर्त्तव्या भूतमिच्छता" भा०शा० १४०अ० । उभयतो तव्य । ३अवश्यकरणे ४अवश्यच्छेदने च न० ।

**कर्त्तृ** त्रि० कृ–तृन् तृच् वा । १क्रियानिष्पादके क्रियोत्पादकयत्नयुक्ते तृन्नन्तयोगकर्मणि न षष्ठीतिभेदः । स च कारकचक्रप्रयोजकत्वात् स्वतन्त्र यथाह पा० "स्वतन्त्रः कर्त्ता" । "क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः । कर्त्ता स्यात्" सि०कौ०। व्युत्पत्तिवादस्थाने स्वरूपायाम् यथा "स्वतन्त्र इति धात्वर्थनादिप्रत्ययसमभिव्याहृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वमितरव्यापारानधीनव्यापारवत्त्वम् वा कर्त्तृत्वं बोध्यम् कर्मबोधकप्रत्ययसमभिव्याहारे फलस्यैव प्रधानतया बोधस्वीकर्त्तृमते कर्मादिव्यावृत्त्यर्थं धात्वर्थनादिसमभिव्याहृतेति । णिजन्तस्थले प्रयोज्यस्य स्वातन्त्र्यवारणाय प्रधानव्यापारेति । हरिणा तु स्वातन्त्र्ये विशेषो दर्शितो यथा । "धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते" इति सामान्यतोऽभिधाय "प्राधान्यतः शक्तिलाभात् प्रागभावापादनादपि । तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् । अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् । आराद-प्युपकारित्वात् स्वातन्त्र्यं कर्त्तुरिष्यते" इति अस्यार्थः इतरव्यापारात् प्रागपि प्राधान्येनात्मशक्तेः कर्त्तृव्यापारस्य सत्त्वात्, तथाच इतरव्यापारानधीनव्यापारवत्त्वादित्यर्थः इतरकारकाणां कर्त्तुः प्रयोज्यत्वात्, न तथा, दानादेः कुठारादिवत् कर्त्तुः प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगेऽपि कर्त्तुः प्रयोगात्, आरात् साक्षात्परम्परया फलजनकव्यापारवत्त्वाच्च स्वातन्त्र्यं कर्त्तुरिति । कौ०विवृतिकृतिकर्मकरणादेरपि तत्तद्व्यापारस्य धातुनाभिधाने कर्त्तृत्वमिति द्योतनाय । "उत्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षायां करणत्वादिसम्भवः" इति हरिणा विवक्षावशात् सर्वेषां कर्त्तृत्वस्वीकारात् । भाष्यकृता तु "पर्य्याप्तं करणाधिकरणकर्मणामेव कर्त्तृत्वं निदर्शितमपादानादीनां कर्त्तृत्वानिदर्शनाय" इत्युक्तत्वात् करणाधिकरणकर्मणामेव विवक्षया कर्त्तृत्वमिति नापादानसम्प्रदानयोरिति विवेकः" । कारकव्यापारभेदश्च मञ्जूषायां दर्शितः सङ्क्षिप्य ततोऽस्माभिः शब्दार्थरत्ने दर्शितो यथा "कर्त्तुः कारकान्तरप्रवर्त्तनव्यापारः । करणस्य क्रियाजनकाव्यवहितव्यापारः । क्रियाफलेनोद्देश्यकव्यापारश्च कर्मणः । कर्त्तृकर्मव्यवहितक्रियाधारणव्यापारोऽधिकरणस्य । प्रेरणानुमत्यादिव्यापारः सम्प्रदानस्य, अवधिभावोपगमव्यापारोऽपादानस्येति । तत्र करणाधारकर्मकर्त्तॄणां क्रियाजनकत्वं सुव्यक्तं तैर्विना क्रियानुत्पत्तेः फलरूपक्रियाजनकत्वेन विशिष्टक्रियाजनकत्वाच्च कर्मत्वस्यास्य घटं करोति कटं करोतीत्यादौ च बुद्धिस्थघटादेरपि पूर्वकालत्वेन कार्य्यादिहेतुत्वाभावात्सत एव तेषु कर्त्तृत्वविवक्षया काष्ठं पचति स्थाली पचति ओदनः पच्यते इत्यादिप्रयोगः । अपादानस्य अवधिभावोपगमेन हेतुत्वात् सम्प्रदानस्य च दातृबुद्धिस्थतया पूर्वकालत्वेन हेतुत्वाच्च क्रियानिर्वाहकत्वेऽपि न कर्त्तृत्वविवक्षा अनभिधानात् तदुक्त भाष्येऽपादानादीनां कर्त्तृत्वानिदर्शनायेत्यन्तमनुपद करणाधिकरणपर्य्याये दर्शितम् । स च प्रवृत्तिनिवृत्त्योरुभयोरपि सम्पादकः "प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः । स कर्त्ता नाम विप्रेन्द्र कारकाणां प्रयोजकः" इत्युक्ते । स च पञ्चविध "क्रियासु योभवेत् कर्त्ता हेतुकर्त्ता प्रयोजकः । अनुमन्ता ग्रहीता च कर्त्ता पञ्चविधः स्मृतः" गोपालभट्ट० अत एव मनुना "अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" इति वधे

घातकर्त्तृत्वमुक्तम् काशीख० "स्वादकोघातकस्तथेति" चतुर्थचरणे पाठः । तेन घाताभावे कर्त्तृत्वमुक्तम् । स च प्रकारान्तरेण त्रिविधः "त्रिधैव ज्ञायते कर्त्ता विशेषेण क्रियां प्रति । योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः" भट्टका० । अस्यार्थः क्रियां प्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् "स्वाध्यायोऽध्येतव्यः" इत्यत्र योग्यत्वेन त्रैवर्णिकः, १ । "अहरहर्दद्यात् दीक्षितो न ददाति इत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरः परः २ । "स्वर्गकामो यजेत" इत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता ज्ञायते ३, । स च प्रकारान्तरेण त्रिविधः सात्त्विकादिभेदात् यथाह गीता "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" "रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः" "अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते" । कर्त्तृपदञ्च क्रियाश्रये कृत्याश्रये वा मतभेदेन रूढं न तु यौगिकमित्येतत् शब्दचि० भट्टमतदर्शनप्रस्तावे दर्शितं यथा

"अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतत्वव्यवहारानुपपत्त्या कर्त्तृपदस्य कृत्याश्रयत्वबोधकत्वाच्च कृञो यत्नार्थत्वं, क्रियामात्रार्थत्वे तत्र, क्रियाश्रयः कर्त्तृपदार्थः स्यात् । तथा च कारकमात्रेऽतिप्रसङ्गः एवञ्च कृञो यत्नार्थत्वेन आख्यातविवरणात् तस्यापि यत्नोऽर्थः । तदुच्यते । "कृताकृतविभागेन कर्त्तृरूपव्यवस्थया । यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना" सैवाख्यातार्थो भावनेति चेत् । बीजेनाङ्कुरः कृतः स्वर्गादिना सुखं कृतं बीजमङ्कुरं करोतीति यत्नं विनापि व्यवहारात्" "कर्त्तृपदञ्च न यौगिकं तथा हि कृञो यत्नार्थत्वे तिङः कृत्यर्थत्वे वा धातुप्रत्ययार्थयोः कृतिकृत्योर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य वाऽभावात् कृतिविशिष्टस्य कृतिनिराकाङ्क्षत्वादिति । एवं कृञः क्रियार्थत्वे तथैव क्रियाश्रयवाचकत्वे तयोः परस्परमन्वय एवेति उभयदर्शने कर्त्तृपदं कर्मादिपदवद्रूढमेव । रूढिश्च कृत्याश्रये क्रियाश्रये वेत्यन्यदेतत् तथा च कृताकृतविभागेन च कर्त्तृरूपव्यवस्थया च न कृञो यत्नार्थत्वमिति" किञ्चाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य वाऽप्रतीतेः प्रकृतिप्रत्ययार्थयोश्च साम्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्रैव विध्यनुवाददोषाच्च" इत्यादिकम् भट्टमतम् । स्वमते तु कृञः यत्नार्थत्वमिति भेदः तच्च कृधातुशब्दे दर्शयिष्यते । शब्द०प्र०कर्त्तृपदं यौगिकमिति व्यवस्थाप्य तल्लक्षणमुक्तं यथा

"तिङा विकरणाक्तस्य धातोरर्थस्तु यादृशः । स्वार्थे यावद्धि बोध्यस्तत्कर्त्तृत्वं तदिहोच्यते । सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्त्तृत्वं कारकमित्यर्थः । कर्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणाक्तेनेति न तत्र प्रसङ्गः । पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकबुद्ध्यादेरन्वय पचाद्युत्तरतिङा बोध्य इति पाकस्य यत्नवत्त्वं, ज्ञानस्याश्रयत्वमेवं भासतीत्यत्र भासस्य प्रतियोगित्वं प्रतिबिम्बतीत्यत्र भ्रमात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्त्तृत्वम् । कर्त्तृशब्दस्तु अवयवशक्तिलभ्ये कृत्याश्रये यौगिक एव न तु शक्यार्थैकप्रकारान्तराविष्टस्यैव शक्यत्वात् निरूढलक्षणया शक्यैव चाश्रयत्वस्य तेन प्रत्यायनात् । घटस्य कर्त्तेत्यादौ चानुकूलत्वं षष्ठ्यर्थः फलस्य प्रायशः कृतिविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात् अतो न घटादिभोक्तुस्तत्कर्त्तृत्वप्रसङ्गः । क्रियाश्रये कर्त्तृशब्दो रूढस्तेन रथादेर्गत्यादिकर्त्तृत्वमपि मुख्यमेवेति तु न युक्तम् । क्रिया हि नाम स्पन्दस्तेनाग्नेः पाककर्त्तृत्वानुपपत्तेः प्रत्युत तण्डुलादेरेव तथात्वापत्तेः नापि धात्वर्थमात्रम् अतएव नापि स्पन्दनानुकूलव्यापारः चलनानुकूलव्यापारवत् कारकमात्रस्य चलनकर्त्तृत्वापत्तेः । क्वचित् जुहोतीत्यादावप्यदादेरुत्तरं लुप्तस्यैव विकरणस्य प्रतिसन्धाने भोजनकर्त्तृत्वादेरवगमसिद्धेः । तदप्रतिसन्धानेऽपीति मतेनाह । यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते । लटा स्वार्थः स धात्वर्थकर्त्तृता वा निगद्यते । यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारयदर्थधर्मिकान्वयबोधं प्रति लटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्त्तृत्वम् पच्यत इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं लटानुभाव्यमपि न यगन्तभिन्नस्य, पच्यते तण्डुल इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थकर्मत्वमनुभाव्यते न तद्विशेषेण लटेति तद्व्युदासः । अपादानत्वादिभेदेन षड्विधत्वमिवोक्तानुक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुक्ता न्यूनत्वमत आह । धात्वर्थस्य

धर्मितया तिङाद्यैरनुभाव्यते। यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत्। धात्वर्थस्य विशेषणतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं तद्विशेष्यतया तदनुभाव्यत्वमेव चानुक्तत्वं मतम् धातुसाकाङ्क्षप्रत्ययस्याभिधेयत्वमात्रस्योक्तत्वे तण्डुलं पचति इत्यादावपि कर्मत्वादेरुक्तत्वापत्तेः। पचति पच्यते इत्यादौ तिङा, पाचकः पच्यमान इत्यादौ च कृता, कर्तृत्वं कर्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठं, दानीयो द्विजः, भीमो गजः, शयनं खट्वेत्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। सेवितं साम्प्रतं निर्गुणं च पदमागमपि" "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" इत्यादौ निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम्॥ धातुभेदेन कर्मत्वकारकस्योक्ततायां नियममाह। दुहादिभ्यः प्रत्ययेन मुख्यकर्मत्वमुच्यते। ण्यन्तेभ्य कर्तृतारूपा तद्वदेवान्यकर्मता। दुहाद्युत्तरप्रत्ययेन मुख्यसाध्यात्वतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते तेन गौः पयो दुह्यते दुग्धा चेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साध्यात्वतावच्छेदकफलत्वात्। वह्निप्रभृतेर्गमनावच्छिन्नव्यापारः। क्रमेण गमनावच्छिन्नविकर्षणं वाच्यमत साध्यात् तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकसंयोगादि। तथाच 'भारोऽभवनं नीयते' इत्यादौ ग्रामः 'ग्रामं कृष्यते' इत्यादौ च यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्मतान्वयः ग्रामेत्याकारकबोधयोरुत्पत्त्यैव सम्पत्तौ दुहादेर्गौणकर्मत्वं, नीवहादेः प्रधानत्वमित्याद्युक्तिभेदेन विविच्य शाब्दिकानाममादेयम्। ण्यन्तोत्तर कर्मतावाचिप्रत्ययस्थले तु मूलधातौ कर्तृतायाः कर्मतातिदेशसम्भवे तादृशमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते यथा चैत्रो ग्रामं गम्यते गमितो चेत्यादौ ग्रामकर्मकव्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशस्तत्र मूलधातौ कर्मत्वमेव तदर्थविशेष्यतया तैरुच्यते यथा 'ओदनः पाच्यते खाद्यते वा भृत्येन भर्त्रा' इत्यादौ तत्र भर्तृकर्तृकव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयौदनादिरेव बोध्यते 'नैव च पूर्णं चाद्यमानपैलोमजनीतप्रादौ' कर्मणि यानचादिपदत्रयं प्राक् परिचिन्तित'।

न्यायादिमते कृतिमानेव कर्त्तृशब्दवाच्यः इत्यतः कर्त्तृत्वमात्मधर्मः। सांख्यमते तु बुद्धेरयं कर्तृत्वाभिनिवेशस्तदुपरागादकर्त्तुः पुरुषस्यापि तदभिमानः। तदेतत् सां० प्र० सू० भाष्ययोर्दर्शितम् यथा
"उपरागात् कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्" सू०। "अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्। एतदुभयमप्यवास्तवमित्यर्थः। यथाग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जवास्फटिकयोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः" भा०।
पुरुषस्य यथाऽकर्त्तृता तथा सां० कौ० व्यवस्थापितं यथा "तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च" का०। "तस्माच्चेति चः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति विपर्यासादित्युक्तौ त्रैगुण्यविपर्यययादित्यनन्तरोक्तं सम्बध्येत अतस्तत्परिहाराय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमोविषयो विप्रकृष्टञ्च तद इति विप्रकृष्ट त्रिगुणमविवेक्यादि सम्बध्यते। तस्मात् त्रिगुणादेर्यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनो हि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाचेतनो विषयो वा शक्तो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अतः त्रैगुण्याभावाच्च कैवल्यम् आत्यन्तिको दुःखत्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम्। अतएवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन्, दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति तदुभयरहितस्तु मध्यस्थ उदासीन इति चाख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाकर्तेति सिद्धम्। स्यादेतत् प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्मते भावकल्पते चेतनस्याकर्तृत्वात् कर्तुश्चाचैतन्यादित्यत आह कौ० "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः" का०॥

"यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्मा-द्भ्रान्तिरियमित्यर्थः। लिङ्गं महदादिसूक्ष्मपर्यन्तं वक्ष्यति भ्रान्तिबीजं तत्संयोगस्तन्निदानम् अतिरोहितार्थमन्यत्" कौ०। तदेतन्मतन्तु शाय मुक्तावल्यां निराकृतं यथा "एतेन प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्य्यकारणयोरभेदात् कार्य्यनाशे कार्य्यरूपतया नाशः स्यादित्यकारणत्वं तस्य बुद्धिगतचैतन्याभिमानार्थानुपपत्त्या तद्‌कल्पनम्। बुद्धिश्च प्रकृतेः प्रथमः परिणामः, सैव महत्तत्त्वमन्तःकरणमप्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिबिम्बाद्‌तात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा। कर्त्तव्यमिति व्यापारावेशः। तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परिणामित्वादिति सांख्यमतमपास्तम् कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्चेतनोऽहं करोमीति प्रतीतेः। बुद्धेः परिणामित्वाच्चैतन्यांशे भ्रम इति चेत् लाघवे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे तत्पूर्वमसंसारापत्तिः। अचेतनायाः प्रकृतेः कार्य्यत्वात् बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्त्तुर्जन्यत्वे मानाभावात् वीतरागजन्मादर्शनादनादित्वम्। अनादेर्नाशासम्भवान्नित्यत्वम्" मुक्ता०। वेदान्तिमते चाविद्यिकजीवस्यैवौपाधिककर्त्तृत्व शा०सू० भा० व्यवस्थापितम् यथा।

"कर्त्ता शास्त्रार्थवत्त्वात्"। तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्त्ता चायं जीवः स्यात् कस्मात् शास्त्रार्थवत्त्वात् एवञ्च यजेत जुहुयात् दद्यादित्येवंविधं विधिशास्त्रमर्थवद्भवति अन्यथा तदनर्थकं स्यात्। तद्धि कर्त्तुः सतः कर्त्तव्यविशेषमुपदिशति न चासति कर्तृत्वे तदुपपद्यते। तथेदमपि शास्त्रमेवमर्थवद्भवति "एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष" इति भा०। "विहारोपदेशात्" सू०। "इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति "स ईयतेऽमृतो यत्र कामम्" इति "स्वे शरीरे यथाकामं परिवर्त्तते" इति च भा०। "उपादानात्" सू०। "इतश्चास्य कर्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं सङ्कीर्त्तयति। "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। "प्राणान् गृहीत्वेति च" भा०। "व्यपदेशाच्च क्रियायां न चेन्निर्द्देशविपर्य्ययः" सू०। "इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिश्यते 'विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चेति"। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यते इति नेत्युच्यते जीवस्यैवैष निर्द्देशो न बुद्धेः न चेज्जीवस्य स्यात् निर्द्देशविपर्य्ययः स्यात् विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्द्देशो दृश्यते "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। इह तु "विज्ञानं यज्ञं तनुत" इति कर्तृसमानाधिकरण्यनिर्द्देशाद् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्त्ता स्यात् स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन सम्पादयेत् न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यते इति अत उत्तरं पठति" भा०। "उपलब्धिवदनियमः" सू०। "यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्च उपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति। उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेन्न विषयविकल्पनमात्रप्रयोजनत्वादुपलब्धिहेतूनाम् उपलब्धौ त्वनन्यापेक्षत्वमात्मनः चैतन्ययोगात्। अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देशकालनिमित्तविशेषापेक्षत्वात्। न च सहायापेक्षस्य कर्त्तुः कर्तृत्वं निवर्त्तते। भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्। सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते" भा०। "शक्तिविपर्य्ययात्" सू०। "इतश्च विज्ञानव्यतिरिक्तो जीवः कर्त्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्य्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत। सत्याञ्च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् अहंकरणपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात् अहं गच्छाम्यहं भुक्तेऽहं

पिबामीति च तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारित्वात्; सर्वार्थकारि करणमन्यत् कल्पयितव्यं शक्तोऽपि हि सन् कर्त्ता करणमुपादाय क्रियासु प्रवर्त्तमानो दृश्यत इति। ततश्च संज्ञामात्रे विवादः स्यात् न च वस्तुभेदः कश्चित् करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्" भा॰ "समाध्यभावाच्च" सू॰। "योऽप्ययमौपनिषदात्मप्रतिपत्ति प्रयोजनः समाधिरुपदिष्टो वेदान्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "ओमित्येवं ध्यायेत आत्मानम्" इत्येवं लक्षणः सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत, तस्मादप्यस्य कर्तृत्वसिद्धिः" भा॰। "यथा च तक्षोभयथा" सू॰ "एवं तावत् शास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्र तैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम् अपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः। न स्वाभाविकं कर्तृत्वमात्मनः सम्भवति अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति अग्नेरिवौष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः कर्तृत्वस्य दुःखरूपत्वात्। ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात् पुरुषार्थः सेत्स्यति तत्परिहारश्च निमित्तपरिहारात् यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावस्तद्वत् न, निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात्। ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति न साधनायत्तस्यानित्यत्वात्। अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता तादृगात्मप्रतिपादनञ्च न स्वाभाविके कर्तृत्वेऽवकल्पते। तस्मादुपाधिधर्म्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः "ध्यायतीव लेलायतीव" इति। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति चोपाधिसम्पृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवो नाम कर्त्ता भोक्ता वा विद्यते "नान्योऽतोऽस्ति द्रष्टेत्यादि" श्रवणात्। पर एव तर्हि संसारी कर्त्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेच्चितिमान् बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात् न अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रं "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति" अविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदिति"। तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्" इत्यारभ्य "एषास्य परमा गतिरेषास्य परमा सम्पत् एषोऽस्य परमो लोक एषोऽस्य परमानन्दः" इत्युपसंहारात्। तदेतदाहाचार्य्यः "यथा च तक्षोभयथेति"। तत्वर्थे चायञ्चः पठितः। नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वम् अग्नेरिवौष्ण्यमिति। यथा च लोके तक्षा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृत्तो निर्व्यापारः सुखी भवति एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वमात्मानं परं प्रविश्य मुक्तकार्य्यकरणसंघातोऽकर्त्ता सुखी भवति सम्प्रसादावस्थायां, तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी भवति। तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्त्ता भवति स्वशरीरेण त्वकर्त्ता, एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्त्ता भवति स्वात्मना त्वकर्त्तैवेति न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा। यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति तन्न विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्त्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम। तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्त्तिष्यते। कर्त्ता विज्ञानात्मा पुरुष इत्येवं जातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते तयोरप्यनुवादरूपत्वात्। ननु सन्ध्ये स्थाने सुषुप्तेषु करणेषु "स्वे शरीरे यथाकामं परिवर्त्तते" इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृभाव इति, तथोपादानेऽपि "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति" करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मनः कर्तृभावं गमयत इति। अत्रोच्यते न तावत् सन्ध्ये स्थाने

तस्य पक्षे एव हि प्ररोह इति तस्य तथात्वम् । “रक्ताशालिषष्टिककङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालककाशनकपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः” सुश्रु० ।

**कर्द्दमाटक** पु० कर्द्दमे इव अटाटोगतिरत्र कप् । विष्ठादिनिक्षेपस्थाने शब्दरत्ना० । [प्रचुरकर्दमयुक्तदेशे ।

**कर्द्दमिनी** स्त्री कर्दमानां देशः पुष्करा० देशे इनि ।

**कर्पट** पुंन० कृ–कर्म्मणि विच्–कर्–पटः कर्म्म० । १जीर्णवस्त्रखण्डे (लातागानि), २मलिनवस्त्रे । करस्थः पटः शक० । घर्म्मादिमार्ज्जनार्थं हस्तन्यस्ते । ३वस्त्रखण्डे । ४कषायरक्ते वस्त्रे च । “नीलशैलस्य पूर्वस्मिन् स्वरूपं प्रतिपादितम् । नाभिमण्डलपूर्वस्या भस्मकूटस्य दक्षिणे । पूर्वस्यां कर्पटो नाम पर्वतोयमरूपष्टक्”कालिका ८१अ० उक्ते । ५पर्वतभेदे पु० । [कादौ शब्दरत्ना० ।

**कर्पटिक** त्रि० कर्पट–अस्त्यर्थे ठन् । कर्पटवस्त्रयुक्ते भिक्षु-

**कर्पण** पु० कृप–ल्युट् कृपा० लत्वाभावः । आयसे शस्त्रभेदे । “चापचक्रकणपकर्पणप्रासपट्टिशमुषलतोमरादिप्रहरणजालसमुपयुक्तामः” दशकु० ।

**कर्पर** पु०कृप्–अरन् लत्वाभावः । १कपाले घटावयवे २शीर्षोद्धास्थनि, अमरः (माथार खुलि), ३शस्त्रभेदे (कात) ४कटाहे च मेदिनी ५उडुम्बरे वृक्षे शब्दच० ।

**कर्पराश** पु० ६त० । कपालांशे (खावरा) शब्दचि० ।

**कर्पराल** पु० कर्परं इवाचरति अण्–अच् । पर्वतपीलुभेदे । (आखरोट) कन्दराले रत्नामालाः ।

**कर्पराशिन्** पु० कर्परेऽश्नाति अश–भोजने णिनि । बटुकभैरवे । “श्मशानवासी मांसाशी कर्पराशी मखान्तकृत्” बटुकस्तव० । [त्वम् । कर्परोरूपे तुल्ये देम० ।

**कर्परिकातुत्थ** कर्पर्य्येव स्वार्थे कन् कर्परिका सैव तु-

**कर्परी** स्त्री कृप–अरम्–लत्वाभावः गौ०ङीष् ।१दारुहरिद्राक्वाथभवे तुथे(त्थे) अम० । २रसके भावप्र०खर्परीति पाठान्तरम् । रसकश्चोपरसभेदः उपरसभेदाश्च उपरसशब्दे उक्ताः भावप्र० तद्गुणाद्युक्तं यथा “क(ख)परीरसकं तथाद्व्यतद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः” । तुत्थसामान्यं तु नोपरस इति भेदः ।

**कर्पास** पुंन० कृ-पास ।वस्त्रोपकरणयोनौ (कापास) वृक्षभेदे अमरः । गौरा०ङीष् । तत्रैव स्त्री भावप्र० । “कार्पासी तुण्डकेरी च समुद्रान्ता च कथ्यते । कार्पासिका लघुः कोष्णा मधुरा वातनाशिनी । तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम् । तत्कर्णं पिडकानाशि पूयस्रावविनाशनम् । तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु” इति तत्रोक्तेः ।

**कर्पासफल** न० ६त० । (माकाटो) कर्पासवीजे ।

**कर्पूर** पुंन०कृप्–ऊरन् ०ऊर लत्वाभावः । स्वनामख्याते गन्धद्रव्ये, तद्गुणाः भावप्र०उक्ताः, यथा“कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः । सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः । दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः । कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः । पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् । (अथ चिनिया कर्पूर)“चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः । कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः । कर्पूरो नूतनस्तिक्तः स्निग्धसोष्णास्तदाहदः । चिरस्थो दाहशोषघ्नः स शीतः शुभकृन् परः” । तस्य च“पोतासः भीमसेनः सितकरः शङ्करावालुकसंज्ञः पांशुः पिञ्जः अब्दसारः हिमशालुकः जूतिका तुषारः हिमशीतलः पत्रिकाख्यभेदात् द्वादश भेदा राजनि० । ततः काशा० चतुरर्थ्याम् इल । कर्पूरिल तत्सन्निकृष्टदेशादौ त्रि० । शुभ्रादिपाठात् तन्नामके । २नरभेदे तस्यापत्यं शुभ्रा०ढक् । कार्पूरेय तदपत्ये पुंस्त्री । [कर्पूरे शब्दच० ।

**कर्पूरक** पु० कर्पूर इव कायति कै–क । (कचुर) नामद्रव्ये

**कर्पूरतिलका** स्त्री उमासखीभेदे विजयायाम् शब्दमाला ।

**कर्पूरतैल** न० कर्पूरस्य तैलमिव स्नेहः । कर्पूरस्नेहरूपे हिमतैले तैलभेदे राजनि० । “कटूष्णं हिमतैलं स्यात् कफवातामयापहम् । दन्तदार्ढ्यकरं पित्तकारकं परिकीर्त्तितम्” राजनि० ।

**कर्पूरनालिका** स्त्री “घृताढ्यया समितया लम्बं कृत्वा पुटं ततः । लवङ्गोल्वणकर्पूरयुतया सितयाऽन्वितम् । पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । यथावद्दशी ज्ञेया गुणैः कर्पूरनालिका” भावप्र० उक्ते पाकभेदसिद्धे भक्ष्यभेदे ।

**कर्पूरमणि** पु० कर्पूरवर्णो मणिः । रत्नभेदे, “कर्पूरमणिनामायं युक्त्या वातादिदोषनुत्”राजनि० । कर्पूराश्मादयोऽप्यत्र पु० ।

**कर्पूररस** पु० कर्पूर इव शतोरसः पारदः । पाकविशेषेण कर्पूरयत्कृते पारदे रसकर्पूरे तत्पाकप्रकारः भावप्र० उक्तो यथा—

“अथ कर्पूररसस्य विधिः तत्र पारदस्य संक्षिप्तं शोधनं कर्त्तव्यम् । शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः । इष्टिकां खटिकां तद्वत्स्फटिकां सिन्धुजन्म च । वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिकाम् । सर्वाण्येतानि सञ्चूर्ण्य वास-

कर्मकरस्तेषां दासास्त्रिपञ्चकाः। शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः। सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः। जातिकर्मकरस्तूक्तो विशेषोवृत्तिरेव च। कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम्। गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्। अशुभङ्कर्म विज्ञेय शुभमन्यदतः पर”मिति—“तत्र शिष्योवेदविद्यार्थी। अन्तेवासी शिल्पादिषु। मूल्येन यः कर्म करोति स भृतकः। कर्मकृतामधिष्ठाता अधिकर्मकृत्। अशुचिस्थानम् उच्छिष्टप्रक्षेपणार्थं गर्त्तादिकम्। अवस्करः गृहमार्जितपांश्वादिनिचयस्थानम्। उज्झनं त्यागः। भृतकश्चात्र त्रिविधः। तदुक्तम् “उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः। अधमोभारवाही स्यादित्येवं त्रिविधोभृतः” इति।

कर्म्मकर्त्तृ पु० कर्मैव कर्त्ता। व्याकरणोक्ते कर्मणः कर्त्तृत्वविवक्षया प्राप्तकर्त्तृत्वभावे कर्मणि। “क्रियमाणन्तु यत् कर्म स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद्विदुः” व्या०का०। कर्मकर्त्तरि च कार्य्यभेदातिदेशमाह “कर्मवत् कर्मणा तुल्यक्रियः” पा०। सि०कौ० विवृतमेतत् यथा

“कर्त्तरि तु कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत् स्यात्। कार्य्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्त्तुरभिहितत्वात्प्रथमा। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्त्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न लकारवाच्य एव कर्त्ता कर्मवत्। लिङ्याशिष्यङिति द्विलकारकात् इत्यनुवृत्तेः भावे प्रत्यये च कर्त्तुर्ल्लकारेणानुपस्थिते। अतएव क्त्यक्तखलर्थाः कर्मकर्त्तरि न भवन्ति किन्तु भाव एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनञ्च। सैवेदानीं कर्त्तृस्था न तु तत्तुल्या? सत्यम्। कर्मत्वकर्त्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किञ्च—कर्त्तृस्थक्रियेभ्यो मा भूत्, गच्छति ग्रामः, आरोहति हस्ती, अधिगच्छति शास्त्रार्थः, स्मरति श्रद्दधाति वा। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते, यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया, नेतरत्र। नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था, तेन कारिष्यते घट इत्यादि। यत्नार्थत्वे तु नैतत्सिध्येत्। ज्ञानेच्छादिवद्यत्नस्य कर्त्तृस्थत्वात् एतेन अनुव्यवस्यमानेऽर्थ इति व्याख्यातम् इदमस्माभिः सरलाया व्याख्यातम् यथा—“उत्प्रवृत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः” इति वाक्यमनुसन्धानः कर्त्तृत्वकर्मत्वादिकं व्यवस्थाप्य कार्य्यविशेषाय कर्मातिदेशकसूत्रमवतारयति कर्त्तरि त्विति। कर्मस्थया कर्ममात्रस्थया क्रियया फलेन “फलव्यापारयोर्धातु”रित्युक्तेः “धात्वर्थः क्रियोच्यते” इत्युक्तेश्चेत्यर्थः। तुल्यक्रियः समानाधिकरणक्रिय इत्यर्थः। किन्तु कर्मस्थभावकएव कार्य्यातिदेशार्थं कर्मणेति पदम् “कर्मस्थेऽपि च भावार्थे कर्मकर्त्ता च कर्मवत्। कर्त्तृस्थेऽपि च भावार्थे कर्मकर्त्ता च कर्त्तृवत्” इत्युक्तेः “कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः” इत्युक्तेः भिदादयः कर्ममात्रस्थाः। गमनादयस्तु कर्त्तृस्थाः “कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः” इत्युक्तेः। “व्यत्ययो बहुलं लिङ्याशिष्यङिति” सूत्रयोः सन्निजातद्विलकारमध्ये एकलकारस्यानुवृत्तेरित्यर्थः। क्त्यक्तखलर्थाश्चेत्यस्य ज्ञापकञ्च प्रायिकं स्विनोत्यासइत्यादौ कर्मकर्त्तरि क्तस्य दर्शनादिति बोध्यम्। वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह कर्मत्वकर्त्तृत्वावस्थेति तथा चावस्थाभेदेन क्रियाभेदात् कर्त्तुः कर्मस्थक्रियया तुल्यक्रियत्वमिति भावः। नेतरत्रेति। “निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते। न तु प्राप्ये कर्मणीति सिद्धान्तोऽयं व्यवस्थितः” इतिहर्य्युक्तेः क्रियाकृतविशेषवतोरेव निर्वर्त्त्यविकार्य्ययोः कर्मवद्भावो न तु तद्रहिते प्राप्य इति सिद्धान्तो द्योतित इति भावः” अत्र च यथा बोधाधिक्यं तथा शब्द०प्र० उक्तं यथा

“अथ भिद्यते अभेदि कुसूलः स्वयमित्यादौ भिदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्त्तृत्वस्य कथं कुसूलादावन्वयः भिदादेः परस्मैपदित्वेन तदर्थधर्मितया कर्त्तृत्वबोधने पदान्तरस्यासामर्थ्यात् यगिणोर्विगुणत्वाच्चेयत आह। एकक्रियाधर्मितया कर्त्तृता कर्मतोभयोः। बोधने कर्मताकाङ्क्षापेक्ष्योऽन्वयगतोभवेत्। कर्मताकाङ्क्षा कर्मतान्वयस्यैवानुकूला आत्मनेपदयगादिसमभिव्याहाररूपाकाङ्क्षा व्युत्पत्तिवैचित्र्यादपेक्षणीया न तु कर्त्तृत्वान्वयस्य परस्मैपदविकरणादिसन्दर्भरूपा यद्येवं तण्डुलस्तैलो पच्यते इत्यपि प्रयोगः

स्यात् सामग्र्योर्मिथोविरोधेन विभिन्नकालावच्छेदे प्रत्ययानां युगपत्कर्तृताकर्मतयोरनुभावकत्वस्याव्युत्पन्नत्वात् । अतएव पचेर्लभौ मैत्रतण्डुलावित्यादिको न प्रयोगः “आत्मने भौव्यधातूनां समन्तगत्यन्तयोः कितः । अन्विषम्योस्तथा मृजः कर्तृकर्मप्रबोधने । यगिणौ न दुहेर्नौ यगजन्तस्य च तस्य च । इण् वा स्यादुक्तधातूनां नित्यं तत्रात्मनेपद”मिति हरदत्तः । स्वयं विकुर्वते ग्रन्थे·त्यादौ, स्वयं चिकीर्षते कट इत्यादौ, स्वयं कटः कारयते गौरुत्पुच्छयते चोरयते इत्यादौ, स्वयमेव किरते करीत्यादौ, स्वयं स्तृणीते स्तृणीते वा माल्लिकेत्यादौ, स्वयं मूते कथेत्यादौ, स्वयं दुग्धे गौरित्यादौ, धात्वर्थकर्तृकर्मत्वयोर्युगपदन्वये कर्मत्वाभ्युपगमाद् यकोनापेक्षा, तथा स्वयं व्यक्षत युधा, स्वयमचिकीर्षत कट इत्यादौ, इणोऽपि एवं स्वयमवापि व्यमपिष्ट वा केदार इत्यादौ, स्वरान्तस्य धातोः स्वयमदुग्ध अदोहि वा गौरित्यादौ, दुहेर्यगस्य तदुभयभावार्थचिणोऽभावप्रकाशनतदन्तश्चलगं तदति । “विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः” (कुमा०) इत्यादौ तु यकोगतिश्चिन्त्या । ननु शाकः पचता भुज्यते इत्यादितः कुतः पाकादौ शाकादिकर्मत्वावगमः सुपर्थस्यैव कर्मत्वस्य धात्वर्थं धर्म्मिणि शाकान्नुत्वादित्याह । सकर्मकैकधात्वर्थकर्तृतापरकर्मता । यताभ्यां तस्य कर्मत्वे प्रथमैवानुशिष्यते । स्वकर्मताकत्वविशिष्टैकधात्वर्थकर्तृकर्तृत्वापरस्य धातुनिपातयोरन्यतरार्थस्य कर्मत्वं यत्र धर्म्मिण्यन्वेति तदीयत्वे नामार्थे कर्मत्वे प्रथमैवानुशिष्यते नतु द्वितीयादिरपेक्ष्यते तेन शाकः स्वकर्मताकपाककर्तृकर्तृताकभोजनकर्मतावानित्याद्यन्वयबोधस्य स्यात् । अतएव “प्रधानयत्राभिधाने गुणयत्रिरभिहितवत् प्रकाशते” इति पठन्ति । शक्ति कारकमिति याज्ञिकाः । कर्मतामात्रन्तु न्यायः, तेन कसेन पचता भुज्यते शाकइत्यादौ नाभिहिताधिकारीयप्रथमा शक्ति” ।

अनाभिहिताधिकारीयप्रथमाशक्तिरिति तु अनभिहिताधिकारीया न तृतीयाशक्तिरित्येतत् परम् अभिहिते प्रथमा इत्येतदधिकाराभावात् अनभिहिते इत्यस्याधिकारादिति चिन्त्यम् । ६त० । २कर्मकारके त्रि० । स्त्रियां ङीप् । क-क्विप् ६त० । कर्मकृद्यत्न । कर्मकरयत्ने उदा० ।

कर्मकाण्ड न० कर्मणां कर्त्तव्यताप्रतिपादकं काण्डम् । कर्मणां कर्त्तव्यताप्रतिपादके वेदभागे कर्मकाण्डस्य स्वरूपप्रयोजनम् इत्थं छा० भाष्ये दर्शितं यथा । “तत्राद्य कर्मकाण्डेन धर्मोऽभिधीयते । धर्मो नाम वेदप्रमाणानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरं सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारार्थं रिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा । न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते । “येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके” इत्युपक्रम्य “अस्तीत्येवोपलब्धव्यः” इत्येवमादिनिर्णयदर्शनात् । “यथा च मरणं प्राप्य” इत्युपक्रम्य “योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्” इति च, स्वयं ज्योतिरित्युपक्रम्य “तं विद्याकर्मणी समन्वारभेते पुण्यो वै पुण्येन कर्मणा भवति” । ज्ञपयिष्यामीत्युपक्रम्य “विज्ञानघन” इति च व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेन्न वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेन्न निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात् प्रत्यक्षविषयत्वविलक्षणत्वात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः । तथानुमानादपि । श्रुत्यात्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेन्न जन्मान्तरसम्बन्धस्याग्रहणात् आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षानुमेयश्चात्मेति । सर्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवम्प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डं समारब्धम्” । अधिकारिभेदेनैव कर्मकाण्डे प्रवृत्तिः “लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्” इति गीतायामपि दर्शितोक्तेः । अत एव “तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन

याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः । दोषजाः मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव । ततो दोषजेष्वपि प्राक्तनं दुष्कर्मैव कारणम् तत् कथं दोषजा इत्युच्यन्ते ? । दोषजेष्वपि वस्तुतः व्याधिकारणं दुष्कर्म वर्त्तत एव किन्तु तत्र मिथ्याहारविहारदूषिता दोषा हेतवो दृश्यन्त इति दोषजा इत्युच्यन्त इति समाधिः । कर्मदोषोद्भवाः । स्वल्पदोषा गरीयांसस्ते ज्ञेयाः कर्मदोषजाः । अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधेर्गरीयस्त्वं तत्कर्मक्षयादेव क्षीणं भवति । दोषा स्वल्पा अपि निदानस्तनोक्ता दृश्यन्त एवेति दोषाणां कारणतां मन्यन्त इति । कर्मक्षयात् कर्मकृता दोषजाः स्वस्वभेषजैः । कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् । दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणम् दुष्कर्म तद्भेषजार्थद्रव्यव्ययादिजनित दुःखभोगेन कटुतिक्तकषायाद्यहृद्यभक्षणादिजनितदुःखभोगेन च क्षयं यान्ति । शेषा दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः । २कायिकवाचिकमानसकर्मभवे स्थावरादिजन्मनि "शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मजा गतयो नृणामुत्तमाधममध्यमाः" ३कर्मजातमात्रे पापादिदोषे च "तथा दहति वेदज्ञः कर्मजं दोषमात्मनः" मनु । क्रियाजन्ये ४संयोगे ५विभागे च । "अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः । कीर्त्तितस्त्रिविधस्त्वेष आद्यो ऽन्यतरकर्मजः । तथोभयक्रियाजन्यो भवेत् स योगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः । मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः । तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः । अभिघातो नोदनञ्च शब्दहेतुरिहादिमः । शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः । विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्" भाषा० ६वेगाख्यसंस्कारे च "मूर्त्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित्" भाषा० ७वटवृक्षे पु० जटा० । ८कलियुगे पु० शब्दर० । क्रियाजकर्मभवादयोऽप्यत्रार्थे । ९धर्माधर्मरूपे गुणभेदे अदृष्टे वेदान्तिमते कर्मणः सूक्ष्मावस्थापन्ने १०संस्कारभेदे ११स्वर्गे १२नरके च अदृष्टद्वारा तयोः कर्मजन्यत्वात्तथात्वम् ।

कर्मजित् पु० जरासन्धवंश्ये मागधे नृपभेदे "अथ मागधराजानो भाविनो ये वदामि ते" भविता सहदेवस्य (जरासन्धपुत्रस्य) मार्जारिर्यच्छ्रुतश्रवाः । ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः । सुनक्षत्रः सुनक्षत्रात् वृहत्सेनोऽथ कर्मजित्" भाग० ९,२२,२० ।

कर्मठ त्रि० कर्मणि घटते कर्मन्+अठच् । कर्मनिष्पादनार्थं घटमाने । "स कर्मठः कर्मफलानुबन्धी" भट्टिः ।

कर्मणि स्त्री कर्म नयति समाप्तिम् नी-बा०डि णत्वम् । कर्मसमाप्तौ कर्मण्यायां प्रायश्चित्तेष्टौ । "कर्मणिरेव तत्र प्रायश्चित्तिः" शत० ६,६,४,९ ।

कर्मण्य त्रि० कर्मणा सम्पादि यत् । १कर्मणा सम्पन्ने भोज्ये सि० कौ० । कर्मणि साधु यत् । २कर्मकुशले सि० कौ० । "यतो वीरः कर्मण्यः सुदक्षः" ऋ० ३,४,९ । "अकर्मण्यं तिथिमलं विद्यादेकादशीं विना" ति० त० । ३वेतने स्त्री क्षीरस्वामी । वेतनेन हि कर्मसाधनात् तस्य तथात्वम् ।

कर्मण्यभुज् त्रि० कर्मण्यां वेतनं भुङ्क्ते भुज-क्विप् ङीत० ङ्यापोरिति ह्रस्वः । वेतनेन कर्मकारके भरण्यभुगित्यमरपाठान्तरमिति क्षीर० ।

कर्मदेव पु० कर्मणा देवः प्राप्तदेवभावः । १त्रयस्त्रिंशद्देवभेदे । "स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपि यन्ति श्रोत्रियस्य चाकामहतस्य ते, ये शतं कर्मदेवानामानन्दाः" तै०उ० । "कर्मदेवा ये वैदिकेनाग्निहोत्रादिना केवलेन देवानपि यन्ति, देवा इति त्रयस्त्रिंशद्धविर्भुजः । इन्द्रस्तेषां स्वामी तस्याचार्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलव्यापी" शाङ्कर भा० । त्रयस्त्रिंशच्च देवाः आनन्दगिरिणा दर्शिताः । "अष्टौ वसव एकादश रुद्राः द्वादशादित्याः इन्द्रः प्रजापतिश्चेति २कर्मणा देवलोकं गते च । "स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः" शत० ब्रा० १४,७,१,३५ । ये अग्निहोत्रादिश्रौतकर्मणा देवलोकं प्राप्नुवन्ति ते कर्मदेवाः" भा० ।

कर्मदेवताऽप्यत्र स्त्री । "ज्योतिष्टोमादिना स्वर्गं प्राप्तास्तु कर्मदेवताः" मल्लिना० । "अस्मिन् वर्षेऽश्वमेधादि कर्म कृत्वा महत्पदम् । अवाप्याजानदेवैवाः पूज्याः कर्मदेवता" इति मल्लिना० पु० ।

कर्मदोष पु० कर्मैव दोषः, कर्मणि दोषः, कर्महेतुर्दोषो वा । १दुष्टे पापजनके हिंसादौ कर्मणि । "संभवत् सर्वकर्माणि कर्मदोषानपाकुद्रन्" शरीरजैः कर्मदोषैर्याति

स्थावरतां नरः” मनुः। २कर्म्मजन्ये पापादौ “मनोवाग्देहजैर्नित्यं कर्म्मदोषैर्न लिप्यते” मनुः। “कर्म्मदोषे पापे” कुल्लू०। विहिताकरणाविहिताचरणरूपे ३कर्म्मविपर्य्यदोषे च। “अनेन गतीर्ण्णां कर्म्मदोषसमुद्भवाः” मनुः। “विहिताकरणाविहिताचरणरूपकर्म्मदोषजन्याः गतीः” कुल्लू०। ४सकलकर्म्महेतौ मिथ्याज्ञानजन्यवासनारूपे दोषे च। “दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम्” इत्यादि० गौत०सू०मिथ्याज्ञानजन्यवासनारूपदोषस्य सकलप्रवृत्तिरूपकर्म्महेतुत्वोक्तेस्तस्य तथात्वम्।

**कर्म्मधारय** पु० व्याकरणोक्ते समानाधिकरणपदघटिते समासाधीनलक्षणान्यूने समासभेदे “समानाधिकरणस्तत्पुरुषः कर्म्मधारयः” पा०। तल्लक्षणादिक शब्द०प्र०उक्तं यथा “क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन, भवेदेष समासः कर्म्मधारयः। क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशं नामद्वयं कर्म्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः, तथा पुरुषसिंह इत्यादावपि पुरुषादावुत्तरपदस्यार्थस्य सिंहादिशब्दस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानैरिति कर्म्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थकस्योपकुम्भादिर्न तादात्म्येनान्वयबोधकः, प्रवलमपद्रव्यमित्यादेः संग्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि क्षत्यभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयबोधकमपि न क्रमिकं विभक्त्याव्यवधानात्। यदि च तत्तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतोऽन तत्राभेदसम्बन्धेन नीलादेरन्वयः, परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्यप्रत्ययेत्यत्वेन, नीलघटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवंद्वन्द्वात्मकनाम्नैवोपस्थापिते घटे पटे च नीलस्य तादात्म्यसम्बन्धेनान्वयाच्च व्यभिचारः। लोकपचति धान्येन धनं, प्रज्ञया पटुरित्यादावपि लोकादेर्न धान्याद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्यप्रत्ययेत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव। राजपुरुष इत्यादिकस्तु तत्पुरुषोऽपि पूर्वपदगम्यराजसम्बन्धिनस्तादात्म्येनान्वयबोधकत्वेन समासविग्रहयोस्तुल्यार्थत्वस्यानुपपत्तेः, परन्तु राजसम्बन्धस्यैव। अतएव राजपुरुष इत्यादौ पूर्व्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृतामपि सङ्गच्छते। यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते। किञ्चिद्विशिष्टस्वार्थानवच्छिन्नस्यैव वा तादात्म्येनान्वयबोधकत्वमुक्तनिरुक्तौ निवेश्यम्। नचैवमपि पञ्चपूल्यादिद्विगौ द्विगाव्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगाव्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। अत्र च मानुषब्राह्मणो ब्राह्मणमानुष इत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्म्मधारयः साधुः प्रमेयधूम इत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुष एवेति दृष्टा। चन्दनतरुर्हिमगिरिर्वसन्तसमय इत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं कर्म्मधारये तन्त्रं न तु विशेषणस्यापि तद्व्यभिचारित्वम्। पुरुषोत्तम इत्यत्र चोत्तमत्वं न नित्यज्ञानादिमत्त्वं किन्तु भ्रमविधुरत्वम्। अतएव तत्र पुरुषस्यैव, पुरुषेऽपि तस्य व्यभिचारसत्त्वादुत्तमपुरुष इत्यपि कर्म्मधारयः साधुरिति तु नव्याः। तदाद्युत्तरपदकः कर्म्मधारयः प्रायशो नेष्यते नीलतदस्तीत्यादितो जात्यापि नीलोत्पलादेरलक्षत्वाद्यप्रतीतेः। “पक्वयष्टोदनं रम्यमामतद्व्यञ्जनं तथा। नीलयद्रसमास्वाद्य कटुतद्रूपमीष्यते” इत्यादिप्रयोगात् कश्चिदिष्यतेऽपि। प्रयुक्तश्च जुमरनन्दिना परमः स इत्याद्यर्थे परमसः परमतावित्यादि। तत्पुरुषोऽप्येतेन व्याख्यातः। ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमात्रं प्रत्येव नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं नतु तादात्म्यसम्बन्धानवच्छिन्नतत्प्रकारताकबुद्धिं प्रति गौरवात्तेनामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्म्मधारयादिकः समासो न यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे रूढ एव तदुक्तं भर्त्तृहरिणा “अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये। शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोः” इति वैयाकरणाः, तन्मन्दं नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादिप्रत्येकपदोपस्थितया तयोस्तादात्म्येनान्वयबोधस्यानुभविकत्वेन गौरवस्य प्रामाणिकत्वादन्यथा नामार्थस्यान्वयबोधसामान्य प्रत्येव नामोत्तरनामोपस्थाप्यत्व तन्त्रमुरीकृत्य नीलमानयेत्यादौ नामार्थद्वयर्थयोर्नान्वयबोधः, परन्तु सुबन्तभागस्य नीलविशिष्टकर्म्मत्वादौ रूढिरेवेत्यपि किन्न रोचये ?। नच समासस्याशक्तत्वे नीलो द्रव्यं घट इत्यादाविव नीलघटो द्रव्यमित्यादावपि घटे धर्म्मण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयापत्तिरिति वाच्यम्,

नामार्थस्य मुख्यविशेष्यताक एव तादात्म्यावच्छिन्नविधेयता-कोऽपि बोधे नाम्नः प्रथमान्तत्वस्य तन्त्रत्वात्। विधेयत्वन्तु विषयतावच्छेदकताख्यप्रकारत्वं प्रकारताप्रभेदो वेतन्यदेतत्। घटमित्यादौ तु घटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः। ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे नीलपीतोत्पलं सर इत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थे नीलपीतोत्पलं पुष्पमित्यादिकः कर्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठधर्मिताकधीजनकः कथं न स्यात्? इति चेन्न "बहुपदे बहुव्रीहिरेव नेतरो ह्यनन्य समास" इत्याद्युशिष्टिबलेन बहुव्रीहेरेव स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्नतादृशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात्। नीलपीतोत्पले रक्ते पीतनीलोत्पलान्वितमित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रक्तमित्याकारक एव बोधो न तु नीलं पीतञ्च यदुत्पलं तद्रक्तमित्याकारः। अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धकथनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम्। घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकस्तु मध्यपदप्रधानतत्पुरुषेण बहुनामगर्भो नवैकत्र द्वयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः"।

अत्र समासे विशिष्टार्थे न शक्तिर्न वा लक्षणेति शब्दचि० स्थितौ यथा।

"कर्मधारये तु न शक्तिर्न वा लक्षणा तां विनापि विवक्षितार्थान्वयबोधोपपत्तेः ननु नीलघटयोः सामानाधिकरण्यप्रतीतेस्तत्र लक्षणैव अन्वयप्रकारत्वादिना तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथास्तु अत्र ब्रूमः—कर्मधारये सामानाधिकरण्यं नामार्थयोरभेदो वा गुणगुणिनोः समवायो वाऽनुभूयते स चान्वय एव तत्त्वन्वयप्रतियोगी अतोऽन्वयप्रतियोगिनोरुपस्थितिर्नामपदाल्लभ्यते वेति न तदर्थं लक्षणा। राजपुरुष इत्यत्र तु राजसम्बन्धिपुरुषयोरन्वयोऽनुभूयते। राजसम्बन्धिनश्चान्वयप्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थलक्षणां विना, राज्ञः पुरुषं राजसम्बन्धिनं पुरुषं राजपुरुषमानयेत्यादौ पर्यायत्वाद्राजसम्बन्धिनः पुरुषेऽन्वयो भासते राजसम्बन्धी अन्वयप्रतियोगित्वेन। एवञ्च बहुव्रीहौ चरमान्त्यपदस्य षष्ठीतत्पुरुषे पूर्वपदस्यापरपरतया लाक्षणिकत्वात् ताभ्यां कर्मधारयो बलवान् सर्वेषां पदानां स्वार्थपरतया मुख्यत्वात्। अतएव "एतयैव कृत्वा निषादस्थपतिं याजयेत्" इत्यत्र कर्मधारय एव मुख्यत्वे शब्दस्वरसात् षष्ठीतत्पुरुषे च षष्ठ्यर्थे लक्षणापत्तेः"। वैयाकरणास्तु समासमात्रे विशिष्टेऽतिरिक्ता शक्तिं कल्पयन्तस्तदस्वीकारे दोषं वर्णयन्ति यथा वैया०भू०

"अपि च समासे विशिष्टशक्त्यनङ्गीकारे राजपुरुषश्चित्रगु नीलोत्पलमित्यादौ सर्व्वत्रानन्वयप्रसङ्गः। राजपदादे सम्बन्धिनि लक्षणायामपि तण्डुलं पचतीत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात् पुरुषादेस्तथात्वाभावात्। तण्डुलः शुभ्र इत्यादौ च प्रातिपदिकार्थप्रथमार्थे तण्डुलादेस्तस्य च शुक्ले अभेदेनैवान्वय। शुभ्रेण तण्डुलेनेत्यादौ च विशेषणविभक्तिरभेदार्था पार्ष्णिकोवान्वय इति नातिप्रसङ्गः। तथा च समासे परस्परमन्वयासम्भवादावश्यकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः"। "तत्सूक्तरीत्या सर्वत्र समासे शक्तिरस्तु च तथाविधकृत्याऽपि षष्ठीतत्पुरुषकर्मधारययो शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तविरोधः स्यात् इत्यत आह। "पर्य्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते। शक्तिपक्षेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्"।

"पर्य्यवस्यन्नसौ शाब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च तदानीन्तनबाधप्रमादाद्यधिकरणाविरोध इत्यर्थः। अयं भावः—निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे निषादानाञ्च स्थपतौ निषादस्वामिके पुरुषान्तरे चैकैकं सर्वत्र शक्तत्वान्नानार्थकम्। तथा च "नानार्थे तात्पर्य्याद्विशेषावगतिः" इति न्यायेन तत्कल्पनाया पदद्वये पूर्वोपस्थितार्थे एवोपस्थित्यादिलाघवात् तत्कल्पनमिति। परेषामपि सति तात्पर्य्ये षष्ठी प्रवेशयेतिलक्षणाबाहुल्यारत्वात्तात्पर्य्यमेव कल्प्यकोटौ अवशिष्यत इति दिक्"।

"सुबन्तकर्मधारयजातीयदेशीयेषु" "तत्पुरुषेऽनञ्कर्मधारयः" पा०। "द्वन्द्वो द्विगुरपि चाहं सततमद्गेहेऽव्ययीभावः। तत् पुरुष। कर्म धारय येन स्यां बहुव्रीहिः" उद्भटः।

**कर्म्मन्** पुंन० कृ—कर्म्मणि मनिन् अर्द्धर्चादि०पा० अमरे तु न०। व्याकरणपरिभाषिते कर्त्तुः क्रियाफलाश्रयतयाभीप्सिततमे पदार्थे "कर्त्तुरीप्सिततमं कर्म्म" पा०। व्याख्यातञ्चैतत् सि०कौ० यथा—

"कर्त्तुः क्रियया आप्तुमिष्टतमं कर्मसंज्ञं स्यात्। कर्त्तुः किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न तु कर्त्तुः। तमब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते। कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्, अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्"। विवृतञ्चैतदस्माभिः सरलायां यथा कर्त्तुरित्यादि। कर्त्राप्तुमिष्यमाणं कर्मेत्यर्थः। "धातूपात्तव्यापाराश्रयः कर्त्ता" इति वक्ष्यते। आप्तिश्च सम्बन्धः, स च कर्तृविशेषणीभूतक्रियारूपव्यापारद्वारकएवानुपस्थितकल्पने मानाभावात्, एवञ्च कर्त्रा स्वनिष्ठक्रियारूपव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणं कर्मेत्यर्थः, तदेतदाह कर्त्तुः क्रियया आप्तुमिति। क्रियया धातूपात्तव्यापारेण, आप्तुं धातूपात्तफलद्वारा सम्बन्धुम्। फलव्यापारयोर्धातूपात्तत्वन्तु "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः" इत्यनेन सिद्धम्। तच्च कर्म सप्तविधम्, यथोक्तं हरिणा "निर्वर्त्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्। तच्चेप्सिततमं कर्म चतुर्द्धान्यत्तु कल्पितम्। औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम्। संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्" इति। तत्र निर्वर्त्त्यादीनां लक्षणादिकमपि तेनैवोक्तं यथा—"यदसज्जायते सद्वा जन्मना यत्प्रकाशते। प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत्। क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते" इति, "सती वा विद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते" इति च। तदयं लक्षणनिष्कर्षः-प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्त्यत्वम् यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वान्निर्वर्त्त्यत्वम्। प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम्, यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्वरूपविशिष्टासत्त्वफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम्। क्रियाकृतासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वम्, प्राप्यत्वं यथा ग्रामं गच्छतीत्यादौ ग्रामादेः कर्त्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाकृतश्रमादिरूपासाधारणविशेषफलस्यानाधारत्वेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम्। निर्वर्त्त्यविकार्य्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारणत्वेन तद्वत्त्वान्नातिप्रसङ्ग इति बोध्यम्। कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम्, औदासीन्य प्राप्त यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीनकर्मता। द्विष्टसाधनत्वे सति क्रियाफलवत्त्वं, द्वेष्यं यथा अन्नं बुभुक्षुर्विषं भुङ्क्ते इत्यादौ विषस्य तथात्वम्। कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकत्वम्, संज्ञान्तरैरनाख्यातत्वम् यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अविवक्षया दुग्धोपयोगितया कर्मत्वम्। व्यक्तीभविष्यति चेदमुपरिष्टात्। कारकान्तरसंज्ञापूर्वकत्वं यथा 'जलधिमधिशेते' इत्यादौ जलधेराधारसंज्ञकतया प्राप्तत्वेऽपि "अधिशीङ्स्थासां कर्म" पा० इत्यादिनाकर्मसंज्ञया कर्मत्वम्। पयसेति भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वविवक्षायां तस्येप्सिततमत्वात् पयः पिबतीति स्यादेव। इह तु तथा विवक्षाविरहेणान्नभोजनं प्रति तस्याङ्गतया करणत्वमात्रं विवक्षितमिति न ओदनस्य कर्मत्वम्। सहार्थे तृतीयेति तु न्याय्यम्, तस्याप्रधानत्वात्तमपा बोधयितुमशक्यत्वात्"।

कर्मताबोधनप्रकारलक्षणादिकं शब्द० प्र० अन्यथोक्तं यथा "यगन्तधातोरर्थो वस्तिङा स्वार्थेऽनुभाव्यते। यत्रासौ कर्मता नाम कारकं कर्तृतेतरः" यगन्तस्य यद्धातोरुत्तरस्य तिङा यत्र स्वार्थे तदीयोपाश्रयोऽर्थोऽनुभावयितुं शक्यते, तद्धातूपस्थाप्यतादृशक्रियायां स तिङर्थः कर्तृताभिन्नः कर्मत्वं नाम कारकमित्यर्थः। ग्रामो गम्यत इत्यत्र गमधातूपस्थाप्यायाः संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसम्बन्धेन तिङ्पदोपस्थाप्ये संयोगे एवान्वयो न तु त्यज्यत इत्यादाविव विभागादौ धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वादतः संयोगस्यैव तत्र गतिक्रियाकर्मत्वं न तु विभागादेः, तेन तरोस्त्यागिनि खगे तरुं गच्छतीत्यादिको न प्रयोगः। गम्यते रथः स्वयमेवेत्यादौ (गम्यते इति त्वनुशासनविरुद्धं कर्त्तृस्वभावकतया कर्मवत् क्रियाया अप्रसक्तेः)। कर्मत्वमिवानुकूलव्यापारवत्त्वलक्षणं कर्तृत्वं धात्वर्थस्य धर्मोऽपि न तत्कर्त्ताभिन्नमिति 'तद्व्युदासः'। ननु चैत्रकर्त्तृकगमनजन्यसंयोगस्य ग्राम इव चैत्रेऽपि सत्त्वाच्चैत्रेण गम्यते चैत्र इत्यपि प्रयोगः स्यात्, तिङर्थसंयोगस्य जन्यत्वस्वाश्रयप्रतियोगिकत्वोभयसम्बन्धेन धात्वर्थगतेः साकाङ्क्षत्वेन चैत्रकर्तृकगत्याश्रयप्रतियोगिकत्वविशिष्टस्य संयोगस्य चैत्रे बाधितत्वात्। अतएव चैत्रो ग्रामं गच्छति

इतिवत् चैत्रश्चैत्रं गच्छतीत्यपि न प्रयोगः, तत्रापि द्वितीयार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसम्बन्धेनैव साकाङ्क्षतया द्वितीयान्तलभ्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगाश्रयवृत्तिगतेश्चैत्रे बाधितत्वात्। यत्तु फलमिव क्रियायामन्वित परसमवेतत्वमपि कर्मतावाचिप्रत्ययस्यार्थः, परत्वञ्च तिङा स्वार्थफलान्वयिप्रतियोगिकं, द्वितीयादिसुपा तु प्रकृत्यर्थप्रतियोगिकं प्रत्याय्यते तथा च चैत्रकर्तृकस्य चैत्रान्यसमवेतगमनस्याप्रसिद्धत्वेन चैत्रे तज्जन्यसंयोगस्यासम्भवाच्चैत्रेण गम्यते चैत्र इत्यादिकोन प्रयोगः। एवं चैत्रान्यसमवेतस्य चैत्रे बाधाच्चैत्रश्चैत्रं गच्छतीत्यादिरपि। चैत्रेण गम्यते ग्राम इत्यादौ तु चैत्रकर्तृकस्य ग्रामभिन्नसमवेतस्य गमनस्य जन्यो यः संयोगस्तद्वान् ग्राम इत्यन्वयबोधनेन किञ्चिद्बाधकमिति प्राच्यैरुक्तं तन्न युक्तम्, स्वाकाङ्क्षातिरिक्तस्य तिङर्थस्य धात्वर्थविशेष्यत्वनियमेन तिङर्थस्य परसमवेतत्वादेर्धात्वर्थगत्यादावन्वयायोगात् प्रथमान्तोपस्थाप्यग्रामादेर्भेदान्यसम्बन्धेनान्यत्र प्रत्ययार्थे तिङर्थे वान्वयस्यादृष्टचरत्वेनाव्युत्पन्नत्वात्, चैत्रेण गम्यते द्रव्यं, द्रव्यं गच्छति चैत्र इत्यादौ द्रव्यान्यसमवेतस्य गत्यादेरप्रसिद्धत्वेनायोग्यतापत्तेश्च। नव्यास्तु फलमिव भेदोऽपि कर्मत्ववाचिप्रत्ययस्यार्थस्तथा च चैत्रेण गम्यते ग्राम इत्यत्र तिङर्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थविशेष्यत्वात् प्रतियोगित्वसम्बन्धेन प्रथमान्तार्थे ग्रामादौ विशेषणत्वाच्च व्युत्पत्तिविरोधो नवातिप्रसङ्गः चैत्रकर्तृकगमनाश्रयवृत्तिभेदप्रतियोगित्वस्य चैत्रे विरहात् चैत्रं गच्छतीत्यादावपि प्रतियोगित्वसम्बन्धेन चैत्रान्वितस्य द्वितीयार्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थगतावन्वयात्तादृशगतेश्चैत्रे बाधाच्चैत्रं गच्छति चैत्र इत्यादिकोन प्रयोगः। प्रतियोगित्वञ्च उभयावृत्तिधर्मावच्छिन्नं धर्मद्वयानवच्छिन्नं वा ग्राह्यमतो द्रव्यं गच्छतीत्यादौ गतौ द्रव्यभेदसामानाधिकरण्यविरहेऽपि न क्षतिरिति प्राहुस्तच्चिन्त्यम्। इत्थं खगस्त्यजतीत्यादौ विभागावच्छिन्नक्रिया त्यजेरर्थः द्वितीयायास्तु विभागस्तेन वृक्षावधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान् खग इत्याकारस्तत्र बोधः। वृक्षावधिकविभागवत्त्वञ्च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियाया ग्राह्यमतः खगाद्यवधिकविभागस्य खगाद्यसत्त्वात् खगं त्यजति खग इत्यादिकोन प्रयोगः। खगेन त्यज्यते खग इत्यत्रापि प्रयोगः प्रागुक्तरीत्या निरसनीयः। प्राञ्चस्तु ग्रामं गच्छति त्यजतीत्यादौ सर्वत्र क्रियामात्रं धात्वर्थस्त्यजिगम्योः पर्यायत्वेऽपि न क्षतिः, गत्यर्थक्रियायाः संयोगस्यैव त्यज्यर्थक्रियायाश्च विभागस्यैव बोधकतायाः कर्मप्रत्ययेषु व्युत्पन्नत्वात् वृक्षं त्यजतीत्यादौ संयोगस्य वृक्षं गच्छतीत्यादौ च विभागस्य द्वितीयादितो नावगमः परैरपि समभिव्याहृतधात्वर्थतावच्छेदकफलस्यैव द्वितीयादिबोध्यताव्युत्पत्तेरभ्युपेतव्यत्वात् अन्यथातिप्रसङ्गात्। न चैवं स्पन्दोन स्पन्द इत्यादेरिव त्यागोन गतिरित्यादेरपि वाक्यस्य निराकाङ्क्षतापत्तिस्तत्र त्यजिगम्योर्विभागाद्यवच्छिन्नक्रियावाचकत्वेनैवान्वययोग्यत्वासम्भवात्। द्वितीयासाकाङ्क्षत्वमन्तधातुत्वप्रयुक्तमेव च धातूनां सकर्मकत्वव्यवहारो न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः ग्रामभक्तावव्याप्तत्वात्। स्मृत्यर्थधातूनां कर्मणि षष्ठ्या इव द्वितीयाया अपि साधुत्वात्। एवञ्च ग्रामं गच्छति वृक्षं त्यजतीत्यादौ ग्रामसंयोगजनकक्रियावान् वृक्षविभागजनकक्रियावानित्याकारक एव बोधो न तु ग्रामसंयोगजनकसंयोगावच्छिन्नक्रियावान् वृक्षविभागजनकविभागावच्छिन्नक्रियावानित्याकारकः, संयोगविभागयोरुभयथाभानस्य नीलघटजनकदण्डवानित्यादौ घटादेरिव निराकाङ्क्षत्वेनासम्भवादनुभवबाधितत्वाच्चेत्याहुः। परे तु संयोगः क्रिया च द्वयमेव प्रत्येकं गमिशक्यं तयोर्जन्यजनकभावस्तु वाक्यार्थमर्यादया भासते एवार्थयोरन्ययोगव्यवच्छेदयोरिव, गम्यर्थयोः संयोगक्रिययोर्मिथ एव साकाङ्क्षत्वाच्च नैकमात्रे गमिप्रयोगः। पुष्पवन्तपदे चन्द्रत्वसूर्यत्वाभ्यामिव विभिन्नरूपाभ्यां प्रकृतेऽपि संयोगत्वक्रियात्वाभ्यां गमधातोरेकशक्तिस्वीकारेऽपि न क्षतिः। इयांस्तु विशेषो यत्तत्र चन्द्रसूर्ययोर्मिथोऽनन्वयः प्रकृते तु संयोगक्रिययोस्तथेति तथाच ग्रामं गच्छतीत्यत्र द्वितीयाया आधेयत्वं प्रतियोगित्वं वार्थस्तेन तदन्वितस्य संयोगस्य क्रियायामन्वयात् ग्रामवृत्तिस्तत्प्रतियोगिको वा यः संयोगस्तद्विशिष्टक्रियावानित्याकारकस्तत्र बोधः, वृक्षं त्यजतीत्यत्राप्याधेयत्वमवधित्वं वा द्वितीयार्थस्तेन तदन्वितस्य धात्वर्थविभागस्य धात्वर्थान्तरे क्रियायामन्वयात्तद्वृत्तिस्तदवधिको वा यो विभागस्तद्विशिष्टक्रियावानित्याकारको बोधः संयोगादेर्वैशिष्ट्यञ्च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव प्रागिव ग्राह्यमतो नातिप्रसङ्गः। सकर्मकत्वमपि धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वं जानातीत्यादौ सकर्मकत्वव्यवहा-

दद्याच्च चन्दनान्यपत्तुत्तये । महिषीघातने चैव कृष्ण-गुल्मः प्रजायते । खरे विनिहते चैव खररोमा प्रजायते । निष्कत्रयस्य प्रकृतिं स प्रदद्याद्धिरण्मयीम् । तरक्षौ निहते चैव जायते केकरेक्षणः । दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये । शूकरे निहते चैव दन्तरोगी जायते नरः । स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् । हरिणे निहते खञ्जः शृगाले तु विपादकः । अश्वस्तेन प्रदातव्यः सौवर्णपलनिर्म्मितः । अजाभिघातने चैव अधिकाङ्गः प्रजायते । अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता । उरभ्रे निहते चैव पाण्डुरोगः प्रजायते । कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये । मार्ज्जारे निहते चैव पीतपाणिः प्रजायते । पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् । शुकसारिकयोर्घाते नरः स्खलितवाग्भवेत् । सच्छास्त्रपुस्तकं दद्यात् स विप्राय सदक्षिणम् । बकघाते दीर्घनसो दद्याद्गां धवलप्रभाम् । काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् । हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता । तदर्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात्” । २ अ० ।

“सुराप श्यावदन्तः स्यात् प्राजापत्यन्तु तारकम् । शर्कराया-स्तुलाः सप्त दद्यात् पापविशुद्धये । जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः । ततोऽभिषेकः कर्त्तव्यो मन्त्रैर्वरुणदैवतैः । मद्यपो रक्तपित्ती स्यात् स दद्यात् सर्पिषो घटम् । मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये । अभक्ष्यभक्षणे चैव जायते कृमिकोदरः । यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् । उदक्यावीक्षितं भुक्त्वा जायते कृमिकोदरः । गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति । भुक्त्वा चास्पृश्यसंस्पृष्टं जायते कृमिकोदरः । त्रिरात्रं समुपोष्याथ स तत्पापात् प्रमुच्यते । परान्नविघ्नकरणादजीर्णमभिजायते । लक्षहोमं स कुर्व्वीत प्रायश्चित्तं यथाविधि । मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः । प्राजापत्यत्रयं कुर्य्याद्भोजयेच्च शतं द्विजान् । विषदः स्याच्छर्द्दिरोगी दद्याद्गां च पयस्विनीम् । मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत् । पिशुनो नरकस्यान्ते जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् । धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये । ब्रह्मकूर्च्चमयीं धेनुं दद्याद्वा सदक्षिणाम् । शूली परोपतापेन जायते तत्प्रमोचने । सोऽन्नदानं प्रकुर्व्वीत तथा रुद्रं जपेन्नरः । दावाग्निदायकश्चैव रक्तातिसारवान् भवेत् । तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः । सुरालये जले वापि शकृन्मूत्रं करोति यः । गुदरोगो भवेत्तस्य पापरूपः सुदारुणः । मासं सुरार्च्चनेनैव गोदानद्वितयेन तु । प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजः । गर्भपातनजा रोगा यकृत्प्लीहजलोदराः । तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् । एतेषु दद्याद्विप्राय जलधेनुं विधानतः । सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् । प्रतिमाभङ्गकारी च अप्रतिष्ठः प्रजायते । संवत्सरत्रयं सिञ्चेदश्वत्थं प्रतिवासरम् । उद्वाहयेत्तमश्वत्थं स्वगृह्योक्तविधानतः । तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् । दुष्टवादी खण्डितः स्यात् स वै दद्याद्द्विजातये । रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् । खल्वाटः परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम् । परोपहासकृत् काणः स गां दद्यात् समौक्तिकाम् । सभायां पक्षपाती च जायते पक्षघातवान् । निष्कत्रयमितं हेम स दद्यात् सत्यवर्त्तिनाम्” ३ अ० ।

“कुनखी नरकस्यान्ते जायते विप्रहेमहृत् । स तु स्वर्णशतं दद्यात् कृत्वा चान्द्रायणत्रयम् । औडुम्बरी ताम्रचौरो नरकान्ते प्रजायते । प्राजापत्यं स कृत्वात्र ताम्रं पलशतं दिशेत् । कांस्यहारी च भवति पुण्डरीकसमन्वितः । कांस्यं पलशतं दद्यादलङ्कृत्य द्विजातये । रीतिहृत् पिङ्गलाक्षः स्यादुपोष्य हरिवासरम् । रीतिपलशतं दद्यादलङ्कृत्य द्विजं शुभम् । शुक्ताहारी च पुरुषो जायते पिङ्गमूर्द्धजः । शुक्तापलशतं दद्यादुपोष्य स विधानतः । त्रपुहारी च पुरुषो जायते नेत्ररोगवान् । उपोष्य दिवसं सोऽपि दद्यात् पलशतं त्रपु । सीसहारी च पुरुषो जायते शीर्षरोगवान् । उपोष्य दिवसं दद्याद्घृतधेनुं विधानतः । दुग्धहारी च पुरुषो जायते बहुमूत्रकः । स दद्याद्दुग्धधेनुञ्च ब्राह्मणाय यथाविधि । दधिचौर्य्येण पुरुषो जायते मदवान् यतः । दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये । मधुचौरस्तु पुरुषो जायते नेत्ररोगवान् । स दद्यान्मधुधेनुञ्च समुपोष्य द्विजातये । इक्षोर्व्विकारहारी च भवेदुदरगुल्मवान् । गुडधेनुः प्रदातव्या तेन तद्दोषशान्तये । लौहहारी च पुरुषः कर्व्वुराङ्गः प्रजायते । लौहं पलशतं दद्यादुपोष्य स तु वासरम् । तैलचौरस्तु पुरुषो भवेत् कण्ड्वादिपीडितः । उपोष्य स तु विप्राय दद्यात्तैलघटद्वयम् । आमान्नहरणाच्चैव दन्त-

होमः प्रजायते । स दद्याद्द्विजे हेमनिष्कद्वयविनि-
र्म्मितौ । पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते ।
गायत्र्याः स जपेल्लक्ष दद्याच्च जुहुयात्तिलैः । फलहारी
च पुरुषो जायते व्रणिताङ्गुलिः । नानाफलानामयुतं स
दद्याच्च द्विजन्मने । ताम्बूलहरणाच्चैव श्वेतौष्ठः
स प्रजायते । स दद्याद्विद्रुमस्य द्वयं वरम् ।
शाकहारी च पुरुषो जायते नीललोचनः । ब्राह्मणाय
प्रदद्याद्वै महानीलमणिद्वयम् । कन्दमूलस्य हरणा-
द्ध्रस्वपाणिः प्रजायते । देवतायतनं कार्य्यमुद्यानं तेन
शक्तितः । सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते ।
स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि । दारुहारी
च पुरुषः स्विन्नपाणिः प्रजायते । स दद्याद्द्विजे शुभ्रं
काश्मीरज-पलद्वयम् । विद्यापुस्तकहारी च किल मूकः
प्रजायते । न्यायेतिहासं दद्यात् स ब्राह्मणाय
सदक्षिणम् । वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात्
प्रजापतिम् । हेमनिष्कमितञ्चैव वस्त्रयुग्मं द्विजातये ।
ऊर्णाहारी लोमशः स्यात् स दद्यात् कम्बलान्वितम् ।
स्वर्णनिष्कमितं हेमवर्ज्जं दद्याद्द्विजातये । पट्टसूत्रस्य
हरणान्निर्लोमा जायते नरः । तेन धेनुः प्रदातव्या
विशुद्ध्यर्थं द्विजन्मने । औषधस्यापहरणे सूर्य्यावर्त्तः
प्रजायते । सूर्य्यायार्घं प्रदातव्यो मासं देयञ्च काञ्चनम् ।
रक्तवस्त्रप्रवालादिहारी स्याद्रक्तवातवान् । सवत्सां
महिषीं दद्यान्मणिरागसमन्विताम् । विप्ररत्नापहारी
चाप्यनपत्यः प्रजायते । तेन कार्य्यं विशुद्ध्यर्थं महा-
रुद्रजपादिकम् । व्रतमुक्तोदितः सर्व्वो विधिरत्र विधीयते ।
दशांशहोमः कर्त्तव्यः पायसेन यथाविधि । देवस्व-
हरणाच्चैव जायते विविधोज्वरः । ज्वरोऽन्महाज्वरश्चैव
रौद्रो वैष्णव एव च । ज्वरे रौद्रं जपेत् कर्णे महारुद्रं
महाज्वरे । अतिरुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ।
नानाविधद्रव्यचौरो जायते ग्रहणीयुतः । तेनान्नोदक-
वस्त्राणि हेम देयञ्च शक्तितः" ॥ ४३० ॥ "मातृगामी भवेद्यस्तु
लिङ्गं तस्य विनश्यति । चाण्डालीगमने चैव हीनकोषः
प्रजायते । तस्य प्रतिक्रिया कर्त्तुं कुम्भमुत्तरतो न्यसेत्
कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् । तस्योपरि-
न्यसेद्देवं कांस्यपात्रे धनेश्वरम् । सुवर्णनिष्कषट्केन
निर्मितं नरवाहनम् । यजेत् पुरुषसूक्तेन धनदं विश्व-
रूपिणम् । अथर्व्ववेदविद्विप्रोऽङ्गाथर्व्वाणि समाचरेत् ।
सुवर्णपुत्तलिकां कृत्वा निष्कविंशतिसंख्यया । दद्याद्विप्राय

संपूज्य निष्पापोऽहमिति ब्रुवन् । निधीनामधिपो देवः
शङ्करस्य प्रियः सखा । सौम्याशाधिपतिः श्रीमान् मम
पापं व्यपोहतु । इमं मन्त्रं समुच्चार्य्य आचार्य्याय
यथाविधि । दद्याद्देवं हीनकोषे लिङ्गनाशे विशुद्धये ।
गुरुजायाभिगमनान्मूत्रकृच्छ्रं प्रजायते । तेनापि निष्कृतिः
कार्य्या शास्त्रदृष्टेन कर्म्मणा । स्थापयेत् कुम्भमेकन्तु पश्चि-
माशायां शुभे दिने । नीलवस्त्रसमाच्छन्नं नीलमाल्यविभू-
षितम् । तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम् ।
सुवर्णनिष्कषट्केन निर्मितं यादसाम्पतिम् । यजेत्
पुरुषसूक्तेन वरुणं विश्वरूपिणम् । सामविद्ब्राह्मणस्तत्र
सामवेदं समापयेत् । सुवर्णपुत्तलिकां कृत्वा निष्कविंशति-
संख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् ।
यादसामधिपो देवो विश्वेषामपि पावनः । स संसाराब्धौ
कर्णधारो वरुणः पावनोऽस्तु मे । इमं मन्त्रं समु-
च्चार्य्य आचार्य्याय यथाविधि । दद्याद्देवमवक्रूरं मूत्र-
कृच्छ्रप्रशान्तये । स्वसृगमने चैव रक्तकुष्ठं प्रजायते ।
भगिनीगमने चैव पीतकुष्ठं प्रजायते । तस्य प्रतिक्रिया कर्त्तुं
पूर्व्वतः कलसं न्यसेत् । पीतवस्त्रसमाच्छन्नं पीतमाल्य-
विभूषितम् । तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम् ।
सुवर्णनिष्कषट्केन निर्मितं वज्रधारिणम् । यजेत्
पुरुषसूक्तेन वासवं विश्वरूपिणम् । यजुर्वेदं तत्र सम्यग्
ऋग्वेदञ्च समाचरेत् । सुवर्णपुत्तलिकां कृत्वा सुवर्णदश-
केन तु । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् ।
देवानामधिपो देवो वज्री विष्णुनिकेतनः । शतयज्ञो
सहस्राक्षः पापं मम निकृन्ततु । इमं मन्त्रं समुच्चार्य्य
आचार्य्याय यथाविधि । दद्याद्देवं सहस्राक्षं स पाप-
स्यापनुत्तये । भ्रातृभार्य्याभिगमनाद्गलत्कुष्ठं प्रजायते ।
स्वबधूगमने चैव कृष्णकुष्ठं प्रजायते । तेन कार्य्यं विशु-
द्ध्यर्थं प्रागुक्तस्यापि मेव हि । दशांशहोमं सर्व्वत्र कर्त्तव्यः
क्रियते तिलैः । यदमस्याभिगमनाज्जायते भ्रुवमस्तकम् ।
कृत्वा लोहमयीं धेनुं तिलषष्टिप्रमाणतः । कार्पासभार-
संयुक्तां कांस्यदोहां सवत्सिकाम् । दद्याद्विप्राय विधि-
वदिमं मन्त्रमुदीरयेत् । सुरभी वैष्णवी माता मम पापं
व्यपोहतु । तपस्विनीसङ्गमने जायते चाश्मरीगदः । स तु
पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् । दद्याद्विप्राय
विदुषे मधुधेनुं यथोदिताम् । तिलद्रोणशतञ्चैव हिरण्येन
समन्वितम् । पितृपत्न्यभिगमनाद्दिशाशायाप्रणी भवेत् ।
तेनापि निष्कृतिः कार्य्या अन्नादानेन शक्तितः । मातृ-

स्वान्यान्तु गमने पृष्ठकुब्जः प्रजायते । कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् । मातृष्वस्रभिगमने वामाङ्गे व्रणवान् भवेत् । तेनापि निष्कृतिः कार्य्या सम्यग्दानप्रदानतः । भ्रातृभार्य्याभिगमने मृतभार्य्यः प्रजायते । तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत् । सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी । तेनापि निष्कृतिः कार्य्या महिषीदानयत्नतः । तपस्विनीप्रसङ्गेन प्रमेही जायते नरः । मासं रुद्रजपः कार्य्योदद्याच्छक्त्या च काञ्चनम् । दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तक् । स पातकविशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् । स्वजातिजायागमने जायते हृदयव्रणी । तत्पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् । पशुयोनौ च गमने मूत्राघातः प्रजायते । तिलपात्रद्वयञ्चैव दद्यादात्मविशुद्धये । अश्वयोनौ च गमनाद्गुदस्तम्भः प्रजायते । सहस्रकमलस्नानं मासं कुर्य्याच्छिवस्य च । एते दोषा नराणां स्युर्नरकान्ते न संशयः । स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात् । अश्वशूकरशृङ्ग्यादि कृमिश्वशकटेन च । भृगवग्निवान्तशस्त्राम्बुविषोद्बन्धनजैर्मृताः । व्याघ्राहिगजभूपालचौरवैरिहकाहताः । छ्वतल्पमृता ये च शौचसंस्कारवर्जिताः । विसूचिकान्नकवलद्वातीसारमोक्षताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये । अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः । पञ्चत्रिंशत्प्रकारैश्च नाप्नुयन्ति गतिं मृताः । पित्राद्याः पिण्डभाजः स्युस्त्रयोलेपभुजस्तथा । ततोनान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः । द्वादशैते पितृगणास्तर्पिताः सन्ततिप्रदाः । गतिहीनाः सुतादीनां सन्ततिं नाशयन्ति ते । दश व्याघ्रादिनिहता गर्भं निघ्नन्त्यथो क्रमात् । द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् । विषादिनिहतास्त्रन्ति दशसु द्वादशस्वपि । षष्ठैकमासकं कुर्य्याद्दनपत्योऽनपत्यताम् । व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृपदुष्टकृत् । राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च [illegible]केण तु । गुरुघाती च शय्याया [illegible] शौचवर्जितः । द्रोही संस्काररहितः शुना निक्षेपहारकः । नरोविहन्यतेऽरण्ये सूकरेण च मायिकः । कृमिभिः कृतवाशाश्च कृमिणा यो निकृन्तनः । शृङ्गिणा शङ्करद्रोही शकटेन च सूचकः । भृगुणा मेदिनीचौरोवह्निना ग्रामदाहिकृत् । द्रवेन दक्षिणाचौरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः । उद्बन्धनेन हिंस्रः स्यात् सेतुभेदी जलेन तु । द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् । शाकिन्याद्यैश्च म्रियते सदर्पकार्य्यकारकः । अनध्यायेऽप्यधीयानो म्रियते विद्युता तथा । अस्पृश्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् । पतितोमद्यविक्रेतानपत्योद्विजवस्त्रहृत् । अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते । कारयेन्निष्कमात्रन्तु पुरुषं प्रेतरूपिणम् । चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम् । पिष्टैः कृष्णतिलैः कुर्य्यात् पिण्डं प्रस्थप्रमाणतः । मध्वाज्यशर्करायुक्तं स्वर्णकुण्डलसंयुतम् । अकालमूलं कलसं पञ्चपल्लवसंयुतम् । कृष्णवस्त्रसमाच्छन्नं सर्व्वौषधिसमन्वितम् । तस्योपरि न्यसेदेव पात्रं धान्यफलैर्युतम् । सप्तधान्यन्तु सफलं तत्र तत् सकलं न्यसेत् । कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम् । कुर्य्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम् । षडङ्गञ्च जपेद्रुद्रं कलसे तत्र वेदवित् । यमसूक्तेन कुर्व्वीत यमपूजादिकं तथा । गायत्र्याश्चैव कर्त्तव्योजपः स्वात्मविशुद्धये । ग्रहशान्तिकपूर्व्वञ्च दशांशं जुहुयाच्चितैः । अज्ञातनामगोत्राय प्रेताय सतिलोदकम् । प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत् । इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम् । ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम । सजलान् कृष्णकलशांस्तिलपात्रसमन्वितान् । द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे । ततोऽभिषिञ्चेदाचार्य्योदम्पती कलसोदकैः । शुचिर्वैरायुधधरोमन्त्रैर्वरुणदैवतैः । यजमानस्ततोदद्यादाचार्य्याय स दक्षिणाम् । ततोनारायणबलिः कर्त्तव्यः शास्त्रनिश्चयात् । एष साधारणविधिरगतीनामुदाहृतः । विशेषस्तु पुनर्ज्ञेयोव्याघ्रादिनिहतेष्वपि । व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत् । सर्पदंशे नागबलिर्देयः सर्पस्तु काञ्चनः । चतुर्निष्कमितं हेमगजं दद्याद्गजैर्हते । राज्ञा विनिहते दद्यात् पुरुषन्तु हिरण्मयम् । चौरेण निहते धेनुं वैरिणा निहते वृषम् । वृकेण निहते दद्याद् यथाशक्ति च काञ्चनम् । शय्यामृते प्रदातव्या शय्या तूलीसमन्विता । निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता । शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् । संस्कारहीने च मृते कुमारञ्च विवाहयेत् । शुना हते च

निष्कं स्थापयेत्तिलगशक्तितः । शूकरेण हृत दद्यान्महिषं दक्षिणान्वितम् । क्रमिभिश्च हृते दद्याद्गोधूमान् द्विजातये । शृङ्गिणा च हृते दद्याद् वृषभं वस्त्रसंयुतम् । शकटेन हृते दद्यादश्वं सोपस्करान्वितम् । भृगुपाते हृते चैव प्रदद्याद्धान्यपर्व्वतम् । अग्निना निहते दद्यादुपानहं स्वशक्तितः । द्रवेण निहते चैव कर्त्तव्या सदने सभा । शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम् । अश्मना निहते दद्यात् सवत्सां गां पयस्विनीम् । विषेण च हृते दद्यान्मेदिनीं क्षेत्रसंयुताम् । उद्बन्धनहृते चापि प्रदद्याद्गां पयस्विनीम् । हृते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् । इष्टं इष्टहृते दद्यात् सौवर्णं स्वर्णसंयुतम् । अतीसारमृते लक्षं गायत्र्याः संयतो जपेत् । शाकिन्यादिहृते चैवं जपेद्रुद्रं यथोचितम् । विद्युता निहते चैव विद्यादानं समाचरेत् । अस्पृश्ये च हृते कार्य्यं वेदपारायणं तथा । सच्छास्त्रपुस्तकं दद्याद्धान्तमाश्रित्य संस्थिते । पातित्येन हृते कुर्य्यात् प्राजापत्यानि षोडश । हृते चाण्डालहस्ते कृच्छ्राणां नवतिञ्चरेत् । निष्कत्रयमितं स्वर्णं दद्यादश्वं हयाहते । कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् । विसूचिकामृते स्वादु भोजयेच्च शतं द्विजान् । तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले हृते । केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् । एवं कृते विधाने तु विद्यात्तदौर्द्ध्वदेहिकम् । ततः प्रेतत्वनिर्म्मुक्ताः पितरस्तर्पितास्तथा । ददुः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः” इत्या० ।

भृगुभारतवर्षवारे रोगादिरूपकर्म्मविशेषविपाक उक्तो यथा-
३सर्व्वशेष· “वातपित्तादिभिर्दोषैर्यदुत्पन्नं प्रशाम्यति । अगदेन सुवैद्येन कर्म्मजं नोपशाम्यति । तस्मात् कर्म्म परिज्ञाय प्रायश्चित्तं करोति यः । स तु दोषैर्विनिर्म्मुक्तो भोगीव कञ्चुकोज्झितः । भवतीह पवित्रोऽपि मनुजो निरुपद्रव । निशम्य तस्य तद्वाक्यं प्रणम्य स महामतिः । कृतकर्म्मोपशमनं विस्तरेण महामते ।। वदस्व मुनिशार्दूल ! नान्यो वक्ता त्वया विना । मुनिरुवाच । धर्म्माधर्म्मसमायुक्ता लोभमोहसमावृताः । भवन्ति मानवाः सर्व्वे विष्णुमायावगुण्ठिताः । स्वकर्म्मवशमासाद्य पतन्ति निरये नराः । ततो जन्म समासाद्य व्याधिं कर्म्मानुरूपतः । अवाप्य परितप्यन्ति पीड्यमानाः समन्ततः । देवद्रव्यविनाशेन गुरुद्रोहादिकर्म्मभिः । क्रमात् सर्व्वेषु पच्यन्ते नरकेषु महीक्षयात् । महापातकिनश्चापि सर्व्वेषु नरकेष्विह । आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्गदैः । उपपातकिनश्चापि तदर्द्धमिह मानवाः । शेषैः पापैस्तदर्द्धं कालं प्राप्य विशेषतः । अधःपततां पुंसामधर्म्मः परिकीर्त्तितः । नरकाब्धौ महाघोरे पतनात् पापमुच्यते । तस्मात् पापेषु दुःखानि तीव्राणि सुबहून्यपि । तस्मात् पापं न कर्त्तव्यमात्मपीडाकरं यतः । कर्म्मानुसारि नरकं भुक्त्वाशेषं व्रजन्ति वै । भूमौ स्थावरताशुल्मपशुपक्षिक्रमादिभिः । प्रत्यक्षं नरकं भुक्त्वा मानुषत्वं प्रपद्य च । तद्व्याधिलक्षणं सर्व्वं संप्राप्य परितप्यते । पूर्व्वजन्मकृतं पापं व्याधिरूपेण बाधते । तस्योपशमनं कार्य्यं मन्त्रदानार्च्चनादिभिः । प्रायश्चित्तमकृत्वा तु न कुर्य्यात् कर्म्म किञ्चन । अनिस्तीर्णमघं नित्यं वर्द्धते द्विगुणं पुनः । देवद्रव्यं द्विजप्राप्त- प्रथमस्तु, प्राङ्गणस्थित· । द्रोह एषां न कर्त्तव्यस्तद्भोगतिभयात् सदा । स्वर्णस्तेयी गुरोः शय्याशायी मद्यस्य भोजकः । ब्रह्महापि च तेषां वै संसर्गी चापि पञ्चम । गर्भपातकरः षष्ठः कन्यादूषी च सप्तमः । स्त्रीबालघातकश्चापि नवमो न्यासहृत्तथा । विश्वासघातकश्चैव दशमः परिकीर्त्तितः । एते दशविधा घोराश्चान्ये उपपातकाः । यत् पापं ब्रह्महत्याया द्विगुणं गर्भपातने । प्रायश्चित्तं न तस्यास्ति देहत्यागो विधीयते । कृतदोषसहस्राणां योषिद्द्विजतपस्विनाम् । न वधो नाङ्गविच्छेदो देहत्यागो विधीयते । नैते दण्ड्या महीभर्त्तुर्येनस्य विषयस्थिताः । दण्डयन् दोषमाप्नोति तस्माद्राजा परित्यजेत् । वधापराधतो राजा भाग्यभवति शास्त्रतः । न तस्य कुरुते शान्तिं सर्व्वोमन्त्रेषु याचिता । अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं वदन्ति ये । प्रायश्चित्तं भवेत्तेषां महापातकिनश्च ते । तस्माद्विचार्य्य गत्वा धर्म्मशास्त्रानुसारतः । ये विप्रान्नमन्ति नैव च गुरुं ये चात्र कर्म्मोज्झिताः, ये शास्त्रोक्तविवर्ज्जिता जनपदानां तापकाः पापिनः । ये वेदान् गणकान् महाव्ययुहृदः सन्मार्गगान् ये सदा, निन्दन्त्येव महापदं गदमयं विन्दन्ति ते दुःखिताः । ये धर्म्मिद्विजतीर्थमाद्दरादीर्मपक्ष निजः प्रतिक्षणम् । दृष्टमन्त्रमन्त्रदानजं फलं ते भवन्ति नीरुजो निरापदः । आभैर्व्यदा गदविरुद्धनभेषजाद्यै,र्दोषो न याति शमनं

कृतप्रयोगे । तं पूर्व्वजन्मजनितं तु विमृष्य सम्यक् कार्य्या सभा तदुपदिष्टयथोक्तशान्तिः।" १ अ०।

२नपुंसकता "साध्वी यौवनसम्पन्ना त्यक्ता दोषैर्विवर्जिता । तेन दोषेण राजेन्द्र ! नपुंसत्वमनुगच्छति । मुष्कच्छेदनकृद्यस्तु सोऽपि षण्डत्वमश्नुते । रजस्वलाम् स्त्रियं भार्य्यां सन्निधौ यो न गच्छति । षण्डत्वन्तु भवेत् तस्य जन्म चासाद्य भूपते !"।

३अल्पायुःप्रजता "शृणु विप्र ! पुरा स्नातुं गतस्य सरितस्तटम् । गावः कतिपयास्तत्र तृषार्त्ता वारितास्त्वया । तस्य विप्रस्य पाकोऽयं जायन्तेऽल्पायुषः प्रजाः" ।

४अकिञ्चनता "अदाता निष्ठुरो जातः स च धर्म्मस्य निन्दकः । महाधनो न देवाग्निं ब्राह्मणं तोषयन् पुरा । आयुःशेषे मृतिं प्राप्य गृहीतो यमकिङ्करैः । बद्धा पाशेन संनीतो यत्रास्ते धर्म्मराड्विभुः । चित्रगुप्तेन तत्पापं विख्यातञ्च यमाज्ञया । तेन मर्त्ये महाद्रोग्न कृतं दत्त न किञ्चन । लोलाख्यस्य नरकस्य विषयेऽय द्विजो भवेत् । आज्ञप्तः किङ्करैर्नीतो निःक्षिप्तोनरकार्णवे । लोलाख्यनरके घोरे सर्व्वप्राणिभयङ्करे । लोलाख्यनरकस्येह लक्षणं त्वमतः शृणु । सर्व्वत्र दर्शयेत् सर्व्वं भक्ष्यपानादि सर्व्वतः । मृगतृष्णाजलाकारं दृश्यते न तु लभ्यते । नैराश्यं प्राप्य विवशः क्षुत्पिपासासमाकुलः । बहु कालन्तु विविधं भुक्त्वा जन्म प्रपद्य च । अकिञ्चनत्वमासाद्य महाक्लेशञ्च विन्दति । अलब्धं कदन्नं भुङ्क्ते कदन्नमपि दुर्लभम् । स तु भिक्षाटनेनापि जीर्णाम्बरधरः सदा"

५वियोग "अयं दुष्टोदुराचारं दुष्टबुद्ध्या चकार यत् । स्नेहभेदकरोयस्मात्तस्माद्दण्ड्योयमस्य हि । इत्युक्त्वा शृङ्खलैर्बद्धा ताडयित्वा भृशं बहु । नीत्वा नियोगिनस्तत्र यत्रास्ते दण्डनायकः । दृष्ट्वा तं चित्रगुप्तेन तत्पापं प्रकटीकृतम् । व्यामोहके तु नरके पातितो दुर्म्मतिर्नृप ! । व्यामोहकस्य यच्चिह्नं मानं चास्यस्थितः । व्यायामः सम्प्रतिस्तस्य योजनं दुर्व्वहं परम् । कुम्भाकारं निराकारं धूमोध्वान्तमनन्तरम् । वायोर्गतिर्न तत्रास्ति न च रश्मिर्विभावसोः । मूढस्य पतनं तत्र यश्च मैत्रीविभेदकः । भ्राता मन्त्रस्य निष्पाद्य मिमन्त्रं यो विनाश्यति । सोऽपि मृत्युवशं प्राप्य मोहकाख्यञ्च गच्छति । मिथ्यापवादमन्येषां य करोति सुधामतिः । तस्य मिथ्याभिशंसेन मोहकाख्ये गतिर्भवेत् । यानि मिथ्याभिशंसेन पतन्त्यश्रूणि रोदनात् । तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् । मोहकाख्ये महाघोरे पतन्त्य ते दुराशयाः । पूर्व्वापरपरिज्ञानविहीनः परिहिंसकश्च । एवमेतत् सहस्राणि वर्षाणि च चतुर्दश । भुक्त्वा मृगतनुं प्राप्य मृगोदेहसमाकुलः । व्यापादितोन्यथांशेन नवशोकसमाहतः । मृगयूथपरित्यक्तस्त्वेकाकी तिष्ठते पुनः । सोऽपि मृत्युवश प्राप्य मनुष्ययोनौ प्रजायते । ततोमानुष्यमासाद्य वियोगे परितप्यते"।

६नेत्रामयः । "पुरा विप्र ! गृहस्थस्य दीपस्य हरणं कृतम् । तस्य पुत्रेण भो विप्र ! तेन काणत्वमस्य वै । कोटशीञ्च प्रपश्येद्यः सती वापि पराङ्गनाम् । सकामः कामतो मोहाद्रतिमात्रञ्च पश्यति । सोऽपि नेत्रामयं प्राप्य सीदतीह स्वकर्म्मतः । सभयं निरयं घोरं संप्राप्य कदनं बहु । भुक्त्वा जन्म समासाद्य दुष्टकर्म्मसमुद्भवम् । मानुषोन्तु तनुं प्राप्य निष्कृतिं न करोति य । पुनर्जन्म समासाद्य प्राप्त कर्म्म न मुञ्चति" ।

७कुब्जत्वम् । "देवताप्रतिमां दृष्ट्वा यस्तां नैवाभिवादयेत् । ब्राह्मणञ्च गुरुं श्रेष्ठं ब्रह्मचारितपस्विनम् । प्रश्माने जायते वृक्ष काकगृध्रोपसेवितः । भुक्त्वा कालसमेषञ्च मानुषत्वमवाप्य सः । कुब्जत्वमश्नुते तस्मात् कर्म्मणो मानुषो भुवम्" ।

८खञ्जत्वम् छिन्नपादत्वञ्च "उपानह हरेद्र यस्तु तथैव काष्ठपादुकाम् । तप्तवालुकदुर्भेद्यमङ्गं प्राप्य च सीदति । स नीतोयमदूतैश्च ताड्यमानो भृशं मुहुः । प्रवेश्य दक्षिणं द्वारं बद्धा पादद्वये दृढम् । हाहाकारस्तु सर्व्वत्र श्रूयते यत्र भीषणः । नीत्वा यमाज्ञया दूतैं रौरवे च निवेशितः । रौरवस्य च यन्मानं तन्मे निगदतः शृणु । लक्षयोजनविस्तीर्णं गभीरं स्वाद्वङ्गिवाहृतम् । दह्यमानस्तु तत्रैव पतितः पुनरुत्थितः । पुन पततितत्रैव क्रन्दमानो मुहुर्म्मुहुः । अनेककालमासाद्य पारं प्राप्य सुदुःखितः । मानुषीं योनिमासाद्य खञ्जपादो भवेन्नरः । एषभसी(छिन्नपादता)व्याधिसंयुक्तो भवेज्जन्मनिजन्मनि" ।

९ छिन्नघ्राणता "श्रुतिस्मृतिकथायान्तु यस्तत्र विघ्नमाचरेत् । देवद्विजातिधर्म्मस्य सदा यो दैवनिन्दकः । सोऽपि मृत्युवशं प्राप्य यत्र याति च तत् शृणु । नैर्ऋते पश्चिमे भागे पिङ्गला नाम या पुरी । पिशाचा यत्र तिष्ठन्ति सोऽपि तत्र स्वकर्म्मतः । यमाज्ञया तत्र नीतो रक्षितस्तत्र दुर्म्मतिः । तत्र दुःखं महाघोरं भुक्त्वा कर्म्मा-

न्तरे पुनः । मानुषत्वमनुप्राप्य छिन्नप्राणोऽशोभनः । स निन्द्यः सत्सभामध्ये न प्रवेष्टोभवेद्धि सः” ।

१० छिन्नहस्तता छिन्नपादता च “अतः परं छिन्नहस्तोयतो भवति मानुषः । शृणुष्व तत् प्रवक्ष्येऽहं स्वकर्म्मवशतश्च सः । पिता माता गुरुर्वृद्धः क्रोधाविष्टेन ताडितः । विनाऽपराधतो जन्तुं योवा हन्याद्विमोहितः । यमलोके वसेत् सोऽपि छिन्नहस्तो भवेदिह । करेण ताडनाच्छिन्नपाणिर्भवति पामरः । पादेन छिन्नपादस्तु मर्त्त्यो वै जायते ध्रुवम्” ।

११ छिन्नकर्णता । “मिथ्याप्रवादद्दुष्टं त्वं येन तापः परो भवेत् । मानुषस्य, ततोदुष्टाः श्रावयन्ति महीपतिम् । ते क्रूराश्छिन्नकर्णाश्च जायन्ते पृथिवीतले” ।

१२ कराङ्घ्रिहीनता । “सैन्ययोरुभयोर्यत्र संग्रामे चातिदारुणे । स्वामिनं सङ्कटे त्यक्त्वा ये भग्नाः पापबुद्धयः । स मृतो नीयते दूतैर्भीषणैर्विकटाननैः । पूतिगन्धयुतैः पाशैर्नीयते यमसादनम् । तर्ज्यमानः शरैः खड्गैः कूटमुद्गरपाणिभिः । यमाज्ञाकारिभिस्तैस्तु पात्यते नरके शृणु । असिपत्रवनं घोरं नरकं शतयोजनम् । योजनायुतगम्भीरं ज्वलत्खड्गसमाकुलम् । पात्यन्ते तत्र तैः खड्गैः शितधारसमाहितैः । ये भग्नाः स्वामिनं त्यक्त्वा मित्रं प्राप्य च मानुषाः । क्रन्दमानाश्च तिष्ठन्ति यावदाभूतसंप्लवम् । कर्म्मावसाने जायन्ते मानुषत्वमतः परम् । कराङ्घ्रिभ्यां विहीनस्तु दुष्टजीवः प्रवर्त्तते । नान्यस्य कर्म्म स प्रोक्तं येन मुक्तो भवेन्नरः । जन्मजन्मनि जायन्ते छिन्नाङ्घ्रिकरवेदनाः ।

१३ प्रसङ्गात् युद्धकर्म्मविपाकः “अतः परन्तु ये शूरास्तेषां माहात्म्यमुत्तमम् । लोकमातर्मतस्तात । शृणुष्व गदतो मम । विद्रुतेषु च सैन्येषु सङ्कटेषु समन्ततः । नृपं प्रति यदा गच्छेत् सा यात्रा क्रतुभिः समा । ललाटदेशे रुधिरं स्रवच्च यस्यापि वक्त्रे पततीह किञ्चित् । तत् सोमपानेन हि तस्य तुल्यं संग्रामयज्ञे प्रवदाऽप्युवाच । शूरस्य गात्राणि शरखड्गादितोमरैः । भिन्दन्ति न यमः शक्तोपश्चैव पुण्यभाजनम् । शस्त्रोर्मिं च यः शूर प्राणांस्त्यजति भावितः । तिस्रः कोट्योऽर्द्धकोटी च द्विगुणं कालतस्तु च । अप्सरोभिः सेव्यमानोदिव्यलोकमवस्थितः । तमेव पुरुषं प्राप्य दृष्ट्वा सर्व्वाः सुराङ्गनाः । विमानस्थाः समस्ताश्च गायमानाः परस्परम् । परित्यज्य सुरान् यान्ति स्वामिनं प्राप्य हर्षिताः” ।

१४ पक्षरोगः “अयस्तः पुरुषो येन समस्तेषु हतो रणे । तत्कर्म्मणः परिणामं विस्तरेण शृणुष्व मे । त्वक्त्वास्त्रहत्यादोषेण यमस्य पुरुषैर्भृशम् । आयुःशेषेऽथ संगृह्य यमदूतैर्भयानकैः । तस्मिन् मार्गे दुराधर्षे नीत्वाऽऽज्ञाभिर्यमस्य च । कृकयाख्ये महाघोरे निरये च वसेद्धि सः । प्रविश्यचिरकालन्तु महादुःखेन पच्यते । ततो राक्षसयोनौ स जायते वै स्वयं नरः । ततो मृगस्ततो व्याघ्रस्ततः शस्त्रेण हन्यते । सारमेयत्वमासाद्य मत्स्ययोनौ प्रजायते । तस्माद्धि मानुषीं प्राप्य पक्षरोगेण गृह्यते” ।

१५ वैधव्यम् “विरूपं स्वामिनं दृष्ट्वा यौवनेनातिगर्व्विता । दिवा निन्दति दुर्व्वाक्यैः शय्यां न भजते निशि । तेन दोषेण भो देवि ! वैधव्यं समुपाश्रिता । आसन्नां रमणी या च स्वामिनं भजते न हि । सा वैधव्यमवाप्नोति दरिद्रं याच मन्यते । तस्य दोषस्य पाकोऽयं देवि ! वैधव्यमागता” ।

१६ वन्ध्यता “पय पातुमना वत्सस्त्वया पूर्व्वं निवारितः । पुरुषो वन्ध्यतां याति वीर्य्यविक्रमदोषतः । अदत्त्वेव व्रतं कृत्वा वन्ध्यत्वमुभयोर्भवेत् । अदत्त्वा मिष्टफलं यो भुङ्क्ते प्राप्य लोभतः । सोऽपि वन्ध्यत्वमाप्नोति कथयामि ततः शृणु । दृष्ट्वा तु मैथुनीभावं विघ्नं तु कुरुते च यः । सोऽपि वन्ध्यत्वमाप्नोति सर्व्वजन्मनि जन्मनि ।

१७ गर्भस्रावः “त्रेतायुगस्य मध्ये तु सञ्जयोनाम भूपतिः । तस्य भार्य्याद्वयं जातं सुमित्रा नन्दिनी तथा । नन्दिनी सुभगा तस्य सुमित्रा या यशस्विनी । प्रसूता सा सपुत्रेण तेन पत्या सुमानिता । सापत्न्यपरुषाविष्टा नन्दिनी भीतिवर्जिता । शून्यालये च सहसा छद्मनाऽऽनीय तं सुतम् । शतधा खण्डकं कृत्वा तैलपाके विचिक्षिपे । सानेन विधिना राजन् ! दुष्टमत्या निजेच्छया । चकार दारुणं कर्म्म तत्फलं शृणु भूपते ! । सा कालवशमासाद्य बालघाताभिदोषतः । गृहीत्वा किङ्करैर्बद्धा पाशेन यमकिङ्करैः । नीत्वा निरयमध्ये तु सा प्रक्षिप्ता दुराशया । कर्म्मान्ते कोकिला नाम वैश्यस्य च सुताऽभवत् । भूयोऽपि विप्रावस्थता परिणीता स्वगृहाश्रमे । सर्व्वद्रव्यसमायुक्ते दासदासीसमाकुले । सा पुनः पञ्चमे मासि तृतीये वा चतुर्थके गर्भस्रावोऽभवत् तस्यास्तेन दुःखेन दुःखिता” ।

१८ मृतभार्य्यता “अतिक्रम्य त्वया ज्येष्ठं भ्रातरं वात्मजं कृतः । पुरा परिणयस्तेन मृतभार्य्यत्वमागतः । अप्रस्थांश्च अपूर्व्वे तस्य भार्य्यास्य नश्यति” ।

१९ बहुसुतता } अपुत्रता च } “गवीसुस्थाद्वहिष्कृत्वा यस्तु द्रव्यं हरेत् पुनः । शृणु तस्य यथा पापं कथयामि तवाग्रतः ।

निर्जने दुर्वहे घोरे सिकताढ्ये मरुस्थले । कृमिर्भूत्वा वसेत्तत्र क्षुत्पिपासासमाकुलः । मन्वन्तरत्रयं तत्र ततोमीहारसंप्लवे । शौर्य्यमाप्यस्तु निम्नेषु शीतवातार्द्दितो भृशम् । कल्पमानन्तु दुःखेन मानुषोजायते ततः । बहुपत्नीभवेत् सोऽपि पुत्रं न लभते हि सा ।

२०दौर्भाग्यम् "तृतीयासु च सर्व्वासु तैलस्पर्शस्त्वया कृतः । दुर्भगत्वञ्च ते जातं न तापं कुरु सुन्दरि ।" ।

२१सापत्न्यम् । "शृणु देवि ! प्रवक्ष्यामि यत्तु सापत्न्यसम्भवम् । दुःखं सुपरम स्त्रीणां स्वकर्म्मवशतः खलु । मिथ्यावाक्यप्रवादेन विवादं कुरुते तु या । अन्योन्यस्नेहवैषम्यं कारयित्वा व्रजेद्वधः । कर्म्मान्तुयायिनी भूत्वा जीवेद्वर्षचतुष्टयम् । ततः पुनरसौ दीना दैवाद्भवति मानुषी । सापत्न्यं प्राप्य सन्तप्ता चित्तपीड़ासमन्विता । भवतीति न सन्देहस्तस्य दानमतः शृणु" ।

२२जात्यन्तरम् "शृणु देव ! प्रवक्ष्यामि येन जात्यन्तरं गतः । मनुष्यो दुःखमाप्नोति भवेद्गर्हितो जनः। पुरा राजकुले जातो विश्वसेनेति नामतः । एकदा ब्राह्मणी रम्या यौवनस्था तपस्विनी । पुष्पार्थिनी पुष्पवनं गता दृष्टाथ तेन सा । कामवाणार्द्दितेनाथ बलात्कारेण धर्षिता । ब्रह्मरोगेणाभिसन्तप्ता ततः स्वभवनं गता । अत्रान्तरे गृहं तस्या भिक्षुरेकः समागतः । धर्षिता सापि तन्वङ्गी भिक्षवेऽन्नं ददौ मुदा । इदं कृतं तया पापं शृणु तस्य फलं तथा । तत्कर्म्मवशमासाद्य यमस्य विषयङ्गता । पुनर्जन्म समासाद्याऽभवन्म्लेच्छकुलोद्भवा । म्लेच्छयोनिं परित्यज्य ततः कैवर्त्तयोनिजा । एवं बहुविधां योनिं समासाद्य द्विजाङ्गना । अमेध्यान्नञ्च यतये दत्त्वा प्राप गतिं नृप ! । मनुष्योदुःखमाप्नोति स भवेद्गर्हितोजनः।"

२३मूकत्वम् "पुरा देवाप्यतो राजन् । गायमानो द्विजः कश्चित् । नृत्यश्च प्रणुवन् वाक्यैर्हास्ययुक्तैश्च निन्दितः । तस्य विघ्नस्य पाकोऽयं न वाक् प्रसरते मुखात् । न्त्यमानन्तु देवाग्रे गायमानं प्रहस्य च । नोपहासं प्रकुर्वीत महादोषो-भवेद्यतः" ।

२४गद्गदवचनता "अतःपरं महाभाग ! गद्गदत्वेन दूषिताः । भवन्ति मानवा मर्त्ये तच्छृणुष्व वदामि ते । जिगीषाकृष्टहृदयोविवादं प्रकरोति यः । गुरोर्न्निन्दाञ्च मूर्खत्वादस्य पापमतः शृणु । यमलोके तु तस्यैव कृष्यते निशितैः शरैः । जिह्वापि किङ्करैः क्रुद्धैरजस्रं तस्य दोषतः । आमेषकालपर्य्यन्तं दुःखं प्राप्य महत्तरम् । मानुषत्वमनुप्राप्य गद्गदो जायते नरः । ततो गद्गदया वाचया मर्त्यः सीदति सर्व्वदा" ।

२५मुखरोगः । "पितृदेवगुरोर्न्निन्दां ये वै मिथ्या वदन्ति च । अभक्ष्यभक्षका ये च ते वै मुखगदार्द्दिताः । भवन्ति नरकस्यान्ते मानुषास्तस्य निष्कृतिम् शृणु वक्ष्यामि भूपाल ।" ।

२६कर्णरोगः । "असम्बद्धन्तु यच्छ्रुत्वक्ति पापमन्तर्गतन्तु यत् । समाकर्ण्यापि मनुजः कर्णरोगी भवेत् सदा । कर्णमूलं भवेद्देवं पूयशोणितसम्भवम् । कर्णरोगमिति ख्यातमवाप्य परितप्यते" ।

२७दुर्गन्धगात्रता । "चोरयित्वा तु गन्धाढ्यं द्रव्यं लोभपरायणः । पच्यते नरके घोरे मूत्रविष्ठासमाकुले । अप्रतिष्ठेऽतिदुर्गन्धे दिव्यवर्षायुतत्रयम् । मर्त्ये तु शशको भूत्वा जीवेद्वर्षचतुष्टयम् । ततोमृगस्तु सौगन्धो भूत्वा मस्तेष हन्यते । दुर्गन्धेन समायुक्तो मानुषत्वमवाप्य सः । स्वकर्म्मवशतो राजन् ! दुर्गन्धं गात्रमश्नुते" ।

२८दारिद्र्यं विरूपता च । "पुरा सञ्चलन्धपतेरमात्येनासता शृणु । दानविघ्नः कृतस्तेन पाकोऽयं मान्यथाऽभवत् । मा ददस्वेति यो ब्रूयाद्देयाग्निब्राह्मणेषु च । स नरकस्य पाकेन दरिद्रत्वेन गृह्यते । दरिद्रः कुरुते पापं पापाद्याति यमालयम् । पुनरावृत्य पापेन दारिद्र्येणाभिगृह्यते । न क्षयोऽस्ति च पापस्य तस्मात् पापं त्यजेत् सुधीः । अदाता च भवेत् सोऽपि विरूपश्चापि दुर्विधः । तस्मात् कर्म्म परिज्ञाय दानं दद्यात् स्वशक्तितः" ।

२९सस्वेदपाणिपादता "चोरयित्वा तु लवणं ततः चाराक्षिसंज्ञके । नरके पच्यते पश्चान्मानुषत्वमवाप्य सः । तस्य कर्म्मभवं चिह्नं जायते हस्तपादयोः । सस्वेदं सर्व्वदा तस्य निष्कृतिं त्वमतः शृणु ।

३०दाहज्वरः "पुरा येन गृहं पापः क्षेत्रं दग्धन्तु वह्निना । स मृतो रौरवं प्राप्य पीड्यमानः स्वकर्म्मणा । खदिराङ्गारसन्दीप्तज्वालामालावगुण्ठिते । पतितस्तिष्ठते तत्र वर्षायुतशतत्रयम् । कर्म्मान्ते मानुषीं योनिमवाप्य परिदह्यते । ज्वरदाहेन घोरेण येन शाम्यति तच्छृणु" ।

३१अग्निमान्द्यम् "कल्मषं नाम नरकं पूयशोणितसंश्रुतम् । विस्तारलक्षदशकं महामोहसमाकुलम् । तिष्ठन्ति पापिनस्तत्र द्विजपाकस्य विघ्नतः । ततो मानुषतां प्राप्य भुक्त्वा पापं सुदुष्करम् । अग्निमान्द्यं भवेत्तस्य निष्कृतिं कथयामि ते ।

२१ अजीर्णरोगः "त्वया कृतं पुरा कर्म्म यद्युक्तञ्च तच्छृणु । कृत्वा पाकञ्च पाकाग्निं शमयित्वा जलेन च । भोजनञ्च कृतं तस्मादजीर्णत्वमुपागतः"।

२२ अतीसारः "अथातीसारो राजेन्द्र । जायते येन कर्म्मणा । देहिनां दोषदुष्टेन्तु प्रवक्ष्यति यत शृणु । अत्यन्तगुप्तं पापिष्ठं निरुच्छ्वासकनामकम् । सोपद्रवञ्च नरकं विषमोपद्रवाकुलम् । निर्वातमूष्मणा युक्तं दंशकादिपरिस्रुतम् । पच्यन्ते पापिनस्तत्र वर्षलक्षायुतत्रयम् । यज्ञाग्निदूषका ये च ये च दानविलोपकाः । परस्वं छागं चौर्य्येण यातयन्तीह तेऽधमाः । नरकान्ते मत्स्ययोनौ भूत्वा वर्षत्रयं पुनः । मानुषत्वमनुप्राप्य अतीसारेण गृह्यते"।

२४ ग्रहिणी "अत्यर्थं संग्रहं ये च कुर्व्वन्ति धनलुब्धकाः । न दास्यन्ति न चाश्नन्ति हव्यं कव्यञ्च किञ्चन । तथा गोभूमिहर्त्तारो निष्ठुरा ये च गर्भकाः । अदुष्टाऽपतितां भार्य्यां यौवने यः परित्यजेत् । स मृतः पच्यते राजन् । स्वकर्म्मवशतः शृणु । नरकञ्च पूरीषाख्यं प्रचयानलपीडितम् । कल्पकोटिशतं तत्र दह्यन्ते पापदेहिनः । नरकान्ते गजयोनिं व्रियते प्राप्य बन्धनात् । तस्मात्तु मानुषीं योनिं ततः प्राप्यावसीदति । ग्रहणीरोगवान् भूत्वा पशुद्रव्यधनादिकम् । प्राप्यते विविधैर्दुःखैस्तस्य वक्ष्यामि निष्कृतिम्"।

२५ पाण्डुरोगः "शृणु राजन् । प्रवक्ष्यामि पाण्डुरोगोद्भवो यतः । परभार्य्यारतोयश्च नरश्चैवात्यजारतः । स मृतः किङ्करैर्याम्यैर्बद्धः शृङ्खलया दृढम् । किङ्करैस्ताड्यमानस्तु क्रन्दमानो मुहुर्मुहुः । शोचमानः स्वकं कर्म्म प्रचलंश्च पदेपदे । संयमन्यां प्रवेशेन दक्षिणद्वारि भीषणे । शमनाग्रं समानीय परभार्य्याभिमर्दकम् । ततोऽसुं यमदूतोऽपि दृढं बद्धा निरन्तरम् । तं दृष्ट्वा चित्रगुप्तेन पापकर्म्मानुसारतः । प्रमाणञ्चावदत् सर्व्वं दुश्चेष्टादिकमस्य वै । कथितोऽयं दुराचारः परस्त्रीरमणप्रियः । नयत नरकं भीमं ज्वलन्तीमायसीं स्त्रियाम् । भ्रमयाविङ्गनस्त्वास्तं कारयन्ति यमाज्ञया । वर्षायुतसहस्रे द्वे परं तापञ्च विन्दति । पुनः स्वकर्म्मपाकेन ज्वलदग्निमये ह्रदे । विक्षिप्तो दह्यते तत्र नेच्छमानः स्वकर्म्मणा । वर्षलक्षसहस्राणि नव सप्तायुतानि च । तस्माद्विषयं गत्वा मानुषत्वमवाप्य च । पाण्डुरोगमनुप्राप्य शोचमेताः प्रपद्यते"।

२६ कामला "भक्तादीनान्तु चौरा ये गतिं तेषां ततः शृणु । आयुःशेषे तु ते याम्यैर्गणैर्नीता यमाज्ञया । घोरा पुरीति विख्याता पिङ्गला नाम दुस्तरा । पिशाचास्तत्र तिष्ठन्ति स्वकर्म्मवशपीडिताः । यत्र संवर्त्तते नित्यं क्षुत्पिपासामहोत्कटा । भक्तचौरान् जनास्तत्र प्रवेश्य यमकिङ्करैः । प्रयान्ति सदनं याम्यं चित्रगुप्तोऽस्ति यत्र वै । स तत्र भक्तचौरश्च पिशाचकुलवेष्टितः । भक्तसंख्याप्रमाणेन वसति तत्र कर्म्मतः । कर्म्मान्ते वायसीं योनिं प्राप्य दुःखं विन्दति । काकोऽष्टादश वर्षाणि तस्मात् शुकः प्रजायते । सोऽपि द्वादशकं जीवेत्ततोभवति मानुषः । कामलारोगवान् भूत्वा तद्दोषजनितेन च"।

२७ कासः "कासः पञ्चविधो राजन् । जायते येन कर्म्मणा । वदिष्यामि तदादौ ते भूप । कर्म्मवशाद्भुवि । येन दग्धोऽसमो नित्यं मिथ्यावाक्यैः सुदारुणैः । पित्तप्रबलकं कासं प्राप्य कासेन सीदति । ब्राह्मणस्थानविध्वंसी वातकासार्द्दितोभवेत् । गृह्यते श्लेष्मकासेन जलाशयस्य विभ्रतः । ब्रह्मविष्णुशिवं यस्तु भिन्नभावं प्रपश्यति । सन्निपातोत्थकासेन गृह्यते त्वमतः शृणु । अयज्ञेन पशुं हत्वा भुङ्क्ते मांसन्तु योनरः । सर्व्वदोषोत्थकासेन गृह्यते शृणु भूपते ! । इति कासपरिज्ञानं कथितञ्च मया शृणु । पुनस्ते कथयिष्यामि यत्ते मनसि वर्त्तते । राजोवाच । श्रुतं कासपरिज्ञानं कर्म्मणा येन जायते । नरकं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ! । भृगुरुवाच । स तु कर्म्म समासाद्य पच्यते यत्र तच्छृणु । चिन्तयन् तानि कर्म्माणि रोदमानो निरन्तरम् । करम्भवालुकानाम नरकं योजनायुतम् । कूपाकारं भयं दीप्तं वालुकाङ्गारकण्टकैः । दह्यते भिद्यते तत्र वर्षलक्षावधि । नरकान्निर्गतो दुर्गे जले कुम्भीरसम्भवः । कुम्भीराच्छूकरोभूत्वा जीवेद्वर्षत्रयम् । तस्माद्बकत्वमासाद्य महाभागवकोभवेत् । तदन्ते मानुषीं योनिं स प्राप्य परिदह्यते । सर्व्वश्वकासरोगेण तप्यमानोऽवसीदति"।

२८ श्वासकासः । "श्वासकासो महानुग्रो भवेद्दुर्देहाभिघातकः । उद्भवेत् कर्म्मणा येन तन्मे निगदतः शृणु । महोर्द्ध्वक्षततमकक्षुद्रभेदाञ्च पञ्चधा । श्वासः स जायते नृणां पृथक्कर्म्मवशानुग । यस्तु सन्नमनासाद्य पशुनाशं निरुध्य च । हन्ति, खादति वा मोहात् महाश्वासेन गृह्यते । पौराणिककथामध्ये यस्तु वाचाऽन्यथा वदेत् । ऊर्द्ध्वश्वासं समासाद्य दुःखोत्करहर्षमम । निर्विवदान-

ग्रहणाच्छिन्नश्वासेन शब्दते । सत्यं शास्त्रार्थनिर्णिक्तं वाक्यं यो दूषयत्यपि । पीड्यते तमकश्वासैः ४ चुर्द्दे । ५ पाकस्य विप्लुतः । परत्र कर्म्मणा देही नरकेषु विपच्यते । नरकान्ते व्याघ्रयोनिं व्याघ्रीं शौकरवायसीम् । पृथक्कर्म्मवशाद्योनिं गत्वा स परितप्यते । मानुषत्वमनुप्राप्य पूर्व्वोक्तेनोपलभ्यते" ।

३९ यक्ष्मरोगः । "यक्ष्मरोगस्य विज्ञानं दुर्ज्ञेयं सर्व्वरोगतः । सहायांस्तस्य वै राजन् ! कथयामि तवाग्रतः । सेनापतिः क्षयगदस्य च पाण्डुरोगोदाहज्वरोऽप्यसरएव बलासमास्मृ । हृल्लासकः कामलकः सहायौ यौ श्वासकासावपि मन्त्रिणौ च । स श्रुत्वैवंविध घोरं यक्ष्मरोगं सुदारुणम् । प्रणम्याह मुनिश्रेष्ठं त्रिकालसर्व्वदर्शिनम् । राजोवाच । अस्य रोगस्य चोत्पत्तिर्जायते केन कर्म्मणा । केन दानेन विप्रेन्द्र ! परत्रापि न वर्द्धते । तत्सर्व्वं विस्तराद्‌ब्रूहि श्रोतुमिच्छामि यत्नतः । भृगुरुवाच । पुरा येन हतो विप्रो न्यासापहरणं कृतम् । वृत्तिच्छेदं कृतो येन मधुविघ्नकरश्च यः । सर्व्वस्वेन प्रजापीडा कृता येन स्वकर्म्मणा । स मृतो दह्यते याम्यैर्दूतैरेव भयङ्करैः । निवेश्यान्धतमे मार्गे दक्षिणद्वारिभीषणे । ततो नीत्वा यमस्याग्रे कम्पमानञ्च पापिनम् । संयमन्यां यमस्याग्रे नीत्वा तं पापकारिणम् । हृष्टपुष्टाश्च ते दूताश्चित्रगुप्तान्तिकं ययुः । चित्रगुप्तश्च तं दृष्ट्वा क्रोधात्रक्तविलोचनः । चित्रगुप्त उवाच । इमं पापं दुराचारं नरकं नय दुःसहम् । योजनानां शतं चञ्चं कुम्भीपाकं सुदारुणम् । ताम्रकुम्भमये दीप्ते वालुकाङ्गारसंवृते । एवंविधे तु दुष्टं स क्षिप्तस्तत्र स्वकर्म्मतः । दह्यमानोऽतिदुःखेन यावदाभूतसंप्लवम् । कालान्ते स पुनः पापी कृमियोनौ च जायताम् । तत्र जीवति वर्षाणि दशपञ्च च भूपते ! दुष्कृतस्य क्षयं कृत्वा ततो भवति मानुषः । अत्युग्रक्षयरोगेण पीड्यमानस्तु दह्यते" ।

४० रक्तपित्तम् । "शृणु राजन् ! पुरा वृत्तं यस्येदं कदनं महत् । कर्णाटकारण्यसंस्थाने सुमतो नाम वै द्विजः । तस्य पुत्रो दुराचारः सर्व्वधर्म्मबहिष्कृतः । परद्रव्याभिलाषी च परभार्य्यारतिप्रियः । एकदा कामतस्तेन पितृव्यस्य वधूर्बलात् । धर्षिता तेन दोषेण यमस्य विषयङ्गतः । नरकान्ते कुले जातस्तस्य कर्म्मसमुद्भवम् । रक्तपित्तगदं भुङ्क्ते स्वकर्म्मार्जितदोषतः" ।

४१ गुल्मरोगः "अतःपरं प्रवक्ष्येऽहं गुल्मरोगं सुदारुणम् । यस्मादुत्पद्यते पुंसो मृतो वा याति यत्र वै । कर्म्मतो याति तां योनिं येनोपशमनं भवेत् । काकोलनाम नरकं कृमिपूयपरिप्लुतम् । क्षिप्यते तत्र दुष्टात्मा एकाकी मिष्टभोजनः । अन्त्यजागमनेनापि नरकं नाम दुर्गमम् । तस्मात् पिपीलिका भूत्वा जीवेद्वर्षचतुष्टयम् । दुष्कृतस्य क्षयं कृत्वा जायते तत्र मानवः । शूलरोगं समासाद्य वेदनैः परितप्यते । अगदैर्न शमं याति तदा ज्ञेयं तु कर्म्मजम्" ।

४२ शूलरोगः "शृणुष्व कथयिष्येऽहं तव स्नेहान्महीपते ! । मूढा निरपराधेन ये लोककदनप्रदाः । घ्नन्ति शूलेन शस्त्रेण वाक्यदोषोद्‌गमेन च । तानेव निष्ठुरा दूता यमस्याज्ञाकराश्च ये । महाप्रेताख्यनिरये दीप्तशूलसमाहते । भेदयन्तीव तत्रैव दम्पत्योर्भेदकानपि । भुक्त्वा तु कदनं घोरं मन्वन्तरचतुष्टयम् । नरकान्ते ततो मर्त्ये जायते पक्षियोनिषु । पक्षी भूत्वा वियोगी स्यात् जीवेद्वर्षचतुष्टयम् । मानुषत्वमवाप्यैव शूलरोगातुरो भवेत्" ।

४३ अर्शोरोगः । "शृणुष्व तव पुत्रेण पुरा जन्मान्तरे कृतम् । साध्वीमृतुमतीं स्नातां सन्निधिं नागतश्च सः । एतत्कर्म्म कृतं तेन स्तुहीतशार्शसा च सः । आत्महा भ्रूणहा यस्तु कृतो येन च गोवधः । ते चार्शसा च दह्यन्ते भुक्त्वा कष्टं सुदुःसहम् । पञ्चत्रिंशत् समाः कोट्यो लक्षाणामूनविंशतिः । तामिस्राख्यं महाघोरं गाढान्धतमसावृतम् । सर्पादिभिः समाकीर्णं दुष्प्रेक्ष्यं जीववर्जितम् । स तिष्ठेद्विवशो रोगी येनेदं दुष्कृतं कृतम् । कर्म्मक्षयमनुप्राप्य पश्चाद्भवति मानुषः । शेषेऽर्शोगदवान् भूत्वा दुःखेन पीडितो भवेत्" ।

४४ भगन्दररोगः । "गुदस्य द्व्यङ्गुले पार्श्वे पित्तरक्तोदकाकृतिः । प्रभवेत्पिडकाकारो दुःसहो मर्म्मभेदकः । स वै भगन्दरो ज्ञेयः कर्म्मजो नोपशाम्यति । आचार्य्यभार्य्यागमनं ये कुर्व्वन्ति नराधमाः । पक्षपातमधर्म्मेण बालवृद्धधनापहाः । ते पतन्ति महाघोरे नरके च सुदारुणे । यः केशमूलहृन्मत्यौंवाहनं भद्रपीठकम् । चोरयेद्यस्तु दुर्बुद्धिः स्तेयात् स्त्रीधनं च यः । स मृतस्तु विण्मलाख्यं नरकं प्राप्य सीदति । श्रृगालव्याघ्रगोमायुभक्ष्यमाणोऽतिदुःखितः । भुक्त्वा दुःसहस्रञ्च नरकं क्षमेत् पुनः । सोऽप्यनेनैव रोगेण जन्मादावपि लभ्यते" ।

४५ छर्द्दिः "शृणुष्व नृपशार्दूल ! कथयामि तवाग्रतः । गवा

गृहीतं यत्किञ्चित् सुखादाकृष्य योऽहरेत् । सोऽन्यजन्म समासाद्य वाताश्छर्द्दिमान् भवेत् । अतर्पयित्वा पितरं जलपानं करोति यः । मृतः पैशाचकीं योनिं समाप्य क्षुत्पिपासया । पीड्यते तप्यते तावद् यावद्व्योमगतो रविः । मानुषत्वमनुप्राप्य पित्ताश्छर्द्दिपीड़ितः । वातपित्तपरित्राणं सद्वैद्यस्योपदेशतः । ज्ञात्वा कर्म्मोद्भवं दानं देयं मुक्तिमभीप्सता” ।

४६ हिक्का “हिक्का न शाम्यते यस्य सद्वैद्यस्योपदेशतः । तां विद्यात् कर्म्मजां हिक्कां शृणु भूप ! वदामि ते । उत्सादितं येन तपः प्रष्टस्य यतेश्च गोविप्रसुखासनस्थम् । स याति घोरं नरकं मनुष्यो हिक्काविपन्नः पुनरेति सत्यम्” ।

४७ अरोचकम् “पित्रे मात्रे चातिथये नादौ यस्तु च भोजनम् । दत्त्वाश्नाति स पापिष्ठो या गतिं याति तां शृणु । तस्याग्रं कोष्ठदेशे तु क्रिमिर्भूत्वा विपच्यते । मृते विष्ठाक्रिमिर्भूत्वा पच्यते बहुवासरान् । ततो वायसयोनित्वं प्राप्य जीवेच्चिरं दिनम् । तत्र वायसयोनौ तु सर्व्वदुःखमवाप्य वै । मनुष्यत्वमवाप्नोति हीनयोनौ प्रजायते । अरोचकगदेनापि पीड़ितस्तत्र केवलम्” ।

४८ स्वरभङ्ग “त्वया कृतं पुरा यच्च तन्मे निगदतः शृणु । सुस्वरं गायमानन्तु श्रुतिमन्तं द्विजोत्तमम् । त्वं निषेधितवान् पूर्व्वं तस्मात्ते गतिरीदृशी । असमाप्तपदं यस्तु गायमानन्तु सुस्वरम् । निवारयति सोऽप्येवं स्वरभङ्गेण गृह्यते” ।

४९ अतितृष्णा । “तर्पितं गोकुलं प्राप्तं जलपानावलम्बनम् । विघ्नमाचरितं तेन प्रपाध्वंसकृते न च । जलपात्रं तथा कृत्वा मृतो याति यमाज्ञया । अपरे निर्जले देशे दुर्घर्षे सिकतामये । कीटयोनिं समासाद्य तत्र तिष्ठति पापधीः । गोलोमसम्मितं कालं दुःखमाप्नोति निर्भरम् । मानुषत्वमनुप्राप्य तृष्णाव्याधियुतो भवेत्” ।

५० विस्फोटकम् । “सुधन्वा नामतस्तेन पराङ्गालस्य जलाशये । कृतं स्नानं जलं पीतं तत्कर्म्मवशतः शृणु । आयुःशेषे मृतो दूतैर्नीतश्च यमाज्ञया । बहुधूमसमायुक्ते क्षिप्तः कूपे निराश्रये । भुक्त्वा तत्र महद्दुःखं तस्मात्त्वत्कुले नृप ! । जातोदाहयुतो भूत्वा विस्फोटकगदार्द्दितः । स्वकर्म्मार्ज्जितदोषं यो भुङ्क्ते का तस्य वेदना” ।

५१ भ्रममूर्च्छा “भ्रममूर्च्छारुजाविष्टो येन स जायते नरः । तच्छृणुष्व मयाख्यातं कथयामि समासतः । भ्रमस्तु जायते तस्य तत्र दुःखकरः परः । सभायां कुटिलोलोकं भ्रामयित्वाऽन्यथा वदेत् । मूर्च्छान्वितो भवेत् सोऽपि यत्र याति शृणुष्व तत् । समायुषोऽन्ते दुर्द्धर्षैः किङ्करैर्यमदेशितैः । नीत्वा प्रयान्ति तत्रैव तामेव पिङ्गलां पुरीम् । स्वकर्म्मवशतस्तत्र पिशाचाः सन्ति दुःखिताः । सन्निपत्य तत्र दुष्टात्मा पिशाचा यत्र मूर्च्छिताः । भ्रमयुक्तो भवेत्तत्र पूर्णमन्वन्तरं नृप ! । उलूको जायते तस्माद्दिवा वसति कोटरे । उलूकत्वत्रयं प्राप्य वकयोनौ प्रजायते ? वको जीवति वर्षैकं ततो भवति मानुषः । पूर्व्वकर्म्मप्रभावेन भ्रममूर्च्छान्वितो भवेत्” ।

५२ हृद्रोग । “हृद्रोगो जायते येन कर्म्मणा त्वमतः शृणु । सावधानो महीपाल ! कथयामि समासतः । लोभात् द्वेषाद्भवेद्यस्तु परपीड़ाप्रदायकः । मर्म्मोद्घाटनकृद्योऽपि कदनं तेन विन्दति । मनुष्यस्तेन दोषेण दुर्व्वहम् नरकं व्रजेत् । नरकान्ते पुनर्मर्त्त्यो हृद्रोगैरतिदारुणैः । पीड्यमानो दुनोत्याशु कर्म्मदोषविशेषतः” ।

५३ आमवात ।“पुरा येन महीपाल ! कृतो यज्ञस्त्वदक्षिणः । उत्सृज्य ब्राह्मणायैव न दत्तं येन वा पुनः । अधर्म्मार्जितवित्तानां स यज्ञो येन वा कृतः । यस्मिन्यस्मिन्नु तस्यैव भवेदामस्य सम्भवः । तस्मात् प्रवर्त्तते शोथो वेदना चातिदारुणा । आमवातस्तु स ज्ञेयः कर्म्मजस्तस्य निष्कृतिम्” ।

५४ सर्व्वाङ्गवातव्याधिः “वातव्याध्युद्गमो येन कर्म्मणा देहिनां नृप ! । उत्पन्नो बहुधाभावैः सम्यग् वक्ष्ये ततः शृणु । सुरापयोमिद्रव्यं येन वै वाञ्छिता हठात् । कृतं स नरकस्यान्ते शुनीयोनौ प्रविश्य च । जङ्घास्थूलकटीस्थूलयुक्तः केवलसञ्ज्ञकः । परस्त्रीवसनं येन हृतं तस्य ततः शृणु । मृतः स पुरुषैर्याम्यैर्नीतस्तोयमाश्रया । आयसीञ्च शिलां तप्तां वज्रक्षारपरिप्लुताम् । तद्गले बन्धयेद्यत्नाद्यावदिन्द्राश्चतुर्द्दश । तस्यान्ते शाकुनीं योनिं प्रयात्यब्दचतुष्टयम् । मानुषत्वमनुप्राप्य गृह्यते तेन स शृणु । सर्व्वथा चान्ययशस्य सर्व्वाङ्गं वातपीड़ितम् । सोष्णगात्रं सदा तस्य भवतीह स्वकर्म्मतः” ।

५५ तन्द्रारोग “शठो कृतं पुरा येन ब्राह्मणस्य महीपते ! । दह्यते स च दुर्वृत्तः संयमन्यां यमाज्ञया । कुम्भीरो जायते तस्माच्चिरकालं जले वसेत् । तस्यान्ते मानुषीं योनिं संप्राप्य तन्द्रवान् भवेत् । अगम्यः सर्व्वकार्य्येषु गदोपचयदोषतः । सङ्कल्प्य विप्रे क्रतुदक्षिणादिकं यदा न दद्यात् तदुपार्ज्जितं फलम् । समयभेदोप-

चयस्य संग्रहं भवत्यतीवोग्रतरेण तौन्दिकः" ।

५६अम्लपित्तम् "अथाम्लपित्तोपचयो भवेद्येन वदामि तत् । जिह्वास्वादसमाविष्टो मानवोयो निषेवति । मिष्टान्नमविकल्पेन स मृतः प्राप्य वायसीम् । ततश्च सारमेयीञ्च योनिमासाद्य कर्म्मतः । पश्चात् सञ्जायते देही विदग्धान्नं प्रभुज्य च । हृत्कण्ठस्थाम्लपित्तेन दह्यमानोऽतिदूषितः" ।

५७शोथोदरम् "लोभान्मोहाद्भयाद्द्वेषात् कृत्वाऽधर्म्मं वदेत्तु यः । स भुङ्क्ते नरकं घोरं पश्चाच्छोथोदरी भवेत्" ।

५८जलोदरम् "ब्रह्मविष्णुमहेशेषु भिन्नभावं करोति यः । गृह्यते स तु दुष्टात्मा जलोदररुजा ततः" ।

५९शोथः "पुत्रस्ते शोथवान् जातः स्वकर्म्मार्जितदोषतः । कर्त्ता भुङ्क्तेऽन्यथा कान्त कर्त्तव्या परिदेवना । विनापराधेन यतो बहवस्ताडिताः पुरा । कषायवेत्रवर्गैश्च तेन शोथार्द्दितश्च सः । उत्पातकसमाविष्टो जातस्तव गृहे शृणु । तेन शोथार्द्दितः पुत्रो वृथा चिन्तापरः प्रभो ।"

६०मूत्रकृच्छ्रम् "मूत्रकृच्छ्रं भवेत् भूप ! कर्म्मणा येन दारुणम् । देहिनो देहभाजायैं तन्मे निगदतः शृणु । विधवागमनं येन कृतं वा मद्यभोजनम् । मूत्रकृच्छ्री भवेत् सोऽपि भुङ्क्ते च नरकं शृणु । अकृत्वा विगुणं कर्म जन्मकर्म्म च वर्त्तते" ।

६१मूत्राघातः "मूत्राघातो भवेद्येन तन्मे निगदतः शृणु । दम्पत्योर्मैथुने यस्तु महाविघ्नं समाचरेत् । मूत्राघातो भवेत्तस्य दुःसहं कदनप्रदम्" ।

६२अश्मरी "अथाश्मरी भवेद्येन तन्मे निगदतः शृणु । ऋतुस्नातां स्त्रियं यस्तु सन्निधौ नोपगच्छति । अप्रीत्या क्रोधभावाद्वा स याति नरकं नरः । पूयशोणितसम्मिश्रे नरके पच्यते भृशम् । मानुषत्वमनुप्राप्य शार्कराश्मरिरोगवान् । भूप ! विन्दत्यसुदिनं कदनं मूत्ररोधतः । आर्त्तवस्य विपर्य्यासं यः करोति नराधमः । तस्मात् सर्व्वप्रयत्नेन नरोनार्य्यामृतावियात्" ।

६३मेहः । "मेहाश्च विंशतिः ख्याताः पृथक्कर्म्मप्रभावजाः । तेषां नामान्यहं वक्ष्ये क्रमादुत्पद्यते यतः । मधुमेहः सान्द्रमेहः सुराशुक्रोदकस्तथा । इक्षुः सिकतशीघ्रश्च सित मेहस्तथैव च । फेनः क्षीरश्च नीलश्च हारिद्रः कालसत्रकः । तथा रक्तश्च माञ्जिष्ठोमज्जा क्षारस्तथा गजः । सद्वैद्यस्योपदेशेन ज्ञात्वा मेहान् पृथक् पृथक् । नामानुसारतः पूर्व्वं कर्म्म ज्ञात्वा चिकित्सयेत् । पूर्व्वं मैथुनकृद्युवस्तु शौकरीं योनिमाव्रजेत् । तस्यान्ते मानुषीं प्राप्य जलमेहार्द्दितो भवेत् । मातृगामी बलान्मोहान्मधुमेही भवेन्नर । रजकीगमनाच्चैव क्षारमेही प्रजायते । सतीविपर्य्ययं कृत्वा सान्द्रमेहान्वितो भवेत् । रोगिणीगमनान्मर्त्यो भवेन्माञ्जिष्ठमेहवान् । मित्रस्त्री धर्षिता येन स भवेच्छुक्रमेहवान् । चतुष्पदाभिगमने भवेत्सिकतमेहवान् । स्वर्णहर्त्ता क्षीरमेही सितमेही सुरारतः । कालमेही भवेत् सोऽपि पुष्पवत्याश्च धर्षणात् । रजस्वलायां रति कृद्रक्तमेहार्द्दितो भवेत् । मज्जमेहयुतः सोऽपि योऽन्त्यजागमनञ्चरेत् । इक्षुमेह्यतिदुष्टः स्त्रीविधवागतिदोषतः । ब्राह्मणीगमनाद्देही हस्तिमेहेन मेहति । अव्रतागमनासक्तो हरिद्राभञ्च मेहति । मातर येऽभिगच्छन्ति भगिनीञ्चात्मनः सुताम् । श्वश्रूञ्चैवाथवाताऽरक्षां भ्रातृभार्य्याञ्च मातुलीम् । गुरुस्त्रीं राजपत्नीञ्च मित्रस्त्रीं वा कुटुम्बिनीम् । मृता वैवस्वतपुरीं यान्ति भूतैः प्रपीडिताः । तास्तन्त्रे तत्र दुष्टत्वा मत्तः शृणु वदामि ते । अङ्गारराशौ प्रक्षिप्य तान् दहन्ति यमाज्ञया । दूतास्तु महतीं घोरां ज्वलन्तीमायसीं शिलाम् । खादयन्ति च तान् पश्चात् नरके च क्षिपन्ति वै । नरकान्ते पुनस्तेऽपि मृताः स्युः शूकरा भृशम् । शूकराः पञ्चवर्षाणि दश वर्षाणि कुक्कुराः । पिपीलिकास्त्रयोमासा वृश्चिकाश्चाब्दमात्रकम् । भूत्वा प्रयान्ति गोयोनौ सदृशा विकलेन्द्रियाः । तत्राधर्म्मक्षयं कृत्वा ततो मानुषयोनिषु । प्रमेहगदवन्तः स्युः प्राप्नुवन्ति मनोव्यथाम्" ।

६४पुंस्त्वविनाशः "धर्म्मपत्नीं परित्यज्य योऽन्यस्त्रीमैथुने रतः । स स्त्रीविरक्तो भवति पुंस्त्वं तस्य विनश्यति" ।

६५शुक्रवृद्धिः "वध्यं कृत्वा लुब्धकेन विप्रोवेदवहिष्कृतः । सदैव गहनं याति मृगं हन्ति निषादवत् । पक्षिपोतान् बहून् सोऽपि नित्यं खादितवांस्तदा । आयुःशेषे स वै दूतैर्याम्यैर्नीतोयमाज्ञया । निःक्षिप्तो नरके घोरे तस्यान्ते त्वत्कुले द्विजः । जातः सर्व्वगुणोत्पन्नः स्वकर्म्मवशतः शृणु । शुक्ररोगेण सन्तप्तः क्षीणरेताः सुदुःखितः" ।

६६उन्मादः "ब्राह्मणं वैष्णवं तीर्थं पितरं मातरं द्विजम् । नार्च्चयेन्निन्दयेद्वापि पुरा स नरकं व्रजेत् । पुरीषाख्ये महाघोरे निरये श्लेष्मभोजने । अथ गिरा भवेत् पापी नानाहुःखप्रपीड़ितः । कर्म्मान्ते स पुनर्योनिं मानुषीं प्राप्य कर्म्मभिः । उन्मादरोगवान् मर्त्यो जायते नृपनन्दन ! । स्मृतिभ्रमकरं द्रव्यं यैर्दत्तं ब्राह्मणे गुरौ । दम्भाचार

तेक्षणम् । यः करोति स वै नेत्रपूयरोगयुतो भवेत् । मृत्वा कष्टमवाप्नोति पिचटादिक्षतोद्भवैः । विहायात्मपतिं या स्त्री पुत्रमाप्नोति जारतः । साऽन्यजन्मनि भूपाल ! विरूपाक्षी भवेद्ध्रुवम् । पत्न्युत्पन्ना प्रपश्येद्दुष्टः पुरुषो-ऽथ योषितम् । क्रोधाविष्टेन मनसा या या श्रेष्ठं पतिं द्विजम् । साऽन्यजन्म समासाद्य विषमाक्षी भवेद्ध्रुवम्" ।

७६ गलगण्डं गण्डमाला च "पुरा येन कृतं मोहाद्गुरुस्त्री-कण्ठदर्शनम् । स मृतः प्रान्तरे देशे निर्जले च यमाज्ञया । पात्यते किङ्करैर्घोरैर्दिव्यवर्षायुतत्रयम् । पुनर्जन्म समासाद्य स्वकर्मवशतश्च सः । गलगण्डयुतो नित्यं गण्डमालाकुलो-ऽपि सन् । पापी सीदति दुःखेष्टः चिरं कर्मक्षयावधि" ।

७७ नासारोगः "ब्राह्मणः कर्मपरिभ्रष्टो मन्मथाविष्टचेतनः । सुगन्धि-कुसुमादीनि यानि द्रव्याणि तानि च । त्वया सतत-माघ्रातं प्राप्तं दत्तं न कस्यचित् । ब्राह्मणेभ्यो न देवेभ्यो दत्तं तेनेदमीदृशम् । नासिकादेशमासाद्य कर्म चाश्रित्य तिष्ठति । किञ्च वेश्याङ्गनासक्तेर्यौवनं विफलीकृतम् । वेश्याश्च रमिता येन तेनास्पृश्या द्विजातयः" ।

७८ क्षीरहीनस्तनता "याचमानं पयो या स्त्री न ददाति परा-र्भके । सा मृता सर्पिणी भूत्वा जीवेद्वर्षचतुष्टयम् । तस्मात् कच्छपिकायोनौ प्रविश्यावृदचतुष्टयम् । प्रत्यक्षं नरकं भुक्त्वा मानुषी तु भवेच्च सा । शृणु भूप ! प्रसूता स्त्री क्षीणक्षी-रस्तनी भवेत् । क्षीरं न क्षरते यस्याः स्तनात् सन्तप्यते हि सा । आत्मजपालनेऽशक्ता भूत्वा कष्टञ्च विन्दति" ।

७९ स्तनविस्फोटरोगः "स्तनपाको भवेद्दुष्येन कर्मणा स्त्रमतः शृणु । दृष्टाऽन्यपुरुषं या स्त्री स्तनं दर्शयते स्वकम् । सकामा-कामयुक्ता सा दुष्टयौवनगर्विता । दूतैर्यमाज्ञया सापि त्रास्यते च निरन्तरम् । भुक्त्वा स्वकर्मजं दुःखं पुनर्भूत्वा च मानुषी । स्तनविस्फोटरोगाढ्या विस्मिता सुखवर्जिता"

८० वेश्यात्वम् "मृते भर्त्तरि या नारी परस्याभिलाषिणी । सा मृता किङ्करैर्याम्यैर्दण्डपाशासिताडिता । नीत्वा यमा-ज्ञया सा च विशुद्ध्यर्थं ततः शृणु । आयसं पुरुषं तप्तं स्फुरद्बहुकरोज्ज्वलम् । आलिङ्गनमतिक्रूराः कारयन्ति नर-भक्षम् । वर्षायुतसहस्रान्ते ततो मर्त्ये च शौकरीम् । सारमेयीञ्च मार्जारीं योनिमाविश्य कर्मतः । मृत्वा च मानुषी पश्चाद्वारस्त्रीत्वमवाप्य सा । अयेषपुरुषैः सा च रम्यमाणा यथेच्छया । मर्त्ये मोहवशात् सा च सुखं प्राप्य सुहर्षिता । न भवेद्या चान्यनारीयन्नप्रकृषजीविका । यस्याः सा च भवेद्वेश्या जन्मजन्मन्यथा न हि" ।

८१ बाधिर्य्यम् "पुरा यस्तु महीपाल ! धर्मचिन्तापराङ्मुखः । निन्दकः पितृमातृणां द्विजतीर्थसुखस्य च । स्रुतेर्बाधिर्य्य-रोगेण स एव परिगृह्यते" ।

८२ श्लेष्मरोगः "नित्यक्रियाविवर्ज्जितस्तु भूत्वा भुङ्क्ते स दुर्मतिः । मृत भूमिपथं प्राप्य शुष्ककाष्ठोपजीवकः । वायसत्वमनु-प्राप्य गृध्रकुक्कुटसूकरः । भूत्वा च मानुषत्वे स श्लेष्म-रोगी सदा भवेत्" ।

८३ हस्तशूलम् "द्विजः सन्ध्याविहीनो यः स शूद्राद्धमः स्मृतः । स मृतः त्रास्यते याम्यैर्वैवस्वतपुरोगमैः । काष्ठी पारावतीं योनिं गत्वा तिष्ठति वत्सरम् । ततो मानुषतां प्राप्य हस्तशूलार्दितो भवेत्" ।

८४ योनिरोगः "रममाणं पतिं या स्त्री तोषयेन्न यथेच्छया । उग्रा सा च मृता वै स्यात् जीवेद्वर्षचतुर्दश । तस्माद्वै मानुषीं प्राप्य योनिं व्याध्यादियोगिनीम् गत्वा सन्तप्यमाना सा योनिरोगेण निर्भरम् । किञ्च चौर्य्यप्रकारेण या हरत्यन्यभोजनम् । सा तद्रोगेण सततं गृह्यते नात्र संशयः" ।

८५ असृग्दरम् प्रदरम् "अथासृग्दरमत्युग्रं प्रदरं योनिदोषजम् । कर्मणा येन राजेन्द्र ! तन्मे निगदतः शृणु । कृत्वा रन्ध-नमादौ या योषिद्भुङ्क्ते बुभुक्षया । बुभुक्षितं पतिं त्यक्त्वा वृथा पशुबधेन च । प्रयाति नरकं घोरं यत् प्रोक्तं मद्यभक्षणे । प्रत्यक्षं नरकं भुक्त्वा ततो भवति पायसी । पायसी दश वर्षाणि शुकी भवति सा पुनः । मानुषी तु भवेत् पश्चादसृग्दरगदार्दिता । श्वेतप्रदरयुक्ता सा भवेद्या भक्तचोरिणी" ।

८६ सपत्नीसुतोत्पादनम् परकान्तासुतोत्पादनञ्च । "महामना महादाता तीर्थकृत् पुण्यकृच्छुचिः । नगरीं भ्रमता तेन काचिदेका मनोहरा । रण्डा व्यलोकि सौन्दर्यशीलारस-निवासभूः । तां दृष्ट्वा मोहितो राजा सस्पृह जातकौतुकः । तामादाय महाक्षोभं ययौ निजगृहं प्रति । विहाय महि-षीरम्या नारीः प्रियवशंवदाः । अत्यनुरागवशान् राजा क्षणं ताञ्च न मुञ्चति । तस्या गर्भे सुतं राजा जनया-मास सुन्दरम् । दैवादपि महीपाल आयुःशेषे यमा-ज्ञया । नीतो यमान्तिकं दूतैर्घोरैश्च भयदारुणैः । धर्मराजपुरे तस्य चित्रगुप्तेन धीमता । एतत् श्रुत्वा यमः क्रुद्धोऽभणीद्दूतान् सुनिष्ठुरान् । एवं क्रूरं दुरा-चारं परभोषितप्रियं सदा । रौरवं नरकं नीत्वा ताडयध्वं निरन्तरम् । तस्मात् पूरीषमूत्राभ्यामुत्पन्नस्य सुतस्य

कर्म्मस्थिते' षट्पञ्चषोडशितैश्च। तृतीयषष्ठगाः पापा लग्नेन्दुभ्यां शुभा मताः। निधनान्त्यगता नेष्टा विशेषाल्लग्नसंस्थिता। एकोनविंशे वियति रवि' खे, चन्द्रोऽधने२, चन्द्रसुतः४, क्रमेण। त्रिवेदनन्दैकमिते१२र्के ईज्ये१८ -भृगु१ सुखं खे कुसुतो१२ऽस्तभीतिम्" जातके तच्चिन्ताप्रकारः।

**कर्म्माङ्ग** न० ६त०। विहितस्य यागादिकर्म्मणोऽङ्गे यथा दर्शादे' प्रयाजादि। देशकालादयोऽपि कर्म्माङ्गानि। यथाह गर्ग'—"तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः"। "प्रधानस्य विधेयस्य कर्म्मणो गुणभावेनाङ्गत्वेन, तदुक्तं "कर्म्मासन्निहितं नैव बुद्धौ विपरिवर्त्तते। यस्मात्तु तदुपस्थानमुपादेयो गुणो भवेत्" भट्टका०"प्रमाणान्तरासन्निहितं कर्म्म बुद्धौ प्रथमं न विषयीभवति प्राथमिकशब्दादेव तस्य कर्म्मण उपस्थितिरिति उपादेये स्वविधेये कर्म्मणि पूजादौ चन्द्रादिक्रियात्वेन तदवच्छिन्नकालत्वेन या शुचितत्कालजीविन· कर्म्माधिकारात् प्रमाणान्तरलभ्यत्वेनाविधेयत्वात्तिथ्यादिर्गुणः" ति० त० रघु०। "फलवत्सन्निधावफलं तदङ्गमिति" न्यायेन फलवत्प्रकरणे पठितानामफलानां सर्वेषां तदङ्गत्वमवधेयम्।

**कर्म्माजीव** पु० कर्म्मणा आजीवः जीवनम्। १शिल्पादिकर्म्मद्वारा जीवनसाधने। स च न्वणा जन्मलग्नावधिदशमभावे मेषादीनां द्रेक्काणनवांशद्वादशत्रिंशांशैः शिल्पादिकर्म्मविशेष आजीवे जातके उक्तः, तच्च आजीवशब्दे ६४१,४२पृ० दर्शितम्। कर्म्म जीवति अण्। २शिल्पादिकर्म्मजीविकावति त्रि०।

**कर्म्मात्मन्** पु० कर्म्मणा आत्मा आत्मभावो यस्य। संसारिणि स्वादृष्टोपनिबद्धशरीरयुक्ते १जीवे। "तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मान· शरीरिण" मनुः। कर्म्मणि आत्मामनो यस्य। २क्रियासक्तचित्ते च।

**कर्म्माध्यक्ष** पु० ७त०। क्रियासाक्षिणि कृताकृतावेक्षके।

**कर्म्मान्त** पु०कर्म्मणः कृषिकर्म्मणोऽन्तो यत्र। सम्पन्नकृषिकर्म्मणि १कृष्टभूमौ हेमच०। "अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च" मनुः। कर्म्मण· तत्फलस्यान्तो यत्र। २इक्षुधान्यादिसञ्चयस्थाने च।"शुचीमाकरकर्म्मान्ते भीरून्नन्तर्निवेशयेत्" मनु·। "कच्चित् सर्वे कर्म्मान्ताः परोक्षास्ते विशङ्किता·"भा०सभा० १६५ श्लो०। ६त०। ३कर्म्मसमाप्तौ च। "कर्म्मान्ते दक्षिणां दद्यात्" स्मृतिः।

**कर्म्मार** पु० कर्म्म ऋच्छति ऋ—अण्। १कर्म्मकारके (कामार) जातिभेदे, "नमस्तक्षभ्योरथकारेभ्यश्च वो नमोनमः, नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमोनमः" यजु०१६,२७। "तपसे कौलालं मायायै कर्म्मारम्" यजु०३०,७, पुरुषमेधे "मायायै कर्म्मारं लौहकारम्" वेददी०। "कर्म्मारस्य निषादस्य रङ्गावतारकस्य च" मनुः। "ये धीवानोरथकाराः कर्म्मारा ये मनीषिणः" अथ०६,५, २वंशभेदे (बेड़्‌वाश), ३कर्म्मरङ्गवृक्षे च राजनि०। ४कर्म्मप्रापरि त्रि०स्वार्थे कन्। कर्म्मारक कर्म्मरङ्गे वृक्षे (कामराङ्गा) पु०राजनि०।

**कर्म्मार्ह** पु० कर्म्मार्हति अर्ह-अण्। १पुरुषे राजनि०। तस्य कर्म्मकरणसमर्थत्वात्तथात्वम्। २कर्म्मकरणसमर्थे त्रि०।

**कर्म्माशय** पु० आशेरते पुरुषा अस्मिन् आ+शी—आधारे अच् कर्म्मणामाशय·। कर्म्मजन्ये धर्म्माधर्म्मरूपे गुणभेदे "क्लेशमूलः कर्म्माशयो दृष्टादृष्टजन्मवेदनीय" पात०सू०। कर्म्मविपाकशब्दे च अस्य भाष्यविवरणे दर्शिते।

**कर्म्मिन्** त्रि० कर्म्मास्त्यस्य व्रीह्या०इनि। व्यापारयुक्ते स्त्रियां ङीप् "कर्म्मिभ्यश्चाधिको योगी—तस्माद्योगी भवार्जुन!" गीता।२फलाभिसन्धानेन कर्म्मकर्त्तरि च। "यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" मुण्ड० उ०। "इष्टापूर्त्तादिकर्म्मिणां धूमादिमार्गेण चन्द्रमण्डलादिप्राप्ति·" शा० भा० "ऋत्विक्कर्षककर्म्मिणाम्" याज्ञ०।

**कर्म्मिष्ठ** त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे जने

**कर्म्मेन्द्रिय** न० कर्म्मणां वचनादीनां निमित्तमिन्द्रियम् अश्वघासादिवत् निमित्तार्थे ६त०। वचनादिकर्म्मकरेषु वागादिषु इन्द्रियेषु "पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्यास्तेष्वेषान्तर्भवन्ति हि"। "वाक्पाणिपादपायूपस्थैरन्वैस्तत्क्रियाजनि। मुखादि गोलकेष्वास्ते तत्कर्म्मेन्द्रियपञ्चकम्" पञ्चदश्यां तेषां नाम कार्य्याण्यङ्गानि। "वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" सा०का०। "इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते"सां०कौ० व्याख्यतश्चैतदस्माभि' तट्टिप्पन्यां।

"तेषामिन्द्रियशब्दार्थत्वे कारणमाह इन्द्रस्यात्मनइति। "इन्द्रोमायाभि पुरुरूपईयते इत्यादि" श्रुतौ इन्द्रशब्दस्यात्मार्थकत्वदर्शनात्, पाणिनिना "इन्द्रियमिन्द्रलिङ्गम्" इत्यादिना इन्द्रशब्दात् तल्लिङ्गाद्यर्थे घप्रत्ययेन निपा·

तितत्वात्तस्य तथात्वम् । करणव्यापारः कर्त्तृव्यापाराधीनः करणव्यापारत्वात् कुठारादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानात् इन्द्रियादीनां पुरुषलिङ्गत्वम्” । अत्र विहरणशब्दस्य गतिपरत्वम् । अत्रैवोक्तं सा०ति० । “ज्ञानेन्द्रियाणां शब्दाद्याः स्मृताः कर्म्मेन्द्रियाण्यपि । वाक्पाणिपादपायूपस्थं ज्ञान्याङ्गमेभोमिषः । वचनादानगतयोविसर्गानन्दसंयुता । कर्म्मेन्द्रियार्थाःसंप्रोक्ता” “अस्थलिङ्गम्” राघवभट्टः ।

तेषां लक्षणनिर्णयार्थं द्वितीया कारिका या दर्शिता सा च कौ०व्याख्याता ।“पञ्चानां कर्म्मेन्द्रियाणाम्,कण्ठ-तात्वादिस्थानमिन्द्रियं वाक्,तस्या वृत्तिर्वचनम्”व्याकृतञ्च तदस्माभि “एवं वागिन्द्रियस्य स्थानमुक्त्वा लक्षणकथनाय तद्वृत्तिमाह तस्यावृत्तिर्वचनमिति । तथा च वचनसाधनमिन्द्रियं वाक् । एवम् आदानसाधनमिन्द्रियं पाणिरित्यादि लक्षणम् । कारिकायां विहरणपदं चलनपरं तच्च गतिभेद । उत्सर्गः उदरात् मलस्यापसारणेन त्यागः । आनन्दः आनन्दविशेषजनको रमणीसम्भोगात्मको व्यापारभेदः” । अत्र तात्वादिस्थानमित्युक्त्या आदिपदात् “अष्टौ स्थानानि वर्णानामुरःकण्ठः शिरस्तथा । जिह्वामूलञ्च दन्तौष्ठं नासिका चैव तालु च” इत्युक्तानामुर आदीनां ग्रहणम् । अतएव शङ्खेन “हस्तौ पादावुपस्थञ्च जिह्वा पायुस्तथैव च । कर्म्मेन्द्रियाणि पञ्चैव” इति जिह्वायाः कर्म्मेन्द्रियत्वस्योक्तिः सङ्गच्छते । इन्द्रियाणि च आहङ्कारिकाणीति सांख्या मन्यन्ते “प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । सात्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्” इति सां०का० । “प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्विकः वैकृतादहङ्कारात् प्रवर्त्तते” इति कौ० व्याख्यातञ्चैतदस्माभि । एकादशकगणस्य सात्विकत्वमुपपादयितुमाह प्रकाशलाघवाभ्यामिति “सत्त्वं लघु प्रकाशकम्”इति कारिकया लाघवस्य प्रकाशस्य च सत्त्वधर्म्मत्वस्योक्तेः इन्द्रियाणाञ्च प्रकाशकत्वात् लाघवाच्च सत्त्वकार्य्यत्व निश्चितं, तथा च सात्विकादेवाहङ्कारात् तस्योत्पत्तिर्युक्ता । वैकृतात् विकृतमेव वैकृतन्तस्मादित्यर्थः” । इन्द्रियाणाञ्च यथा आहङ्कारिकत्वं तथा सा०सू०भाष्ययोः समर्थितम् ।

“अभिमानोऽहङ्कारः” “एकादश पञ्चतन्मात्रं तत्कार्य्यम्” सू० ।

“अहङ्करोतीत्यहङ्कारः कुम्भकारवत् अन्तःकरणद्रव्यं, स च धर्म्मधर्म्मिभेदादभिमान इत्युक्तोऽसाधारणवृत्तिताख्यनाय, बुद्ध्या निश्चित एवार्थेऽहङ्कारममकारौ जायेते । अतो द्वयोः कार्य्यकारणभावानुसारेण दृत्तिमतोरपि कार्य्यकारणभाव उन्नीयत इति । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्य्यमित्यर्थः । अनेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदं मे सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियतद्विषयोत्पत्त्याहङ्कार इन्द्रियादिहेतुः लोके भोगाभिकामेनैव रागद्वारा भोगोपकरणस्य निर्माणदर्शनात् । “रूपरागादभूच्चक्षुरित्यादिना मोक्षधर्म्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुरादेरुत्पत्तिस्मरणाच्चेति भावः । अत्र च भूतेन्द्रिययोर्मध्ये रागधर्म्मकं मन एवादावहङ्कारादुत्पद्यत इति विशेषः,तन्मात्रादीनां रागकार्य्यत्वादिति तत्रापि विशेषमाह सा०का० । “सात्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात्” । “एकादशानां पूरणमेकादशकं मनः षोड़शात्मगणमध्ये सात्विकम् । अतश्च वैकृतात् सात्विकाहङ्काराज्जायत इत्यर्थः । अतश्च राजसाहङ्काराद्दशेन्द्रियाणि तामसाहङ्काराच्च तन्मात्राणीत्यपि मन्तव्यम् । “वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा । अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् । वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः । तैजसादिन्द्रियाण्येव ज्ञानकर्म्ममयानि च । तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः” इत्यादिस्मृतिभ्य एव निर्णयात् । अतएव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम् । “सात्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रं स तामसस्तैजसादुभयम्” इति । तैजसो राजसः । उभयं ज्ञानकर्म्मेन्द्रिये । ननु देवताश्चयन्ततिरिक्तागामिष्ठत्वे करणानां देवताश्च वक्ष्यति तत्कथं कारिकयापि देवानां सात्विकाहङ्कारकार्य्यत्वं नोक्तमिति उच्यते समष्टिचक्षुरादिशरीरिण सूर्य्यादिदेवता एव चक्षुरादिदेवता भूयन्ते । अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतास्वेव पर्य्यवस्यति । तथा च व्यष्टिसमष्ट्योरेकताश्रयेणात्र शास्त्रे देवाः करणेभ्यो न पृथङ्निर्दिश्यन्ते । अतः समष्टीन्द्रियाणि मनोऽपेक्षयाल्पसत्त्वत्वेन राजसाहङ्कारकार्य्यत्वेनैव निर्दिष्टानि । स्मृतिषु च अष्टीन्द्रियापेक्षयाऽधिकसत्त्वत्वेन सात्विकाहङ्कारकार्य्यतोक्तानीत्यविरोध इति मन्तव्यम् । तदेवमहङ्कारस्य त्रैविध्यादहतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम् । “सात्विको राजसश्चैव

नामसञ्च त्रिधा महान्” इति स्मरणात् त्रैविध्यं चानयोर्व्यक्तिभेदाद् भ्रमेदाद्वेत्यन्यदेतत्। एकादशेन्द्रियाणि दर्शयति” भा०। “कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्” सू० “कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च। एतैर्दशभिः सहान्तर मन एकादशकमेकादशेन्द्रियमित्यर्थः। इन्द्रस्य सङ्घातेश्वरस्य करणमिन्द्रियम्। तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति”। “इन्द्रियाणां भौतिकत्वमतं निराकरोति” भा०। “आहङ्कारिकत्वश्रुतेर्न भौतिकानि” सू०। इन्द्रियाणीति शेषः। आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः काललुप्ताप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते। प्रत्यक्षा श्रुतिस्तु “अहं बहु स्याम्” इत्यादि। ननु—“अन्नमयं हि सौम्य मनः” इत्यादिर्भौतिकत्वेऽपि श्रुतिरस्तीति चेन्न प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाहङ्कारिकत्वश्रुतेरेव मुख्यत्वात्। भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयाऽस्य मनोजन्यत्वाच्च। व्यष्टिमनआदीना भूतसंसृष्टतयैव तिष्ठतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकत्वश्रुतिर्गौणीति। ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते? “अस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्” इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात् कारण एव हि कार्यस्य लय इत्याशङ्कायामाह भा०। “देवतालयश्रुतिर्नारम्भकस्य” सू० “देवतासु या लयश्रुतिः सा नारम्भकविषयिणीत्यर्थः, अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात्। अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च। “स एष विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति” इत्यादिश्रुताविति भावः” भा०।

एतन्मूलतयैव भा०ति० ‘वैकारिकादहङ्काराद्दे वा वैकारिका दश। दिग्वातार्कप्रचेतोऽश्वि+वह्नीन्द्रोपेन्द्रमित्रकाः। तैजसादिन्द्रियाण्यासंस्तन्मात्रक्रमयोगतः”। इन्द्रियाणामधिष्ठातृदेवानाञ्च आहङ्कारिकत्वमुक्तम्।

कर्मेन्द्रियाणामधिष्ठातृदेवाश्च वाच वह्निः, पाणेरिन्द्रः, पादस्य उपेन्द्रः, पायोः मित्रः, उपस्थस्य कः ब्रह्मा।

वेदान्तिमते च आकाशादीनां रजोंशैः वागादीनां क्रमेणोत्पत्तिः “रजोंऽशैः पञ्चभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु। वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे” पञ्चदश्युक्तेः तेषाञ्चाहङ्कारित्वं प्रमेयविवरणोपन्यासे निराकृतं, तच्च आत्मशब्दे ६६६ पृ० दर्शितम्, तेषामनुमानेन भौतिकत्वसिद्धिरिति शुष्कतार्किकमतमपि तत्र निरासितं तत्रैव पृ० द्रष्टव्यम्। “तेषां रजोंऽशैर्जातानि क्रमात् कर्मेन्द्रियाणि च” शब्दचि० भागवतवाक्यम्।

कर्व दर्पे भ्वा० प० अक० सेट्। कर्वति अकर्वीत् चकर्व प्रनिकर्वति। कर्वटः कर्बुरः कर्बूरः।

कर्व पु० किरति विषयेषु चित्तम् कृ—व। कामे उज्ज्व०। कामस्य चित्तविक्षेपकत्वात् तथात्वम्।

कर्वट पु० कर्व-अट। द्विशतग्राममध्ये सुन्दरस्थाने, यत्र गत्वा क्रयविक्रयादिना सन्निहितजनपदवासिनो जनाजीवन्ति १तादृशे ग्रामे पुरे वा २नगरमात्रे च अमरटीका “कर्वटं द्विशतग्राममध्ये ग्रामोमनोहरः” हारा० उक्तेः न० च। ३प्रचुरकण्टकसन्ताने ग्रामे च। “धनुःशतं परीणाहो ग्रामात् क्षेत्रान्तरं भवेत्। द्वे शते कर्वटस्य स्यात् नगरस्य चतुःशतम्” याज्ञ० “कर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य” मिता० कूर्मविभागे प्राच्यां दिशि वृ०सं० उक्ते ४देशभेदे “अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः। व्याघ्रमुखसुह्मकर्वटचन्द्रपुराः शूर्पकर्णाश्च”। “ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा। सुह्मानामधिपं चैव ये च सागरवासिनः” भा० स० २९ भीमप्राचीविजये। त्रिकाण्डशेषे तु “चतुरष्टशतग्रामान्तर्द्रोणमुखकर्वटौ” इत्युक्तेः ५ अष्टशतग्राममध्यस्थग्रामे च पु०।

कर्वर न० कृ-वरच्। १कर्मणि निरु०। “अन्यदद्य कर्वरमन्यदु” ऋ० ६, २४, ५। “कर्वरं कर्मनामैतत्” भा०। कृ-विक्षेपे ष्वरच्। २व्याघ्रे ३राक्षसे च पुंस्त्री उज्ज्व०। जातित्वात् स्त्रियां ङीष् ४निशायां स्त्री विश्व षित्त्वात् ङीष्। कर्वरीत्येव। सा च ५हिङ्गुपत्र्याम् जटाध० ६पिशाच्यां मेदि०।

कर्वुदार पु० कर्व दर्पे उण् तं दारयति दृ-अण्। कोविदारवृक्षे

कर्वु(र्वू)र पु० कर्बु (र्बू)रशब्दार्थे।

कर्श्य पु० कृश-यत्। कर्चूरे, (कचूर) राजनि०।

कर्ष पुंन० कृष—अच् कर्मणि घञ् वा। “दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोडशभिश्च कर्षम्” लीला० उक्ते अशीतिरक्तिकापरिमाणे षोडशमाषके मानभेदे २ तन्मिते सुवर्णे च। ३विभीतकवृक्षे पु० शब्दरत्ना०। भ्वा० कृष—भावे घञ्। ४आकर्षणे। तुदा० कृष—भावे घञ्। ५विलेखने च। अत्र प्रसङ्गात् पौराणिकस्मार्त्तकर्मोचित स्मृत्यादिपरिभाषितवैद्यक परिभाषितमानभेद उच्यते। तत्र पौराणिकादिमा

नमाह हेमा०दा०ख०मनुः "लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि । ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः । जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते । त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः । सर्षपाः षट् यवो मध्यस्त्रियवन्त्वेक कृष्णलं । पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश । पलं सुवर्णाश्चत्वारः पलानि धरणं दश । द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः । ते षोडश स्याद्धरणं पुराणश्चैव राजतः । कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः । धरणानि दश ज्ञेयः शतमानस्तु राजतः। चतुःसौवर्णिको निष्कोविज्ञेयस्तु तत्प्रमाणकम्"याज्ञवल्क्यः "जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् । तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते । गौरस्तु ते त्रयः षट् ते यवोमध्यस्तु ते त्रयः। कृष्णलः, पञ्च ते माषस्ते सुवर्णस्तु षोडश । पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् । द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते । शतमानन्तु दशभिर्धरणैः पलमेव च । निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः"व्याह विष्णुः "जालस्थार्कमरीचिगत रजस्त्रसरेणुसंज्ञं, तदष्टकं लिक्षा, तत्त्रयं राजसर्षपः, तत्त्रयं गौरसर्षपः,ते षट्यवः, तत्त्रयं कृष्णलः, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्द्धं स चतुर्माषक सुवर्णः, तच्चतुः सौवर्णिकोनिष्कः। द्वे कृष्णले रूप्यमाषकः ते षोडश धरणम्" "ताम्रिक कार्षापण पणः" कात्यायन "माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु । काकिणी तु चतुर्भागो माषस्य परिकीर्त्तिता । पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी । कार्षापणप्रमाणं तु तत् निबद्धमिह वै यत् । ते द्वादश सुवर्णस्तु दीनारस्तु चित्रक स्मृतः"नारद "कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते । पणो निबद्धः पूर्व्वस्यां षोडशैव पणाः पलम् । अगस्त्योऽपि "यव स्यात् सर्षपैः षड्भिर्गुञ्जा चैका त्रिभिर्यवैः । गुञ्जाभि पञ्चभिश्चैको माषकः परिकीर्त्तितः । भवेत् षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतः। चतुर्भिः पलमेकन्तु दश ते धरणं विदुः" ।"अष्टभिर्भवति व्यक्तौ स्तण्डुलः गौरसर्षपैः । स वैणवयवः प्रोक्तो गोधूम चापरे जगुः" । विष्णुगुप्तः "पञ्चगुञ्जोभवेन्माष ग्रणस्तैः चतुर्गुणैः । कलञ्जं धरणं प्राहुर्मणिमानविशारदाः । मञ्जाटिकाकलञ्जस्तु शौल्के गुञ्जाद्वयं विदुः । मञ्जाटिका विंशतिस्तु धरणं तद्विदां मतम् । स्थूलमध्यातिसूक्ष्माणां मुक्तानामपि स्मृतम्" ।"दीनारोरोपकैरष्टाविंशत्या परिकीर्त्तितः । सुवर्णप्रतिमोभागोरोपक दृश्यते" प्रकारान्तरेणाप्याह सूचितं यथावन्मध्यपाककाले निष्पन्नधान्ययवाद्या सुवर्णमाषः पञ्च वा गुञ्जाः सुवर्णमाषकः ते षोडश सुवर्णः एवं प्रमाणसिद्धस्य द्वितीया संज्ञा कर्ष इति चतुष्कर्षं पलं पलाना शतेन तुला विंशतितौलिको भारः अस्यैव भारस्य दशतौलिक इति द्वितीया संज्ञा" दानखण्डे हेमाद्रिः । एतेषां मानभेदं शक्तितारतम्यापेक्षया प्राज्ञतावेदनार्थं ।

वैद्यकपरिभाषितमानं भावप्र० ।

"न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् । अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया । चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः । विहाय सर्वमानानि मागधं मानमुच्यते । त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः । त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते । जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते । षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका । तिसृभीराजिकाभिश्च सर्षपः प्रोच्यते बुधैः । यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् । षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानको । माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते । टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते । क्षुद्रको वटकश्चैवं द्रङ्क्षणः स निगद्यते । कोलद्वयन्तु कर्षः स्यात् स प्रोक्तः पाणिमानिका । अक्षं पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् । विडालपदकं चैव तथा षोडशिका मता । करमध्यो हंसपदं सुवर्णं कवलग्रहः । उदुम्बरञ्च पर्य्यायैः कर्षमेव निगद्यते । स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा । शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्त्यते । पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते । प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्द्धशरावकः । अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः । शरावाभ्यां भवेत् प्रस्थः चतुःप्रस्थैस्तथाढकः । भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः । चतुर्भिराढकैर्द्रोणः कलशोनल्वणोऽर्मणः । उन्मानञ्च घटोराशिर्द्रोणपर्यायसज्ञितः । द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।

'शूर्पाभ्याञ्च भवेद्द्रोणी वाही गोणी च सा स्मृता । द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुःसहस्रपलिका षण्णवत्यधिका च सा । पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः । तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः । माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् । मागधपरिभाषायां षड्रक्तिको माषश्चतुर्विंशतिरक्तिकष्टङ्कः षण्णवतिरक्तिकं कर्षः । अयञ्चरकसम्मत । सुश्रुतमते पञ्चरक्तिकोमाषो विंशतिरक्तिकष्टङ्कोऽशीतिरक्तिकं कर्षः । अयमेव कालिङ्गपरिभाषायामपि यतस्तत्राष्टरक्तिकोमाषो द्वात्रिंशद्रक्तिकष्टङ्कः शाणटङ्कद्वयमितं कर्षः । गुञ्जादिमानमारभ्य यावत् स्यात्कुडवस्थितिः । द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् । प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः । मानं तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम् । मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् । विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् । इति मागधमानम् । कालिङ्गमानम् "यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ । अतस्तु मात्रा तद्योग्या प्रोच्यते सुश्रुतसम्मता । यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः । यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते । माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् । चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च । गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषिकः । चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः । चतुःपलैश्च कुडवं प्रस्थाद्याः पूर्ववन्मताः । स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयोबलम् । प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् । नाल्पं हन्त्यौषधं व्याधिं यथाम्भोऽल्पं महानलम् । अतिमात्रं च दोषाय यथा सस्ये बहूदकम्" ।

कर्षं नित्यमर्हति ठन् । कार्षिक कर्षपरिमाणार्थे "कार्षिकस्तान्त्रिकः पणः इत्यमरः" । निष्कर्षणार्थे क्षेत्रभेदे च घञन्तकर्षस्य "कर्षात्वतो घञोऽन्त उदात्तः" पा० अन्तोदात्तता अत्र कर्षेतिशपा निर्देशात्तुदादेराद्युदात्ततेति सि०कौ० ।

कर्षक त्रि० कृष–विलेखने । १ क्षेत्रकर्षणकारके (चाषा) "कश्चित् दीन भक्तश्च कर्षकश्चावसीदति" भा०स०५अ० "यस्मिन् कृषकं कुर्यं दुर्बलं मम पुत्रकम् । प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम्" भा० ६ अ० सुरभेर्वाक्यम् "कालप्राप्तमुपासीत सस्यानामिव कर्षकम्" भा०व० २५८ अ० । "त्वं समीरण इव प्रतीक्षितः "कर्षकेण वलजां पुपूषता" माघः २लेखके ३आकर्षके च ।

कर्षण न० तुदा० कृष–भावे ल्युट् । लाङ्गलादिना भूमेर्विलेखने (चाष देओया) हेम० ।"ऋतं तु याचितं भैक्ष्यं प्रमितं कर्षणं स्मृतम्" मनुः । कृषिशब्दे विवृतिः । भ्वा० कृष–ल्युट् । २आकर्षणे च (टाना) "भज्यमानमतिमात्रकर्षणात्" रघुः "शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा" मनुः । ३गौरिखीवृक्षे स्त्री राजनि० गौरा० ङीष् ।

कर्षणि स्त्री कृष–अनि । असत्यां स्त्रियाम् उणादिकोषः शब्दकल्पद्रुमे उक्तम् । अचिन्त्यम् "कृषेरादेश धः" उणा० २,१०५सू० धर्षणिरित्यस्यैव सिद्धेः कर्षणिरिति पाठो लिपिकरप्रमादकृतः । अतएव उज्ज्वलदत्तेन "धर्षणिर्बन्धकीत्युक्ता" कृषेरनिमत्वेन सिद्धे वैचित्र्यार्थम्" इत्युक्तम्

कर्षफल पु० कर्षः तन्मानं फलमस्य । १विभीतकवृक्षे, अमरः २आमलक्याम् स्त्री रत्नमाला टाप् ।

कर्षापण पु० कर्षेणापण्यते क्रीयते । षोडशपणपरिमाण (काहन) कर्षस्य षोडशमाषकमितत्वेन षोडशभिः पणैस्तस्य क्रयणात् तत्संख्यासाम्यात् तथात्वम् । "अशीतिभिर्वराटकैः पण इत्यभिधीयते । ते षोडश पुराणं स्यात् रजतं सप्तभिस्तु तैः" गौतमेन षोडशपणेषु पुराणशब्दस्य परिभाषितत्वात् "द्वात्रिंशत्पणिका माषो चतुःषः पौराणिकोमतः" कात्यायनेन द्वात्रिंशत्पणाना गोमूल्यतयाभिधानेन "धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" षट्त्रिंशन्मते पुराणकार्षापणयोः पर्य्यायतादर्शनाच्च तथार्थता । ततः प्रज्ञा० स्वार्थे अण् । कार्षापणोऽप्यत्र अर्द्धर्चादि० तेन पुंन० ।

कर्षिन् त्रि० कृष–आकर्षे णिनि । आकर्षके । "लम्बेरमास्वरमङ्गलकर्षिणस्ते" रघु । स्त्रियां ङीप् ।"प्राणकान्तमधुगन्धकर्षिणी" रघुः । ङीबन्तं २गोरिख्योवृक्षे ३अश्वमुखबन्धनरज्जुस्थितलौहभेदे कविकायां च स्त्री जटा०

कर्षू पु० कृष–ऊ । १करीषाग्नौ (घुटेर आगुन) । २कुल्यायां स्त्री अमरः । ३दृष्टाते मेदि० । दृष्टातस्तु "चतुरङ्गुलविष्टम्भा अन्तरा तावदधः खाता वितस्त्यायताश्च कर्षूः कुर्यात्" भा० वि० विष्णुक्रमप्रमाणकमसभेदः । "ततः कर्षूः कुर्यात् तत्कूले प्रागुदगग्रान् च समाधानं कृत्वा पिण्डनिर्वपणम्" "कर्षूत्रयमुक्ते पुरस्तात्, कर्षूतव-

मूले स्त्रीणाम् । पुरुषकर्षूत्रयं शाल्मेनोदकेन पूरयेत् स्त्रीकर्षूत्रयं शाल्मेन पयसा दध्ना मांसेन, पयसा च प्रत्येकं कर्षूत्रयं पूरयित्वा जपेत्" विष्णु० । ४गर्त्त-मात्रे च । "कर्षूपीरयवति" कात्या० २१,२ २६ । "कर्षूः कुहर उच्यते" कर्कः अस्य ह्रस्वान्तमपि । "दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदक्स्था.." कात्या०२१,३,२६ । "श्मशानात उत्तरतः कुटिले कर्षू गर्त्तौ खात्वा" कर्कः ।

कर्हि अव्य० कस्मिन् काले किम्+र्हिल् कादेशः । अनद्यतने कस्मिन् काले इत्यर्थे । कर्हि स्वित्तदिन्द्र यन्नृभिः" ऋ० ६,३५,२ ।

कर्हिचित् अव्य० कर्हि+चित् सुप्सु० पा० मते भिन्न पदद्वयम् । कस्मिंश्चित्काले इत्यर्थे । "अग्निना यद्ध कर्हिचित्"ऋ०५,७४,१०। अतएव पदकारा कर्हि,चित् । इति भिन्नपदतया पेठु "यदद्य कर्हि कर्हिचित्"ऋ०८,७३,५ ।

कल संख्यायां सक० शब्दे अक०भ्वा०आत्म०सेट् । कलते अकलिष्ट चकले प्रनिकलते ।

कल गतौ संख्यायाञ्च अद० चुरा० उभय० सक० सेट् । कलयति ते अचकलत् त । कलयाम्–बभूव आस–चकार चक्रे । गत्यर्थत्वात् ज्ञानार्थत्वमपि । "कलयत्यनुक्षणमनेकलयम्" माघः "व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम्"जयदे० धारणे "कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरौ"जयदे०। संख्यानञ्चात्र गणनं ज्ञानभेदश्च ।"स पश्चात् संपूर्णः कलयति धरित्रीं तृणसमाम्" नीतिः "कलयेदमानमनसं सखि! माम्" माघ ।"वाचामाचकलत् रहस्यमखिलं यच्चाक्षपादस्फुराम्" नैष० ।उच्चारणे च "माद्यन्तः कलयन्तु चूतशिखरे,केलि-पिकाः पञ्चमम्" । आसे"कालः कलयतामहम्"गीता । "कलनात्सर्वभूतानां स कालः परिकीर्त्तितः"ति०त० विष्णुध० । कलनीयम् कलयितव्यम् कलयिता कलितः । कलयन् कलयमानः कलयितुम् कलयित्वा आकलय्य । "कलितललितवनमालम्" जयदे० "करकलितकपालः कुण्डली दण्डपाणिः" वटुकस्तवः ।
अप–अपगमे अपकलयति वि+अप वियोजने "यदि अत्र युक्तिव्यपकलनमार्गोऽपि कुशला"लीला०।
आ+बन्धने"सवर्णस्रजाकलितकन्धराम्बराम्, माघः ज्ञाने च" "वाचामाचकलत्" नैष० । "मकरध्वजहरिदमाकलयत्" "उत्ताप्यज्ञीराकलयाञ्चकार"इति च माघ।
प्रति आ+प्रतिरोधे प्रत्याकलितसदुर्नयः" दशकु० ।
उद्+उत्क्षिप्य धारणे"स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रोशतो यद्वदहिर्गरुत्मतः" भाग०७,८,१६ ।
सम्+एकत्र आपादने सम्यक् योगे ।"अथ संकलनव्यवकलनयोः करणसूत्रम्" "द्वैकपदमपद्रांशमबैकाद्यङ्कयुतिः किल सङ्कलिताख्या" लीला० ।

काल मोदने प्रेरणे चुरा०उभय०सक०सेट् । कालयति ते अचीकलत् त । कालयां बभूव आस चकार चक्रे । कालयितव्य कालनीयः। कालयिता कालितः कालयन् कालयमानः। कालयित्वा आकाल्य । कर्मणि काल्यते अकालि अकालयिषाताम् अकालिषाताम् । "गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते" भा०वि० १००,७ । "गावो न काल्यन्त इदं कुतो रजः"भाग०४,५,८। स गौतम्-सकलं सैन्यं कालयामास दूरतः"भा०आ० ६६८० ।

कल पु० कल–शब्दे अच् नि० अवृद्धिः । मधुरास्फुट ध्वनौ अमर । "शारदैः कलनिर्ह्रादैः" "कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्" "निनाद भासद् कलनूपुराणाम्" रघुः । "कलपक्षिवीरवृदर्भि मट." । "कलकाङ्गि कार्स्वरवत्तरत्र."माघ । कलप्रधाना वाणि-स्रेन एवं कलहंस इत्यादौ मा०त० कमारये न तत्र न तद्युक्तार्थता । अतएवामरेण"कलो मन्द्रस्तु गम्भीरस्तारो-ऽत्युच्चैस्त्रयस्त्रिषु" मन्द्रादीनां ध्वनीनामेव त्रिलिङ्गत्व-मुक्तम् ।"उदकपितम् कण्ठपरिवर्तिकलस्वनमानपरता परता" माघः। कल–मदे अच् कर्मणि अः । २शुक्रे चरम-धातौ न० मेदि० । ३कोकिलके पु०शब्दच०।४शालवृक्षे पु० राजनि० । ५अजीर्णे त्रि० मेदि० । कलाकल अच् । जुलान्विते अवयवे च । [स्त्रियां जातित्वात् ङीष् ।

कलक पुस्त्री कल–बु० अस्तु । मत्स्यभेदे हेमच० ।

कलकण्ठ पुस्त्री कलः कलप्रधानः कण्ठोऽस्य । १कोकिले २हंसे, ३पारावते च । जातित्वेऽपि संयोगोपधत्वात् स्त्रियां न ङीष् किन्तु शार्ङ्गरवा ङीष् । कलध्वनियुक्त कण्ठके त्रि०स्त्रियां ङीप् ।

कलकल पु० कलप्रकारः प्रकारे द्वित्वम् । कोलाहले । "चलितया विदधे कलमेखला-कलकलोऽलकलोलदृशाऽन्यया" माघ। कलस्य भावस्य कला यत्र । २शालनिर्यासे मेदि०।

कलकीट पु०कलप्रधानः कीटः मा०त०। कीटभेदे । तत अदः मलया० अच् । कालकीट शब्दे त्रि० ।

**कलकूट** पु० नगरभेदे राजनि० । तत्र भवार्थे तद्राजार्थे च “साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्” पा० इञ् । कालकूटि तद्भवे त्रि० तन्नृपे च । इञश्चास्त्रियां बहुषु लुक् । कलकूटास्तद्देशवासिषु तन्नृपेषु च स्त्रियां तु न लुक् । कालकूट्य इत्येव । [जातित्वात् ङीष्

**कलघोष** पुंस्त्री कलो घोषोऽस्य । कोकिले शब्दर० स्त्रियां

**कलङ्क** पु० कलयति क्षिप् कल् चासौ अङ्कश्चेति, कं ब्रह्माणमपि लङ्कयति गच्छति लकि–गतौ अण् वा । १चिह्ने २अपवादे, ताम्रादिधातूनां ३मलभेदे (कलङ्काम), ताम्रादियोगात् ४अम्लादेर्विकारे च मेदि० । “शशकपालकस्येव कलङ्का.” काद० । “धाराभिन्नेव कलङ्करेखा” “मत्तः सदाचारशुचेः कलङ्कः” रघुः । “ताम्रवर्णेव मन्दो मन्दरश्मिर्दिवाकरः । अदृश्यत कलङ्काङ्कः संसक्तो धूमकेतुना” रामा० । ततः अस्त्यर्थे इनि । कलङ्किन् तद्युक्ते त्रि० स्त्रियां ङीप् । “कलङ्की जायते विप्रे” ति० त० स्मृतिः । ततः तारका० जातार्थे इतच् । कलङ्कित जातकलङ्के त्रि० ।

**कलङ्कष** पुंस्त्री करेण कषति वा० खच् मुम् च रस्य ल । १सिंहे शब्दमा० । जातित्वात् स्त्रियां ङीष् । २करतालयां स्त्री शब्दरत्ना० टाप् ।

**कलङ्कुर** पु० कं जलं लङ्कयति लकि–गतौ णिच्–उरच् । जलानामावर्त्ते स्रतोजलभ्रमे त्रिका० ।

**कलञ्ज** पु० केतिशब्दं अञ्जति भाषते क इत्यव्यक्तानुकरणम् अञ्जि–अच् । विषाक्तास्त्रेण हते १मृगे, २पक्षिणि च । ३तन्मांसे न० “न कलञ्जं भक्षयेदिति” श्रुतिः । ४ताम्रकूटे च (तामाक) “कलञ्जवेष्टनधूमपानात् स्याद्दन्तशुद्धिर्मुखरोगहानिरिति” वैद्यके तत्सेवनात् मुखरोगहान्यादि उक्तम् । ५परिमाणभेदे च । कर्षशब्दे भावप्र० तन्मानभेदोदाह० ।

**कलञ्जाधिकरण** न० “न कलञ्जं भक्षयेदित्यादिवाक्यमधिकृत्य पञ्चावयवन्यायभेदे स च न्यायः यथा किं यदा कदापि तद्भक्षणनिषेधः । उत सर्वदेति संशय । यदा कदाचिन्निषेध इति पूर्वपक्षः सर्वदा तन्निषेध इति सिद्धान्तः । तदेतत् भट्टरा एका० त० दर्शितं यथा “न कलञ्जं भक्षयेत्” इति श्रुतिः कलञ्जभक्षणाभावविषयकं कार्य्यमित्यर्थः । तत्र कालविशेषानुपादानान्निषिध्यमानक्रियायां प्रवृत्तिमतो निषेधविधावधिकारादुत्पावत्कालमेव तस्मा तदा निवृत्तिः । न हि कलञ्जभक्षणादुपरतः कुतश्चित् कारणान्निवृत्तस्य निषेधानुपालनं सम्पादितमिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदैव निषेधविधिरपि तं निवर्त्तयति । न हि कलञ्जस्य भक्षणमुपक्रम्य यावत् कालं तद्भक्षयति । अतस्तदितरकाले निवृत्तिः सिद्धैवेति भवति विफलोविधिः । ननु नासौ निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्ते । सत्यं, प्रवृत्त्युपाधिना विनाशं मास्थान् प्रागभाव एव प्रवृत्तिनिराकरणात् साध्यमानो निवृत्तिरुच्यते न तु प्रवृत्तिरपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमतएव निषेधविधावधिकारः । यत्तु “मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा । यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनम्” इति । अत्रापिशब्देनाप्रवृत्तमात्रसङ्ग्रहयान्न विरोधः । भूतचेष्टावत इति । “भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना” इति मेदिन्युक्तेः भूते प्राप्ते निषेध्ये चेष्टावत इत्यर्थः । ततश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते । प्रागभावस्यानादिसंसर्गाभावमात्रपरः सत्वाप्रवृत्तस्य भक्षणकारणमननुष्ठितः सिध्यत्येव । तस्मात् सकलक्रियापर्य्यवसायित्वे विफलोविधिः । कादाचित्कारणस्य निषेधमन्तरेणापि प्राप्तेः । न च स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्त्तृकत्वसम्यक् विषयशास्त्रानुष्ठानाधीनसिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताकाङ्क्षाविरहात् अतएव शुचित्वमपि तत्र शास्त्रम् । तस्मान्निषेधविधिषु कालवन्तोदेवदत्तस्य स्पृहाद्वत्यादिवत्स्वरूपस्यानेनाधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यं पुनर्निमित्तान्तरवच्च सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिः”।

यथा चात्र निवृत्तेरेव बोध्यता न प्रवृत्त्यभावस्य तथा समर्थितं वृहदारण्यकभाष्यभाष्ययोः यथा—

“प्रतिषिद्धानिष्टफलसम्बन्धश्च वेदादेव विज्ञायते न चानुष्ठेयः । न च प्रतिषिद्धविषये प्रवृत्तिक्रियस्याकरणादन्यदनुष्ठेयमस्ति । अकर्त्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात् । क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिषवापानादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयदा प्रतिषेधज्ञानस्मृत्या बाध्यते मृगतृष्णिकायामिव

षेयज्ञान, तद्विषययाथार्थ्यविज्ञानेन तस्मिन् बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति । विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्य्यस्तद्भावे” शङ्कराचार्य्यकृतभाष्यम् ।

‘यद्यपि कलञ्जभक्षणादेरेव पातस्य च सम्बन्धो ‘न कलञ्जं भक्षयेत्’ इत्यादिवाक्यात्प्रतीयते, तथापि तस्यानुष्ठेयत्वाद्वाक्यस्यानुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याह न चेति । सम्बन्धस्याभावार्थत्वान्नानुष्ठेयतेत्यर्थः । अभक्षणादि कार्य्यमिति विधिपरत्वमेव निषेधवाक्यस्य किन्न स्यादित्याशङ्क्याह न चेति । तत्रापि कार्य्यार्थत्वे विधिनिषेधभेदभङ्गात् नञश्च स्वसम्बन्ध्यभावबोधने मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तक्रियावतो निषेधशास्त्रार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात् प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्य दन्यदनुष्ठेयं न प्रतिभातीत्यर्थः । भावविषय कर्त्तव्यत्व विधीनामर्थोऽभावविषयन्तु निषेधानामिति विशेषमाशङ्क्याह । अकर्त्तव्यतेति । अभावस्य भावत्वाभावात् कर्त्तव्यताविषयत्वासिद्धिरिति हि शब्दार्थः । प्रतिषेधज्ञानवतोऽपि कलञ्जभक्षणादिप्रसङ्गदर्शनात् तन्निवृत्तेर्नियोगाधीनत्वात् तद्विधमेव वाक्यमेष्टव्यमिति चेन्नेत्याह । क्षुधार्त्तस्येति । विषविमिश्रपायसकृतस्य पयोमांसं कलञ्जम् । ब्रह्मवधाद्यभिशापयुक्तस्यान्नपानादि । तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यदुन्मज्जनं क्षुत्क्षामस्योत्पन्नं तन्निषेधधीसंस्कृतस्य तद्बोधत्वात् बाध्यमित्यत्र लौकिकदृष्टान्तमाह । मृगतृष्णिकायामिति । तथापि प्रवृत्त्यभावसिद्धये विधिरर्थ्यतामिति चेन्नेत्याह । तन्निमित्तेति । तदभावः प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः” आनन्दगिरिः ।

नैयायिकमते तत्र बोधप्रकारः शब्दचि॰ दर्शितो यथा—

“ननु ‘न कलञ्जं भक्षयेत्’ इत्यत्र विध्यर्थनिषेधानुपपत्तिः तद्भक्षणस्य श्रेयोरूपेष्टसाधनत्वात्, न चाब्राह्मणविद्यावत् पर्य्युदासलक्षणया विरोध्यनिष्टसाधनबोधनं, नञोऽसमस्तत्वात् क्रियासङ्गतत्वेन प्रतिषेधवाचकत्वव्युत्पन्नस्येति चेत् न विशेष्यवति विशिष्टनिषेधस्य “सविशेषणे हीति” न्यायेन विशेषणनिषेधपर्य्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखसाधनमिति “न कलञ्जं भक्षयेत्” इत्यनेन बोधनात्, इष्टसाधनतावाचकस्य विधेः सामान्ये निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनविशेषे तात्पर्य्यं तथा वाक्यविशेषणनिषेधपरत्वं नञ इति कश्चित् तन्न यथाश्रुतयोग्यतया छिद्रं विहाय घटत्वेन तदितरान्वयो न तच्छिद्रेतरत्वेन, युगपद्वृत्तिद्वयविरोधात् तथेहापि बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरिति”

विशेषबोधप्रकारस्तु व्याख्यातवादे गदाधरेण दर्शितो यथा “न कलञ्जं भक्षयेत्” इत्यादिनिषेधविधेः प्रामाण्यानुरोधेन बलवदनिष्टाननुबन्धित्वस्य विध्यर्थे प्रवेश निषेधोऽपि, कलञ्जभक्षणादौ स्वर्गादिरूपेष्टसाधनतासत्त्वेन तदभावस्य नञा बोधने तत्प्रामाण्यानुपपत्तेः बलवदनिष्टाननुबन्धित्वस्य विधिप्रत्ययवाच्यत्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्कर्म्मण्यबाधितो बोध्यत इति तत्प्रामाण्योपपत्तिः । बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भान सोऽपि विशेषणाभावप्रयुक्तोऽबाधित । कलञ्जभक्षणादौ विशिष्टाभावबोधानन्तरं तद्विशेषकानुमानगम्यो बलवदनिष्टाननुबन्धित्वरूपतदननुबन्धित्वाभाव । प्रवर्त्तकमिव निवर्त्तकमपि ज्ञानं श्रुतिवाक्यात् परम्परयैव, न तु साक्षात् । मयमते च तादृशाभावस्य शाब्दबोधे न भानं पदार्थैकदेश इतरविशेषणत्वेनोपस्थितत्वेन नञर्थविशेषणतया अनिष्टाननुबन्धित्वान्वयासम्भवात् । वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धिताया वाच्यत्वम् । न च बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेष्यत्वे विधिवाक्यत क्रियाविशेष्यकेष्टसाधनताज्ञानसम्भवात् क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजन्यशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वविशेषणत्वे विनिगमकमिति वाच्यं क्रियायां बलवदनिष्टासाधनत्वज्ञानतद्गोचरेच्छयोर्यथा बलवदनिष्टासाधनत्वस्येष्टसाधनताविशेषणत्वमते क्रिया विशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया उभये कल्पनासाम्यात् । यदि च बलवदनिष्टाननुबन्धित्वज्ञानमेव तदुद्देश्यसामग्रीत्वेन इच्छाप्रतिबन्धकं न तु तदसाधनत्वज्ञानमिच्छायेत्यदोक्तविशेष्यविशेषणभावे विनिगमकस्य सम्भवेऽपि विशिष्टस्य वाच्यत्वोपगमे तत्र बाधेन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य स्वेनस्यैव इष्टसाधनताबोधस्य बोधगम कार-

स्थकं। सखिलतापि तत्र बलवदनिष्टसाधनत्वविनिर्म्मोकेणेष्टसाधनत्वस्य भानं लिखितं तदभावश्च विशिष्टशक्तिपक्षे न सम्भवति विशिष्टशक्तेर्विशेषणविनिर्मोकेण विशेष्याभासकत्वात्। तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्म्मांशे शक्यतावच्छेदकतापर्य्याप्त्यवगाहिज्ञानस्य हेतुत्वात् अन्यथा विशिष्टसुखादिवाचकस्वर्गादिपदादिना लक्षणया केवलसुखत्वादिशाब्दबोधापत्ते"। "इदन्तु बोध्यं बलवदनिष्टाजनकत्वमत्र न तीव्रदुःखाजनकत्वं बह्वायाससाध्ययागादौ तस्य बाधात् नापि बलवद्द्वेषविषयदुःखाजनकत्वं दुःखमात्रस्य विरक्तानां बलवद्द्वेषविषयत्वेनाऽव्यावर्त्तकतापत्तेः तत्र ज्ञानस्याप्रवर्त्तकतया तस्य विधित्वायोगाच्च यत्र बलवान् द्वेषस्तज्जनकताज्ञानत्वेन बलवद्द्वेषविषयत्वेन वा प्रवृत्तिसामान्यं प्रति प्रतिबन्धकत्वात्, परन्तु नरकाजनकत्वं पापाजनकत्वं वा, तद्विरहस्यैव कलञ्जभक्षणादौ नञा बोधनात्" शब्द०प्र०

**कलट** न० कं जलं लटति आप्नोति लट-अच्-६त०। गृहाच्छादने (चाल) तृणादिमये पदार्थे शब्दर०।

**कलतूलिका** स्त्री कं सुखं लाति विषयत्वेन ला-क कलं सुखविषयं कामं तूलयति निष्कर्षति पूरयति वा तूल पूरणे- निष्कर्षे वा ण्वुल्। इच्छावत्याम् स्त्रियां त्रिका०। इच्छायाः सुखविषयत्वेन सुखाधायकत्वात् तत्पूरकत्वात् तन्निष्कर्षकत्वाद्वा तस्यास्तथात्वम्। कलकूणिका कलहूणिका वा क्वचित् पाठान्तरम्। तत्र उभयत्र पृषो०साधु।

**कलत्र** न० गड-सेचने अत्रन् आदेश कः डस्य लः, कलं त्रायते त्रै-क-कड-मासने वा० अत्रन् डस्य लो वा। १भार्य्यायाम् "कलत्रवानहं बाले"। "कलत्रवन्तमात्मानमवरोधे महत्यपि" "वसुमत्या हि नृपाः कलत्रिणः" रघु०। "पत्युस्त्रियामिह महौषधयः कलत्र-स्थानं परैरनभिभूतममूर्वहन्ति" माघ "नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः" मेघ०। २नितम्बे अमरः "कलत्रभारेण विलोलनीविना" किरा०। ३पार्श्वां ४दुर्गस्थाने हेमच०। [ ५कृष्णे राजनि०।

**कलधूत** न० कलेनावयवेन धौतं शुभ्रत्वात् पृषो०।

**कलधौत** न० कलेनावयवेन धौतं शुद्धम्। १स्वर्णे। "यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः" माघः "व्योमस्पृशः प्रथयता कलधौतभित्तीः" माघः। २रूप्ये च मेदि० "अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्। विरलविकीर्णवज्रशकलान् सकलामिह विदधाति धौतकलधौतमहीम्" "अधिरात्रि यत्र निपतन्नभोलिहां कलधौतधौतशिलवेश्मनां रुचौ" माघः "अमलकलधौतपट्टायितमष्टमीचन्द्रशकलाकारम्" काद०। कलो ध्वनिभेदो धौत शुद्धोऽत्र। ३कलध्वनौ विश्व०।

**कलध्वनि** पु० कलोध्वनिरस्य। १पारावते २कोकिले ३मयूरे जातित्वात् स्त्रीत्वमपि। ४मधुराव्यक्तध्वनियुक्ते त्रि०। कर्म०। ५मधुराव्यक्तध्वनौ पु०।

**कलन** न० कलयत्यनेन कल-गतौ गत्यर्थस्य ज्ञानार्थत्वात् ज्ञाने करणे ल्युट्। १चिह्ने २वातपित्तादिदोषे च तैः स्वरूपानुमानात् तथात्वम्। ३ग्रहणे ४ग्रासे। "कलनात् सर्वभूतानां स कालः परिकीर्त्तितः" ति०त० विष्णुध०पु०। ५ज्ञाने च "लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः" सू०सि०। "कलनात्मकः ज्ञानविषयस्वरूपः ज्ञातुम् शक्य इत्यर्थः" रङ्ग०। "न सोऽस्ति प्रत्ययो लोके यः कालानुगमादृते" इत्युक्तेः ज्ञानमात्रस्य कालविषयकत्वात् तथात्वम्। कं जलं लाति उत्पत्तिसाधनत्वेन तथा सन् नमति नम-बा०ड। ६वेतसवृक्षे पु० राजनि०। तस्य जलसमीपजातत्वात् तत्स्रोतसा नमनाच्च तथात्वम्। "स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः। कलनं(लं)त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्" भाग० ३,३०,२७उक्ते ७एकरात्रेण पच्यमाने गर्भकारणे रेतोविकारभेदे इति शब्दकल्पद्रुमादयः। तच्चिन्त्यम् "आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्। कललं जायते तस्याः इति" सुश्रुते "दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः" सा०कारिकायाम् "कार्य्यं शरीरं तदाश्रयस्याः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः" कौ० उक्तेश्च तदेकवाक्यतया लकारद्वययुक्तपाठस्यैव भागवतेऽवष्टतत्वेन नकारयुक्तपाठो लिपिकरप्रमादकृतः इति विवेच्यम्

**कलना** स्त्री चु०कल-भावे युच्। १ज्ञाने २ग्रहणे ३आदाने ४आमोचने ५अवमोचने च "पिच्छावचूडाकलनामिवोरः" माघ "कलनामामोचनमवमोचनं वा" मल्लि०।

**कलनाद** पुंस्त्री कलोनादोऽस्य। १राजहंसे राजनि० स्त्रियां जातित्वात् ङीप्। २कलध्वनियुक्ते त्रि०। कर्मधा०। ३ कलध्वनौ पु०। [जातिशब्दे विवृतिः।

**कलन्दर** पुस्त्री वर्णसङ्करजातिभेदे स्त्रियां जातित्वात् ङीप्।

**कलन्दिका** स्त्री कं सुखं लाति विषयतया ला-क कलं कामं ददाति दा-क पृषो० मुम् च टाप् अत इत्वम्।

सर्वविद्यायाम् हेम०। तस्याः सर्व्वसंशयनिराकरणेन कामदात्वात्तथात्वम्। [शाके राजनि०।

कलम्बु पु० कलाया मात्रायाः अम्बुरिव शक०। मोखी-

कलभ पु० करेण शुण्डेन भाति भा—क रस्य लः। "त्रिंश-द्वर्षस्तु कलभ" इति वैजयन्त्युक्ते १गजभेदे। "मुदा रमन्ते कलभा विकस्वरे"। "इह मुहुर्मुदितैः कलभै रव" "सकलकलभकुम्भविभ्रमाभ्याम्" माघः। २ पञ्चवर्षे करिपोते सुभूति "द्विपेन्द्रभावं कलभः श्रयन्निव" "मोघट-न्तिकलभस्य चेष्टितम्"। "हस्तो हि स्वयन् कलभमभागम्" रघु०। "ननु कलभेन यूथपतेरनुकृतम्" मालवि०। "गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः" मेघ०। शावक-मात्रपरत्वेनकरिकलभकरम्लदिततमालकिसलया मेदिनी" काद०। वयोवाचित्वात् जातित्वात् स्त्रियां ङीप्। कं वात लभते साधनत्वेन लभ-अच्। धुस्तूरे मेदि० तस्य मादकद्रव्यत्वेन वाताघायकत्वात्तथात्वम्

कलभवल्लभ पु० ६त०। पीलुवृक्षे राजनि०। कलभ-प्रियादयोऽप्यत्र। [ङीप्। शल्लकीवृक्षे राजनि०।

कलभी स्त्री कं जलं लभते आश्रयत्वेन लभ-अच् गौरा०

कलम पु० कलते अक्षराणि कल-कमच्। १लेखन्याम् जटा-धर० २धान्यभेदे च राजव०। स च 'कलम'कलिविख्यातो जायते स इक्षुदने। काश्मीरदेशे प्रोक्तो महा-तण्डुलगर्भकः" इति भावप्र० उक्तदेशजः। ३उत्खात-प्रतिरोपितधान्यभेदे च। "आपादपद्मप्रणताः कलमा इव ते रघुम्। फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः" रघु० "कलममोपवधूर्वं मृगव्रजम्" माघ० "तत्र लोहितकशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपु-ष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकलोध्रपुष्पकदीर्घशूक-काञ्चनकमहिषमस्तकहायनकदूषकमहादूषकप्रभृतय शा-लयः। मधुरा वीर्य्यतः शीता लघुपाका बलावहा। पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः। तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः। चक्षुष्यो वर्ण्य-बलकृत् स्वर्य्यो हृद्यस्तृषापहः। व्रण्यो ज्वरहरश्चैव सर्व-दोषविषापहः। तस्मादल्पान्तरगुणा क्रमशः शालयोऽप-राः" सुश्रुते तस्य गुणा उक्ताः। अस्य च रोपितधान्यत्वेन गुणविशेषः भावप्र० उक्तो यथा "रोपितास्तु नवा वृष्याः पुराणा लघवः स्थिराः। तेभ्यस्तु रोपिता भूय शीघ्रपाकाः गुणाधिकाः"। अस्य शिखा पिङ्गलवर्णा "कपोलदेशे कल-मायपिङ्गलाः" इति कुमारे पिङ्गलोपमानत्वेन वर्णनात्। कलयति परेस्वं कल-अमच्। ४चौरे पु० मेदि०।

कलमोत्तम पु० ७त०। गन्धशालौ राजनि०।

कलम्ब पु० कल-क्षेपे अम्बच् कड-मदे अम्बच् डस्य लो वा। शाकनाडिकायां तस्या आहारकाले स्वल्पमानत्वात् तथात्वम्। २शरे अमर० तस्य अरिं प्रति क्षिप्यमाणत्वात् तथात्वम् ३कदम्बवृक्षे विश्वः कामिना मादकत्वात्तथा-त्वम्। संज्ञायां कन्। कलम्बक—धाराकदम्बे राजनि०।

कलम्बिका स्त्री कलम्बोव कायति कै—क संज्ञायां कन्। १ग्रीवापश्चाद्भागस्थनाड्यां तस्याः कलम्बीतुल्यगुणिरस्थत्वात् तथात्वम्। स्वार्थे कन् ह्रस्व। (कलमी)२शाकभेदे च।

कलम्बी स्त्री के जले लम्बते लबि-अवस्रंसने अच् गौरा० ङीष्। (कलमी) शाकभेदे तस्या जले लम्ब-मानत्वात्तथात्वम्। भावप्र० तद्गुणाद्युक्तं यथा। "कलम्बी शतपर्वी च कथ्यन्ते तद्गुणा अथ। कलमी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी"। ति०त० स्मृतौ अभक्ष्य-श्याममध्यत्वमुक्तम् "तुम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका" इति वचने यस्या अभक्ष्यत्वमभक्ष्य-शब्दे उक्तम्। उभयोरैक्यात् कलम्बीत्यप्यत्र शब्दरत्ना०।

कलम्बु(म्बू) स्त्री के जले लम्बते लबि—उण् ७त०।(कलमी) शाकभेदे शब्दर०। अप्राणिजातिवाचकत्वात् वा ऊङ्।

कलम्बुट न० के जले लम्बते लबि-बा० उट ७त०। १हैयङ्गवीने राजनि०। २नवनीते हारा०। तयोर्जलोपरि लम्बमानत्वात्तथात्वम्।

कलरव पुंस्त्री कलो रवोऽस्य। १पारावते (पायरा) अमरः २कोकिले राजनि०। स्त्रियां जातित्वादुभयतो ङीष्। ३कलध्वनियुक्ते त्रि० मेदि०कर्म०।४मधुराव्यक्ते रवे पु०

कलल पुंन० कल—वृषा० कलच्। १गर्भवेष्टनचर्म्मणि अमर कललप्रकृद्दर्शितभागवतोक्ते एकरात्रेण पच्यमानगर्भा-द्यवयवभूते २रेतोविकारभेदे। उदा०तत्रैव शब्दे दृश्यम्।

कललज पु० कललमिव जायते जन—ड कर्म्म०। १राले राजनि०। २गर्भे च।

कललजोद्भव पु० उद्भवत्यस्मात् उद्—भू—अपादाने अप् ६त०। १शालवृक्षे राजनि०। ततो रालस्य कललजस्योत्पत्तेः तस्य तथात्वम्।

कलविङ्क(ङ्ग) पुंस्त्री कलं वङ्क(ङ्ग)ते वगि(वकि)—गतौ अच् पृषो० अत इत्वम्। १चटके खगे, अमरः जाति-त्वेऽपि संयोगोपधत्वात् स्त्रियां टाप्। "पीडाव कलविङ्कान् वर्षाम्यस्तिश्चिरान्" यजु० २४,२०। "कल-

विष्किरोऽथ तित्तिरादिः पुष्करसादश्च तान्द्वा" २४,२०। अन्न-
निषेधप्रदेशकथने। अभक्ष्यप्रकरणे अस्याभक्ष्यतोक्ता
मनुना "कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्"
तन्मांसगुणाः तस्य संज्ञाभेदश्च सुश्रुते उक्तो यथा—
"चकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकतित्ति-
रकुररवार्त्तिकगरलप्रभृतयस्त्वाह्वना विष्किरास्तथवः शीत-
मधुराः कषाया दोषशमनाश्च"। सुखपादैर्हेमनाक्रान्ताह्वनाः।
भावप्र०विशेषतस्तन्मांसगुणा उक्ता यथा—
"चटकः कलविङ्कः स्यात् कुलिङ्गः कालकण्ठकः। कुलिङ्गः
शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः सन्निपातहरो
वेश्मचटकश्चातिशुक्रदः" २कलिङ्गवृक्षे मेदि०।

**कलश** पु० कल मधुराव्यक्तं ध्वनिं शंसति शंस—गतौ बा० ड।
१घटे। कर्षशब्दे दर्शितभावप्रकाशोक्ते २मानभेदे च।

**कलशन्दिर्** स्त्री कलशस्य दीर्दरणम् दॄ—भावे क्विप्।
अश्वमेधकलशविदारणे "अथ कलशन्दिराम् यदि कलशो
दीर्य्येताहुतिमध्यमिति ब्रूयात्" "यद्यभीताद्य दक्षिणासु
कलशो दीर्य्येत तत्राप्येकामेव गा दद्यादथावभृथादेवो
देव शमदीर्य्येत पुनर्यद्योक्त्रेव तत्र प्रायश्चित्तिरिति
कलशन्दिराम्" शत० ब्रा० ४,५,१०,७।

**कलशपोतक** पु० नागभेदे "आर्य्यकश्चोपकश्चैव नागः कलश-
पोतकः" भा०आ०३५अ०।

**कलशि** स्त्री क जलं लाति ला—क तथा सती शीर्य्यति
शॄ—डि। (चाकुलिया) १पृश्निपर्ण्याम् अमरः २घटे
हेमच०"कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति" माघः। अस्य
इदिकारान्तत्वात् वा ङीप् कलशीत्यप्युभयत्र।

**कलशीकण्ठ** त्रि० कलश्याः कण्ठ इव कण्ठोऽस्य। १कलशी
कण्ठतुल्यकण्ठान्विते २ऋषिभेदे पु० ततः गोत्रप्रत्ययस्य
बहुषु उपका० वा लुक्। कालशीकण्ठय कलशीकण्ठाः

**कलशीपदी** स्त्री कलशीव पादावस्याः अन्त्यलोपः समा०
कुम्भपद्या० ङीप् पद्भावश्च। कुम्भाकारपादयुतायां
स्त्रियाम्। [अगस्त्ये मुनौ कुम्भसम्भवशब्दे तत्कथा।

**कलशी(सी)सुत** पु० कलश्याः(स्याः) सुत इव ततोत्पन्नत्वात्।

**कलशोदर** पु० कलश इव उदरमस्य। दानवभेदे "सुनाभः
शङ्कुशिराश्च वरूथः कलशोदरः" हरिवं० २४०।
२कुम्भाकारोदरयुक्ते त्रि० स्त्रियां वा ङीप्।

**कलस** पु० केन जलेन लसति लस—अच् २त०। १घटे
हेमच०। तन्नामनिरुक्तिः "कलां कलां गृहीत्वा तु
देवानां विश्वकर्म्मणा। निर्म्मितोऽयं स वै यस्मात् कलसस्तेन
कथ्यते" निर्वाणत० उक्ता। "सागरे मथ्यमाने तु पीयूषार्थं
सुरासुरैः। पीयूषधारणार्थाय निर्म्मितो विश्वकर्म्मणा।
कलाः कलास्तु देवानामपि ताश्चाः पृथक् पृथक्। यतः
कृतास्तु कलशास्तस्ते परिकीर्त्तिताः" कालि०पु०८७अ०
पूजो०साधनम्। कर्म्मादौ स्थाप्यकलशमानमुक्तं शा०ति०
यथा—"पञ्चाशदङ्गुलो व्यास उत्सेधः षोडशाङ्गुलः।
कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं मतम्। षट्त्रिंशदङ्गुलं
कुम्भं विस्तारोन्नतिशालिनम्। षोडशं द्वादशं वापि ततो
न्यूनं न कारयेत्"। पुष्याभिषेके कालिकापु०८७।
पुष्याभिषेके स्थाप्यघटनामभेदस्तत्स्थापनप्रकारश्च तत्रै-
वाध्याये यथा "नवैव कलशाः प्रोक्ता नामतस्तान्निबोधत।
गोह्योपगोह्यौ मरुतो मयूखश्च तथाऽपरः। मनोहा चापि
भद्रश्च विजयस्तनुशोधकः। इन्द्रियघ्नोऽथ विजयो
नवमः परिकीर्त्तितः। तेषामेव क्रमान्नृप! नव
नामानि यानि तु। शृणु तान्यपराण्येव शान्तिदानि
सदैव हि। क्षितीन्द्रः प्रथमः प्रोक्तो द्वितीयो जलस
म्भवः। पवनाग्नी ततो द्वौ तु यजमानस्ततः परः।
कोषसम्भवनामा तु षष्ठः स परिकीर्त्तितः। सोमस्तु
सप्तमः प्रोक्तश्चादित्यस्तु तथाऽष्टमः। विजयो नाम
कलशो योऽसौ नवम उच्यते। स तु पञ्चमुखः प्रोक्तो
महादेवस्वरूपधृक्। घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयं
तथा। यथाकाष्ठं स्थितः सम्यक् वामदेवादिनामतः।
मण्डलस्य च मध्यान्तः पञ्चवक्त्रघटं न्यसेत्। क्षितीन्द्रं
पूर्व्वतो न्यस्य पश्चिमे जलसम्भवम्। वायव्ये पावनं
न्यस्य आग्नेये ह्यग्निसम्भवम्। नैर्ऋत्ये यजमानन्तु
ऐशान्यां कोषसम्भवम्। सोममुत्तरतो न्यस्य
सौरं दक्षिणतो न्यसेत्। न्यस्यैव कलशांश्चैव तेषु
चैतान् विचिन्तयेत्। कलशानां मुखे ब्रह्मा ग्रीवायां
शङ्करः स्थितः। मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः
स्थिताः। दिक्पाला देवताः सर्व्वे वेष्टयन्ति दिशो
दश। कुक्षौ तु सागराः सप्त सप्त द्वीपाश्च
संस्थिताः। नक्षत्राणि ग्रहाः सर्व्वे तथैव कुल-
पर्व्वताः। गङ्गाद्याः सरितः सर्व्वा वेदाश्चत्वार एव
च। कलशे संस्थिताः सर्व्वे तेषु तानि विचिन्तयेत्।
रत्नानि सर्व्वबीजानि पुष्पाणि च फलानि च। वज्र
मौक्तिकवैदूर्य्यमहापद्मेन्द्रस्फाटिकैः। सर्व्वधान्यमयं
बिल्वं नागरोडुम्बरं तथा। बीजपूरकजम्बीरकाम्रा-
तकदाडिमान्। यवं शालिञ्च नीवार गोधू-

घराद्यास्यम्भोजे कह्लारश्चेति बहुविधम्। ईदृक्षेदेन कथितं पद्यमेव मनीषिभिः। चम्पकं वञ्जुलं कुन्दं बकुलं द्विविधं तथा। इति पञ्चविधस्यापि त्रिभिरन्येषां श्लक्ष्णाः” इत्युक्तेः एवं षड्दृत्तकलिकाविंशतिधा गृहीताः अत्र पञ्चधा द्विगादिगणवृत्तका कलिका मञ्जरीत्यभिहिता क्रमात् कोरकगुच्छकसंफुल्लकुसुमगन्धाख्या तत्रापि कोरकगुच्छककुसुमानि गृहीतानि” कोरको गुच्छकुसुमे मञ्जरी त्रिविधा तु” इत्युक्तेः। त्रिभङ्गी कलिका तु मिश्रविरचिताद्विपूर्वा षोढा तत्रापि दण्डकपूर्वा विदग्धपूर्वा च गृहीता “दण्डकाक्षरविदग्धाख्या त्रिभङ्गीह द्विधा मता” इत्युक्तेः अथ मिश्रकलिका “कलिका गद्यपद्याढ्या सप्तविभक्तिका वा अक्षरमयी सर्वलघ्वी चेति द्विभेदा केवला चेत्ततो तदेवं चतुर्थ्योमहाकलिकाभ्यः अष्टाविंशतिरिह कलिका गृहीताः। एषा अदय एकादश गद्यभेदाः संफुल्लगन्धौ मञ्जरीभेदौ मिश्रविरचितादयः त्रिभङ्गीभेदा मध्यकलिका च तत्राचारताधिक्यविरहात्” ।

कलिकापूर्व य० कलिकया अंशेन जन्यमपूर्वम् । परमापूर्वजनके अङ्गजन्यापूर्वभेदे । तत्साधने युक्तिः मन्दचिन्तामणिमाथुर्यादर्शिता यथा—

“नन्वेवमाग्नेयादीनां मध्ये क्षणिकत्वात् योग्यतानवगतौ परमापूर्वकारणत्वानवगमे कथमपूर्वकल्पनम् ? इति चेत् काम्येऽपूर्वसाध्यत्वस्थितावाग्नेयादौ तद्द्वारासाधनत्वस्य योग्यत्वसम्भवात् न तु प्रथमम्” मन्दचि० । व्याकृतं चैतत् मथुरानाथेन यथा—

“ननु फलसाधनतान्वये फलसमयस्थायित्वतादृशव्यापारोपधायकत्वान्यतरत्वस्य योग्यतात्वे आग्नेयाष्टाकपालसाग्नैन्द्रदधियागैन्द्रपयोयागात्मकयागत्रयरूपस्य दर्शस्य, आग्नेयाष्टाकपालोपांशुयाजाग्नीषोमीयैकादशकपालयागात्मकयागत्रयरूपस्य पौर्णमासस्य चावान्तरकलिकापूर्वत्रयं विना षडङ्गजन्यैकपरमापूर्वजनकत्वमनुपपन्नं युगपदाग्नेयादीनां षण्णामसम्भवादतः “दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः” इत्यादि प्रधानविधिबोधितपरमापूर्वसाधनत्वान्यथानुपपत्त्या तत्र परमापूर्वनाशं कलिकापूर्वषट्कं कल्प्यते इति तत्र सिद्धान्तो व्याकृतः योग्यताज्ञानाभावेन प्रधानविधिवाक्यात् प्रथमं परमापूर्वसाधनत्वान्वयस्यैवासम्भवादित्याशङ्कते नन्वेवमिति। एवंसाधनतान्वये निरुक्तान्यतरत्वस्य योग्यतात्वे । क्षणिकत्वादिति आशुविनाशित्वादित्यर्थः। परम्पराघटकानुपस्थितेश्चेति शेषः । कथमिति । कथं प्रधानविधिबोधितपरमापूर्वसाधनतान्यथानुपपत्तेः कलिकापूर्वकल्पनम्? इत्यर्थः । यदि च निरुक्तयोग्यताज्ञानं विनापि परमापूर्वसाधनत्वान्वयस्तदा परमापूर्वज्ञानं विना स्वर्गसाधनत्वस्यापि ज्ञानसम्भवात् किं परमापूर्वस्यापि वाच्यतया ? इति भावः । न च तत्रापि प्रधानविधिबोधितपरमापूर्वसाधनत्वान्यथानुपपत्त्या कलिकापूर्वाणि न कल्प्यन्ते अपि तु आग्नेयादिबोधकप्रत्येकवाक्यात् कलिकापूर्वोपस्थितौ प्रधानविधिवाक्यात् परमापूर्वसाधनत्वावगमः प्रथमन्तु प्रधानविधिवाक्यं मूकमेवेति वाच्यम् अपसिद्धान्तात् “आग्नेयोऽष्टाकपालोऽमावास्यायाम्” इत्यादिप्रत्येकबोधकवाक्यानां दर्शपौर्णमासाबोधकतया कलिकापूर्वाबोधकत्वाच्चेति निगर्वः । आशुविनाशित्वेन प्रतिसंहितकर्म्मणि यद्रूपेण फलस्य कालान्तरभावित्वप्रतिसन्धानं तद्रूपावच्छिन्नफलसाधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वं योग्यता प्रकृते च प्रधानविधिना कार्य्यत्वरूपेण परमापूर्वं बोध्यते, तथाच कार्य्यत्वरूपेण तज्जनकता दर्शादीनां ग्राह्या, तत्र च परमापूर्वत्वरूपेण कालान्तरभावित्वप्रतिसन्धानेऽपि न कार्य्यत्वरूपेण कालान्तरभावित्वप्रतिसन्धानं, कार्य्यत्वावच्छिन्नस्य दर्शाद्यव्यवहितक्षणेऽपि सम्भवादतःपरमापूर्वसमयस्थायिव्यापारोपधायकत्वज्ञानं विनापि प्रथमं कार्य्यत्वरूपेण सामान्यतस्तत्साधनत्वग्रह ,उत्तरकालन्तु स्वर्गसमयस्थायिकार्य्यान्तराजनकस्य तादृशकार्य्यजनकत्वं परमापूर्वजनकतयैव पर्य्यवस्यति, तच्च साक्षान्न सम्भवति आग्नेयादेराशुविनाशित्वादतः परम्परया जनकत्व,तच्चावान्तरव्यापारं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानात् कलिकापूर्वाणि कल्प्यन्ते,स्वर्गस्य च देहान्तरभोग्यत्वेन कालान्तरभावित्वप्रतिसन्धानात्तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानं विना सामान्यतोऽपि न तत्साधनत्वग्रहसम्भव इति गूढाभिसन्धिना समाधत्ते काम्य इति “दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम ” इति काम्यविधावित्यर्थः । अपूर्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण परमापूर्ववाच्यत्वस्थितावित्यर्थः, तद्द्वारा साधनत्वस्येति परमापूर्वद्वारा साधनत्वस्येत्यर्थः, सामान्यतः स्वर्गसाधनत्वरूपेणान्वये इति शेषः । योग्यतासम्भवात् योग्यताज्ञानसम्भवात्, न तु प्रथममिति । न तु परमापूर्ववाच्यत्वं विनेत्यर्थः । स्वर्गस्य देहान्तरभोग्यत्वेन काला-

न्तरभावित्वप्रतिसन्धानात् तत्साधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वस्य योग्यतात्वात् कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वान्वये च न तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानमपेक्षितं कार्य्यत्वावच्छिन्नस्य देशान्तरभाविप्रतिसन्धानादित्यभिसन्धि । एतच्चापातत स्वर्गस्य कालान्तरभावित्वाप्रतिसन्धाने क्रियायाः क्षणिकत्वाप्रतिसन्धाने वा स्वर्गसाधनत्वान्वयेऽप्यपूर्व्वोपस्थितिं विना योग्यताज्ञानासम्भवात् । केचित्तु "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम " इत्यत्र विधिप्रत्ययस्य कार्य्यत्वरूपेणापूर्व्वसामान्य एव शक्तत्वात् प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमस्तत कार्य्यत्वरूपेण परमापूर्व्वसाधनत्वावगमः, न तु प्रथममेव परमापूर्व्वसाधनत्वावगम । न च प्रथमं कार्य्यत्वरूपेण कलिकापूर्व्वसाधनत्वावगमेऽपि तत्र परमापूर्व्वपर्य्यन्तस्थायित्वं न गृहीतमिति वाच्यं द्वितीयबोधे परमापूर्व्वस्वर्गपर्य्यन्तस्थायित्ववत् प्रथमबोधे कलिकापूर्व्वस्य स्वर्गपर्य्यन्तस्थायिव्यापारसमवस्थायित्वभाने बाधकाभावादिति समाधत्ते काव्य इति । "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम" इति काम्यविधावित्यर्थ अपूर्व्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण कलिकापूर्व्वस्यापि वाच्यत्वस्थितावित्यर्थ, तद्द्वारा साधनत्वस्येति कलिकापूर्व्वद्वारा परमापूर्व्वसाधनत्वस्येत्यर्थ, अन्वय इति शेष । योग्यताज्ञानाभावात् प्रथमं योग्यताज्ञानासम्भवात्, न तु प्रथममिति परमापूर्व्वसाधनत्वावगम इति शेषः । न चैवं प्रतीतपरमापूर्व्वसाधनत्वानुपपत्त्या कलिकापूर्व्वाणां कल्प्यत्वमिति सिद्धान्तव्याघात इति वाच्यं प्रधानविधिवाक्यात् परमापूर्व्वसाधनत्वान्वयानुपपत्त्या कलिकापूर्व्वाणामेव प्रथमान्वयबोधविषयत्वम् इत्येव तदर्थात् इति भाव " इत्याहुः । ननु एकस्मिन्नेव परमापूर्व्वे स्वर्गे च दर्शपौर्णमासयोरेकेन रूपेण जनकत्वमिति चेदुच्यते दर्शपौर्णमासोभयसाधारणेन दर्शपौर्णमासत्वव्यापकीभूतेन वैजात्यविशेषेण विजातीयापूर्व्वं विजातीयस्वर्गञ्च प्रति जनकत्वं, विजातीयापूर्व्वजनकतावच्छेदकतयैव तद्वैजात्यसिद्धि, न च दण्डचक्रन्यायेन दर्शपौर्णमासत्वाभ्यामेव जनकत्वमस्तु केवलदर्शात् केवलपौर्णमासाद्वा फलानुत्पादस्य परस्परव्यतिरेकादेवोपपत्तेरिति वाच्यं कार्य्यकारणभावद्वयकल्पने गौरवात् दर्शत्वादेर्जनकतावच्छेदकतापर्य्यन्तस्य विध्यर्थत्वाभावात् । न च तथापि दर्शत्वादिप्रत्येकधर्म्ममादाय विनिगमनाविरहात् कार्य्यकारणभावद्वयमावश्यकमिति वाच्यम्, केवलदर्शात् केवलपौर्णमासाच्च फलोत्पादस्य वारणाय कार्य्यकारणभावद्वयस्यावश्यकत्वेन गौरवस्यैव विनिगमकत्वात्, यदि च पौर्णमासं विना कृते दर्शे दर्शत्वस्य, दर्शं विना कृते च पौर्णमासे पौर्णमासत्वस्य प्रत्यक्षविरुद्धत्वं नाभ्युपेयते किन्तु दर्शपूर्व्वकृते पौर्णमास एव पौर्णमासत्वं, पौर्णमासोत्तरकृत एव दर्शे दर्शत्वमुपेयते, तदा तु प्रत्येकं दर्शत्वपौर्णमासत्वाभ्यामेव जनकत्वं, न व्यापकजात्या, अतिरिक्तकल्पने गौरवात् अतिरिक्तजातिकल्पनेऽपि दर्शत्वादिकमादाय विनिगमनाविरहेण कार्य्यकारणभावद्वयस्यावश्यकत्वात् । अथ यदि पौर्णमासोत्तरकृते दर्श एव दर्शत्वं, तदा दर्शत्वेनैव हेतुतास्तु किं पौर्णमासत्वेन हेतुतया ? न च विनिगमनाविरहात् पौर्णमासत्वेनापि हेतुत्वमिति वाच्यं केवलपौर्णमासत्वेन हेतुत्वे पौर्णमासानन्तरं दर्शोत्पादप्राक्काल एव परमापूर्व्वोत्पत्त्यापत्तेरेव विनिगमकत्वादिति चेन्न "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम" इति श्रुत्या पौर्णमासस्यापि हेतुत्वबोधनात् पौर्णमासत्वेनापि हेतुत्वस्यावश्यकत्वात् दर्शत्वस्य पौर्णमासघटितत्वात् । एतेन पयोयागाङ्गकदर्शचरमयागस्यैव पयोयागत्वेन हेतुत्वमित्यपि निरस्तम् । दर्शपौर्णमासत्वाक्रान्तानामप्येषामपि हेतुत्वस्य वेदबोधितत्वात् । अथोभयसाधारणवैजात्येन हेतुतापक्षे जातेरव्याप्यवृत्तितया आग्नेयादियागषट्कस्यैव एव आग्नेयादियत्किञ्चिद्यागानन्तरं परमापूर्व्वोत्पत्त्यापत्तिः कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसत्त्वात् एवं दर्शत्वपौर्णमासत्वादिना प्रत्येकहेतुत्वपक्षेऽपि पौर्णमासानन्तरं दर्शान्तर्गतयत्किञ्चिद्यागे कृत एव परमापूर्व्वोत्पत्त्यापत्तिरिति चेन्न परमापूर्व्वव्यापारीभूतानां कलिकापूर्व्वषट्कानामपि तत्तद्रूपेण दण्डचक्रवत् हेतुतया कलिकापूर्व्वषट्कानां समवधानाभावादेव तत्र परमापूर्व्वानुत्पादात् । ननु तथापि दर्शपौर्णमासस्थले कियन्त्यपूर्व्वाणीति चेदत्र प्राञ्च —प्रथमतः पौर्णमासत्रयेण प्रत्येकं कलिकापूर्व्वं त्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते एवं दर्शत्रयेणापि प्रत्येकं कलिकापूर्व्वत्रयं जनयित्वा मध्ये एकं परमापूर्व्वं जन्यते, ततस्ताभ्यां परमापूर्व्वाभ्यां चरमं परमापूर्व्वान्तरं जन्यते इति नवापूर्व्वाणीत्याहु । नव्यास्तु मध्यमपरमापूर्व्वद्वये मानाभावात्

षड्भिः कलिकापूर्व्वैरेव चरमं परमापूर्व्वं जन्यते इति सम्प्रापूर्व्वाणि । न च पूर्व्वपूर्व्वक्रियाभिर्जनितैः पञ्चभिः कलिकापूर्व्वैः सह चोत्तरक्रियैव चरमं परमापूर्व्वं जनयतु किं चरमक्रियाजन्यकलिकापूर्व्वेणेति वाच्यं तथा अपि चोत्तराङ्गदक्षिणादानादिवैयर्थ्येनैव परमापूर्व्वजनकत्वोपगमेन तावत्कालावस्थितस्य चरमकलिकापूर्व्वस्वीकारात्, दक्षिणादानाद्युत्तराङ्गस्य साक्षादेव परमापूर्व्वहेतुत्वेऽस्तु तत्र द्वारापेक्षेति माहुः । उच्छृङ्खलास्तु षड्भ्यः कलिकापूर्व्वेभ्य एव स्वर्गोपपत्तेः परमापूर्व्वे मानाभावः। न च स्वर्गं प्रति षण्णामपूर्व्वाणामङ्गपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वे गौरवमिति वाच्यं, तथापि परमापूर्व्वं प्रति षडपूर्व्वाणां षडपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वेन तुल्यत्वात् षडपूर्व्वाणां सम्बन्धत्वन्तु मतद्वय एव । यदि षडपूर्व्वाणामपि पृथक् हेतुत्वं तदाऽपूर्व्वत्वेमेव । इत्थं षट्कत्वे नैव्यम्यदेतदित्याहुः । (अपूर्व्वशब्दे परमापूर्व्वखण्डनमेतन्मतानुसारेणैवोक्तमिति बोद्धव्यम्)तदसत्, परमापूर्व्वानभ्युपगमे दक्षिणादानादेश्चरमाङ्गस्य स्वर्गोपयोगित्वानुपपत्तेः न हि दक्षिणादानं साक्षात् स्वर्गहेतुः, चरमत्वात् आशुविनाशित्वाच्च तज्जन्यस्य पृथगपूर्व्वस्य स्वीकारे किमपराद्धं परमापूर्व्वेण ? । परमापूर्व्वं प्रति च दक्षिणादानादेश्चरमाङ्गस्य साक्षादेव हेतुत्वम् इत्युक्तमेव । न च परमापूर्व्वाभ्युपगमे तत्र षडपूर्व्वाणां दक्षिणादानस्य च कारणत्वं कल्पनीयमतो गौरवमिति वाच्यं, तथापि षडपूर्व्वाणां दक्षिणादानादिजन्यादृष्टस्य च स्वर्गं प्रति हेतुत्वेन तुल्यत्वात् मम तु कलिकापूर्व्वषट्कं परमापूर्व्वजनन द्वारं मतं स्वर्गे हेतुः, मानाभावात् [illegible] हेतुत्वे च श्रुतिरेव मानमिति न किञ्चिदेतत् । ननु तथापि नवावृत्त्यादिस्थले दशपार्थिवशिवपूजादिस्थले च केन रूपेण परमापूर्व्वविशेषे स्वर्गविशेषे च हेतुत्वं, तत्र नवावृत्त्यादेरेकजातित्वाभावात् न च तत्रापि अपेक्षाबुद्धिविशेषविषयत्वरूपनवत्वादिविशिष्टावृत्तित्वादिनैव हेतुत्वम् । अपेक्षाबुद्धिव प्रत्येकमावृत्त्यपूर्व्वकनवावृत्त्यादिमात्रत्वा [illegible] इति वाच्यं प्रत्येकनवावृत्त्यादिमानरूपापेक्षाबुद्धेः कारणतावच्छेदकत्वेऽननुगमात् एवञ्च नवावृत्त्यादिरूपापेक्षाबुद्धेः कारणतावच्छेदकत्वेऽसम्भवात् तत्र चण्डीपाठादिवृत्तिजातिविशेषत्वरूपनवत्वादिना नवावृत्त्यादिकत्वमनीकृत्य [illegible] हेतुत्वं वाच्यं "कारणतावच्छेदकसम्बन्धेन स्वर्गं प्रति परमापूर्व्वत्वमेव परमापूर्व्वं प्रति तु परमापूर्व्वेतरापूर्व्वसामान्यमेव दर्शादिस्थानवत्तत्रापि प्रत्येकावृत्तिजन्यकलिकापूर्व्वनवकादिद्वारैव परमापूर्व्वजननात् प्रत्येकसङ्कल्पपूर्व्वकप्रत्येकावृत्तिजन्यापूर्व्वतो नवावृत्त्यादिस्थलीयप्रत्येकावृत्तिजन्यकलिकापूर्व्वस्य न वैलक्षण्यमत कलिकापूर्व्वं प्रति चण्डीपाठत्वादिनैव हेतुत्वं कार्य्यतावच्छेदकञ्च चण्डीपाठसामान्यजन्यतावच्छेदकतया सिद्धो नवावृत्त्यादिजन्यतावच्छेदकजातिव्यापको जातिविशेष एव । भारावाह्निकपरमापूर्व्वद्वयादिवारणाय परमापूर्व्वेतरेति । नवत्वादेः प्रत्येकापरिसमाप्तत्वादेकमात्र परमापूर्व्वोत्पाद इति चेन्न, निखिलापेक्षाबुद्धिसाधारणस्य नवत्वस्य एकस्यानुगतस्याभावेन तेन रूपेणानुगमासम्भवात् इति, मैव नवावृत्तित्वादेरपि नवपाठादिविषयकमानसज्ञानविशेषवृत्तिमानसत्वव्याप्यजातित्वात् "नवकृत्वः पठेत्" "दश पार्थिवशिवलिङ्गानि पूजयेत्" इत्यादावपि तादृशज्ञानविशेष एव धात्वर्थः तादृशज्ञानविशेषश्च परमापूर्व्वं प्रति साक्षादेव हेतुरिति संक्षेपः" ।

**कलिकार** पुंस्त्री कलिं कलहं करोति कृ–अण् कलिमृच्छति ऋ–अण् वा उप० स० । पीतमस्तके १धूम्याटे पक्षिणि (फिङ्गे) । तस्य मस्तके कलिकाकारपीतचिह्नवत्त्वात् तथात्वम् । स्त्रियां जातित्वात् ङीप् । २पूतिकरञ्जे (काँटाकरञ्जा) पु० मेदि० । ३विषलाङ्गल्याम् राजनि० गौरा० ङीष् । ४कलहकारके ५कलिकामार्गे च त्रि० । ६नारदे पु० ।

**कलिकारक** पु० कलिकामृच्छति ऋ–कलिं करोति कृ–वा ण्वुल् । १पूतिकरञ्जे (काँटाकरञ्जा) २कलहकारके त्रि० । ३नारदे पु० हेमच० ।

**कलिङ्ग** पुंस्त्री के मूर्द्ध्नि लिङ्गमस्य । १धूम्याटे पक्षिणि (फिङ्गे) अमरः तस्य मस्तके पीतचिह्नवत्त्वात्तथात्वम् । स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप् । कलिं गच्छति गा० खच् डित् मुम् च । १पूतिकरञ्जे (काँटाकरञ्जा) हेमच० २कुटजे (कुड़ची) तस्य फलम् अण् तस्य लुप् । ३इन्द्रयवे न० । ४शिरीषवृक्षे ५प्लक्षवृक्षे च मेदि० । "जनपदात् समारभ्य कश्यामीरान्तगं प्रिये ! कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः" इति तन्त्रोक्ते ६देशभेदे ब० व० मेदि० "उत्खातप्रतिरोपितस्य कलिङ्गाधिपतेः श्रियं ननो" रघुः । स च देशः इहत्सं० कूर्मविभागे

"यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्। मन्वादिकं तैर्थिकञ्च कुर्य्यान्मासद्वयेऽपि च" तत्र तद्वचनात् अपरपक्षोऽत्र कृष्णपक्षः न तु प्रेतपक्षः तस्य तत्र निषेधात् "प्रतिमासं मृताहे च श्राद्धं यत् प्रतिवत्सरम्। मन्वादौ च युगादौ च तन्मासोरुभयोरपीति" मदनरत्ने मरीच्युक्तेः। प्रतिवत्सरं क्रियमाणं कल्पादिश्राद्धमिति मदनरत्नम्" एतेन युगाद्यावर्षवृद्धिश्चेति वचनं श्राद्धातिरिक्तविष्णुपूजादिविषयम् न तत्र तिथियुग्मतेति अन्त्यचरणस्वरसात् तिथियुग्मादरस्य दैवविषयतया तद्विषयकत्वस्यैवोचितत्वात् एवं निर्णयः" "सर्वासु युगाद्यासु"।

अस्योभयमासे कर्त्तव्यताविधानमपि संक्रान्तिनिमित्तपुण्यकालस्योभयत्र लाभे पूर्वदिनाकरणे परदिने कर्त्तव्यतावत् पूर्वमासे दैवादकरणे परमासेऽपि कर्त्तव्यताख्यापनार्थम् नतूभयमासयोः समुच्चयेन। एकैकेनैवानुष्ठानेन दृष्टतृप्त्यनुत्पत्तेः "श्वः कार्य्यमद्य कर्त्तव्यमित्युक्तेश्च प्रथममासएव मुख्यःकाल इति तत्त्वम्।

अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तकृत्यविधाने। "न यस्य द्यावामन्त्रं च शतवारं तदा जपेत्। युगादयो यदा न्यूनाः कुरुते नैव चापि यः" यदा न्यूना इत्यनेन अन्यतमाकरणं नैव कुरुते इत्यनेन सर्वासामकरणमिति सूचितम्। "युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ। गोसहस्रप्रदानस्य कुरुक्षेत्रे फलं हि यत्। तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवमिति" पृथ्वी च० खौ० समुद्रस्नानमुक्तम्।

युगादिवत् युगान्तकालोऽप्यक्षय पुण्यद तन्नि रूपणादिकं हेमा०दा० यथा—

"नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्। त्रेता सिततृतीयायां वैशाखे समपद्यत। दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्। कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः। युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः" मत्स्यपुराणे "युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः। फलं दत्तहुतानाञ्च तास्वनन्तं प्रकीर्त्तितम्" तथा—"एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतञ्चाक्षयमासु विद्यात्। युगे युगे वर्षशतेन यत्तपो युगादिकाले दिवसेन तद्भवेत्"। तथा—"सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च। तथा वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च। शेषस्तु वृषसंक्रान्त्या द्वापरान्तस्तु संख्यया। तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च"।

पद्मपुराणे "युगादिषु युगान्तेषु स्नानदान-जपादिषु। यत्किञ्चित् क्रियते तस्य युगान्तं फलमाश्नुते" आदित्यपुराणे "दिनर्क्षं रेवती यत्र गमनञ्चैव राशिषु। युगान्तदिवसं विद्धि तत्र दानमनन्तकम्। पञ्चोपरागे विबुधे सौम्ये वा मिहिरोपदि। सप्तमी शुक्लकृष्णा वा युगादिदिवसं विदुः"।

कलिल त्रि० कल-इलच्। १गहने, अमरः "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति" गीता। २मिश्रे च उज्ज्व०। "लोकालोकौ कलोऽकल्कः कलिलोऽकलिकृत्तारकः" माघः।

कलिहारी स्त्री कलिं हरति हृ अण् गौरा० ङीष्। (विषलाङ्गलिया) लाङ्गल्याम् भावप्र० "कलिहारी सरा कुष्ठ शोफार्शोव्रणशूलजित्। सक्षारा श्लेष्मजित्तिक्ता कटुकातुवराऽपि च। तीक्ष्णोष्णा क्रिमिहृल्लघ्वी पित्तला गर्भपातिनी" भावप्रकाशे तद्गुणा उक्ताः।

कलुष पुंस्त्री कल—उषच्, लुष-हिंसायां क १कस्य जलस्य लुषो घातकः इति वा। १महिषे राजनि० स्त्रियां जातित्वात् ङीष्। २पापे न०। "त्वां प्रत्यकस्मात् कलुषप्रवृत्तौ" रघु। ३तद्वति त्रि०। ४अनच्छे आविले त्रि० अमरः। "विभिन्नपङ्कं कलुषीभवन्मुहुर्नदेन दन्तीव मनुष्यधर्म्मणः" माघः। ५गर्हिते त्रि० शब्दच०। अकलुषं कलुषो भवति कलुषायते। कलुषायितः। कलुषं करोति णिच् कलुषयति कलुषितः। ६असमर्थे। "आभाषबोधकलुषा दयितेव रात्रौ" रघुः। [तर तद्देशभवादौ त्रि०।

कलूतर पु० देशभेदे। ततः कच्छादि० भवादौ अण्। कालू

कलेवर न० कले शुक्रे वरं श्रेष्ठम् तदुत्पन्नत्वेऽपि शुचि सप्तम्या अलुक्। देहे। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्" गीता। "शरीरे जर्ज्जरीभूते व्याधिग्रस्ते कलेवरे। औषधं जाह्नवीतोयं वैद्यो नारायणः स्वयम्" पुरा० पठन्ति।

कल्क पुन० कल—क तस्य नेत्त्वम्। १घृततैलादिपाकसंस्कारविशेषे, २दम्भे, ३विभीतकवृक्षे, ४विष्ठायाम् ५किट्टे ६पापे च मेदि०। ७तुरुष्कनामगन्धद्रव्ये राजनि० ८घृततैलादिपाके देये औषधिद्रव्यभेदे च। कल्कप्रकारः भावप्र० उक्तो यथा। "स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ। ज्ञेया कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" इति विभज्य "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत्। प्रक्षिप्य नावयेदस्ते तन्मानं कर्षसम्मितम्। कल्के मधु घृतं तैलं देयं द्विगुणमात्रया। सितां गुडसमां

द्वापरम्। माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम्। युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः”। अत्र वैशाखादयः पौर्णमास्यन्ताएव ब्रह्मपुराणे तथैव तिथिकृत्याभिधानात्। मुख्यवाचित्वे कार्त्तिके नवमेऽह्नीत्यनेनैव सिद्धौ शुक्लपक्ष इति व्यर्थं स्यात् तेन भाद्रकृष्णत्रयोदशी अश्वयुक्कृष्णपक्षीयेति मैथिलोक्तं निरस्तम्। आसां प्रशंसामाह विष्णुपुराणम् “वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे। एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः। उपप्लवे चन्द्रमसोरवेश्च तथाष्टकास्वप्ययनद्वये च”। उपप्लवे ग्रहणे “पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतोमनुष्यः। श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत् पितरोवदन्ति”। स्नानमधिकृत्य भविष्ये “संवत्सरफलं तत्र नवम्यां कार्त्तिके तथा। मन्वादौ च युगादौ च मासत्रयफलं लभेत्”।

तदेतत् कल्पभेदेन व्यवस्थाप्य माघामावस्यैव कलियुगाद्येति दाक्षिणात्याः प्रतिपेदिरे यथाह नि० सि०

“रत्नमालायाम् “माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी। तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः। यत्तु गौड़ाः “माघस्य पूर्णिमायां तु घोरं कलियुगं स्मृतमिति” ब्राह्मोक्तेः “वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे” इति विष्णुपुराणे चकारेण तमिस्रपक्षानुषक्तेश्च पूर्वानुरोधात् पूर्णिमासैव ग्राह्या। “द्वे शुक्ले” इत्यादिकन्तु निर्मूलमित्याहुः। तन्न “दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्” इति भविष्यविरोधात् एतेन ब्राह्मानुसारात् पूर्णिमायामेव युगादिश्राद्धं वदन् शूलपाणिः परास्तः। तेन कल्पभेदात् व्यवस्थेति तत्त्वम्। एतेन “कार्त्तिके नवमी शुक्ला माघमासे च पूर्णिमा” इति नारदीयं व्याख्यातम्। निर्मूलत्वोक्तिर्नारदीयाज्ञानकृता”। तत्र श्राद्धादिकरणश्रुभयदिने तत्प्राप्तौ निर्णयश्च नि० सि०।

“अत्र श्राद्धोक्तं मात्स्ये “कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेदिति”। भारतेऽपि “या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः। स्नात्वा हुत्वा च दत्त्वा च सम्प्राप्नोत्यनन्तफलं लभेदिति” श्राद्धेऽपि पूर्वाह्णव्यापिनी ग्राह्या “पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः। दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकी” इति ब्राह्मोक्तेः। “द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः। शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके” हेमाद्रौ नारदीयवचनाच्च। दीपिकापि “अथो युगादि, मन्वादिकर्मतिथयः पूर्वाह्णिकाः स्युः सिते। विज्ञेया अपराह्णिकास्तु बहुले” इति। स्मृत्यर्थसारेऽपि “युगादिमन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या। कृष्णपक्षे पराह्णव्यापिनीति”। द्विवोदासीये गोभिलः “वैशाखस्य तृतीया तु पूर्वविद्धा करोति वै। हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति”। गोविन्दार्णवेऽप्येवम्। तेनैव पूर्वाह्णव्यापिनो दिनद्वये सती परैवेति धर्मतत्त्वविद्हेमाद्र्यादयः। अनन्तभट्टस्तु “सर्वे धृतिव्यतीपातो युगमन्वादयस्तथा। अमा सा उपवासे स्युर्दानादावन्तिमाः स्मृताः” इत्याह। दानादाविति श्राद्धसंग्रहः। उपवासस्त्वपे निषिद्धः। यत्तु मार्कण्डेये “शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः। कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत्”। रौहिणो नवमोमुहूर्त्तः। अत्र च शुक्लपक्षयुगादिश्राद्धं पूर्वाह्णे कार्यमिति शूलपाणि। निर्णयामृतादयस्तु “कालादर्शे अमाश्राद्धमापराह्णिकमुक्त्वा एषमन्वादीनां युगादीनां निर्णय इत्युक्तत्वात् द्वे शुक्ले इत्यादि वचनं विष्णुपूजाविषयम्। श्राद्धे त्वापराह्णिक्येवेति व्यवस्थां जगदुः। तन्न पूर्वोक्तानेकवचोविरोधात् स्वाच्छन्द्यविलसितमित्युपेक्षणीया। “पूर्वाह्णे दैविकं कुर्यात्” इत्यादिवचनादेव तत्सिद्धेर्वचनवैयर्थ्याच्च। किञ्च कालादर्शोक्तिर्न्यायमूला वचोमूला वा नाद्यः युगादिश्राद्धस्यामाश्राद्धविकृतित्वेन न्यायतो पराह्णव्याप्तावपि वचनेन तस्य बाधात्। नान्त्यः अतिदेशादेवापराह्णव्याप्तिप्राप्तेर्वचनवैयर्थ्यात् “अप्राप्ते शास्त्रमर्थवदिति” न्यायात् तेन यदि कालादर्शोक्तिः कथञ्चिन्मूलाभावेन समाधिसेया तर्हि न्यायप्राप्तकृष्णपक्षयुगादिविषयत्वेन सा व्यवस्थापनीयेति दिक्”। युगादिकृत्यं मलमासेऽपि कार्य्यम् “दर्शश्राद्ध गोत्सर्गश्चैवमृतुप्यपि युगादिषु। उपाकर्मणि चोत्सर्गे ह्येतद्दृष्टं द्वयादितः” हेमाद्रौ ऋष्यशृङ्गवचनात् एतत् दर्शश्राद्धादिकम्। “अब्दोदकुम्भमन्वादिमहालययुगादि च। मलमासे न कर्त्तव्यम्” कालादर्शवाक्याच्च मन्वाद्ययोऽत्र मघात्रयोदशीति बोध्यम् ज्योतिश्चन्द्रिकाया तु मासद्वयेऽपि कर्त्तव्यमित्युक्तम्

आग्नेय्यामुक्त· यथा "आग्नेय्यां दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः"। तेषां राजा,ते अभिजनोऽस्य वा अण्। कालिङ्ग तद्देशभूपे तद्देशवासिजने च "कालिङ्ग· प्रतिजग्राह तमस्त्रैर्गजसाधन·" रघुः बहुषु अणो लुक्। कलिङ्गाः। "स सागरं समासाद्य गङ्गायाः सङ्गमे नृपः। नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम्। ततः समुद्रतीरेण जगाम वसुधाधिप। भ्रातृभिः सहितो वीर· कलिङ्गान् प्रति भारत! लोमश उवाच। एते कलिङ्गा· कौन्तेय। यत्र वैतरणी नदी। यत्रायजत धर्मोऽपि देवाञ्छरणमेत्य वै। ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम्। उत्तरं तीरमेतद्धि सततं द्विजसेवितम्। समानं देवयानेन पथा स्वर्गमुपेयुषः"। "त्रिंशतं वै सहस्राणां योजनानां युधिष्ठिर। यत्र ध्वनि शृण्वोऽप्येवं तूष्णीमास्व विशाम्पते। एतत् स्वयम्भुवो राजन्! वनं दिव्यं प्रकाशते" "यत्र प्रकाशते राजन्। वेदी सस्थानलक्षणा। आरुह्यात्र महाराज। वीर्यवान् वै भविष्यसि। सैषा सागरमासाद्य राजन्। वेदी समाश्रिता। एतामारुह्य भद्रं ते,त्वमेकस्तर सागरम्। अहं च ते स्वस्त्ययनं प्रयोक्ष्ये यथा त्वमेनामधिरोहसेऽद्य। स्पृष्टा हि मर्त्येन ततः समुद्रमेषा वेदी प्रविशत्याजमीढ! भा०व०११४अ०। इति तद्देशस्थनद्यादिविवृतिरुक्ता। "स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत्" रघौ कलिङ्गदेशस्य पर्वतः महेन्द्र इति वर्णितम्। ७उशीनरभ्रातृतितिक्षुवंश्यबलिन्टपपुत्रभेदे। "महामनास्तु द्वौ पुत्रौ जनयामास भारत। उशीनरं च धर्मज्ञं तितिक्षुञ्च महाबलम्" इत्युपक्रम्य। तितिक्षोस्तु प्रजाः शृणु" इति प्रतिज्ञाय। "तैतिक्षवोऽभवद्राजा पूर्वस्यां दिशि भारत। "उशद्रथो महाराज। फेनस्तस्य सुतोऽभवत्। फेनात्तु सुतपा जज्ञे सुतः सुतपसो बलिः। जातो मनुष्ययोनौ तु स राजा काञ्चनेषुधि। महायोगी स तु बलिर्बभूव न्टपतिः पुरा। पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि। अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च। पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते" इत्युक्त्वा "तेषां जनपदाः पञ्च अङ्गा वङ्गाः सुह्मकाः कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य वै शृणु" हरिवं० ३१ अ० उक्तम्। तेन कलिङ्गनृपाधिष्ठितत्वात् देशस्य तथात्वम्। काय सुखाय लिङ्गमस्याः। ८योषिति स्त्री हेम०। त्रिवृति ८(तेओडि) स्त्री शब्दच०।

कलिङ्गाद्यगुटिका स्त्री चक्रद०उक्ते औषधभेदे यथा "कलिङ्ग- बिल्वजम्ब्वाम्रकपित्थ सरसाञ्जनम्। लाक्षाहरिद्रे ह्रीबेरं कट्फलं शुकनासिकाम्। लोध्रं मोचरसं शङ्ख धातकीवटशुङ्गकम्। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेत्क्षौद्रं ज्वरातीसारशान्तये। रक्तप्रसादनार्थं ते शूलातिसारनाशनाः"।

कलिञ्ज पु० क वातं लञ्जति रोधनेन लजि—भर्त्सने अच् उप०स०। (दरमा) कटे हेमच०। तस्य स्वहाद्यावरणेन वातरोधमात्तथात्वम्।

कलित त्रि०कल—कर्मणि क्त। १विदिते२प्राप्ते,मेदि० ३भेदिते ४संख्याते, शब्दरत्ना०। ५स्फीते, ६उक्ते ७विचारिते, ८बद्धे च। भावे क्त ९ग्रासनमाभादौ न०।

कलिद्रुम पु०कलेराश्रयः द्रुम। १विभीतकवृक्षे रत्नमाला। तत्र हि नलस्य राज्यच्छिद्रान्वेषणाय कलिना सुचिरं स्थितमिति कलिमल्ह्लर्णित नैषधवाक्ये दृश्यम्। कलिवृक्षादयोऽप्यत्र

कलिन्द पु० कलिं ददाति द्यति वा खच् मुम् च। अद्रिविशेषे, यतो यमुना नदी नि सृता, "कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी" रसमञ्ज०। २विभीतकवृक्षे, राजनि०। ३सूर्य्ये भरत· तन्मूलं मृग्यम्।

कलिन्दकन्या स्त्री कलिन्दस्य पर्वतस्य कन्येव तत्र प्रभवत्वात्। यमुनायाम्। "कलिन्दकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति" रघु·। कलिन्दतनया कलिन्दजाकालिन्दगिरिजादयोऽप्यत्र।

कलिप्रिय पु० कलिः प्रियोऽस्य। नारदे शब्दर०।

कलिमारक पु० कलीनां कलिकानां मारः नाशः यत्र बस र वा कप् सञ्ज्ञाया कन्। १पूतिकरञ्जे स्वामी। 'वा न लस्य र'। कलिमालकोऽप्युक्तार्थे अमरटीकायां रमानाथः। [ राजनि०।

कलिमाल्य पु०कलीनां कलिकानां माल्यं यत्र ।१पूतिकरञ्जे

कलियुग न० कर्म०। राजशिरोवत् तत्पुरुषो वा। कलिरूपे युगे कालविशेषे तन्नामादिक कलिशब्दे उक्तं तदारम्भतिथिर्युगाद्या सा च गौडीयमते माघपौर्णमासी यथाह ति०त०

"अथ युगाद्या तासु च "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता"। इत्यनेन व्यवस्था। ब्रह्मपुराणे। "वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम्। कार्त्तिके शुक्लपक्षे तु त्रेताऽथ नवमेऽहनि। अथ भाद्रपदे कृष्णत्रयोदश्यां

द्वापरम्। माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम्। युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः”। अत्र वैशाखादयः पौर्णमास्यन्ता एव ब्रह्मपुराणे तथैव तिथिकृत्याभिधानात्। मत्स्यवाक्ये कार्त्तिके नवमेऽहनीत्यनेनैव सिद्धौ शुक्लपक्ष इति व्यर्थं स्यात् तेन भाद्रकृष्णत्रयोदशी अश्वयुक्कृष्णपक्षीयेति मैथिलोक्तं निरस्तम्। आसां प्रशंसामाह विष्णुपुराणम् “वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे। एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः। उपप्लवे चन्द्रमसोरवेश्च तथाष्टकास्वप्ययनद्वये च”। उपप्लवे ग्रहणे “पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः। श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत् पितरो वदन्ति”। स्नानमधिकृत्य भविष्ये “संवत्सरफलं तत्र नवम्यां कार्त्तिके तथा। मन्वादौ च युगादौ च मासत्रयफलं लभेत्”।

तदेतत् कल्पभेदेन व्यवस्थाप्य माघामावस्यैव कलियुगाद्येति दाक्षिणात्याः प्रतिपेदिरे यथाह नि० सि०

“रत्नमालायाम् “माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी। तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः। यत्तु गौडाः “माघस्य पूर्णिमायां तु घोरं कलियुगं स्मृतमिति” ब्राह्मोक्तेः “वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे” इति विष्णुपुराणे चकारेण तमिस्रपक्षानुषङ्गे च पूर्वानुरोधात् पूर्णिमास्यैव ज्ञेया। “द्वे शुक्ले” इत्यादिकन्तु निर्मूलमित्याहुः। तन्न “दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्” इति भविष्यविरोधात् एतेन ब्राह्मानुसारात् पूर्णिमायामेव युगादिश्राद्धं वदन् शूलपाणिः परास्तः। तेन कल्पभेदात् व्यवस्थेति तत्त्वम्। एतेन “कार्त्तिके नवमी शुक्ला माघमासे च पूर्णिमा” इति नारदीयं व्याख्यातम्। निर्मूलत्वोक्तिर्नारदीयाज्ञानकृता”। तत्र श्राद्धादिकरणस्य उभयदिने तत्प्राप्तौ निर्णयश्च नि० सि०।

“अत्र श्राद्धमुक्तं मात्स्ये “कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेदिति”। भारतेऽपि “या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः। स्नात्वा हुत्वा च दत्त्वा च जप्त्वानन्तफलं लभेदिति” श्राद्धेऽपि पूर्वाह्नव्यापिनी ग्राह्या “पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः। दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकी” इति प्राग्ब्रह्मोक्तेः। “द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः। शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके” हेमाद्रौ नारदीयवचनाच्च। दीपिकापि “अथो युगादि, मन्वादिकर्मतिथयः पूर्वाह्णिकाः स्युः सिते। विज्ञेया अपराह्णिकाश्च बहुले” इति। स्मृत्यर्थसारेऽपि “युगादिमन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या। कृष्णपक्षे पराह्णव्यापिनीति”। दिवोदासीये गोभिलः “वैशाखस्य तृतीया तु पूर्वविद्धां करोति वै। हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति”। गोविन्दार्णवेऽप्येवम्। तेनैव पूर्वाह्णव्यापिनी दिनद्वये सत्त्वे परैवेति धर्मतत्त्वविदो हेमाद्र्यादयः। अनन्तभट्टस्तु “सवैधृतिव्यतीपातो युगमन्वादयस्तथा। सम्मुखा उपवासे स्युर्दानादावन्तिमाः स्मृता” इत्याह। दानादाविति श्राद्धसंग्रहः। उपवासस्त्वत्र न ज्ञायते। यत्तु मार्कण्डेयः “शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः। कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत्”। रौहिणो नवमो मुहूर्त्तः। अत्र च शुक्लपक्षयुगादिश्राद्धं पूर्वाह्णे कार्यमिति शूलपाणिः। निर्णयामृतादयस्तु “कालादर्शे अमाश्राद्धमापराह्णिकमुक्त्वा एवमन्वादीनां युगादीनां निर्णय इत्युक्तत्वात् द्वे शुक्ले इत्यादि वचनं विष्णुपूजाविषयम्। श्राद्धे त्वापराह्णिकैवेति व्यवस्थां जगदुः। सेयं पूर्वोक्तानेकवचोविरोधात् स्वाच्छन्द्यविलसितमित्युपेक्षणीया। “पूर्वाह्णे दैविकं कुर्यात्” इत्यादिवचनादेव तत्सिद्धे र्वचनवैयर्थ्याच्च। किञ्च कालादर्शोक्तिर्न्यायमूला वचोमूला वा नाद्यः युगादिश्राद्धस्यामाश्राद्धविकृतित्वेन न्यायतो पराह्णव्याप्तावपि वचनेन तस्य बाधात्। नान्त्यः अतिदेशादेवापराह्णव्याप्तिप्राप्तेर्वचनवैयर्थ्यात् “अप्राप्ते शास्त्रमर्थवदिति” न्यायात् तेन यदि कालादर्शोक्तेः कथञ्चिच्छ्लाघ्येन समाधित्सा तर्हि न्यायप्राप्तकृष्णपक्षयुगादिविषयत्वेन सा व्यवस्थापनीयेति दिक्”। युगादिकञ्च मलमासेऽपि कार्य्यम् “दर्शहराश्च गोत्कर्षचतुर्ष्वपि युगादिषु। उपाकर्मणि चोत्सर्गे ह्येतद्दृष्टं व्रतादितः” हेमाद्रौ ऋष्यशृङ्गवचनात् एतत् दर्शहरादिकम्। “अब्दोदकुम्भमन्वादिमहालययुगादि च। मलमासे न कर्त्तव्यम्” कालादर्शवाक्याच्च महालयोऽत्र मघात्रयोदशीति बोध्यम्। स्मृतिचन्द्रिकायां तु मासद्वयेऽपि कर्त्तव्यमित्युक्तम्

सुधान्तायां गीतम् । शशिध्वजकन्यया कल्केर्विवाहः । शशिध्वजस्य हरिभक्तिकारणम् । शशिध्वजस्य पूर्व्वजन्मवृत्तान्तकथनम् । भक्तिलक्षणम् । हरिभक्तस्य सर्व्वपापप्रवृत्तिकारणम् । द्विविदोपाख्यानम् । कृष्णावतारवृत्तान्तं । कल्केः काञ्चनपुर्य्यां प्रवेशः । विषकन्यासंवादः । कल्केरनुचराणां पृथक् पृथक् राज्येऽभिषेकः । कल्केः शम्भले प्रतिगमनम् । सत्ययुगप्रवर्त्तनम् । मायास्तवः । विष्णुयशसो राजसूयवशारम्भः । नारदस्यागमनम् । मायाजीवयोः कथोपकथनम् । विष्णुयशसो वनगमनम् । परशुरामस्यागमनम् । रुक्मिण्या व्रतकथनम् । कल्केः पत्नीभिर्विहारः । शम्भले देवानामागमनम् । कल्केः स्वर्गारोहणम् । गङ्गास्तोत्रम् । कल्किपुराणस्यानुक्रमणिका । कल्किपुराणश्रवणादिफलम्" ।

कल्प पुं० कल्पते समर्थो भवति स्वक्रियायै विश्वसर्जनाय असमर्थो भवति वाऽत्र, कृपू सामर्थ्ये विश्वसर्जनाय असामर्थ्ये वा आधारे घञ् कल्पयति सृष्टिं विनाशं वात्र कृप-णिच्-आधारे अच् । ब्रह्मणो रात्रिरूपे जगतां चेष्टाराहित्यसम्पादके १प्रलये २तस्य दिनरूपे जगतां चेष्टासम्पादके च कालभेदे । "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति" मनुना जगच्चेष्टातद्राहित्ययोर्ब्रह्माहोरात्रयोरुक्तेस्तथात्वम् ।

कश्चिन्मते दर्शितवाक्येन युगमानसंख्या कल्पमानं प्रदर्श्य ब्रह्मणः आयुःपरिमाणं तस्य शतायुःकालश्च सू० सि० उक्तो यथा—

"युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते । कृताब्दसंख्यस्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः" सू० । "युगानां सैका सप्ततिरेकसप्ततिर्महायुगमित्यर्थः । इह—भूर्लोके । मन्वन्तरं मन्वारम्भतत्समाप्तिकालयोरन्तरकालमानमित्यर्थः । मूर्त्तकालमानभेदाभिधं कथ्यते । तस्य मनोरन्ते विरामे जाते सति कृताब्दसंख्यः सद्युक्तकृतयुगवर्षमितः सन्धिः कालविशेषः प्रकर्षेण द्वितीयमन्वारम्भपर्य्यन्तं भूम्यादिमनोरन्तिमादिसन्धिरूपैककालेन कथितः । तदुक्तरूपमाह "जलप्लव इति । जलपूर्णा सकला पृथ्वी तस्मिन् लोकसंहारकाले भवति । अथ कल्पप्रमाणं सविशेषमाह" रङ्ग० । "ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्द्दश । कृतप्रमाणः कल्पादौ सन्धिः पञ्चदश स्मृतः" सू० । "ते एकसप्ततियुगरूपा मनवः स्वायम्भुवाद्याः ससन्धयः सन्धिसहिताश्चतुर्द्दशसंख्यकाः कल्पकाले ज्ञातव्याः । सन्धियुक्तचतुर्द्दशमनुभिः कल्पः स्यादित्यर्थः । ननु मन्वन्तरे कल्पमानं युगसहस्रं त्वया तु युगमानमेकसप्ततिगुणं मनुमानं ३०६७२०००० कृताब्द १७२८००० युक्तं ससन्धिमनुमानं ३०८४४८००० इदं चतुर्द्दशगुणं ४३१८७२००० कल्पप्रमाणं तत्र न्यूनं युगसहस्रमित्यत आह । कृतप्रमाण इति । कल्पादौ प्रथममन्वारम्भे कृतयुगवर्षमितो मनोश्चतुर्द्दशत्वेऽप्याद्यः पञ्चदशकः सन्धिः कालज्ञै-रुक्तः । तथा च कृतवर्षमन्तरं प्रथममन्वारम्भ इति तद्वर्षयोजनेनाविरोध इति भावः । अथ ब्रह्मणो दिनरात्र्योः प्रमाणमाह" रङ्ग० । "इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहः प्रोक्तं शर्व्वरी तस्य तावती" सू० । "इत्थं पूर्व्वोक्तप्रकारसिद्धेन युगसहस्रेण भूतसंहारकारको लयात्मकः कल्पकालो ब्राह्मं ब्रह्मणः सम्बन्ध्यहः दिनं कालज्ञैरुक्तम् । तस्य ब्रह्मणस्तावती दिनपरिमिता शर्व्वरी रात्रिः । कल्पद्वयं तदहोरात्रमिति फलितार्थः । अथ ब्रह्मण आयुःप्रमाणमतीतवयःप्रमाणं चाह" रङ्ग० । "परमायुः शतं तस्य तयाहोरात्रसंख्यया । आयुषोऽर्द्धमितं तस्य शेषकल्पोऽयमादिमः" सू० । परमपरं शृणु पूर्व्वोक्तं त्वया श्रुतमपरं च वक्ष्यमाणं शृणु त्वम् । यद्वा परमेति दैत्यपरार्थकं सम्बोधनम् । त्वं तस्य ब्रह्मणस्तया पूर्व्वोक्तयाहोरात्रमित्या कल्पद्वयरूपया शतं शतवर्षपरिमितमायुः शरीरधारणकालं जानीहि । एतदुक्तं भवति । अहोरात्रमानात् पूर्व्वपरिभाषया (३०) मासमानं तस्मात् पूर्व्वोक्तपरिभाषया(१२)ब्रह्मणो वर्षमानमेतच्छतसंख्यया ब्रह्मायुरिति । न तु यथाश्रुतार्थेन कल्पशतद्वयमायुः, कीटादीनामपि दिनसंख्यायुषोऽनुक्तेः सुतरां ब्रह्मणः शतदिनात्मकायुषोऽसम्भवात् "निजेनैव तु मानेन आयुर्वर्षशतं स्मृतम्" इति विष्णुपुराणोक्तेश्च । एतेन परमार्द्धैकं पदमिति निरस्तम् ब्रह्मणोऽनियतायुर्दायासम्भवात् । तस्य ब्रह्मण आयुः शतवर्षरूपमस्यार्द्धं पञ्चाशद्वर्षपरिमितमितं गतम् । अयं वर्त्तमानः आदिमः प्रथमः शेषकल्पः शेषायुर्दायस्य ब्रह्मदिवस उत्तरार्द्धस्य प्रथमदिवसो वर्त्तमान इति फलितार्थः । अथ वर्त्तमानेऽस्मिन् दिवसेऽप्येतावद्गतमित्याह" रङ्ग० । "कल्पादस्माच्च मनवः षड् व्यतीताः ससन्धयः । वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः" सू० । "अस्माद्वर्त्तमानात् कल्पात् ब्रह्मदिवसात् षट्संख्याका मनवः एकसप्ततियुगरूपाः ससन्धयः सप्तभिः सन्धिभिः कृतयुगप्रमाणैः सहिता

व्यतीता गताः। चकारश्चायुषोऽर्द्धमितमिति प्रागुक्तेन समुच्चयार्थकः। वर्त्तमानस्य सप्तमस्य मनोर्वैवस्वतास्यस्य युगानां त्रिपञ्चत्रयाणां पञ्च स्थानत्रयस्थिततुल्यानां घातः सप्तविंशतिसङ्ख्यात्मको गतः। सप्तविंशतियुगानि गतानीत्यर्थः। च समुच्चये। अथ वर्त्तमानयुगस्यापि गतमेतादिति यदन्नमभिमतकालेऽयतो वर्षगणः कार्य्य इत्याह” रङ्ग०। “अष्टाविंशाद् युगादस्माद्यातमेतत् कृतं युगम्। अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डयेत्” सू०। “अष्टाविंशतितमाद्वर्त्तमानान्महायुगादेतदल्पकालेन पूर्व्वकाले साम्प्रतं स्थितं कृतं युगं गतम्। अतः कृतयुगान्तानन्तरमभिमतकाले कालं वर्षात्मकं प्रसङ्ख्याय गणयित्वा सङ्ख्या पञ्चस्थानस्थिता भिन्नामेकत्रैकस्थाने पिण्डयेत् सङ्कलनविधया कुर्य्यात्। सर्वेषां गतानां योगं कुर्य्यादित्यर्थः” रङ्ग०।

मासस्य त्रिंशत्तिथ्यात्मकतया ब्रह्ममासस्य त्रिंशत्कल्पघटितत्वात् तेषां कल्पानां नामानि हेमा० दा० मात्स्ये चाह च

“कल्पानुकीर्त्तनं वक्ष्ये सर्व्वपापप्रणाशनम्। यस्यानुकीर्त्तनादेव वेदपुण्येन युज्यते। प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः। वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः। रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः। सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते। सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः। ध्यान एकादश प्रोक्तः तथा सारस्वतोऽपरः। त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः। कौर्म्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः। षोडशो नारसिंहस्तु समानस्तु ततः परः। आग्नेयोऽष्टादश प्रोक्तः सोमकल्पस्तथाऽपरः। मानवो विंशतिः प्रोक्तस्तत् पुमानिति चापरः। वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः। चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः। पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः। सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः। माहेश्वरस्तत प्रोक्तो त्रिपुरो यत्र घातितः। पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणः स्मृता। इत्येवं ब्रह्मणो मासः सर्वपापप्रणाशनः। आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते। तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा”।

तदारम्भकालश्च ब्रह्मसिद्धान्ते उक्तः “चैत्रसितादेर्भानोर्दिने मासयुगकल्पाः। सृष्ट्यादौ लङ्कायामिह प्रवृत्ताः दिनैः सह” चैत्रसितादेः चैत्रशुक्लप्रतिपदमारभ्येत्यर्थः। ब्रह्मपु० “चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति। प्रवर्त्तयामास तदा कालस्य गणनामपि” इति कालगणनारम्भस्य तत आरम्भोक्तेः” एवं चैत्रशुक्लप्रतिपदि कल्पारम्भेऽपि “माघशुक्लतृतीयायां कृष्णायां फाल्गुनस्य च। पञ्चमी चैत्रमासस्य तथैवाद्या तथा परा। शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी। नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम्। कल्पानामाद्यो ह्येता दत्तस्याक्षयकारकाः” वाराहवाक्यानि यदि सन्ति तदा कल्पभेदादविरुद्धानि कल्पादित्वेन तत्कर्त्तव्ये श्राद्धकर्त्तव्यतोपयोगिपारिभाषिकत्वपरतया वा समर्थनीयानि। अतएव सू० सि० सुरासुराणामन्योन्यमहोरात्रविपर्य्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्। मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् न तत्र। द्युनिशोर्भेदो ब्राह्मं कल्पं प्रकीर्त्तितं, इत्यादिना युगमन्वन्तरकल्पानां सौरत्वेनोक्तिः। सौरमाने च नियतयुगादिकालेषु अनियततिथित्वेऽपि सर्वेषां कल्पानामादौ चैत्रसितादितिथिरेव नियता प्रागुक्तवचनप्रामाण्यात्। किन्तु प्रागुक्तमात्स्ये ब्राह्मकल्पानां चान्द्रत्वोक्तेः चान्द्रत्वमपि तेन तिथिभेदसम्भवः सू० सि० वाक्यं तु पक्षान्तरीकरणोपयोगीत्यविरोधः।

अत्र तिथिद्वैधे युगादिवत् व्यवस्था। कृप-णिच्-भावे अच्। २स्मृतौ ३विकल्पे च इति कर्त्तव्यतायुक्ते ४विधाने च। “प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते” मनुः। कल्पोविधानमस्यास्ति अर्श आदित्वादच्। ५उचिते त्रि० माघत। कल्प्यतेऽनुष्ठीयतेऽनेन करणे अच्। ६वैदिकविधानप्रापके शास्त्रभेदे स च आश्वलायनापस्तम्बबौधायनकात्यायनादिकृतात्मकः। तस्य यथोपयोगिता तथोक्तं कात्यायनाख्ये ऋग्वेदभाष्योपोद्घाते यथा—

“कल्पसूत्रमाश्वलायनापस्तम्बबौधायनादिकृतं, कल्प्यते समर्थ्यते यागप्रयोगोऽनेनेति व्युत्पत्तेः। ननु कल्पसूत्रं किं मन्त्रकाण्डमनुसृत्य प्रवृत्तम्? किं वा ब्राह्मणमनुसृत्य? नाद्यः “दर्शपूर्णमासौ तु पूर्वं व्याख्यास्याम” इत्येवं तेनोपक्रान्तत्वात् न ह्यग्निमीळे इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः “आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपन्ति दीक्षणीयायाम्” इत्येवं दीक्षणीयेष्टेर्ब्राह्मणे प्रक्रान्तत्वात्। अत्रोच्यते—मन्त्रकाण्डोक्तक्रमादिरूपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण

ब्रह्मयज्ञ एव विहितः "यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञम्" इति सोऽयं ब्रह्मयज्ञ जपोऽग्निमीळे इत्याम्नायक्रमेणैवानुष्ठेयः तथा "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचःस्तोमे पारिप्लवं शंसतीति" विधीयते तथा "आश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति" विधीयते तथा "रिच्यत इव वा एष प्रेव रिच्यते यो याजयति यो वा प्रतिगृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिःस्वाध्यायं वेदमधीयीतेति" प्रायश्चित्तरूपं वेदपारायणं विहितम् इत्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु संप्रदायपारम्पर्यागत एव क्रम आदरणीयः। विशेषविनियोगस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनो दर्शयति अतो मन्त्रकाण्डक्रमाभावेऽपि न कश्चिद्विरोधः। इषे त्वेत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रान्ता तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वादाश्वलायनस्यादौ तद्व्याख्यानं युक्तम् अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति तर्हि "प्र वो वाजा" इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनोऽब्रवीत् "नमः प्रवक्त्रे" इत्यादयस्तु नाम्नाताः कुतो विनियुज्यन्ते? इति चेत् नायं दोषः शाखान्तरसमाम्नातानां ब्राह्मणान्तरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात् सर्वशाखाप्रत्ययमेकं कर्मेति न्यायविदः, तस्मादृक्शाखीयः कल्पोऽप्यपेक्षित"।

काण्वा०व्या०कर्केण कल्पशास्त्रप्रयोजनमित्थं दर्शितं यथा— "इह पुण्यो वै पुण्येन कर्मणा भवति" "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनेति" "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादिभिर्वाक्यैः कर्मणां स्वर्गापवर्गादिश्रेयःसाधनत्वं प्रतीयते। तानि चाग्निहोत्रादिकर्माणि वेदवाक्यैकवेद्यानि। वेदवाक्यानि चानेकशाखावस्थिततया स्वतश्च प्रतिवाक्यं नानाविधपरस्परविरुद्धार्थस्फुरणेन दुर्बोधार्थानि बहुभिरर्थवादवाक्यैर्मिश्रितानि च तथाहि "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यत्र किं स्वर्गो होमाय, उत होमः स्वर्गाय, तथा अग्निहोत्रशब्दो गुणविधानार्थो नामधेयं वेति तथा "स वै संवत्सरं दीक्षाभिरेति" इत्यादौ कश्चित् संवत्सरशब्दस्य मुख्यार्थत्वम् अहस्सु संवत्सरादौ तस्यैव गौणत्वम्। अर्थवादादिभिश्च पाठात् विध्यर्थवादसन्देहोऽपि भवति किमयं विधिः? उतार्थवादः? इति यद्यपि जैमिनिशबरस्वामिकुमारिलभट्टप्रभृतिभिर्मीमांसायां तानि वाक्यानि संदेहनिरासपूर्वकं यथार्थं व्याख्यातानि सन्ति। अधीतशास्त्राणां च तदर्थावगमोऽपि सुकर एव, तथापि तेषां नानाशाखाव्यवस्थितत्वेनेदानीन्तनैः सर्वैः पुरुषैरध्येतुं ज्ञातुं वाऽशक्यत्वात्तदधीनं कर्मणां ज्ञानं दुःशक्यमिदानीन्तनानामिति मत्वा परमकारुणिको भगवान् कात्यायनाचार्यो नानाशाखागतविधिवाक्यसंग्रहरूपं कल्पसूत्रं प्रणीतवान्"। तत्र प्रतिपाद्यविषयाः कात्यायनशब्दे वक्ष्यन्ते

आर्षेयकल्पसूत्रविषयाश्च "अथार्षेयकल्पो व्याख्यातव्यः" इत्युपक्रम्य सर्वक्रतुप्रकृतिभूतस्य त्रिपर्वणो ज्योतिष्टोमस्य सर्वाहर्गणप्रकृतिभूतस्य व्यूढस्य द्वादशाहस्य च ब्राह्मणवाक्येनैव प्रयोगो दर्शितस्तदुपजीवनेन क्रत्वन्तराणि प्रयोक्तव्यानीति दर्शयितुमादौ ऋत्विग्वरणादिकमभिधाय १प्र० "क्लृप्तो ज्योतिष्टोमोऽतिरात्रः षोडशिकः" इत्यादिना सौभरस्य इड्यमित्यन्तेन सामविशेषयुक्तस्य प्रायणीयस्य प्रयोगो दर्शितः। ततः "उपास्मै गायता नरः" इत्यादिना अभिप्लवस्य प्रथमाहस्य। "पवस्व वाचः" इत्यादिना द्वितीयाहस्य। "दविद्युतत्या रुचा" इत्यादिना तृतीयाहस्य। "पवमानो अजीजनत्" इत्यादिना चतुर्थाहस्य। "पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य। "असृत प्रवाजिनः" इत्यादिना षष्ठाहस्य। "पृष्ठ्यः षडहः समूढो वा व्यूढो वा" इत्यादिना पृष्ठ्यषडहस्य लक्षणं प्रयोगः। एवम् चतुर्थस्याह्न इत्यादिना उत्तरत्र्यहकल्पः। २प्र० "पवस्व वाचो अग्रियः" इत्यादिना अभिजितोऽह्नः कल्पः। "उपास्मै गायता नरः" इत्यादिना स्वरसाम्नां प्रथमस्य [illegible] ऽपि

व." इत्यादिना [illegible] द्वितीयस्य [illegible] "

इत्यादिना [illegible]

[illegible]

जामयः" [illegible]

जनिमम्" [illegible]

प्रिय." इत्या[illegible]

इत्यादिना [illegible]

इत्यादिना [illegible] ोः,

महाव्रतस्य। "

वाहस्य। "एवैवोत्तरस्य तृप्तिः" इत्यादिना द्वितीयतृतीययोः। "उपास्मै गायता नर" इति चतुर्थस्य। "उपास्मै गायता नर" इत्यादिना प्रथमसाद्यस्कस्य। "एवैवोत्तरस्य तृप्तिः" इत्यादिना साद्यस्क्रियस्य। "पवमानस्य जिघ्नते" इत्यादिना श्येनरूपसाद्यस्कस्य। "उपास्मै गायता नरः" इत्यादिना एकत्रिकसाद्यस्कस्य। ज्योतिष्टोमवहिष्पवमानमित्यादिना प्रथमव्रात्यस्तोमस्य। "एते असृग्रमिन्दवः" इत्यादिना द्वितीयतृतीयव्रात्यस्तोमयोः। "अपिबवती प्रतिमत्" इत्यादिना चतुर्थव्रात्यस्तोमस्य। "अग्न! आयूंषि पवस" इत्यादिना प्रथमस्याग्निष्टुतः। "एवैवोत्तरत्र तृप्ति" इत्यादिना द्वितीयतृतीयचतुर्थानामग्निष्टुताम् प्रजापतेरपूर्वस्य उद्भवतिसवस्य, इषुनामकयज्ञस्य च। "प्र सोमासो अधन्विषुः" इत्यादिना सर्वस्वारस्य।

४प्र०। "अग्न! आयूंषि पवसे" इत्यादिना वैश्वदेवसाहस्रप्रथमिकैकाहस्य। "कया त्वं न ऊत्या पवस्व" इत्यादिना साहस्रप्रथमिकद्वितीयाहस्य। "उप त्वा जामयोगिर" इत्यादिना याकमेधप्रथमाहस्य। "इन्द्राग्नेन्द्रो! मदत्वते" इत्यादिना तदीयद्वितीयाहस्य। "विश्वकर्मन् हविषा" इत्यादिना तदीयतृतीयाहस्य शुनासीरीयस्य च। "प्रत्नेन्द्रो! इत्यादुत" इत्यादिना उपहवस्य। "द्वितीयस्य स्वरसाम" इत्यादिना ऋतपेयदूणाशवैश्यस्तोमतीव्रसुद्राजपेयेषु प्रत्यवरोहणीयाभ्यारोहणीययोः कल्पः। "वायोः शुक्रो अयामि ते" इत्यादिना अभिषेचनीयस्य। "राजा मेधाभिरीयते" इत्यादिना दशपेयस्य। "केशवपनाय व्युष्टिद्विरात्र" इत्यादिना तदीयद्वितीयाहस्य। इत्थं चतस्य धृतेश्च। एवमुक्तमेव सप्रवत्यस्य वाजपेयस्य च।

५प्र० "राजा मेधाभिरीयते" इत्यादिना राड्विराड्-उपपदाम्। "रौरवयौधाजये" इत्यादिना ध्रुवस्तोमस्य च चतुष्टोमस्य च। "उपोषु जात" इत्यादिना उद्भिद्बलभिदोरपचितेश्च। "साहस्रं वहिष्पवमानम्" इत्यादिना सर्वस्तोमोपचितेरग्नेः स्तोमयोश्च। "पुनानः सोम धारया" इत्यादिना प्रथमगोसवमरुत्स्तोमानामिन्द्राग्न्योः कुलायाय। "इन्द्रायेन्द्रो! मरुत्वते" इत्यादिना इन्द्रस्तोमस्य। "पवस्व वाचो अग्रियः" इत्यादिना इन्द्राग्न्योः स्तोमस्याद्यविकल्पस्य च। "पवस्व वाचो अग्रिय" इत्यादिना द्वितीयविकल्पस्य। "महं वहाक्ष्यवहिष्पवमानम्" इत्यादिना एकाहसाध्यानां कल्पः। एते एकाहसाध्या इत्युक्तिः।

६प्र०। "तृप्तो ज्योतिष्टोमोऽतिरात्रोऽग्नीषोमीय" इत्यादिना ज्योतिष्टोमातिरात्रस्य, आङ्गिरसद्विरात्रे, सर्वस्तोमाप्तोर्यामस्य, नवसप्तदशस्य, विषुवत गो-आयुष विश्वजिदभिजितोः एकस्तोमानाञ्च प्रथमाहस्य कल्पः। "गौराश्वसहिष्पवमानम्" इत्यादिना, उक्तानां ज्योतिष्टोमातिरात्रादीनां द्वितीयतृतीयचतुर्थाहानाम् एकस्तोमानामाङ्गिरसचैत्ररथकापिवनरूपाणां द्विरात्राणां च कल्पः। "अभिप्रवस्य प्रथमस्याह्न" इत्यादिना गर्गत्रिरात्रे प्रथमाहस्य। "उपोषु जातम्" इत्यादिना तत्र द्वितीयाहस्य। "पवस्व वाच" इत्यादिना तत्र तृतीयाहस्य कल्पः। "पवस्व वाज सातये" इत्यादिना अश्वमेधत्रिरात्रस्य। "प्रसोमासो विपश्चित" इत्यादिना वैदत्रिरात्रस्य। "सावत्सरिकस्य त्रिवृत" इत्यादिना, छन्दोमपवमानत्रिरात्रस्य। ये गर्गत्रिरात्रस्येत्यादिना अन्तर्वसुपराकत्रिरात्रयोः कल्पः।

७प्र०। "उपास्मै गायता नर" इत्यादिना चतुरहप्रथमाहस्य। "पवस्व वाचो अग्रिय" इत्यादिना तदीयद्वितीयाहस्य। "दविद्युतत्या रुचा" इत्यादिना तृतीयाहस्य। "पवमानो अजीजनत्" इत्यादिना चतुर्थाहस्य। "उपोषु जातम्" इत्यादिना जामदग्न्यचतुरहस्य। "या जामदग्नस्य" इत्यादिना वाशिष्ठचतुरहस्य। "प्रसोमासो विपश्चितः" इत्यादिना जाक्रचतुरहस्य। "वैश्वामित्रोऽहः" इत्यादिना देवपञ्चरात्रस्य तस्यान्यामह्नाम्। "पवमानो अजीजनत्" इत्यादिना तदीयचतुर्थाहस्य। "पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य कल्पः। "एष चतुरहोऽयोदेवानाम्" इत्यादिना पञ्चशारदीयव्रतमध्ये। "पृष्ठ्यः षडहः समूढो व्यूढो वा" इत्यादिना ऋतुषडहायुष्कामपृष्ठ्यावलम्बनाना षडहानाम्। "एष एव षडहो यः ऋतूनाम्" इत्यादिना सप्तर्षीणां प्रजापतेः छन्दोगाना जमदग्नेरिन्द्रस्य च पञ्चसप्तरात्राणाम्। "या देवानां पञ्चरात्रस्य" इत्यादिना जनकसप्तरात्रस्य। "एष एव षडहोऽयः ऋतूनाम्" इत्यादिना पृष्ठ्यस्तोमस्य सप्तरात्रस्य अष्टरात्रनवरात्रयोश्च कल्पः।

८प्र०। "अग्न आयूंषि पवस" इत्यादिना त्रिककुद्दशरात्रस्य द्वयोरह्नोः। "दविद्युतत्या रुचा" इत्यादिना तदीयतृतीयाहस्य। "पवमानो अजीजनत्" इत्या-

दिना चतुर्थाहस्य ।"पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य ।"अस्तृतस प्रवाजिनम्" इत्यादिना षष्ठाहस्य । "ये सोमासः परावति" इत्यादिना सप्तमाहस्य।"पवमाना असृक्षत" इत्यादिना अष्टमाहस्य ।"उपोषु जातम्" इत्यादिना नवमाहस्य विश्वजिदतिरात्रस्य च कल्पः।"या इन्द्र-स्पतिस्तस्य या कुसुरुविन्दस्य" इत्यादिना कुसुरुविन्दुदशरात्रस्य ।"पृष्ठ्यावलम्बस्य पञ्चाह" इत्यादिना छन्दोमदशरात्रस्य । "त्रिष्टोमोऽग्निष्टोमोयत्" इत्यादिना देवपूर्दशरात्रस्य पुण्डरीकैकादशरात्रस्य च कल्पः । इत्येते अहर्गणसाध्यत्वात् अहीना इत्युच्यन्ते इत्युक्तिश्च ।

६प्र०।"द्वादशरात्रस्य षोडशिमन्तावतिरात्रौ" इत्यादिना त्रयोदशरात्रयोर्द्वयोः, ततोयषड्विंशतिरात्रस्य, चतुर्दशरात्राणां त्रयाणां, पञ्चदशरात्राणां चतुर्णाम्, षोडशरात्रस्यैकस्य च कल्पः । एते सत्रसंज्ञा इत्युक्तिश्च ।"सप्तदशरात्रे चत्वार्य्यभिप्लवकान्यहानि" इत्यादिना सप्तदशरात्रस्य, अष्टादशरात्रस्य,एकोनविंशरात्रस्य च ।"विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितौ" इत्यादिना विंशतिरात्रस्य । एकविंशतिरात्रयोर्द्वयोः, त्रयोविंशतिरात्रस्य, चतुर्विंशतिरात्रसम्बन्धिपृष्ठ्यातिरात्रयोश्च कल्पः । "पवस्वेन्दो । वृषा सुतः" इत्यादिना त्रयोविंशतिरात्रस्य। "उपास्मै गायता नरः" इत्यादिना तदीयप्रथमविंशाहस्य । "एष उस्यवृषा रथम्" इत्यादिना तदीयद्वितीयप्रभृतिविंशाहस्य, चतुर्विंशतिरात्रस्य च कल्पः। तत्रैकोत्तरवृद्ध्यावृद्धी इत्युक्तिश्च ।"नानाप्रत्नसाम्नामतिरात्रः" इत्यादिना नानाप्रत्नसामादीनां त्रयाणां त्रयस्त्रिंशद्रात्राणाञ्च तत्र च एकोत्तरवृद्धिं सप्तत्युक्तिश्च । "विधृतीनां ज्योतिष्टोमोऽतिरात्रोऽभ्यारम्भ" इत्यादिना विधृतीनाम् ।"पृष्ठ्यः षडहः समूढोसा" इत्यादिना, च विधृतीनाम् ।"यमातिरात्राच्च गोष्टोमस्य" इत्यादिना यमातिरात्रप्रभृतीनां सत्राणाम्, एकपञ्चाशद्रात्रस्य, एकषष्टिरात्रस्य, शतरात्रस्य सांवत्सरिकस्य गवामयनस्य च कल्पः ।

१०प्र० "मध्ये पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना मध्ये पृष्ठ्यस्य, क्लृप्तानां व्यूढाग्निष्टोमेभ्य आद्वितीयादह्नः कल्पः। "द्वितीयस्याह्नः" इत्यादिना तत्रैव द्वितीयाहादि पञ्चाहानामह्नाम् ।"सप्तमस्याह्नः" इत्यादिना सप्तमप्रभृतीनां त्रयाणामह्नाम् ।"दशमस्याह्नः सर्वानाम्" इत्यादिना दशमाहप्रभृतिक्लृप्तस्य छन्दोमदशाहस्य अर्हगणस्य । "अस्य प्रत्ना मनुद्युतम्" इत्यादिना छन्दोमदशाहप्रथमाहस्य। "पवस्व वाचो अग्रियः" इत्यादिना छन्दोमद्वितीयाहस्य । "दविद्युतत्या रुचा" इत्यादिना छन्दोमतृतीयाहस्य । "पवमानो अजीजनत्" इत्यादिना छन्दोमचतुर्थाहस्य । "उत शुष्मास" इत्यादिना तदीयपञ्चमषष्ठयोरह्नोः । "ये सोमासः परावति" इत्यादिना तत्र सप्तमाहस्य । "हिन्वन्ति सूरमुस्रयः" इत्यादिना तत्र अष्टमाहस्य । "उपोषु जातम्" इत्यादिना नवमदशमयोरह्नो कल्प ।

११प्र०"पुरस्तात् पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना पुरस्तात् पृष्ठ्यस्य, त्रिरात्राभिप्लवस्य, गोः, आयुषश्च कल्पः।"अस्य प्रत्नामनुद्युतम्" इत्यादिना द्वितीये छन्दोमे प्रथमाहस्य । "पवस्व वाचो अग्रियः" इत्यादिना तत्र द्वितीयाहस्य । "दविद्युतत्या रुचा" इत्यादिना तत्र तृतीयाहस्य। "वृषा नु सतवसे" इत्यादिना तत्र चतुर्थपञ्चमयो षष्ठस्य च । "ये सोमासः परावति" इत्यादिना सप्तमादिदशमान्तानां, महाव्रतस्यातिरात्रस्य च कल्पः । "विधृतिभिः क्लृप्तम्" इत्यादिना दृतिवातवतोरयनयोः, कुण्डपायिनामयनानां, द्वादशसंवत्सरस्य, षड्विंशतिसंवत्सरस्य, शतसंवत्सरस्य, अग्नेः सहस्रसाध्यायनस्य च । "प्रथमस्य सारस्वतस्य षोडशिमन्तावतिरात्रौ" इत्यादिना त्रयाणां सारस्वतीनां, दार्षद्वतेरयोः, सर्पसत्रातिरात्रयोः दृशि प्रथमस्य च कल्पः । "पवस्व वाचो अग्रिय" इत्यादिना दृशि द्वितीयस्य,तत्र उत्तरपक्षसाद्वे विपर्य्यासस्य च कल्पः। इत्येवं यागविशेषे दिनभेदे सूक्तपाठादिप्रयोगो दर्शितः। अन्येषु आश्वलायनसूत्रादिग्रन्थेषु तेषु प्रतिपाद्यविषयाश्च तत्तच्छब्दे दृश्याः । कल्पश्च वेदाङ्गभेदः तन्मूलमङ्गशब्दे ७२ पृ० शिक्षादिवाक्यसमम् तत्र "हस्तौ कल्पोऽथ पठ्यते" इत्यत्र वैदिककर्म्मणां विधानशास्त्रस्य कल्पग्रन्थाधीनत्वात् कर्म्मसाधनत्वेन हस्तसादृश्याद्धस्तता । पितृकल्पः श्राद्धकल्पः मधुकल्पइत्यादि "कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्" रघु । अनुष्ठाने । "वैश्यस्यौषधकल्पश्च" मनुः । अपूर्वपदः कल्पमत्ययनिष्पन्नस्तु ईषदसमाप्तप्रकृत्यर्थे । "एते प्रदीपकल्पाः परस्परविलक्षणगुणविशेषा" सा० द० । "कार्य्यं त्वया नः प्रतिपन्नकल्पम्" कुमा० ।

"श्राद्धकल्पात्मकश्च यजुर्वेदपरिशिष्टभाग यजुर्वेदशब्दे विवृतिः । अथर्ववेदस्यांशभेदरूपकल्पस्तु पञ्चविधः । "नक्षत्रकल्पोवेदानां संहितानां तथैव च । चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः." विष्णुपु० । हेमा० दा०देवीपुराणे च "पञ्च कल्पा भवन्ति नक्षत्रकल्पो

वैताम संहिताविधिराङ्गिरस· शान्तिकल्पश्च आथर्वण·” इति ।

**कल्पक** त्रि॰ कल्पयति रचयति आरोपयति वा क्लृप–णिच्–ण्वुल् । १रचके २आरोपके च ।३कर्चूरे(कचूर)भावप्र॰ ४नापिते पु॰ शब्दमाला तस्य केशवेशरचकत्वात् तच्छेदकत्वात् वा तथात्वम् । कल्प+स्वार्थे कन् । ४कल्पशब्दार्थे च

**कल्पकारः** पु॰कल्पं कल्पसूत्रं करोति कृ–ण्वुल् ।१कल्पसूत्रकारकेषु आश्वलायनादिषु कल्पं वेशं करोति अण् । २वेशादिकारके त्रि॰२नापिते पु॰ण्वुल् । कल्पक इत्यप्यत्र

**कल्पक्षय** पु॰ कल्पस्य क्षयः रचनाविशेषस्य क्षयोयत्र । प्रलये । “पुरा कल्पक्षये वृत्ते जातं जलमयं जगत्” हरिवंकथा । “कल्पक्षये पुनस्ते तु प्रविशन्ति परं पदम्” विष्णुपुरा॰ ।

**कल्पतरु** पु॰ कर्म्म॰ राजशिरोवत् त॰ वा । १देवतरुभेदे कल्पपादपशब्दे विवृतिः । “आसीत् कल्पतरुच्छायानाश्रिता सुरभिः पथि” “मेरौ कल्पतरोरिव” रघु । “निगमकल्पतरोर्गलितं फलम्” भाग॰१,१,२ । २स्मृतिनिबन्धभेदे शारीरकसूत्रभाष्यटीकाभामतीव्याख्याम् रूपे ३ग्रन्थे च

**कल्पद्रुम** पु॰ कर्म्म॰ राजशिरोवत् त॰ वा । देवतरुभेदे । स कल्पविषयफलदातृत्वाच्च तस्य कल्पद्रुमत्वम् “अनुकूलयतोन्द्रोऽपि कल्पद्रुमविभूषणैः” कुमा॰ । “मानुष कल्पद्रुमता विहाय जातं तमालन्यस्य पल्लवत्वम्” रघुः । “कल्पद्रुमैरिह विचित्रफलैर्विरेजुः” माघ । कल्पद्रुकल्पवृक्षादयोऽप्यत्र ।

**कल्पन** न॰ क्लृप–छेदने भावे ल्युट् । १छेदने त्रिका॰। क्लृप्–सामर्थ्ये णिच्–भावे ल्युट् । २रचनायाम् ३विधाने ४आरोपे च ।

**कल्पना** स्त्री क्लृप–णिच्–भावे युच् । १रचनायाम् “ऊह्यारेऽनुवृते तेषामिव सम्राट् सकल्पना” मनु “ मन्त्रकल्पना कथा”अम॰२विधाने३आरोहणाय गजसज्जीकरणे हेम॰ “सकल्पनं द्विरदगणं वरूथिनः ”माघ ।४व्यतिरेकव्याप्तिज्ञानाधीने अनुमानभेदे नैया॰५अर्थापत्तिरूपे प्रमाणान्तरे मीमांसकावेदान्तिनश्चाङ्ग । आरोपयाविद्यमानपदार्थस्य अन्यत्र स्थितस्य अन्यत्र प्रतिभासरूपमानसव्यापारः । “कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्” सर्व्वद॰स॰ । यथा रज्जौ सर्पकल्पना । वेदान्तिमते एव प्रपञ्चस्य ब्रह्मणि कल्पनारूप आरोप ।

“चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पना” । निराकारस्य साकारतया जगदाकारेणारोपोऽपि कल्पनैव स चाध्यासशब्दे उक्तः । तदेतत् श्रुतौ तट्टीकायां च निर्णीतं यथा—

“अहमेवासमेवाग्रे नान्यद्यत् सदसत् परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्” भाग॰। “अहमेवेति कर्त्रन्तरस्य व्यावृत्तिः आसमेवेति क्रियान्तरस्य । अग्रे मायासम्बन्धादहमेव त्रिधा विभक्त इत्यर्थः, पश्चान्मायावियोगादनन्तरमप्यहमेव प्रपञ्चस्यादिमध्यावसानेष्वहमित्यर्थः । यच्चैतत् प्रपञ्चरूपं तदप्यहं नान्यत् किं मय्यारोपितं यथाऽन्यत्र किम् सर्पो रज्जौ एवं विवेचनात् भ्रमे निवृत्ते योऽवशिष्येत सोऽहमस्मि इदन्तया स्वरूपस्य निर्देष्टुमशक्यत्वादेवमुच्यते । एतेन यथा कटकादिष्वस्यात्ययेऽपि सुवर्णत्वमेव सत्यम् । तथा जगदादिमध्यान्तेष्वनुस्यूतं सत्तामात्रं भगवत्स्वरूपमिति लक्षणार्थं इत्युक्तं, न तावदस्यासम्भवः “सदेव सोम्येदम्”इत्यादिश्रुतिसिद्धत्वात् । न च कालाकाशादिष्वतिव्याप्तिः तद्वृत्तपक्षे· श्रुतत्वात् विमतमनित्यं बाध्यत्वात् शुक्तिरूप्यवदित्यनुमानाच्च । नापि साकारेषु चतुर्ष्वव्याप्तिः तेषामाकारतिरोहितत्वात् तथाविर्दोषं लक्षणम् । एवं सामान्यलक्षणमुक्त्वा विशेषाणुक्तयितुमाह”टी॰“स द्वेधा निराकार साकारश्च अनवच्छिन्नं चैतन्यं निराकारं सत्वावच्छिन्नं चैतन्यं साकारः। स चतुर्धा रजस्तमोभ्यां युक्तो सत्वे पुरुष १ रजसा ब्रह्मा२ तमसा रुद्र ३ शुद्धे विष्णुरेव४”भाग॰। “स द्वेधेति द्वेधात्वमेवाह निरेति अनवच्छिन्नो वस्त्वन्यवच्छेदक उपाधिराकारः तेन रहितो निराकारः तद्रहितोऽन्यः । तत्राद्यं लक्षयति अनवच्छिन्नमिति । द्वितीयं लक्षयति सत्वेति । अस्यैव भेदानाह स चेति स साकारः । तदाद्यं भेदमाह रजस्तमोभ्यामिति । तुल्याभ्यां रजस्तमोभ्यां युक्तो सत्वे प्रतिफलितं चैतन्यं पुरुषशब्दार्थ इति पूरणीयम् । एवमुत्तरत्र रजस्तमोभ्यामिति तृतीयया तयोरप्राधान्य“सहयुक्तेऽप्रधाने”(पा॰) इति स्मरणात् तेन पुरुषे सत्वं बहुलं,रजस्तमश्च तदपेक्षया न्यूनमित्यर्थः । न तु त्रीणि समान्येव त्रिमाभ्यस्य प्रकृतिलक्षणत्वात्, लोकाधिकभावश्चैषां कार्य्यगम्यो न तु मायादिमूर्त्तद्रव्यवत् प्रत्यक्ष । शुद्धपदञ्च द्वयोर्वर्त्तते,सत्वपदञ्च त्रिषु । द्वितीयं भेदमाह रजसेति। रजसा यत्ते सत्वे

दुरवस्थितम् । यः कुशप्रकृतिर्वाजी तं सर्वत्रैव ताडयेत्” इति । अधिकमश्वशब्दे उक्तम् । मासरोहिण्या स्त्री भावप्र०

कशकृत्स्न पु० ऋषिभेदे तस्यापत्यम् शिवा० अण् । काशकृत्स्न-व्याकरणशास्त्रकारके ऋषिभेदे “इन्द्रश्चन्द्रः काशकृत्स्ना-पिशली शाकटायन । पाणिन्यमरजैनेन्द्रा जय-न्त्यष्टादिशाब्दिका” वोपदेवः । ततः उपका० गोत्रप्रत्य-यस्य बहुत्वे लुक् । कशकृत्स्नेन निर्वृत्तम् चतुरर्थ्याम् अरीहणादि० वुञ् । काशकृत्स्नक तन्निर्वृत्तादौ त्रि० ।

कशस् न० कशति मोचं कश-गतौ असुन् । जले निघ० ।

कशार्ह त्रि० कशामर्हति अर्ह-अच् उप० स० । कशाताडन-योग्ये दुष्टे अश्वादौ अमरः ।

कशिक पु० कशति हिनस्ति सर्पम् कश शासने बा० इक । नकुले तस्य पादाविव पादावस्य उपमानपूर्वक-त्वेऽपि हस्त्या० पाठात् नान्त्यलोपः । कशिकपाद ।

कशिपु पु० कशति दुःखम् कश्यते वा कश-गतिशासनयोः बाहुल्या० नि० । १अन्ने आच्छादने च २अमर० । एक-शब्दा १भक्ताच्छादनयोश्च मिश्र० । पुम्वन्नाविशिष्टेव चाय द्विवचनान्तः इति मेदि० । ४शय्यायाम् । “क्षुप्रैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः” भाग० ३, १३,१६ । “सेट्स्ति भू कि कशिपोः प्रयासैः” भा० २,२, ५ । “कशिपोः शय्याया” श्रीधर । ५आसनभेदे च “कश्चिच्छये धरोपस्थे त्वचपर्णाग्रवेशसः । कश्चित् प्रासादपर्यङ्के कशिपौ वा यथेच्छया” भाग० ७,१३,३७। वेदे अस्य क्लीवत्वमपि “प्रमुच्यास्य दक्षिणेन वेदिम् हिर-ण्मय कशिपूपस्तृणाति तस्मिन् होतोपविशति” “हिर-ण्मयवो कशिपुनो पुरस्तात् प्रत्यङ्मुखयः” शत० ब्रा० १२,४, ३,१ । “कशिपु आसनभेद । “होताध्वर्यू हिरण्मयवो कशिपुनोरुपविष्टौ” काल्या० १५,६,१ । कशिपुशब्देन मसूरक उच्यते । “फलकमिति पितृभूतिः” स० व्या० । “अध्वर्युयजमानौ कूर्चयोः” “फलकयोर्वा, होत्रध्वर्युदातारः कशिपुषु” काल्या० २०,२,२,१८,२०,२१ । “सपादमासनं कूर्च (कुरसीचौकी) “पादरहितं फलक कशिपुशब्देन महासन मसूरक उच्यते” सप० व्या० । तेन महासन पादरहित फलक च कशिपुशब्दार्थ ।

कशीका स्त्री कश+बा० ईकन् । सुतवत्सायां नकुल्याम् । “आगधिता परिगधिता या कशीकेव जङ्गहे” ऋ० १,१२६,६ । “कशीका सुतवत्सा नकुली वा यथा पुत्रा सह चिरं क्रीडति न कदाचिदपि विसृजति” भा०

कशु पु० वेदिकुले राजभेदे । “यथा चिद्यैद्यः कशुः शत-मुष्ट्रानाम्” ऋ० ८,५,३७ ।

कशेरक पु० यक्षभेदे । “मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः । कशेरकोगण्डकण्डुः” इत्युपक्रम्य “एते चान्ये च बहवो यक्षाः शतसहस्रशः” इति भा० स०१०अ० कुबेर-सभावर्णने उक्तम् ।

कशेरु(रू) स्त्री कं जलं वातं वा श्वयति शृ—“के श्र एरक् चास्य”उणा०क उ वा । कन्दभेदे (केशुर) उक्ष० । दीर्घान्त.त्वष्टुश्चतुर्दश्या२कन्याया वा च नरकासुरेण गजरू-पेण हृता तत्कथा हरिव० १२१अ० यथा“त्वष्टुर्दुहितरं भौमः (नरकासुरः) कशेरुमगमत्तदा । गजरूपेण जग्राह रुचि-राङ्गी चतुर्दशीम्। प्रमथ्य तां वरारोहां नरकोवाक्यमब्रवीत्” उपलयवान् पुंसि च । “किं कुर्वता वराहेण खाद्यन्ते हि कशेरव” । उक्ष० चन्द्रः । कुरूणां क्लीवमाह अमर । “शृङ्गाटकं विसं द्राक्षा कशेरु मधुकं सिता” सुश्रु०। स्वार्थे कन् । तत्रार्थे न०। तद्गुणा भावप्र० उक्ता यथा । “कशेरु द्विविधं तत्तु महद्राजकशेरुकम् । मुस्ताकृति लघु स्याद्यत्तच्चिचोटमिति स्मृतम् । कशेरुक-द्वयम् शीतं मधुरं तुवरं गुरु । पित्तशोणितदाहघ्नं नयना-मयनाशनम् । ग्राहि शुक्रानिलश्लेष्मरुचिस्तन्यकरं स्मृतम् । भारतवर्षस्य नवखण्डान्तर्गते ३खण्डभेदे पु०“ऐन्द्र कशेरु-मत्कं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् । नागं च सौम्यमिह वारुणमन्यखण्डं गान्धर्वखण्डमिति भारतवर्षमध्ये”सि०शि०। पुराणसर्वस्वे विष्णुपुराणे च“भार-तस्यास्य वर्षस्य नव भेदान्निशामय । इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुण । अयन्तु (कुमारिकाख्य०)नवमस्तेषां द्वीप सागर-संवृतः । योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् । पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः । ब्राह्मणाः क्षत्रियावैश्या मध्ये शूद्राश्च भागश । इज्यायुद्धवणिज्याद्यै र्वर्त्तयन्तोव्यवस्थिता । वेदस्मृतिमुखाद्याम्याः पारियात्रो-द्भवा मुने ! । नर्मदासुरसाद्याश्च नद्योविन्ध्यविनिर्गताः । तापीपयोष्णीनिर्विन्ध्याकावेरीप्रमुखा नदी । गोदावरी-भीमरथीकृष्णवेण्यादिकास्तथा । मलयाद्रेर्द्भवानद्यः स्मृताः पापभयापहा । कृतमालाताम्रपर्णीप्रमुखाश्चमलयो-द्भवा । त्रिसामा चार्षिकुल्याद्या महेन्द्रप्रभवाः स्मृताः । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः । शतद्रु-

चन्द्रभागाद्या हिमवत्पादनिःसृताः । आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः । पश्चिमे कुरुपञ्चालमध्यदेशादयो जनाः । पूर्वदेशादिकाश्चैव कामरूपनिवासिनः । ओड्राः कलिङ्गमगधा दाक्षिणात्याश्च सर्वशः । तथाऽपरान्ताः सौराष्ट्राः शूद्राभीरास्तथार्बुदाः । मारुकामालवाश्चैव पारियात्रनिवासिनः । सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः । मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा । आसां पिबन्तः सलिलं वसन्ति सहिताः सदा । चत्वारि भारते वर्षे युगान्यत्र महामुने ! । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् । तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् । पुरुषैर्यज्ञपुरुषो जम्बुद्वीपे सदेज्यते । तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ! । यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ! । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् । गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् । कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्ममहीमनन्ते तस्मिंल्लयं ये त्वमलाः प्रयान्ति । जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् । प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीनाः । नववर्षन्तु मैत्रेय ! जम्बुद्वीपमिदं मया । लक्षयोजनविस्तारं संक्षेपात् कथितं तव" ४हृत्कन्दगुल्म्यां पु न० हला० स्वार्थे कन् । पुष्पालिभेदे स्त्री अमर । तृणकन्देऽपि स्त्री रत्नमाला "कशेरुकश्चातियुक्तं श्लेष्मकोपकं यथाह सुश्रुतः । दिवास्वप्ने व्याख्युपक्रमे "कशेरुशृङ्गाटकमधुरवल्लीफलसमशनाध्यशनप्रभृतिभिः श्लेष्मा कोपमापद्यते" । एतद्रसस्य कूर्मचरमांसभोजनेऽनुपानम् यथाह अनुपानवर्गे सुश्रुतः "कूर्मचराणां शृङ्गाटककशेरुकासवः" । इदञ्च सुश्रुते मधुरवर्गे उक्तम् । तद्वाक्यं मधुरवर्गे दृश्यम् । एतस्य श्लेष्मपित्तप्रकोपकत्वेन क्रमिकारित्वमुक्तम् सुश्रु० "माषपिष्टान्नविदलविषमाशूकशेरुकैरित्युपक्रमे "श्लेष्मा पित्तं च कुप्यति । क्रमीन् बहुविधाकारान् करोति विविधाश्रयान्" ।

**कशेरुमत्** पु० यवनराजभेदे । "इन्द्रद्युम्नोहत कोपाद् यवनश्च कशेरुमान्" हरिवं० १६७अ० । भा० व० १२अ० ।

**कशोक** त्रि० कश-ताडने वा० ओक । हिंसके राक्षसादौ "मा त्वा दभन् दूरे वासे कशोकाः" अथ० ५,२,४ ।

**कश्चन** अव्य० क+चिमन्तत्वात् चन इति मुग्ध०पाणिन्यमरमते पृथक् पदमिति भेदः । (केउ) इत्यर्थे "दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ" माघः । चित् । कश्चिदप्यत्र अव्य०एकपदं द्विपदं वेति भेदः । "कश्चित् कान्ताविरहगुरुणा स्वाधिकारे प्रमत्तः" मेघ० ।

**कश्मल** न० कश–कल मुट् च । १मूर्च्छायां, २मोहे, "कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्" गीता । "मा राजन् ! कश्मलं घोरं प्राविशो बुद्धिनाशनम्" भा० स० ४४अ० । मेदे पुंस्त्री० कस्य शः । कश्मल तत्रार्थे "त्रिदेव कश्मलं भयमनिशं नु निदध्मसि" अथ० ३पापे च मल्लिना० ४मलिने त्रि० हेम० ।

**कश्मीर** पु० कश ईरन् मुट् च । स्वनामख्याते देशभेदे । ततो भवादौ कच्छा० अण् । काश्मीर तद्देशभवे त्रि० । काश्मीरोऽभिजनोऽस्य तक्षशिला० अञ् । काश्मीर पित्रादिक्रमेण तद्देशवासिनि त्रि० स्त्रियामुभयत्र ङीप् । तस्य राजन्यपि तथा । बहुषु तु तस्य लुक् । कश्मीराः । स्त्रियां भर्गादि० न लुक् । काश्मीरी । "अत ऊर्द्धं जनपदान् निबोध गदतो मम" इत्युपक्रमे "कश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा" भा० भी० ६अ० जम्बुखण्डविभागे देशकीर्त्तने । तद्देशसीमादि शक्तिसङ्गमतन्त्रे ७पटले उक्तं यथा—"शारदामठमारभ्य कुङ्कुमाद्रितटान्तकः । तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः" ।

**कश्मीरजन्मन्** न० कश्मीरदेशे जन्म यस्य । कुङ्कुमभेदे । कश्मीरजादयोऽप्यत्र । तद्भेदगुणादि भावप्र० उक्तं यथा—"कुङ्कुमं मसृणं रक्तं काश्मीरं पीतकं वरम् । सङ्कोचं पिशुनं धीरं वाह्लीकं शोणिताभिधम् । काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत् । सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् । वाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरच्छतम् । केतकीगन्धयुक्तन्तु मध्यमं सूक्ष्मकेशरम् । कुङ्कुमं पारसीके यत् मधुगन्धि तदीरितम् । ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् । कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् । तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम्"

**कश्य** न० कशताडनेन कश–मद्ये वा० करणे यत् । १मद्ये वैद्य० । मद्यपानेन वचोऽस्खलनात् तथात्वम् । कशामर्हति दण्डा० यत् । २कशाघातयोग्ये अश्वजघनभागे त्रि० अमरः ।

**कश्यप** पु० कश्यं पिबति पा–क उप० स० । ब्रह्मणो मानसपुत्रस्य मरीचेः पुत्रे ऋषिभेदे तस्य तन्नामनिरुक्ति-

यथा—"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यपः" मार्कण्डे० पु०। तस्य वंशादिकथा "ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत!। एतासां वीर्यसम्पन्नं पुत्रपौत्रमनन्तकम्" भा० आ० ६५ अ०। एतासामपत्यभेदास्तत्तच्छब्दे द्रष्टव्याः। "कश्यपाय त्रयोदश" मनुः।

तस्य च वंशादिकथा भाग० अन्यथैवोक्ता यथा—"पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पौर्णमासं च यापूरितं जगत्" भाग० 8,1,11 श्लो० इत्युक्ता तत्पत्नीनां दक्षप्रजापतिकन्यानां नामभेदः नामान्तरेण तार्क्ष्यनामकस्य तस्य च अन्या अपि चतस्रः दक्षकन्याः पत्न्य आसन्" इति दृष्ट० उक्तं यथा-"ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा। षष्टिं सञ्जनयामास दुहितॄः पितृवत्सलाः। दश धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान्। भूताङ्गिराकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः। "नामधेयान्यमूषां त्वं सापत्यानाञ्च मे शृणु" इत्युपक्रमे (काय कश्यपाय द्विषट् षड्द्विगुणाः द्वादश त्रयोदशेत्यर्थः श्रीधरः) उत्तरत्रादित्यादीनां त्रयोदशानां वंशकीर्त्तनमुक्तम्। "तार्क्ष्याय नामान्तरं प्राप्ताय कश्यपायैव अपरा अर्थाच्चतस्रः इति" श्रीधरः) "तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनीति च। पतङ्ग्यसूत पतगान् यामिनी शलभानथ। सुपर्णाऽ(विनता) सूत गरुडं साक्षाद् यज्ञेशवाहनम्। सूर्य्यसूतमनूरुञ्च कद्रूर्नागाननेकशः" इति। तार्क्ष्यनामककश्यपस्य पत्नीपुत्रादुक्त्वा प्रसिद्धनामककश्यपस्य पत्नीपुत्रनामादिकमुक्तं यथा तत्रैव

"अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्। अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला। मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः। तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः। सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप!। ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः। दन्दशूकादयः सर्पा राजन्! क्रोधवशात्मजाः। इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः। अरिष्टायास्तु गन्धर्वाः काष्ठाया द्विशफेतराः। सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु। द्विमूर्द्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः। अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः। पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः। धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः। स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल। वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली। वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः। उपदानवी हयशिरा पुलोमा कालका तथा। उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप!। पुलोमां कालकां च द्वे वैश्वानरसुते तु कः। उपयेमेऽथ भगवान् कश्यपो ब्रह्मणोदितः। पौलमाः कालकेयाश्च दानवा युद्धशालिनः। तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता (अर्जुनः)। जघान स्वर्गतो राजन्नेक इन्द्रप्रियङ्करः। विप्रचित्तिः सिंहिकायां शतञ्चैकमजीजनत्। राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः। अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः। यत्र नारायणो देवः स्वांशेनावतरद्विभुः। विवस्वानर्य्यमा पूषा त्वष्टाऽथ सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः। विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम्। मिथुनञ्च महाभागा यमं च यमुनां तथा। सैव भूत्वाथ बडवा नासत्यौ सुषुवे भुवि। छाया शनैश्चरं लेभे सावर्णिञ्च मनुं ततः। कन्यां च तपतीं या वै वव्रे संवरणं पतिम्। अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः। यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता। पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा। योऽसौ दक्षाय कुपितं जहास विवृतद्विजः। त्वष्टुर्दैत्यात्मजा भार्य्या रचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान्। तं वव्रिरे सुरगणाः स्वस्रीयं द्विषतामपि। विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत्" भाग० ६, ६ अ०। कश्यपस्यैव तत्पत्नीनामपि नामान्तरकल्पनया विरोधः परिहरणीयः।

तस्य पृथिव्याः प्रतिग्रहरूपेण प्राप्तिकथादि भा० हरिवं० ५१। यथा "भार्गवेण पितुः श्राद्धे कश्यपाय निवेदिता। मांसमेदोऽस्थिदुर्गन्धा दिग्धा क्षत्रियशोणितैः। रजस्वलेव युवतिः कश्यपं समुपस्थिता। स मां ब्रह्मर्षिरप्याह किमर्थं! त्वमवाङ्मुखी। वीरपत्नीव्रतमिदं धारयन्ती विषीदसि। साहं विज्ञापितवती कश्यपं लोकभावनम्। पतयो मे हता ब्रह्मन्! भार्गवेण महात्मना। साहं विहीना

विक्रान्तैः क्षत्रियैः शस्त्रवृत्तिभिः । विधवा शून्यनगरा न धारयितुमुत्सहे । तस्मात्त्वं दीयतां भर्त्ता भगवंस्तत्समो नृप । रक्षेत् सग्रामनगरां यो मां सागरमालिनीम् । स श्रुत्वा भगवान् वाक्यं बाढमित्यब्रवीत् प्रभुः । ततो मां मानवेन्द्राय मनवे संप्रदत्तवान् । सा मनुप्रभवं पुण्यं प्राप्येक्ष्वाकुकुलं महत् । विपुले भाति कालेन पार्थिवात् पार्थिवं गता । एवं दत्ताऽस्मि मनवे मानवेन्द्राय धीमते । भुक्ता राजसहस्रैस्तु महर्षिकुलसम्भवैः । बहवः क्षत्रियाः शूरा मां जित्वा दिवमाश्रिताः" । त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु० ३,६२ । "कश्यपस्यैतन्नामकस्य प्रजापतेः" वेददी० । तस्यापत्यानि विदा० अञ् बहुषु लुक् । कश्यपास्तद्गोत्रापत्येषु "कश्यपाना काश्यपावत्सारासितेति" । "कश्यपासितदेवलेति वा" द । "यागिकुलानां कश्यपयागिकुलयोः" आ० श्रौ० १२,१४,७ । "एते कश्यपाः । एतेषां परस्परमविवाहः" भारा० ।

काश्यपिर्गरुडाग्रज इत्यत्र तु भवार्थे इञ् ।

१मृगभेदे २मत्स्यभेदे च मेदि० स्त्रियां जातित्वात् ङीष् । ४कच्छपे "अपामद्रो मासा कश्यपः" यजु० २४,३७ । "कश्यपः कच्छपः" वेददी० । ४श्यावदन्ते त्रि० । "प्रस्प्रष्टेभ्यशान्यत् कलककश्यपयावदानवर्ज्जम्" कात्या० १०,२,३५ । "कश्यपाद्ब बधिरं मन्यन्ते कश्यपस्य श्यावदन्तमिति केचित्" कर्क ।

कश्यपनन्दन पु० ६त० । गरुडे शब्दा० । कश्यपसुतादयोऽप्यत्र

कष वधे भ्वा० पर० सक० सेट् वधोऽत्र निष्पीडन घर्षणञ्च । कषति अकषीत्–अकाषीत् । चकाष प्रनिकषति । "छेदेन कषनिघाषसत् कषपाषाणनिभे नभस्तले" नैष० । अस्य परस्मैपदिषु पा०ग०पाठात् कल्पद्रुमे च तथा पाठात् भ्वा० उभयभ्रान्तिमूला । 'पाषाणं कषमाणम्' इत्यादिप्रयोगस्तु ताच्छीलिकचानशैवोपपत्तेः । "निमूलसमूलयोः कषः" "कषादिषु यथाविध्यनुप्रयोगः" पा० णमुल् अनुप्रयोगश्च । निमूलकाषं कषति समूलकाषं कषति समूलं निमूलं वा कषतीत्यर्थः सि० कौ० "समूलकाषं चकषुः रदन्तः" भट्टि । "सर्वकूलाभ्रकरीषेषु कषः" पा० कर्मण्युपपदे खच् । सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः"

कष पु० कष–अच् । स्वर्णवर्णपरीक्षणपाषाणे (कषटी) पाषाणभेदे इतरप्रस्तरस्य स्वर्णेन घर्षणात्तस्य तथात्वम् । अस्तादेरोजस्वीकरणसाधने पाषाणाख्ये पदार्थे अमरः । "कषपाषाणनिभे नभस्तले" नैष० "सुवर्णरेखेव कषे निवेशिता" कुमा० ।

कषण त्रि० कष्यते कष–कर्मणि ल्युट् । अपक्वे फलादौ शब्दच० । भावे ल्युट् । २घर्षणे ३शाणे न० । "कषणकम्पनिरस्तमहाहिभिः" माघ । "कषणेन कम्पनेन" मल्लि० ।

कषा स्त्री कष्यते ताड्यतेऽनया कष–बा० करणे–अप् । अश्वादेस्ताडनसाधने चर्मादिनिर्मिते पदार्थे (चाबुक) रमानाथ । "कक्षेण पृष्ठे कषया च ताडितः" भाग० ३,१०,२२ ।

कषाकु पु० कष–आकु । अग्नौ सूर्ये च उणादिको० ।

कषाय पु न० कषति कण्ठम्, कष–आय–अर्ह्यादि । (कषा) १रसभेदे २तद्वति त्रि० । तस्य कारणगुणादि सुश्रुते उक्तं यथा—"तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणोवायुस्तस्य समानयोनिः कषायो रसः सोऽस्य शैत्यात् शैत्यं वर्द्धयति, रौक्ष्यात् रौक्ष्यं, लाघवात् लाघवं, वैशद्यात् वैशद्यं, वैष्टम्भ्यात् वैष्टम्भ्यमिति" "योवक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कषति पीडयति च स कषायः" । "कषायः स्यादुक्कोरोपणः स्तम्भनः शोधनः लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति । स एवं गुणोऽप्येकएवात्यर्थमुपसेव्यमानः पीडाहृद्ग्रहणोदराध्मानवाक्ग्रहमन्यास्तम्भगात्रस्फुरणचुमचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जनयति" इति च । कषायवर्गश्च । "न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादिरोधादित्रिफलाशल्लकीजम्ब्वाम्रवकुलतिन्दुकफलानि कतकशाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि नीवारकादयोमुद्गादयश्च समासेन कषायोवर्गः" सुश्रु० । कषायस्योत्पत्तिकारणमपि तत्रोक्तं यथा—"तस्मादाप्योरसः परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्ति उत्कर्षापकर्षात्तु ग्रहणम् । स खल्वाप्योरसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते" इत्युपक्रम्य । पृथिव्यनिलगुणबाहुल्यात् कषायः इति । तत्र तस्य च विपाकफलमपि तत्रोक्तम् "मधुरतिक्तकषायाः पित्तघ्नाः कटुतिक्तकषायाः श्लेष्मघ्नाः" इति । "भेदाद्धि रसानीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्या आग्नेयाश्च, तत्र मधुरतिक्तकषायाः सौम्याः, कटुम्ललवणा आग्नेयाः, मधुराम्ललवणाः स्निग्धाः गुरु-

मेव कटुतिक्तकषाया रूक्षा लघवश्च। सौम्याः शीता आग्नेयाश्चोष्णाः।" इति सुश्रुते अन्यमतेनोक्त्वा तत्र दूषयित्वा पूर्वदर्शितमतमादृतम् भावप्र० तद्धेतद्विहितम् यथा—"कषायो रोपणो ग्राही स्तम्भनः शोधनस्तथा। लेखनः पीडनः सौम्यः शोषणो वातकोपनः। कफपित्तविषघ्नो रूक्षः शीतो लघुर्मतः। त्वक्प्रसादनमांसस्य स्तम्भनो विशदो मतः। जिह्वायां जाड्यकृत् कण्ठस्रोतसाञ्च विबन्धकृत्"। रोपणः व्रणस्य, स्तम्भनो मलानाम्, शोधनो व्रणस्य, लेखनो व्रणाद्युत्सन्नमांसस्य, शोषणो व्रणक्लेदादीनाम्। पीडनो हृदयस्य वातकारित्वात्, सौम्यः सोमाद्युत्पन्नः"। कषातियुक्तस्य कषायस्य गुणास्तत्रोक्ताः "सोऽतियुक्तो गुदाध्मानहृत्पीडाक्षेपणादिकृत्"। भावप्रकाशमते विशेषः। "प्रायशः स्तम्भनं प्रोक्तं कषायमभयां विना"। २रागद्वेषादिदोषे। "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति" छा० उ०। "तस्मै मृदितकषायाय वार्क्षादिरिव कषायो रागद्वेषादिदोषः, सत्त्वस्य रञ्जनरूपत्वात् ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो विनाशितो यस्य नारदस्य तस्मै" भा०। "कषायैः कर्मभिः पक्वे ततो ज्ञानं प्रजायते" वेदा० प०। कर्मणां रागद्वेषादिदोषरूपकषायनाशकत्वमुक्तम्। "लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः" इति वेदान्तसारोक्ते ४निर्विकल्पसमाधिविघ्नभेदे "सकषायं विजानीयात् समप्राप्तं न चालयेत्"। "सकषायं कलुषितं मे चित्तमिति, विज्ञाय यत्नेऽहितो यात्मनि निवेशयेत्" विद्वन्म०। ५रक्ते अङ्गरागान्विते ६सुरभौ ७सपठौ च केशवः। "सूताद् राज्ञात् कषायकण्ठः" कुमा०। "कषायः रक्तः" मल्लि०। "निद्राकषायितविपाटललोचनेन" माघः "कषायितास्यपट्टलतानि" मल्लि०। ८रागे ९क्वाथभेदे १० निर्यासे च "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" वैज०। कषायः जातोऽस्य तार० इतच्, तत्करोतीति णिच्—कर्मणि क्त वा। कषायित जातकषाये कषायीकृते च त्रि० "अमुनैव कषायितस्तनी" कुमा० "कषायितः रञ्जितः" मल्लि०। ११विलेपने १२अङ्गरागे च विश्वः। "कर्णार्पितो लोध्रकषायरूक्षे" कुमा० "कषायेण विलेपनेन" मल्लि०।

कषायश्च सरलादिकः पञ्चविधः भावप्र०दर्शितो यथा। "सरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ। ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" तेषां पञ्चानां लक्षणानि तु तत्तच्छब्दे दृश्यानि। १३श्योनाकवृक्षे पु० जटाधरः। १४कलियुगे अमरटीका रागद्वेषहेतुत्वात्तस्य तथात्वम् १५लोहितवर्णयुक्ते त्रि० मेदि० १६रक्तपीतमिश्रितवर्णे अमरटीका। १७धवद्वृक्षे पु० राजनि० १८क्षुद्रदुरालभायां स्त्री राजनि०। देशे गन्धे कषात् पानमत्स्य चलम्। कषायपाषाणभेदः।

**कषायपाक** पु० सुश्रुतोक्ते द्रव्यविशेषाणां क्वाथभेदे। तत्प्रकारो यथा "केचिदाहुस्त्वक्पत्रमूलादीनां भागांश्चतुर्गुणजलमावाप्य, चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येषः कषायपाककल्पः" इति परमतमुक्त्वा "एतत्तु न सम्यक्" इति तन्मतं दूषयित्वा द्रव्यपरिमाणभेदं दर्शयित्वा च "तस्मात्यन्तपरिमाणसङ्कलितानां यथायोगं त्वक्पत्रमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा, भेद्यानि चाणुशो भेदयित्वाऽष्टगुणेन षोडशगुणेन वा जलेनाभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्वाथयित्वाऽपहरेदित्येष कषायपाककल्पः" इति स्वमतेनोक्तम्। पश्चात् स्वमप्युक्तम् "अथ वा तस्मोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः" इति,। अयञ्च कल्पो विशेषानुक्तविषये विशेषनिर्देशे तु तथैव ग्राह्यः" यथाह तत्रैव "स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम्। तत्रायं विधिराख्येयो निर्दिष्टे तत्तदेव तु। चतुर्द्रव्यकार्ये तु सर्वत्र सलिलं मतम्। कल्कक्वाथावनिर्देशे गणात्तस्मात् विनिर्दिशेत्"। [भेदे राजनि०।

**कषाययावनाल** पु० नित्यकर्म०। तुवरयावनाले धान्य-

**कषायवासिक** पु० सुश्रुतोक्ते कीटभेदे। "कणभमुखः कृष्णगोधा यश्च कषायवासिकः" इत्युपक्रम्य "त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः इति विभज्य—तेषां सौम्यत्वं श्लेष्मप्रकोपकत्वञ्चोक्तम् "तत्र महत्सु लिङ्गमनिमित्तमुक्तं तत्रैवोक्तं यथा "पिपिटपिच्चटकषायवासिकसर्षपवासिकतोटकवर्चःकीटकौण्डिल्यकाः श्लेष्मप्रकृतिकाः"।

**कषायित** त्रि० कषायो रक्तपीतवर्णादिर्जातोऽस्य तार० इतच्। जातकषाये तत्करोतीति णिच्— कर्मणि क्त। कषायीकृते च "अमुनैव कषायितस्तनी" इति कुमा०।

**कषायिन्** पु० कषायो निर्यासोऽस्त्यस्य इनि। १शालवृक्षे जटा० २खर्जूरवृक्षे ३लकुचवृक्षे च राजनि०। ४कषाययुक्ते त्रि०

**कसन** पु० कसति हिनस्ति कस–ल्यु । १कासरोगे २लूताभेदे स्त्री ।“आलमूत्रविषा कृष्णा कसना चाष्टमी स्मृता” सुश्रु० लूताभेदकथने । “पिच्छिला कसनादंशात् रुधिरं शीतलं स्रवेत्” सुश्रु० ।

**कसनोत्पाटन** पु० कसनं कासरोगम् उत्पाटयति उत्+पाटि–ल्यु । वासकवृक्षे, शब्दच० । “येन तेन प्रकारेण वासकः कासनाशकः” इति वैद्योक्तेस्तस्य तथात्वम् ।

**कसर्णील** पु० सर्पभेदे । “एतं कसर्णीलं काद्रवेयो मन्त्रमपश्यत्” तैत्ति० सं० १,५,४,१ । रस्य लत्वमपि “पैद्वो हन्ति कसर्णीलम् पैद्वः श्वित्रमुतासितम्” अथ० १०,४,५ । विषनाशकत्वे ।

**कसाम्बु** न० पितृभ्यः कव्यदानकाले देये जले । “उपासते पितरः स्वधाभिः” इत्युपक्रमे “इदं कसाम्बु चयनेन चितं तत्सजाता अवपश्यतेत” अथ० १८,४,३७ ।

**कसिपु** पु० कशिपुवत् । अन्ने जटाधरः ।

**कसेरु** पु० कस–उ एरुगागमः । १कशेरौ, (केशुर) शूकरस्य प्रिये २जलकन्दभेदे च ।३कशेरुशब्दार्थे च राजनि० ।

**कसेरुका** स्त्री कशेरुकावत् । १पृष्ठास्थ्नि राजनि० ।

**कस्कादि** पु०पाणिन्युक्ते विसर्जनीयस्य सत्वनिमित्ते शब्दगणे स च गणः “कस्कः कौतस्कुत भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः कास्कान् सर्पिष्कुण्डिका धनुष्कपालं बर्हिष्पलं यजुष्पात्रं अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः आकृतिगणः”

**कस्तम्भी** स्त्री कं शिरोऽग्रभागं स्तभ्नाति स्तन्भ–अण् गौरा० ङीष् सुषा० षत्वम् । शकटस्याधःपतनवारणार्थं शीर्षादग्रदण्डाग्रोत्तम्भनार्थायां मेथौ “अथ यज्ञपते कस्तम्भीम्” शत०ब्रा० १,१, २,९ । “शकटस्याधःपतनवारयितुं शीर्षादग्रदण्डाग्रोत्तम्भनार्था मेथिः कस्तम्भी” भा० ।

**क(का)श्मीर** न० ईषत् तीरमत्र कुगति० समा० कोः कादेश “काश्मीरादिष्ट्वन्दे नगरे” पा० स्मृत् । १नगरविशेषे २तज्जाते रत्ने हेम० । हेमचन्द्रे कश्मीरमिति ह्रस्वपाठः प्रामादिकः पा० सूत्रे काश्मीरे दीर्घपाठदर्शनात् ।

**कस्तूरी** स्त्री कसति गन्धोऽस्याः दूरत कस–ऊर–बा० तुट् च । मृगमदे मृगनाभिजाते गन्धद्रव्यभेदे स्वार्थे कन् । कस्तूरिका तत्रैव “तद्गुणपर्य्यायादि भावप्र०उक्तं यथा—“मृगनाभिर्मृगमदः कथितस्तु सहस्रभित् । कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता । काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता । कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् । काश्मीरदेशसम्भूता कस्तूरी त्वधमा मता । कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः । कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत्” । “यस्यां हिमाद्रेर्मृगनाभिगन्धि” कुमा० श्लोकव्या० मल्लिनाथेन “मृगनाभिःकस्तूरी तद्गन्धि कस्तूरीमृगाधिष्ठानादित्युक्तं तेन हिमाद्रावपि तन्मृगस्य सञ्चारोऽस्तीति गम्यते । “कस्तूरीतिलकं ललाटपटले” विष्णुमूर्त्तिवर्णने । “कस्तूरिकाजननशक्तिभृता मृगेण किं सेव्यते सुमनसा मनसापि गन्धः” रसग० । “कस्तूरिकामृगविमर्दसुगन्धिरेति” माघः । कस्तूरिकाहेतुमृगः कस्तूरिकामृगः ।

**कस्तूरी(म)वल्लिका** स्त्री कस्तूरीगन्धयुक्ता म(व)ल्लिका । (मृगकदाना) लताभेदे राजनि०यमध्यपाठः भावप्र०सम्मतः । तद्गुणा भावप्र० उक्ता यथा । “लता कस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघुः । चक्षुष्या भेदिनी श्लेष्मतृष्णा मस्त्यास्यरोगहृत्” अत्र लतेति विशेष्यपदोक्तेः कस्तूरिका वल्लिकेत्येवेत्युचितम् ।

**कस्मल** न० कश्मलवत् । पापाद्यर्थे रायमुकुटः ।

**कस्वर** त्रि० कस–गतौ शातने च वरच् ।१गन्तरि २हिंसके च

**कह्य** पु० कस्य सूर्य्यस्य हयः । सूर्य्याश्वे तस्यापत्यम् शिवा० अण् । काह्य तदपत्ये पुंस्त्री । पाणिनिगणे कह्वेति पाठः साधुः ।

**कह्य** पु० ह्वे–क्यप् हूयः कः सूर्य्यो हूयो यस्य । सूर्य्याह्वायके ऋषिभेदे । तस्यापत्यं शिवा० अण् । काह्य तदपत्ये पुंस्त्री ।

**कहोड** पु० ऋषिभेदे स च उद्दालकर्षिशिष्यः अष्टावक्रस्य पिता । “उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्” भा० व० १३२अ० । अधिकमष्टावक्रशब्दे दृश्यम् । वा डस्य लः कहोलोऽप्यत्र । ततः अनुकम्पायां नीतौ च वा ठक् द्वितीयाजादेः सन्ध्यक्षरस्य च लुक् । कहिक अनुकम्पितकहोडे । वा इल । कहिल । य । कहिय इत्यादिरपि तत्रार्थे ।

**कह्लार** न० के जले ह्लादते ह्लाद–अच् पृषो० दस्य रः । श्वेतोत्पले । “आह्लादिकह्लारसमीरणाहिते” माघः । “नलवञ्जुलकह्लारचन्द्रोत्पलपद्मकैः” सुश्रु० । तस्य गुणादि उत्पलशब्दे उक्तम् ।

**कह्व** पु०कं जलं ह्वयति स्पर्द्धते शुक्लरूपत्वात् ह्वे–क । बके अमरः । अस्यैव शिवादिगणे पाठमते अपत्ये अण् । काह्व तदपत्ये पुंस्त्री ।

लवणम्। अपाकं स्वभावस्थं, त्रिदोषघ्निकम् सर्वेषां कुष्ठानां त्रिदोषमत्वेऽपि उत्कृष्टदोषक्षयलिङ्गम्” भावप्र० सूचितम्। एतदग्र पूर्ववाक्ये उत्कृष्टदोषैरित्युक्तम्।

**काकचिञ्ची** स्त्री ईषत् कचन्ती निमीलन्ती कच-निमीलने अच् ङीष् कुगतिस० को: कादेश। गुञ्जायाम् शब्द०। तस्याः फलकोषस्य ईषन्निमीलनात्तथात्वम्। “कोष्ठं मत्वा क्षोभयन् यस्य रक्तं, तन्नाधनात् काकचिञ्चीमकामम्” शब्द० स्वार्थे कन्। काकचिञ्चिकाप्यत्र रत्नमा०। काकचिञ्चाशब्दे उदा०। “रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकचिञ्चिकाफलसदृशानि” सुश्रु०।

**काकतालीय** न० अवितर्कितसम्भवतुल्ये आकस्मिकन्याये तद्गुत्पत्त्यादिर्यथा “समासाच्च तद्विषयादिति” पा०छ। अस्मादेव ज्ञापकादिवार्थे, सह सुपेति वा समास०, इवार्थौ काकागमनमिव तालपतनमिव काकतालम् काकतालमिव काकतालीयम् इत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ तत्र काकागमन देवदत्तागमनस्योपमानम् तालपतनं दस्यु भिपातस्य, तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानम् इति वधादिः काकतालीयादिशब्दवाच्यः सम्पद्यते। काकतालसमागमसदृशयोरसमागम इति समासार्थे तत्प्रयुक्तकाकमरणसदृशस्तु देवदत्तवधादिः छप्रत्ययार्थ। “यत्तया मेलनं तत्र लाभो मे यश्च तद्रते। तदेतत् काकतालीयमवितर्कितसम्भवम्” चन्द्रालोक०। “फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति” नैषधी०।

**काकतिक्ता** स्त्री काकमांसवत् तिक्ता। काकजङ्घाया भावप्र० काकजङ्घाशब्दे विवृतिः। (कुंच) २गुञ्जाया रत्नमा०। तयोः काकमांसस्येवातिक्तत्वात्तथात्वम्।

**काकतिन्दुक** पु०काकस्येवक्कालकस्तिन्दुतिन्दुकः, काकवर्णो वा तिन्दुकः काकप्रियो वा तिन्दुक। (कुँचिलिया) (माकड़ातेंडु) इति च प्रसिद्धे कुपीलौ भावप्र०। तत्पर्यायगुणादि तत्रोक्तं यथा “तिन्दुको यस्तु कथितो जलजो दीर्घपत्रकः। कुपीलुः कुलकः काकतिन्दुकः काकपीलुकः। कुपीलु शीतलं तिक्तं वातलं मदकृल्लघु। परं व्यथाहरं ग्राहि कफपित्तास्रनाशनम्” अत फलपरत्वात् न०। [ हेमच०।

**काकतुण्ड** पु० काकतुण्डस्य वर्णोऽस्त्यस्य अच्। कालागुरुणि

**काकतुण्डफला** स्त्री काकतुण्डमिव फलमस्याः। काकनासायाम्” भावप्र०। काकनासाशब्दे विवृतिः।

**काकतुण्डिका** स्त्री काकतुण्डस्य वर्णः अर्द्धफलेऽस्याः ठन्। गुञ्जायाम् रत्ना०।

**काकतुण्डी** स्त्री काकम् ईषदर्क ईषद् ‘खं तुण्डते तुडि ड—वधे अण् उप०स०पा० गौरा०ङीष्, सुग्ध० पण ईष् इति भेदः। १राजरीतौ स्पयोग्ये पित्तले (गिलटीकरापितल) तस्य स्वर्णरूपतया दर्शनात् दुःखनाशकत्वात् तथात्वम्। काकतुण्ड इवाकारोऽस्या अच् गौरा०ङीष्। (कैओयाठोटा) २काकनासावृक्षे च।

**काकदन्तगवेषण** पु० काकस्य दन्ताः सन्ति न वेति संशये तत्र वर्णभेदस्य संख्याविशेषस्य च गवेषणमिव अनर्थकः प्रयत्नो यत्र। निष्प्रयोजनाम्बेषणयुक्ते न्यायभेदे।

**काकध्वज** पु०काकमोघज्जलं वाप्य ध्वज इवास्य। वाडवाग्नौ त्रिका०। तस्य समुद्रादुत्क्षक्रान्त्या ज्वालया जातवाष्पस्य तत्केतमतुल्यत्वात् तस्य तथात्वम्।

**काकनामन्** पु० काकेनापि नाम्यतेऽसौ नम-णिच्-कर्मणि कनिप्। वकवृक्षे रत्नमाला तस्य कटुयाकत्वेन काकारोहणेनापि नामितत्वात् तथात्वम्।

**काकनास** पु० काकस्य नासा तद्वर्णः फलेऽस्य। विकङ्कतवृक्षे (वैंइचि) राजनि०। तस्य फलस्य काकनासातुल्यकृष्णत्वात्तथात्वम्।

**काकनासा** स्त्री काकस्य नासेव फलमस्याः। काकजङ्घायाम् (कैओठेङ्गा)। भावप्र० तत्पर्यायगुणाद्युक्तं यथा—“काकनासा कषायोष्णा कटुका रसपाकयोः। कफघ्नी वमनी तिक्ता शोथार्शःश्वित्रकष्टनुत्”। स्वार्थे कन्। काकनासिका तत्रार्थे अमरः। सा च त्रिष्टति राजनि०।

**काकनीला** स्त्री काक इव नीला। जम्बुभेदे। राजनि०।

**काकन्दि(न्दी)** स्त्री देशभेदे। वा ङीष्। तत्र भवार्थे दीर्घान्तात् वुञ्। काकन्दक तत्र भवे त्रि०।२तद्देशवासिषूपचारात् तेषायुधजीविनः। संघपरत्वे तत० दामन्यादि० स्वार्थे छ। काकन्दीय तद्देशवासिनि आयुधजीविसंघे।

**काकपक्ष** पु०काकस्य पक्ष० तदाकारोऽस्त्यस्य अच्।(काक्पाटा) काकजुलपी) प्रसिद्धे शिरोऽध०कर्णपार्श्वस्थे केशभेदे।“स इत्यघूलचलकाकपक्षकैः” “काकपक्षधरमेत्य याचितः” “तौ प्रणामचलकाकपक्षकौ” “काकपक्षधरेऽपि राघवे” इति च रघु० “काकपक्षधरौ युवा” पद्मपु० रामवनवर्णनम्।

**काकपद** पु० “पादौ द्वौ स्वन्धयुगलस्थौ क्षिप्ता लिङ्गं भगे लघु। कामयेत कामुकां कामी बन्धः काकपदो मतः”

प्रियवस्तुलाभो भवेत्तदा रोगवतोऽवसानम्। मध्यप्रदेशे स्थितवायसस्य प्रभातकाले मधुरस्वरेण। अभीप्सितार्थागमनं ध्रुवं स्यात् स्वामिप्रसादो द्रविणस्य लाभः”। इति सूर्य्योदये काकशकुनम्। “पूर्व्वस्य यामे प्रथमे सशब्दः काको भवेच्चिन्तितकार्य्यसिद्ध्यै। अभीष्टलोकागमनं तथा स्यान्नष्टार्थलाभो नियतं नराणाम्। आग्नेयभागे यदि चाद्ययामे स्त्रीलाभविद्वेषिवधौ भवेताम्। कृतान्तभागे बलिभुग्विरावः स्त्रीलाभसौख्यप्रियसङ्गकारी। नैरृत्यकोणे प्रिययोषिदाप्तिर्मिष्टाशनं सिध्यति चिन्तितोऽर्थः। दिशि प्रतीच्यां विरुते भवेतामभ्यर्थनीयागमनाम्बुवृष्टी। वायव्यकोणे करटः शुभः स्यात् नृपप्रसादोऽध्वगदर्शनं च। सौम्ये च भीतस्करशोकवार्त्ता सौम्या च वार्त्ता धनलाभवार्त्ता। ईशानदेशेऽभिमतेन सङ्गस्त्रासो हुताशात्कलहो लोकसङ्गः। मध्यप्रदेशे सुखकामभोगसम्मानसम्पद्द्रविणेष्टसिद्धिः”। इति प्रथमप्रहरे शकु०। “प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित् पथिकोऽभ्युपैति। चौराद्भयं व्याकुलता च वह्नेर्जायेत काचिन्महती च शङ्का। कृतान्तदेशे नियतं कलिः स्यात् प्रियागमाकर्णनयोषिदाप्तिः। याम्ये तु दृष्टिर्महती च भीतिः प्रियस्य चेष्टस्य समागमः स्यात्। रक्षोदिशि प्राणभयं तदा स्युः क्षोभोऽन्नलाभाखिलरुक्प्रणाशाः। भवेत् प्रतीच्यां प्रबला बलाप्तिर्योषागमो दृष्टिसुवर्षणं च। समीरभागे ध्वजचौरसङ्गो दूतागमस्तोषितान्नलाभः। सौम्ये गणेष्टागमनं जयं च रम्ये रवे चौरभयं त्वरण्ये। महेश्वराशाविरुतश्च काकश्चौराग्निसन्त्रासविरुद्धवार्त्ताः। प्रयोति कुर्व्वन् रटनैरकुर्व्वन् सदार्य्यगुर्व्वागमनं जयं च। मध्यप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम्। मिष्टान्नभोज्यं च ददाति पुंसां करोत्यसौ चौरभयं कुशब्दः”। इति द्वितीयप्रहरश०। “ऐन्द्र्यां विरुच्य प्रहरे तृतीये दृष्टिं तथा चौरभयं प्रयोति। कृष्णस्तु राजागमनं जयं च करोति यात्राशुभकार्य्यसिद्धिम्। वह्नेर्विभागेऽग्निभयं कलिश्च विरुद्धवार्त्ता विफला च यात्रा। भवेद्विरुद्धैर्बलिभुग्विरावैर्भयादिवार्त्ता च भवेद्विशुद्धैः। ककुभ्यवाच्यां कुरुतेऽतितूर्णं रोगं तथाप्तागमनं विरुद्धम्। शुद्धानि कार्य्याणि च यान्ति सिद्धिं सर्व्वाणि तस्य स्वतया नराणाम्। क्रव्यादृदेशे जलदागमः स्यान्निष्टान्नलाभो रिपवो न सन्ति। स्पृष्टागमः स्वामिविरुद्धवार्त्ता भवन्ति यात्राश्च च कार्य्यनाशः। स्यात् पश्चिमे नष्टधनस्य लाभो दूराध्वयानं सुहृदागमश्च। योषागमोऽभीष्टजयादिवार्त्ता यात्राश्च रम्ये रटितेऽर्थसिद्धिः। वाताश्रये दुर्द्दिनमेव वार्त्ता चौराभिनष्टार्थसमागमश्च। सन्तोषवार्त्ता वरयोषिदाप्तिर्यात्रा रवे स्यान्मधुरे प्रशस्ता। यामे तृतीये विरुवन्नुदीच्यां कार्य्यार्थलाभो नृपलेखकानाम्। भोज्यप्रदश्च शुभदा च वार्त्ता प्रयाणकं वैश्यसमागमश्च। दिश्यन्धकारेः कुरुते सुशब्दो भोज्यं जयं हानिकरी कुशब्दः। मध्यप्रदेशे तिष्ठतस्तु साध्यां भोज्यं च ताम्बूलयुतं ददाति”। इति तृतीयप्रहरशकु०। “ऐन्द्र्यां तुरीयप्रहरेऽर्थलाभो भूमीशपूजा भयदृष्टिरोगाः। वह्नेर्विभागे भयरोगमृत्युं मिष्टागमो वायसभाषितेन। याम्ये रवे तस्करवैरिभीती स्यातां विशिष्टागमरोगमृत्युः। स्यात् यातुधान्यां महती प्रवृष्टिरभीष्टसिद्धिः पथि चौरयुद्धम्। दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः। आयाति योषिद्विजयाम्बुवृष्टिः सिद्धिः प्रयाणे नृपतेर्भयं च। वायव्यभागे करटस्य शब्दैरायाति योषित् प्रियमानिनी या। ध्रुवं प्रवासी दिनसप्तकेन शीघ्रागमः स्यात् गमने कृते च। कुबेरभागे पथिकोऽभ्युपैति ताम्बूललाभः कुशलस्य वार्त्ता। वैश्याङ्गनाप्तिस्तुरगादिरूढा यात्रा विरुद्धे म्रियते च रोगी। स्थाणौ स्थितः स्याद्बलिभुग्विरावैः सुवर्णवार्त्ता सहजो विनाशः। मध्यप्रदेशे प्रहरे चतुर्थे वार्त्ता भवेन्मध्यमिका च सिद्धिः”। इति चतुर्थप्रहरशकु०। “यद्भाषितं शाकुनिकैर्विमिश्रं शुभाशुभं दिक्प्रहरक्रमेण। तत्राशुभं यच्छति दीप्तशब्दः श्रेयस्करः शान्तरवश्च काकः। रम्यं रवं दीप्तदिशि प्रयच्छन् शान्तां दिशं भूरि फलं ददाति। तदेव तुच्छं वितरत्यसौ वै दीप्तास्थितः पश्यति दीप्तकाष्ठाम्। यथोपदिष्टं फलमत्र दुष्टं तथैव तद्दीप्तदिशि स्थितः सन्। ध्वाङ्क्षोऽधिरूढो विरुवन् करोति निरीक्षमाणः ककुभं प्रदीप्ताम्। काकः प्रशान्ताभिमुखोऽतितुच्छं दीप्ताश्रितो दुष्टफलं ददाति। शान्ताश्रितं शान्तदिगीक्षणेन कृतारवोऽल्पं कथयत्यनिष्टम्। शान्तस्वरः शान्तककुप्प्रदेशे तिष्ठन् प्रदीप्तां ककुभञ्च पश्यन्। ददात्यभीष्टं फलमेवमल्पं दीप्तां स पश्यंस्तु तदेव तूर्णम्। आकारचेष्टास्वभावविशेषात्सारिकाशादिनयोः क्रमेण। सदाभियुक्ताश्च निरूपयन्ति सम्यक् च ते काकरुतं मनुष्याः”। इति काकरुते दिक्चक्रभेदशकु०। “वंशकाकमधिकृत्य किञ्चन प्रोच्यते बलिभुजो

क्षेमं विधत्ते करभस्य पृष्ठे खरस्य पृष्ठेऽरिभयं प्रधत्ते। क्रोडस्य पृष्ठे धनमर्थलाभं तथैव पृष्ठे धनलग्नपङ्के। सद्योज्वरं सैरिभपृष्ठसंस्थो मृताङ्गसंस्थो मरणं करोति। कार्य्यक्षतिं रिक्तघटस्य संस्थः काकः करोति काष्ठमधिष्ठितश्च। यो दक्षिणं कूजति दक्षिणेन प्रयाति यत्राभिमुखोऽभ्युपैति। यो याति पृष्ठे प्रतिलोमगत्या कृतारवः पातयते स रक्तम्। वामे रवो दक्षिणतस्ततो यः सोऽनर्थहेतुर्बलिभोजनस्य। वामप्रदेशे प्रतिलोमयानं विधाय वामो रुतः एव तेन। प्रयाति पृष्ठे यदि दक्षिणेन कृतारवस्तद्रुधिरं पुरः स्यात्। वल्मीकरन्ध्रादि च यो गृहीत्वा प्रदक्षिणं याति स सर्पभीत्यै। गोपुच्छवल्मीकलतासदर्भं रुवन् भवेत् सर्पविलोकनाय। स्यात् पृष्ठतोऽङ्गारचितास्थिसंस्थः काकः प्रकुर्वन् करवर्षणं च। रुवन् पुरो हानिरुजौ करोति मृत्युं पुनर्निष्ठुरघुष्टमन्दः। प्रसार्य्य रिक्तं वदनं स वामो सर्वत्र निन्द्यो बलिभोजनोऽसौ। वामोऽध्वसूकपातभयं क्षतिं वा सन्ताडयन् वा रथचर्म्मखण्डम्। पश्चादस्थिभङ्गं प्रथमस्थिभङ्गबन्धौ वधं जल्पति युध्यमानः। वामोऽपि रोगं कुरुते विपक्षे तिक्तेऽपि वृक्षे कलिकार्य्यमाशौ। पक्षौ विधुन्वन् विरुवंश्च रूक्षं प्रकण्टके मृत्युमुपादधाति। बन्धो भवेद्वृक्षभग्नशाखे बन्धो लताभिः परिवेष्टिते स्यात्। रम्ये तरौ कण्टकयुक्तवृक्षे सदा भवेता कलिकार्य्यसिद्धी। छन्नाधिरूढो न रवेण यायात् प्रयाति चेत् स्यात् खलु रक्तपातः। अवस्कराम्भस्तृणकाष्ठकूपभस्मादिसंस्थो विनिहन्ति कार्य्यम्। वल्मीकरन्ध्राकचगुच्छकाष्ठचर्म्मास्थिजीर्णाम्बरवल्कलानि। अङ्गाररक्तोत्पलकर्परास्थि दृष्टानि चेत् काकमुखे तदानीम्। पुण्यक्षयः पापसमागमश्च सहङ्क्षयं रोगसमुद्भवश्च। बन्धो वधः सर्वधनापहार इत्यादिकं स्यात् पथि मन्दिरे च। अर्द्धाननस्थस्वपक्षयुग्मः काकः कुमारी विदधाति कलुम्। छायाशुभच्छत्रघटास्थियानवरादितकाष्ठादिककुट्टनानि। वह्नौ चितैकाङ्घ्रिरुपेतचञ्चौ दीप्तस्वरो भास्करमीक्षते च। काष्ठादिकं कुट्टयतेऽथ वा यो मुखाधिकाभयकरः स काकोऽसौ। तुरङ्गेभ पिच्छं विलिखन् रवेण यो रौति तूर्णं स निरीक्षते कम्। एकेन पादेन तथोपविष्टो भूते न यन्त्रं पुरतो जनस्य। विड्गोमयौ न्यस्यति यस्य मूर्ध्नि तस्याऽनवद्यासरुजौ भवेताम्। यस्यास्थिखण्डं विसृजत्यसौ स प्रयाति तूर्णं नगरीं यमस्य। प्रक्षप्रदेशे विरुवन् वियासौः कलत्रदोषं जनयत्यवश्यम्। मनुष्यमातङ्गतुरङ्गमाणां शिरोऽधिरूढो निधनाय तेषाम्। नदीतटे वाऽथ रटन्नटव्यां खरस्वरो व्याघ्रभयाय गन्तुः। नैशाकुर क्वापि गतो हिताय न दुष्टचेष्टो वितनोति शान्तिम्। यात्रोद्यमे सैन्यवधाय काको दृष्टो रथे शास्त्रमृगस्तकेषु। आयाति यस्याभिमुखो बलस्य युद्धोद्यमे तस्य पराजयः स्यात्। सघ्नप्रकङ्कैः कटके नृपस्य काकैः प्रविष्टैः पिशितं विनापि। संयुध्यमानैररिभिः समं स्यान्महाहवे सन्निरयुध्यमानैः। चिह्नध्वजच्छत्रलताधिरोहं समुद्यतं शस्त्रबलं प्रपश्यन्। आजौ जयं जल्पति भूमिपानां हतध्वनिः क्षीरतरौ च काकः। गतिस्वरौ वायसस प्रयुक्तौ प्राच्या फलायोदितसैपरीत्यात्। एवं जनोऽप्याचरति प्रभूतौ यथोदित तत्र यथागमार्थम्। दिग्ग्रामचक्रेऽपि शुभाशुभानि फलानि यानि प्रतिपादितानि। प्रतिष्ठमानस्य भवन्ति तानि तथाविधानीति वदन्ति तज्ज्ञाः।" इति यात्राङ्ककाकरु०।

"स्थानस्थितिभ्यां कथयन्ति काकाश्चेष्टाविशेषेण शुभाशुभानि। प्रबोधिताः प्राक्तनकर्म्मभिर्ये तल्लक्षणाय क्रियते प्रयत्नः। निष्कारणं संवलिता रुवन्तो ग्रामेऽप्रनाशाय भवन्ति काकाः। रोधस्तु चक्राकृतयो वदन्ति सव्यापसव्यभ्रमणाद्भयस्तु। विघातमाहुर्बहुवर्गसंस्था रात्रौ रुवन्तो जनताविनाशम्। लोकस्तु चक्षुश्चरणप्रहारैरुद्वेजयन्तं परचक्रहानिम्। यं स्नाति धूल्यान्तु विलोक्य रौति वृष्टिं समाशंसति वायसोऽसौ। जलस्थलप्राणिविपर्य्ययेण वर्षासु वृष्टिं भयमन्यदा तु। मध्यन्दिने नैर्ऋतगि यस्य काको विरौति रौद्रं विधुनोति वाक्यम्। हरन्ति चौरा द्रविणानि तस्य सुतं तथान्यो भवति प्रमादः। रुवन्नदृष्टस्तृणपूर्णवक्त्रो क्षुतासमीति करटः करोति। स्यात् प्रस्थितस्याप्यथ वा स्थितस्य दुःखं प्रभूतं द्विषतस्त्वयेण। छायासु लाभं, भुवि भूमिलाभं, विप्रं जले, पावपि कार्य्यनाशम्। करोति काको विरुवन्दरस्य प्रस्थायिनः स्थानगतस्य वापि। द्वारप्रदेशे रुधिराक्तविप्रो विरौति काकः शिशुनाशनाय। पक्षौ विधुन्वन् विरुवंश्च रूक्षं शान्ते च दीप्ते भवने न शस्तः। भूयस्तयोर्हि प्रविधाय पक्षौ काकः कुमारं प्रवस करोति। कुम्भोऽधिरूढः करटान्तरस्तु रोगेण मृत्युं कुरुते नराणाम्। द्रव्ये हृते वाऽपहृते खगेन विनाशवाभावपि ताडनस्य।

स्वभ्योक्तताकुन्न शुभाशुभार्थं संचचरेन्निश्चलपाणि-पाद। पूर्वेण खादन् सुखवित्तहर्षं करोति वह्नेर्दिशि वह्निभीतिम्। काकोऽपनाशं दिशि दक्षिणस्यां नैरृत्यदिग्गोचरकत्यदिष्टं। जलेशदेशेऽभिमतार्थसिद्धि-र्वायोर्दिशीतिप्रभवाल्पदृष्टिः। सौम्ये सुखारोग्यसमो-ह्निताथमैशानदेशे वितरत्यभीष्टम्। क्वो विलुप्ते करटैः समन्तात् कार्य्यं विमिश्रं परिभावनीयम्। बलिं विकीर्य्यापि न भक्षयन्ति काकास्तदानीं भयदा भवन्ति। क्षीरद्रुमा-रामचतुष्पथेषु सरित्समीपे त्रिदशालयेषु। देयो बलिर्भूतदिनाष्टमीषु कुल्माषदध्योदनतण्डुलाद्यैः"। इति काकबलिदानप्रकृ०। "पिण्डत्रयस्याथ विधानमेतदाख्यायते यत् किल नारदाद्यैः। दृष्टं मुनीन्द्रैरशुभं शुभस्य यथावदस्मिन् कथयन्ति काकाः। गत्वा शुभेऽह्नि प्रहरे चतुर्थे देशेषु पूर्वं प्रतिपादितेषु। नरेण पिण्डत्रयभोजनार्थं काकाः प्रयत्नेन निमन्त्रणीयाः। ततः प्रभाते ह्युपलिप्य भूमिं तस्यां च पूर्वोदितमन्त्र-युक्त्या। मन्त्राच्युतेशायुपतिर्लोकपाला काकाश्च पुंसां क्रमतोऽर्च्चनीयाः। दध्योदनाद्यैर्विहितं निवेश्य पिण्डत्रये मण्डलकस्य मध्ये। आभ्यर्च्चयेदक्षतपुष्प-धूपैर्मनोहरैर्यत्नपरो मनुष्यः। तेषु क्षिपेत् प्राग्दिग-नुक्रमेण पिण्डेषु हेम प्रथमे, द्वितीये। रूप्यं, तथा लौहलवं तृतीये, शेषं च कुर्य्याद्बलिपिण्डतुल्यम्। त्रिःसप्तकृत्वो विनिवेशपिण्डे पिण्डा निवेश्या बलिभो-जनेभ्यः। मन्त्रोक्तमावाहनतोषितेभ्यः कार्य्यं विचा-र्य्याऽपसरेत्ततश्च। काकेन भुक्ते सुवर्णपिण्डे ज्ञेय नरेणो-त्तमभावकार्य्यम्। भुक्ते सरूप्ये फल मध्यमं स्याद्भुक्ते च लोहे त्वधमं प्रदिष्टम्। विवादमालिन्यविवादहृष्टिनैमाल्य-चिन्ताक्षयभोगरोगाः। सम्प्राप्नुवन्त्यपकार्य्यदेशाः इत्यादयोऽस्मिन् परिभावनीया। चेष्टा सुरामा विद-धाति याति प्रदक्षिणं दक्षिणपक्षसङ्गैः। ग्रीवां तथोच्चां कुरुते सपक्ष स्वानं मनोज्ञं नयति द्रुमञ्च। एवंविधां यो विदधाति चेष्टां पिण्डं समादाय शुभं खगोऽसौ। अभीष्टकार्य्यादधिकं करोति चेष्टाविपर्य्या-सतयान्यथात्वम्। पिण्डं समादाय यदि प्रयाति शान्तां दिशं गच्छति काकपक्षी। पूर्वं फलं तत् कुरुते नराणां चिकीर्षिते वस्तुनि यत्र तत्र। काको गृहीत्वा यदि मुख्यपिण्डं प्रयाति दीप्तां ककुभं तदाशीम्। अत्युत्तमं कार्य्यफलं प्रदद्यात् ततः समस्तं विनिहन्त्य-सत्यम्। द्वितीयकं यद्यपहृत्य पिण्डम् प्रडीयते याम्य-दिगाश्रयेण। फलं तदानीं शुभदं नराणां याम्ये खगो जल्पति कार्य्यजातम्। काके समादाय जघन्यपिण्डं याते प्रदीप्तां ककुभं वदन्ति। कार्य्यं जघन्यादधिकं जघन्यं स्यान्मध्यमं मध्यमपिण्डभागे"। इति बलिदाने पिण्ड-त्रयशकुनम्। "महर्षयो वायसशाकुनस्य वदन्ति सारा-दपि सारभूतम्। पिण्डाष्टकं यत्तदशेषमेतदाख्यायते कार्य्यविनिश्चयार्थम्। शुभेऽह्नि काकानधिवास्य सायं पिण्डाष्टकं भोक्तुमथ प्रभाते। यत्काकभोज्यानि समस्तवस्तून्यादाय यायाद्बहिरप्रमत्तः। एकान्तदेशे तरुपार्श्वभूमौ स्वङ्गोमयाभ्यासपलेपितायाम्। सत्पञ्च-गव्येन समुक्षितायां सौम्योपहारैरुपशोभितायाम्। विधाय पूजां कुलदेवतानां मध्ये ततोऽष्टास्वपि दिक्षु देयम्। भक्तेन सर्पिर्दधिमिश्रितेन पिण्डाष्टकं प्राग्दि-गनुक्रमेण। शचीन्द्रवह्न्यन्तकराक्षसेन्द्रान् विष्णुं विरिञ्चिं धनदं महेशम्। पूर्व्वादिकाष्ठाक्रमयोजितेषु न्यस्येत् क्रमादष्टसु पिण्डकेषु। सम्पूजितांस्तान् प्रण-वैश्च सर्व्वांस्ततोऽर्च्चयेत्तच्चिजनाममन्त्रैः। अर्घासनाले-पनपुष्पधूपैर्नैवेद्यदीपाक्षतदक्षिणाभिः। अभ्यर्च्चितेभ्यो विधिनोदितेन पिण्डाष्टकं तत् वितरेत् द्विजेभ्यः। मन्त्रेण संमन्त्र्य निवेदनाय कार्य्यं विचिन्त्यापसरेच्च किञ्चित्। काकेन पिण्डे प्रथमे गृहीते तिष्ठन् व्रजन् वापि भवेत् कृतार्थः। उद्वेगशोकौ विफलं प्रयाणे, हानिः कलिर्वा भवति द्वितीये। याम्ये तृणापङ्कयमत्ययं स्युः पिण्डे चतुर्थे विजयो रणेषु। स्याद्वारुणेऽभीष्टमकष्ट-साध्यं भवेत् प्रवासो विफलश्च षष्ठे। नाश्नोच तद्वि-षयमेव कार्य्यं भुङ्क्ते न यत् सिद्ध्यति सौम्यपिण्डे। सन्तापशोकौ विफला च यात्रा पिण्डेऽष्टमे वायसभक्षिते च। पिण्डं न गृह्णात्यथ वा न भुङ्क्ते चञ्च्वा विक्षि-पति द्विजो यः। कार्य्येषु सर्वेषु स न प्रशस्तो ब्रवीति घोरं समरं च पुंसाम्"।

काकरुहा स्त्री काकस्य रोहति अन्तरीक्षे वृक्षान्तरात्तदा जायते। (परगाछा) वन्दाकवृक्षे त्रिका० ।

काकरूक पु० कुत्सितं करोति कृ—ऊक कोः कादेशः। १स्त्री-जिते स्त्रीजितस्य स्त्रीमतानुसारेण कुत्सितकरणस्व-भावत्वम्। २निर्द्धने ३दिवान्धे ४भीरौ च त्रि०। तेषां कुत्सिताचरणात् तथात्वम्। करणे ऊक। ५दम्भे पु०। दम्भेन धर्माचरणस्य कुत्सितत्वात् तस्य तथात्वम्।

काकेन लूयते लू—छिदि कर्म्मणि क्विप् लस्य रः संज्ञायां कन्। ६मेचके पु स्त्री हेमच०। तस्य काकच्छेद्यत्वा-त्तथात्वम्। स्त्रियां जातित्वात् ङीष्।

काकल न०ईषत् कलो यस्मात् को कादेशः।१पीवास्थे उन्नतप्रदेशे (टुँटि)त्रिका०। ततो वा कप्। तत्रार्थे पु०हेमच०।"एकः काकलके नाशायास्तु" इति शरीरस्थसन्धिकथने "एकैका काकलकगलयोः" इति मेधीयस्थानोक्तौ च सुश्रु० केति कलो यस्य। २द्रोणकाके पु स्त्री शब्दर०स्त्रियां ङीष्। ईषत् क जलं लाति ला—क संज्ञायां कन्। षष्टिकधान्यभेदे तस्य मब्ब्लवर्णत्वमयत्वात्तथात्वम्। "षष्टिककङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारकप्रभृतयः षष्टिकाः." सुश्रु०। "गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः." भाव-प्रका० षष्टिकलक्षणपदह्ला तद्गुणा दर्शिता यथा— "षष्टिका मधुराः शीताः लघवो बद्धवर्चसः। वातपित्तप्रशमनाः शालिभिः सदृशा गुणे" इति एवं सुश्रुतेऽपि।

काकलि(ली) स्त्री कल—इन् ईषत् कलिः कोः कादेशः। इदिकारान्तत्वात् वा ङीष्। सूक्ष्ममधुरास्फुटध्वनौ अमरः "सङ्कारकिसलयमकरन्दास्वादमत्तकलकण्ठानां मधुकरकलकण्ठानां काकलीकलकलेन" दशकु०। "उन्मीलन् मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः" सा० द०। काकलं गलस्थोन्नतप्रदेशाकारं अस्त्यस्य अच् गौरा०ङीष्। काकलाकारे-२चौर्य्यसाधने पदार्थे "फलितसुसकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तोगत्वा कस्यचिद्गृहं भित्त्वा" दशकु०। काकं काकवर्णमर्धफलं लाति ला—क गौरा० ङीष्। ३गुञ्जायाम्। "काकलीमूलं गुञ्जामूलम्" ज्योत०त० रघु०।

काकलीद्राक्षा स्त्री काकलीव सूक्ष्मा द्राक्षा। अबीजायाम् क्षुद्रद्राक्षायाम्(किस्मिस्)राजनि०।"अबीजाम्या स्वल्पतरा गोस्तनीसदृशी गुणैः" भावप्र०।गोस्तनीशब्दे तद्गुणा दृश्याः।

काकलीरव पुंस्त्री काकली मधुराव्यक्तो रवो यस्य। १कोकिले राजनि० स्त्रियां जातित्वात् ङीष्। कर्म०। २काकलीरूपे रवे पु०। काकलीकलादयोऽप्यत्र।

काकवल्लभा स्त्री ६त०। काकजम्बूवे राजनि०। [राजनि०

काकवल्लरी स्त्री काकप्रिया वल्लरी शाक०त०। स्वर्णवल्ल्याम्

काकबिम्बी स्त्री काकप्रिया बिम्बी। काकतुण्ड्याम् राजनि०।

काकशीर्ष पु० -काक शीर्षमिवास्याः। बकवृक्षे जटाधरः। काकस्य तदग्रे शास्योग्यत्वात्तस्य तथात्वम्।

काकस्त्री प० काकस्य स्त्रीव भासत्वात्। बकवृक्षे शब्दचि०।

काकस्फूर्ज पु० काक स्फूर्जत्वम्, स्फुर्ज—आधारे घञ्। काकतिन्दुके राजनि०।

काका स्त्री ईषत् कं जलमत्, काक काकाकारोऽस्त्यस्य अच् वा। १काकनासाहके २काकोल्या ३काकजङ्घायाम् ४गुञ्जायां ५मलपूम् (काकोडुम्बरिकायाम्) ६काकमाच्यां मेदि०।

काकाक्षिगोलकन्याय पु० काकस्याक्षिगोलकमिव न्यायः। काकस्य एकं चक्षुर्यथा उभयगोलके पर्य्यायेण चरतः कार्य्यकारकमेवमेकस्योभयसंबन्धप्रापके न्याये।

काकाङ्गी स्त्री काकस्याङ्गं अङ्गमेवाकारोऽस्याः वा ङीष्। काकजङ्घाहव्ये अमरः। पक्षे टाप् काकाङ्गा तत्रार्थे रत्नमाला।

काकाची स्त्री काकं तज्जङ्घाकारमञ्चति गच्छति अञ्च-गतौ अच् गौरा०ङीष्, पा०, सुग्ध०मते ईप्। काकजङ्घाद्रव्ये शब्दरत्ना०।

काकाण्ड पु० काकस्य अण्ड इव फलं यस्याः पुंवत्। १महानिम्बे तस्य गुणादि सुश्रुतेनोक्तं यथा "मायैः समान फलमातशुभ्रातक्कं काकाण्डफलं तथैव"। २कोलशिम्ब्याम् स्त्री गौरा०ङीष् तदन्त ३महाज्योतिष्मत्यां राजनि०। ६त०। ४काकस्याण्डे पुं न०।

काकाण्डोला स्त्री काकाण्डस्य दला उपमा फले यस्य पृषो० तलोपः। कोलशिम्ब्याम् राजनि०।

काकादनी स्त्री काकैरद्यतेऽसौ अद—कर्म्मणि ल्युट् ६त० ङीप्।१गुञ्जायाम् शब्दर०। २श्वेतगुञ्जायाम् राजनि० ३कुलिकवृक्षे (कुचियाखाड़ा) वृक्षे रत्नमा०।"मद्योनाम्-मारकगुञ्जाकाकादनीमूलकल्कं पाययेत्" सुश्रु० इत्यत्र सुश्रुते "काकेयकागुदतिक्तपर्णीत्याद्युपक्रमे "सुसमः काकादनीलाङ्गलीत्यादिना" "समासेन श्लेष्मसंशमनो वर्गः." इति श्लेष्मशमनतयोक्ता।

काकायु पु० काकस्यायुर्यस्मात्। स्वर्णवल्लीवृक्षे शब्दचि०।

काकार त्रि०क जलमाकिरति आ+कॄ—अच्। जलक्षायिणि। स्त्रियां टाप् सुग्ध० मते ईप् इति भेदः।

काकारि पु० काकोऽरिरस्य। मेचके। हेमच०।

काकाल पुंस्त्री केति शब्दं कलते रौति कल—अण्। द्रोणकाके शब्दरत्नमा० स्त्रियां जातित्वात् ङीष्।

काकि पुंस्त्री काकस्यापत्यम् वा इञ्। काकापत्ये स्त्रियां ङीप्। पक्षे वाकिना० फिञ् कुक् च। काककायनि तदर्थे पुंस्त्री। स्त्रियां ङीप्।

काकिणी स्त्री "काकिणी च चतुर्भागो माषकस्य पणस्य च" शु०त० नारदोक्ते १माषकचतुर्थभागे २पणचतुर्थभागे च। "वराटकानां दशकद्वयं यत् सा काकिणी(णी) ताश्च पणस्तस्र" इति लीला०। "तस्मात् पण काकिणी वा फलं पुष्पमथापि वा। प्रदद्यात् दक्षिणां यत्र तत्र यथा च सफलो भवेत्" शु०त० एकः०। स्वार्थे कन्। काकिणिका तत्रार्थे "कृविकिलिय्यवहारेण यत्किञ्चिद्धनमनेभ्यो वा काकिणिकामात्रम्" भाग०१,१४,२।

काकिनी स्त्री १पणपादे २मानपादे ३वराटके च मेदि०। मानपादः निवर्त्तनपाद इति केचित् (कांकिडा) माषपाद इत्येव पाठो न्याय्यः काकिणीशब्ददर्शितनारदवाक्यैकवाक्यत्वात्

काकिल पु० ईषत् किरति कॄ–क कोः कादेशः रस्य लः। गलस्योन्नतदेशे (टुंटि) शब्दमा०।

काकी स्त्री काक+जातित्वात् स्त्रियां ङीप्। १काकयोषिति काकस्त्रीत्वात् २वायसीलतायाम् ३काकोल्याञ्च शब्दचि०

काकु स्त्री कक–उण्। १शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कारप्रसिद्धे २विकृतार्थकल्पके भङ्गादौ शब्देच। "कामेकान्ते सा रसिका काकुक्तेन" सा०द०।"प्रविशगदुरकाकुश्रावका स्त्रिग्धकण्ठा" माघ०। सा० द० "वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः। प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च। वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा" इति व्यञ्जनाहेतून् निर्दिश्य "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" काकुं लक्षयित्वा उदा० "गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्। अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ" नैष्यति अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते" इत्युक्तम्।

काकुत्स्थ पुंस्त्री ककुत्स्थस्यापत्यम् शिवा० अण्। ककुत्स्थवंश्ये स्त्रियां ङीप्। ककुत्स्थशब्दे विवृतिः "काकुत्स्थमालोकयतां नृपाणाम्" "स निर्विमिष्य काकुत्स्थो पुरा दूषयति सत्वीम्" "अवज्ञानेन काकुत्स्थ मयुक्रमप दूषणम्" रघुः। "काकुत्स्थ ईषत्स्मयमान आस्ते" भट्टिः

काकुद न० काकुं ददाति दा–क उप०स०। तालुनि अमरः ताडका वाक्प्रकारत्वात् तस्य तथात्वम् "उद्विग्नां काकुदम्" मा० मल० बहुव्रीहौ समासान्तलोपः "उत्काकुद्, विकाकुद" सि० कौ०"पूर्णाद्विभाषा" पा० बहुव्रीहौ वाऽन्त्यलोपः। पूर्णकाकुत् पूर्णकाकुदः।

काकुभ त्रि० ककुभ इदं उत्सा० अञ्। १ककुप्छन्दस्के प्रगाथादौ। २दिक्सम्बन्धिनि च स्त्रियां ङीप्। ककुभोऽपत्यम् शिवा० अण्। तदपत्ये पुंस्त्री स्त्रियां ङीप्।

काकेक्षु पु० काकप्रियः इक्षुः काकप्रियत्वात् कोः कादेशः कर्म०धा०। (नलखागड़ा) १तृणभेदे त्रिका० २काशभेदे राजनि०।

काकेन्दु पु० काकस्य इन्दुरिवाह्लादकत्वात् काकस्य प्रियस्त्रिन्दुः ष्टषो०वा। (गाकड़ाकेन्दु) कुलिकवृक्षे अमरः।

काकेष्ट पु० ६त०। निम्बवृक्षे राजनि०।

काकोचिक पु० ईषत् कोची शङ्कोची कुच–णिनि स्वार्थे कन् (कुचे) मत्स्यभेदे कनभावे काकोचिन् इत्यपि तत्र हारा० पु०। हारावल्यां "काकोचिकस्तु काकोचीत्यत्र पुंसाहचर्यात् पुंस्त्वमेव न्याय्यम्। ईकारान्तत्वभ्रमेण शब्दकल्पद्रुमे स्त्रीत्वोक्तिः प्रामादिकी।

काकोडु(दु)म्बर पु०काकप्रियः उडुम्बरः कर्म०काकस्य प्रियउदु(डु)म्बरो वा। (कोटाडुमर) ६उ(डु)डुम्बरभेदे शब्दरत्ना०। स्वार्थे कन् अत इत्त्वम् स्वार्थिकप्रत्ययस्य प्रकृतिलिङ्गव्यतिक्रमः। काकोडु(दु)म्बरिकाप्यत्र स्त्री अमरः। "तत्र दद्यात् प्रतीवापं काकोडु(दु)म्बरिकारसम्" "काकोडु(दु)म्बरिकागोजीपत्रैर्विस्रावयेदसृक्" सुश्रु०। काकोडु(दु)म्बरिका फल्गुर्मलपूर्णोमलपूर्णकम्पला" भावप्रकाशः तिक्ता शीतला तुवरा जयेत्। कफपित्त व्रणश्वित्रकुष्ठपाण्डुर्श्रः कामलाः" इति भावप्र० तत्र पर्यायोक्तिः।

काकोदर पुंस्त्री कुत्सितं कुटिलमकति अक–वक्रगतौ अच् कोः कादेशः काकमुदरं यस्य। १सर्पे अमर स्त्रियां जातित्वात् ङीप् तस्य उरसा कुटिलगामित्वात्तथात्वम् "काकोदरोयेन विनीतदर्पः" राघवपाण्डवीयम्।

काकोल पु० काकयति लोलयति कक–लौल्ये णिच् वा० ओल काकेन उह्याय पठ्यतेऽत्र उड्+ला–बलयर्थे आधारे क पृषो०वा। १नरकभेदे "महानरककाकोलम् सञ्जीवनमहापथम्" नरकभेदकीर्त्तने मनुः, काकोलं यत्र काकैर्भक्ष्यते" प्रा० वि०। ३जलमाकोलति आ+कुल–संस्याने अच् उप० स०। ५कुम्भकारे तस्य घटनिर्माणेन जलसंस्थानकरणात्तथात्वम्। कल–लौल्ये स्वार्थे णिच् बा० ओल। ३द्रोणकाके पुंस्त्री मेदि० स्त्रियां जातित्वात्

च वा । लेखनाधारे पत्रभेदे तस्य लक्षणवर्णमसादिदाना-धारत्वात् तेन शुक्लत्वाच्च तथात्वम् ।"भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके । कागदे वाऽष्टगन्धेन पञ्चगन्धेन वा पुनः । त्रिगन्धेनैकगन्धेन विलिख्य धारयेन्नर" मन्त्रकल्पद्रुमे हनुमत्कवचम् ।

**काग्नि** पु० ईषदग्नि को॰ कादेश. । ईषदग्नौ मुग्ध० ।

**काङ्क्षा** स्त्री काक्षि—भावे अ । अभिलाषे "उद्गारशुद्धावपि भक्तकाङ्क्षा" सुश्रु० ।

**काङ्क्षिन्** त्रि० काक्षि–णिनि । अभिलाषिणि "देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण" गीता स्त्रियां ङीप् । तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी" रामा० ।

**काङ्गा** स्त्री कुत्सितकमङ्गमस्याः । वराटिकायाम् शब्दच० ।

**काच** दीप्तौ अक० बन्धने सक० इदित् भ्वा० आत्म० सेट् । काञ्चते अकाञ्चिष्ट चकाञ्चे प्रनिकाञ्चते ।

**काच** न० कच्यतेऽनेन कच बन्धने करणे घञ् न कुत्वम् । (मोम) सिक्थे तस्य बन्धहेतुत्वात्तथात्वम् । काच. क्षार-मृत्तिकाऽस्त्यस्याकरत्वेन अच् । क्षारमृत्तिकोद्भवे २लवणभेदे (कालालोन) । राजनि० । ३तत्साधने मृत्तिकाभेदे पु० । (क्षारीमाटी) अमरः । ४शिक्ये (शिका) ५मणिभेदे (काँच) मेदि० । "आकरे पद्मरागाणां जन्म काचमणेः कुतः" काचः काचः मणिर्मणिः" उद्भटः । काचस्य सुश्रुते अनुशस्त्रतयोक्तो यथा–
"अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय "इति । "शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् । त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्" इति तदुपयोगविषयस्तत्रैवोक्त । "पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् । काचस्फटिकपात्रेषु शीतलेषु शुभेषु च" "काचाच्छकोषान् पटलाच घोरान् पुष्पस्य हन्त्यञ्जनमस्य योगैः" सुश्रु० । ६नेत्ररोगभेदे तल्लक्षणादि सुश्रुते उक्तं यथा–
"तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः । रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित् । अस्मिन्नपि तमोभूते नातिरूढे महागदे । चन्द्रादित्यौ सनक्षत्रौ अन्तरिक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति । स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः" व्याकृतमेतत् भावप्र०यथा"यो दोषोनेत्ररोगः चतुर्थं पटलमाख्य पटलं गत स तिमिराख्य तिमिरदर्शनेन तिमिरमस्यास्तीति तिमिरः अर्शआदित्वात् अच् । तस्य लक्षणमाह रुणद्धीत्यादि सर्वत सर्वत्र । लिङ्गनाश इति क्वचित् तन्त्रान्तरे लिङ्गनाशसंज्ञः । तस्य निरुक्तिः । लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं दृष्टितेज तस्य नाशोऽस्मिन्निति लिङ्गनाश । अस्मिन्नपि तिमिरेऽपि तमोभूते तमस्तुल्ये अत्र भूतशब्दस्तुल्यार्थ "भूत प्राप्ततीते समे" इत्यमरात् नातिरूढे अप्रौढे गदे, चन्द्रादित्यौ नक्षत्राणि च पश्यति अन्तरिक्षे अन्तरिक्षस्य प्रकाशमयत्वेन तमोऽभिभवात् तेजांसि अग्न्यादेः भ्राजिष्णूनि रत्नसुवर्णादीनि । अस्मिन् प्रौढे चिरजे चन्द्रादीन्यपि न पश्यतीत्याशय । नीलिकाकाचसंज्ञित: नीलिका काचेति नामान्तराभ्यां युक्तः" । तच्चिदानादि दृष्टिरोगशब्दे वक्ष्यते । स्वार्थे कन् काचकोऽप्युक्तार्थे ।

**काचन** न० कच–बन्धने स्वार्थे णिच्–भावे ल्युट् । १पुस्तकादिबन्धने त्रिका० । स्वार्थे कन् । काचनक तत्रार्थे हारा० । का+चन कुग्ध० । २अवाकस्यान्वितायां किमशब्दार्थस्त्रियाम् अम्म० । "मूढा काचन कन्यका खलु मया तेनाचि ताताधिकः" प्रबोधच०

**काचनकिन्** पु० काचनकमस्त्यस्य इनि । लेखपत्रे जटा० तस्य काचनकरूपबन्धनवत्त्वात् तथात्वम् । [पाले त्रिका०।

**काचभाजन** न० काचमयं भाजनम् । (काचेरबासन) काच-

**काचमल** न० काचस्य क्षारमृत्तिकाया मल इव । काच-भवे सौवर्चले लवणभेदे राजनि० ।

**काचलवण** न० काच काचहेतुकं लवणम् । (कालालोन) सौवर्चले लवणभेदे राजनि० तस्य क्षारमृत्तिकोद्भवत्वात्तथात्वम् । तद्गुणाद्युक्तं सुश्रु० । "लघु सौवर्चलं पाके वीर्योष्णं विशदं कटु । गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम्" ।

**काचसम्भव** न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् काच क्षारमृत्तिका सम्भवोऽस्य । काचलवणे सौवर्चले राजनि० । काचोद्भवमप्यत्र न० ।

**काचसौवर्चल** न० काचस्याभिन्न सौवर्चलम् शा०त० । (कालालोन) लवणभेदे । राजनि० ।

**काचस्थाली** स्त्री काचस्य क्षारस्य स्थालीव । (पारुलगाछ) १पाटलावृक्षे अमरः । हेम० । २काचपात्रे च ।

**काचाक्ष** पुंस्त्री काच इवाक्षि अस्य षच् समा० । बकभेदे स्त्रियां जातित्वेऽपि यकारोपधत्वात् न ङीष् किन्तु नित्वात् ङीन् इति भेदः । अस्य गुणः वकवारो च

सुश्रुतेनोक्तः यथा हंससारसेत्याद्युपक्रमे काचाक्ष-मल्लिकाक्षेत्यादौक्ता "प्लवाः संघचारिणश्च"।

**काचिघ** पु० कच-दीप्तौ वा० इण् काचि कान्तिं हन्ति गच्छति हन-गतौ वा० ड पृषो० ह्रस्व च। १काञ्चने। २क्षेमवृक्षे (क्षेमडा) ३भूषणे च मेदि०। [रोपिते अमरः।

**काचित** त्रि० कच-बन्धने णिच् कर्मणि क्त। शिक्या-

**काचित्** अव्य० का+चित् मुग्ध० चाण्यादिगते द्विपदम्। अस्याकस्थान्विते कापीत्यर्थे। "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम्। चयन चित् चि-संप०क्विप्-ईषत् चित् को कादेशः। ईषच्चयने। "प्रियं काचित्करं हविः" ऋ०१०८६,१२। "काचित् करम् ईषच्चयनकरम्"। [मञ्जकवृक्षे त्रिका०।

**काचिम** पु० कच-मन्त्रे णिच्-इमन्। देवकुलोद्भवे

**काचूक** पुंस्त्री कच-दीप्तौ वा०ऊकञ्। १कृकवाकौ ताम्रचूडे पीतमस्तके खगे २कोके चक्रवाके च मेदि० स्त्रियां जातित्वात् ङीष्।

**काजल** न०कुत्सितं जलम् कोः कादेशः। कुत्सितजले मुग्ध०

**काञ्चन** न०काचि-दीप्तौ भावे ल्युट्। १दीप्तौ। काचि-दीप्तौ ल्यु। २स्वर्णे अमरः। "अमिध्यादपि सद्वृत्तममेध्यादपि काञ्चनम्" "वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम्" "गोभीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः" मनुः। ३पद्मकेशरे मेदि०। ४नागकेशरपुष्पे ५धने राजनि०। ६चम्पके ७नागकेशरवृक्षे ८उडुम्बरे ९धुस्तूरे १०स्वनाम-ख्याते वृक्षे च पु०मेदि०। स्वार्थे कन्। काञ्चनवृक्षे। काञ्चनवृक्षश्च सुश्रुते वातप्रशमनतयोक्तः। भद्रदारुकुष्ठेत्या-द्युपक्रमे "काञ्चनकभार्गी"त्यादिना "समासेन वातसंशमनो-वर्ग" इति। "काञ्चनारः काञ्चनको गण्डारिः शोण-पुष्पकः। कोविदारश्च मरिचः कुद्दालो युग्मपत्रकः। कुण्डली ताम्रपुष्पश्चाश्मन्तकः स्वल्पकोरकः। काञ्चनारो हिमग्राही तुवरः श्लेष्मपित्तनुत्। कृमिकुष्ठगुदभ्रंश गण्डमालाव्रणापहः। कोविदारोऽपि तद्वत् स्यात् तयोः पुष्पं लघु स्मृतम्। रूक्षं संग्राहि पित्तास्रप्रदर-क्षयकासनुत्" भावप्र०। तत्पर्य्यायभेदगुणाद्युक्तम्। काञ्चनमिव कायति कै-क। हरिताले न० राजनि० मणिभेदे सुश्रु० "लोहितकचामीकरमेत्याद्युपक्रमे" दीर्घ-स्थूककाञ्चनकेत्यादि "महाद्रुमकमभ्यतः प्राक्सः" इत्यु-क्तम्। काञ्चनस्य विकारः अण्। ११काञ्चनविकारे त्रि०। "अ काञ्चने यत्र मनेरनुप्रभा" माघः। "निर्देषं काञ्चनं भाण्डमद्भिरेव विशुध्यति" मनुः। स्त्रियां ङीप्। "तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः" मेघ०। किम द्वितीयान्तात् स्त्रियां चन मुग्ध०। १२कांश्चिदि-त्यर्थे अव्य०। "न च काञ्चन काञ्चनसद्मचितिम्" भट्टिः। "न काञ्चन परिहरेत्" छा०उ०। द्विपदमिति बहवः। काचि बन्धने भावे ल्युट्। १२बन्धने न०।

**काञ्चनकदली** स्त्री काञ्चनवर्णा कदली। स्वर्णकदल्याम् (चाँपाकला) राजनि०।

**काञ्चनकारिणी** स्त्री काञ्चनं बन्धनं करोति कृ-णिनि ङीप्। शतमूल्यां शब्दच०। तस्या बहुमूलत्वेन बन्धन-कारित्वात् तथात्वम्। [चोरिणीलतायाम् राजनि०।

**काञ्चनचीरी** स्त्री काञ्चनमिव चीरमस्याः गौरा० ङीष्।

**काञ्चनगिरि** पु० काञ्चनमयस्तत्प्रधानो वा गिरिः शाक० त०। १सुमेरुपर्वते हेमच०। २दानार्थकल्पितस्वर्णाचले च। काञ्चनाचलस्वर्णाचलादयोऽप्यत्र।

**काञ्चनपुष्पक** न० काञ्चनमिव पीतं पुष्पमस्य कप्। आढक्य-वृक्षे राजनि० आढकीशब्दे ८०५पृ० दृश्यम्।

**काञ्चनपुष्पी** स्त्री काञ्चनमिव पुष्पमस्य ङीप्। गणिकारी वृक्षे राजनि०।

**काञ्चनप्रभ** पु० ऐलवंश्ये नृपभेदे। ऐलपुत्रवंशोपक्रमे "अमावसोस्तु दायादो भीमो राजाथ जन्मजित्। श्रीमान् भीमस्य दायादो राजासीत् काञ्चनप्रभः" हरिवं०२७अ०।

**काञ्चनाक्ष** पु० दानवभेदे। "काञ्चनाक्षः कपिस्कन्धो व्याघ्राक्षः क्षितिकम्पनः" हरिवं० २४० अ०।

**काञ्चनार** पु०काञ्चनं तद्वर्णमृच्छति पुष्पेण, ऋ-अण् उप० स०। पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे भावप्र०।

**काञ्चनाल** पु० काञ्चनं तद्वर्णमलति अल-अण् उप० स०। पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे शब्दर०।

**काञ्चनी** स्त्री काञ्चते दीप्यतेऽनया काचि-दीप्तौ करणे ल्युट् ङीप्। १हरिद्रायाम् मेदि० २गोरोचनायाम्। काञ्चनं तद्वर्णं चीरेऽस्याः ङीप्। ३स्वर्णचोरिणीवृक्षे च राजनि०।

**काञ्चनीया** स्त्री काञ्चनाय दीप्तौ हिता छ। १गोरोचनायाम् राजनि० काञ्चनस्येदम् वृद्धत्वात् छ। २काञ्चनसम्बन्धिनि त्रि०। "काञ्चनीयाऽपि माला या न सा दुष्यति कर्हि-चित्" भा० अनु० १०४ अ०।

**काञ्चि(ञ्ची)** स्त्री काचि-बन्धने कर्मणि इन्। रशनायाम् (चन्द्रहार गोट) इत्यादौ कटिबन्धदामभेदे। "स्फुराय-बन्धनविशुक्तगलत्क्वणकाञ्चि कांश्चिदरुणचरणः" माघः।

काचि—दीप्तौ कर्त्तरि इन्। २मोक्षदसप्तपुर्य्यन्तर्गतपुरीभेदे च "अयोध्या मथुरा माया काशी काञ्चिरवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिका" काञ्चिरभिजनोऽस्य अण् तस्य बहुषु लुक्। ३पित्रादिक्रमेण तत्र वासिषु जनेषु पु० ब० व०। "नूत्नवशात्सृजत् काञ्चीं श्चरभांश्च पार्श्वतः" भा०आ०१७५अ०। कृदिकारान्तत्वात् वा ङीप् उक्तार्थे। "वारिक्षोभात्तरितविहगश्रेणिकाञ्चीगुणायाः" मेघ०। "पुन पुनः केशरदामकाञ्चीम्" "काञ्चीगुणस्थानमनिन्दितायाः" कुमा०। "माहिष्मतीवप्रनितम्बकाञ्चीम्" रघु। मुक्तिस्थानानाम्न्यक्रमोत्क्रमे "काञ्ची च त्र्यम्बकं चापि सप्तगोदावरीतटम्" काशी०६अ० "अगाम नगरीं काञ्चीं कान्तां त्रिभुवनादपि। लक्ष्मीकान्त तव प्राप्याऽऽज्ञां तत्र निवासिन। श्रीकान्तानेव कुरुते परत्रेह च निश्चितम्। दृष्ट्वा काञ्चीं कान्तिमतीं कान्तिमद्भिर्निषेविताम्। कान्तिमानभवत् सोऽपि नाकान्तिस्तत्र कस्यचित्" काशीख०। इयञ्च द्विविधा शिवकाञ्ची विष्णुकाञ्ची च पु० प्रसिद्धा। काञ्चीपुरी च दक्षिणस्या वृ० स० कूर्म्मविभागे उक्ता। "अथ दक्षिणेन" इत्युपक्रमे "काञ्ची" "मरुचीपट्टन चेर्य्यार्य्यकसिंहला ऋषभाः" इति। काञ्चीशब्दस्य प्रस्थशब्दे परे आद्युदात्तता। मेखलाभेदश्च "एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोड़श ज्ञेया कलापः पञ्चविंशकः" इत्युक्तलक्षण। अभेदोपचारादन्ययष्टिकायामपि वृत्तिरिति बोध्यम्। [हेमच०।

**काञ्चिक** न० काचि-बन्धने इन् संज्ञायां कन्। काञ्जिके

**काञ्चि(ञ्ची)पद** न० ६त०। जघने। हेमच०।

**काञ्जिक** न० अनूज—धात्वर्थनिर्देशे ण्वुल् कुत्सिता अञ्जिका व्यक्तिर्यस्य। आरनाले (काँजि) हेमच०। तस्य गुणादि भाव०प्र० उक्त यथा "काञ्जिकं रोचनं रुच्यं पाचनं वह्निदीपनम्। शूलाजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम्" अन्यत्र वैद्यके च "सहितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः। काञ्जिकं भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु। दाहज्वरहरं स्पर्शात् पानाद्वातकफापहम्। माषादिवटकैर्यत्तु क्रियते तद्गुणाधिकम्। लघु वातहरं तत्तु रोचनं पाचनम्परम्। शूलाजीर्णविबन्धानां नाशनं वस्तिशोधनम्। धान्याम्लमच्छतरमामविदारि हारि शुण्ठीरजीलवणजीरकसंस्कृतं यत्। आवासितं सुरभि हिङ्गुकणेन यत्नात् तेनाद्य गुणाधिकतोऽधिकता प्रयाति। एतामसौ न परमं विदधाति शिष्ट संविन्न-मामवकभेदककाञ्जिकं यत्। मन्दं विवर्द्धयति जाठरवीतिहोत्रं निर्वाणदीपमिव गन्धकधूमयोग। काञ्जिकं रुचिदं हृद्यं लघ्वमग्निकरं परम्। वातघ्नं हृद्यं श्लेष्मघ्नं गुर्वाहारस्य पाचकम्"। अन्यत्र च "काञ्जिकं दधितैलन्तु सर्वोपलितनाशनम्। गात्रशैथिल्यदानाय मर्द्दनाच्च भक्षणात्"। भावप्र० तद्भेदतद्विधानादि उक्तं यथा—"कुल्माषधान्यमण्डेन सहितं काञ्जिकं भवेत्। यवमस्त्वादि गुणौ भाण्डे सगुडं चौद्र काञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते। तुषाम्बु सहितम् ज्ञेयमामैर्विदलितैर्यवैः। यवैस्तु निस्तुषैः पक्वैः सौवीरं साधितं भवेत्। आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैर्वा संहितं तत्तु सौवीरसदृशं गुणैः। कुल्माषधान्यमण्डादि संहितं काञ्जिकं विदुः। शिण्डिका संहिता ज्ञेया मूलकैः सर्षपादिभिः"।

**काञ्जिकवटक** पु० (काँजिवडा) प्रसिद्धे भावप्रकाशोक्ते वटकभेदे तद्विधानगुणादि तत्रोक्तं यथा "अम्बनी नूतना धार्य्या कटुतैलेन लेपिता। निर्म्मलेनाम्बुनापूर्य्य तस्यां चूर्णं विनिःक्षिपेत्। राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतान्। निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च रुद्धयेत्। ततो दिनत्रयादूर्द्धं भक्ष्या स्युर्वटका ध्रुवम्। काञ्जिको वटको रुच्यो वातघ्नः श्लेष्मकारकः। शीतोदाहं शूलमजीर्णं हरते दृगामयेष्वहितः"।

**काञ्जिका** स्त्री ईषदञ्जिका अनूज-ण्वुल् अत इत्त्वम् कोः कादेशः। १जीवन्तीलतायां २पलाशीलतायां राजनि०। ३वैद्यकोक्ते सार्षपकल्केन कृते व्यञ्जनभेदे तल्लक्षणं यथा "सार्षपीकल्कलौ खण्डा खण्डिता स्निग्धभाजने। स्थापिता लवणसहिता तथ वा तण्डुलोदके। सप्तरात्रात् परं चुक्रं तत्र सम्यक् प्रजायते। तस्मादेव समाकृष्य तत्र्येदाप्रक्षेपयेत्। काञ्जिकेति समाख्याता क्षुद्धर्म्मोपजीविकैः। सार्षपस्य गुणा ये हि ते चास्या अपि कीर्त्तिता"।

**काञ्ची** स्त्री कं जलमञ्चति अनूज—अच् उप०स०। गौरा० ङीष् पा०, सुश्रु० अच् ईप्। महाद्रोणीवृक्षे राजनि०।

**काट** पु० क जलमञ्चते प्राप्यतेऽत्र अट—आधारे घञ्। १कूपे निरु०। "इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळः" ऋ०१,१०६,६, "कूटकाश्च सचीर्वन्तो गोषजा काटमर्हति" ऋक०१२,३२, २विषममार्गे वेददी०।

**काटुक** न० कटुकस्य भावः युवा० अण्। कटुत्वे।

**काट्य** त्रि० काटे विषममार्गे कूपे वा भव० यत् । १विषममार्ग-भवे २कूपभवे च ३रुद्रभेदे पु० । "नमः काट्याय च नीप्याय च" यजु० १६,३७, नमः काट्याय च गह्वरे-ष्ठाय च" । "काटे कूपे विषममार्गे वा भव·" वेददी० ।

**काठ** पु० कथ्यते बद्ध्यते कठ-बन्धने कर्म्मणि घञ् । १पाषाणे त्रिका० । कठस्येदम् अण् । २कठसम्बन्धिनि त्रि० स्त्रियां ङीप् ।

**काठक** न० कठानां धर्म्म आम्नायः समूहो वा वुञ् । १कठशाखाध्यायिधर्मे २तदाम्नाये ३तत्समूहे च "देवस्त्वयोर्यजुषि काठके" पा० कठशब्दे व्याकृतमेतत् । "यद्रोदीत्तद्रुद्रस्य रुद्रत्वमिति काठकम्" निरु० ।

**काठिन्यफल** पु० काठिन्यं फलेऽस्य । कपित्थे राजनि० ।

**काठेरणि** पु० ऋषिभेदे । तस्येदं तत्रभवो वा गहा० छ । काठेरणीय तत्सम्बन्धिनि तत्रभवे च त्रि० ।

**काण** पुंस्त्री कण-निमीलने संज्ञायां कर्त्तरि घञ् । १काके मेदि० स्त्रियां जातित्वात् ङीष् । २एकचक्षुर्युक्ते त्रि० । काणत्वञ्च चक्षुरिन्द्रियशून्यैकगोलकवत्त्वम् । "पौन-र्भवश्च काणश्च यस्योपपतिरेव हि" "बीह्यांश्चो नवतेः काणः षष्टेः श्वित्री शतस्य तु" अपाङ्क्तेयकथने मनुः । "खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्" "काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणं वरम्" मनुः । अस्य निरुक्ते ६अ० "अदायिकाणे विकटे" इत्यृचमधिकृत्य अन्याऽपि निरुक्तिर्दर्शिता यथा—"अदायिनि काणे विकटे विक्रान्तदर्शने इत्यौपमन्यवः । कणतेर्वा स्यादणूभावकर्म्मणः । कणतिः शब्दाणूभावे भाष्यतेऽनुक्वणतीति मात्राणूभावात् कणादर्शनाणूभावात् काणः" इति "परोपहासकृत् काणो गां दद्यात् स समौक्तिकाम्" शाता० परोपहासकर्मविपाकः काणत्वमुक्तम् । मनुना तु दीप-निर्वापकर्मविपाकत्वमुक्तम् । "दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्" ।

**काणभूति** पु० वररुचिनामककात्यायनेन बृहत्कथाश्रावणोद्देश्ये पिशाचत्वप्राप्ते यक्षभेदे । "विन्ध्याटव्यां कुबेरस्य शापात् प्राप्तः पिशाचताम् । सुप्रतीकाभिधोयक्षः काणभूत्याख्यया स्थितः" "इत्याख्याय कथामध्ये विन्ध्यान्तः काणभूतये । दुर्मदं दर्शितपथं महत्तादमदर्शयत्" इति च बृहत्क० तद्दितिहासं तत्रैव दृश्यम् ।

**काणुक** त्रि० कण-दीप्तौ बा० उकञ् । १कान्ते २क्रान्ते ३पूर्णीकृते च । "इन्द्रः सोमस्य काणुका" ऋ० ८,७७,४ । "काणुका कान्तानि क्रान्तानि सोमेन, कृतानि वा सोमपूर्णानि" भा० । निरुक्ते तु इमामृचमधिकृत्य ५,११, उक्तं यथा—"काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा इन्द्रः सोमस्य कान्त इति वा कणेघात इति वा कणेहतः कान्तिहत इति" । तत्र दृष्टो० सर्वत्र साधु ।

**काणूक** पुंस्त्री कणति कण-ऊकण् । वायसे उज्ज्व० । स्त्रियां जातित्वात् ङीष् ।

**काणेय** पुंस्त्री काणायाः अपत्यम् "स्त्रीभ्यो ढक्" पा० ढक् । काणाया अपत्ये पक्षे "क्षुद्राभ्यो वा" पा० ढ्रक् । काणेर-स्तत्रार्थे पुंस्त्री "क्षुद्रा च अङ्गहीनाः शीलहीनाश्च" सि० कौ० । काणेयानां विषयो देशः भैरिका० विधल् । काणेयविध तद्विषये देशे ।

**काणेली** स्त्री १अनूढाया कन्यायाम् २असत्यां स्त्रियाञ्च । "काणेलीमातः । वामतस्तस्य सार्थवाहस्य गृहम्" मृच्छ० ।

**काण्टकमर्द्दनिक** त्रि० कण्टकमर्द्दनेन निर्वृत्तम् अक्षद्यूता० ठक् । कण्टकमर्दनेन निर्वृत्ते खात्रादौ ।

**काण्ठेविद्धि** पुंस्त्री कण्ठे विद्धः ७त० सप्तम्याः अलुक् कण्ठेविद्धऋषिभेदस्तस्यापत्यम् इञ् । कण्ठेविद्धस्यापत्ये स्त्रियां तु गोत्रप्रत्ययान्तत्वात् वा ष्यञ् पक्षे ङीप् । काण्ठेविद्ध्या काण्ठेविद्धी वा ।

**काण्ड** पुंन० कनी-दीप्तौ ड तस्य नेत्त्वं किञ्च दीर्घः । १दण्डे २बाणे ३पर्वणि कुत्सिते ४वर्गे ५अवसरे ६जले च अम० । ७नाले (डाँटा) ८वृक्षस्कन्धे (गुँडि) ९स्तम्बे (गुल्मभेदे) १०निर्जने धरणि० ११माडीवृन्दे १२वृक्षभेदे (शरपत्ते) मेदि० । १३श्लाघायां हेमच० । दण्डशब्द षोडशहस्तमितः वंशः स यादिवदस्य "काण्डान्तात् क्षेत्रे" पा० क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि सति द्वे काण्डे प्रमाण-मस्याः सा द्विकाण्डा क्षेत्रभक्तिः । "प्रमाणे द्वयसजिति" पा० विहितस्य मात्रचः "प्रमाणे लोद्विगोर्नित्यमिति" वार्त्ति० लुक् । क्षेत्रे किं द्विकाण्डी रज्जुः" सि०कौ० । "ईदृशा शरताकाण्डेनाहन्ति" कात्या० ८,७,२० । शरताकाण्डेन शरदण्डेन" कर्क० । बाणे "सविष काण्डमादाय मृगयामास वै मृगम्" भा०अनु० २६५ श्लो० । वर्गे "क्षपातमस्काण्डमलीमसं नभः" माघ० । "दृक्-काण्डमितो भाति" रामा० । "दूर्वाकाण्डमिव

श्यामा" भट्टिः । वर्गश्च एकजातीयसमुदायः "क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ।" भाग०४,२४,९। "अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा" भाग०८,४,२१ । उपचारात् १४तत्प्रतिपादकग्रन्थे च ब्रह्मकाण्डं कर्मकाण्डम् अवसरश्चात्र योग्यकालः प्रस्तावश्च तत्र योग्यकाले अकाण्डशब्दे ५२९उदा०। प्रस्तावे अयोध्याकाण्डं लङ्काकाण्डमित्यादि । मात्रपत्रलतादीनां पत्राधारदण्डे (डाँटा)नालाकृपत्र। तत्र नाले "काण्डमूलपत्रपुष्पफलप्ररोहरसगन्धानां सादृश्येन प्रतिनिधिं कुर्य्यात् सर्वाभावे यवः प्रतिनिधिः"आ०त०पैठी० । "काण्डं मालम्"रघु०।"पुष्पकाण्डाद्विनिवृत्तिःस्यन्ति"कात्या० २५,६,५ । पुच्छं काण्डमिव नालाकृत्वात् । स्तम्बे "काण्डात् काण्डात् प्ररोहन्ती" यजु० १३,१४ । "महतः पञ्चमूलस्य काण्डमष्टादशाङ्गुलम्" सुश्रु० । स्कन्धे "इक्षुकाण्डानि वा कण्टसर्पेण दर्शयित्वा भक्षयेत्" "दूर्वेन्द्रीवरनिम्बिशाल्मलीरिष्टशरकाण्डानामन्यतमवर्णः" सुश्रु० "उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः" "बीजकाण्डरुहाण्येव प्रतानावल्ल्य एव च" मनुः ।१५अन्यपरिच्छेदे । मधुकाण्डं श्राद्धकाण्डम् १६सन्धिविच्छिन्नैककाण्डास्थिनि न०।"भग्नं समासात् द्विविधं हुताशकाण्डे च सन्धौ च हि तत्र सन्धौ । उत्पिष्टविश्लिष्टविवर्त्तितञ्च तिर्य्यग्गतं क्षिप्तमधश्च षट् च" । रोगनिश्चय ।"सन्धिविच्छिन्नमेककाण्डमस्थि काण्डम्"तट्टीका- काण्डस्यावयवो विकारो वा बिल्वा० अण् । १७काण्डावयवे १८तद्विकारे च त्रि० १९अङ्कोठवृक्षे पु० शब्दचि० ।

**काण्डकटुक** पु० काण्डे स्कन्धेऽपि कटुकस्तिक्तः। कारवेल्ले, (करेला)राजनि० । [भिस्य कप् । कामटणे राजनि० ।

**काण्डकाण्डक** पु० काण्डस्य शरस्येव काण्डमिव काण्ड-

**काण्डकार** पु० काण्ड किरति विक्षीर्णतया कॄ—खुल् । १गुवाकवृक्षे शब्दमा०। कृ—ण्वुल् । २बाणकारके त्रि० ।

**काण्डकीलक** पु० काण्डे कीलमिव यस्य कप् समा० । लोध्रवृक्षे राजनि० । तस्मिन् हि कीटसम्बन्धात् कीलमिव स्कन्धे जायते । [दीर्घकाण्डे गुण्डनामतृणे राजनि०।

**काण्डगुण्ड** पु० काण्डेन गुण्डयति गुडि—वेष्टने अण् ।

**काण्डगोचर** पु० काण्डस्य बाणस्य गोचर इव गोचरोऽस्य । लोहनाले नाराचाख्ये अस्त्रभेदे त्रिका० ।

**काण्डतिक्त** पु० काण्डे तिक्तः । भूनिम्बे (चिराता) राजनि० । स्वार्थे कन् । काण्डतिक्तक तत्रैव ।

**काण्डधार** पु० काण्डं धारयत्यत्र धृ—णिच् आधारे अच् । १देशभेदे । स अभिजनोऽस्य तक्षशिला० अञ् । २काण्डधार पित्रादिक्रमेण तत्रवासिनि त्रि० । [राजनि० ।

**काण्डनील** न० काण्डे नीलं कीटाक्रान्तत्वात् । लोध्रवृक्षे

**काण्डपट** पु०काण्ड इव पट । (कानात) पटभेदे, हेमच० । तस्य हि सङ्कोचे काण्डरूपता भवति। "तत समेधागारमानीय काण्डपटपरिक्षिप्ते विविक्तोद्देशे" दशकु० स्वार्थे कन् । काण्डपटक तत्रैव ।"उत्क्षिप्तकाण्डपटकान्तरलीयमानं" माघः । [शरपुङ्खायाम् राजनि० ।

**काण्डपुङ्खा** स्त्री काण्डस्य शरस्य पुङ्खो यस्या ५त० ।

**काण्डपुष्पा** स्त्री काण्डात् पुष्पमस्याः "काण्डप्रान्तशतैकेभ्यः पुष्पात्" पा० टाप् । द्रोणवृक्षे शब्दच० पुष्पे न० ।

**काण्डपृष्ठ** न० काण्डं धनुस्तस्येव स्थूलं पृष्ठमस्य । १स्थूलपृष्ठे धनुरादौ। काण्डः पृष्ठेऽस्य । २शस्त्राजीविनि पु० । "स्त्रीपूर्व्वो काण्डपृष्ठाश्च यावन्तो भरतर्षभ । अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम्" भा० अनु० २३अ० । "अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च" भा०अनु०१०अ० अपाङ्क्तेयकथने । "चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः" भा०अनु०१२५अ० अभोज्यान्नकथने। पापिना तिर्य्यग्योनितः काण्डपृष्ठताप्राप्तिश्च क्रमशो यथा भवति तथा भा० अनु० २८अ० निरूपितं यथा "तिर्य्यग्योनिगतः सर्व्वो मानुष्यं यदि गच्छति । स जायते पुल्कसो वा चण्डालो वाऽप्यसंशय । पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते । स तस्यामेव सुचिरं मातङ्ग परिवर्त्तते । ततो दशगते काले लभते शूद्रयोनिताम् । शूद्रयोनावपि ततो बहुशः परिवर्त्तते । ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि । वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते । ततः षष्टितमे काले लभते ब्रह्मबन्धुताम् । ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु द्विशते काले लभते काण्डपृष्ठताम् । काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते । ततस्तु त्रिशते काले लभते जडतामपि । तां च प्राप्य चिरं कालं तत्रैव परिवर्त्तते । ततश्चतुःशते काले श्रोत्रियो नाम जायते" । "स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् । तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः" स्मृत्यन्तरोक्तकर्म्मविपाकः काण्डपृष्ठता । २वैश्यापतौ शब्दकल्पद्रुमधृतम् तन्मूलं मृग्यम् ।

**काण्डरुहा** स्त्री काण्डात् रोहति रुह—क । (कटकी)

१कटुक्याम् रत्नमाला। २स्तम्बरुहमात्रे त्रि०। "वीज-काण्डरुहाण्येव" मनु०।

**काण्डर्षि** पु० काण्डस्य वेदभागभेदस्य ऋषिः तदधिकारेण विचारकः। वेदभागभेदमीमांसके जैमिन्यादौ त्रिका०। तत्र कर्म्मकाण्डमीमांसको जैमिनि तेन हि "अथातो धर्म्मजिज्ञासा" इत्यादिसूत्रजातेन कर्म्मकाण्डस्य विचारः कृतः। ब्रह्मकाण्डस्य विचारको वेदव्यासः तेन हि "अथातो ब्रह्मजिज्ञासा" इत्यादिसूत्रजाते ब्रह्मकाण्डस्य विचारः कृत। एवं भक्तिकाण्डस्य विचारकः शाण्डिल्य इति बोध्यम्

**काण्डवत्** पु० काण्डोऽस्त्यस्य प्रहरणत्वेन मतुप् मस्य व। शरधारिणि (तीरन्दाज) अमर।

**काण्डवारिणी** स्त्री काण्डान् रिपुवाणान् वारयति स्मरणेन वृ-णिच्-णिनि। दुर्गायाम् "महागजघटाटोपयुगे नरवाजिनाम्। स्मरणात् वारयेत् वाणान् तेन सा काण्डवारिणी" देवीपु० ४५अ० देवीनामभेदनिरुक्तौ।

**काण्डलाव** त्रि० काण्डं लुनाति लू-अण् उप० स०। १तृणस्तम्बच्छेदके काण्डं लवितुम् "अण् कर्म्मणि च" पा०। क्रियार्थायां क्रियाया कर्म्मण्युपपदेऽण्। २काण्डं छेत्तुमित्यर्थे। काण्डलावो व्रजति" सि०कौ० काण्डं छेत्तुं व्रजतीत्यर्थः।

**काण्डवीणा** स्त्री काण्ड इव स्थूला वीणा। १स्थूलवीणायां चाण्डालवीणायाम्। काण्डस्य शरस्य विकारः बिल्वा०अण् काण्डी वीणा कर्म०। २शरमय्यां वीणायाम् २"गोधावीणा काण्डवीणाश्च पत्नीवादयन्त्युपगायन्ति" कात्या०१३, ३,१७। "शरकाण्डमय्योवीणाः काण्डवीणा" कर्क।

**काण्डसन्धि** पु० ६त०। ग्रन्थौ पर्व्वणि (पाव्)(गाँट) राजनि०

**काण्डस्पृष्ट** पु० स्पृष्ट गृहीत काण्डं येन निष्ठान्तत्वात् परनि०। शस्त्राजीवे अमर।

**काण्डहीन** न० काण्डेन हीनम् ३त०। भद्रमुस्तके शब्दच०।

**काण्डिका** स्त्री काण्डोऽस्त्यस्याः प्राशस्त्येन ठन्। १लङ्कानामकधान्यभेदे २वालुकानामकर्कटीभेदे च राजनि०।

**काण्डिन्** त्रि० काण्डः गुल्मोऽस्त्यस्य प्राशस्त्येन इनि। प्रशस्तगुल्मयुक्ते स्त्रियां ङीप्। "अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुध" अथ० ८,७,४।

**काण्डीर** पु० काण्डोबाणोऽस्त्यस्य इत्यर्थे "काण्डाण्डादीरन्नीरचौ पा०" इत्यनेन ईरन् ईरचौ वा। १वाणधारिणि (तीरन्दाज) अमरः 'काण्डीर खाड्गिक शार्ङ्गी' भट्टि वाणाकारशिखावत्त्वात् २अपामार्गे काण्डवेल इति ख्याते ३लताभेदे च राजनि० ४मञ्जिष्ठायां स्त्री रत्नमाला अस्त्यर्थे गौरादित्वात् ङीष्। [तृणभेदे राजनि०।

**काण्डेक्षु** पु० काण्डे इक्षुरिव (तालमाखना) इति ख्याते काश-

**काण्डेरी** स्त्री काण्डं वाणाकारं हस्तिदन्तमिव पुष्पम् ईर्त्ते ईरङ्-गतौ अण् गौरादेराकृतिगणत्वात् ङीष् पा०, मुग्ध०मते ईप्। नागदन्तीवृक्षे रत्नमाला।

**काण्डेरुहा** स्त्री काण्डे रोहति रुह-क ७त० अलुक्स०। (कट्की) कटुकीवृक्षे रत्नमा०। [अमरे पाठान्तरम्।

**काण्डोल** पु० कण्डोल+प्रज्ञा० स्वार्थे अण्। कण्डोलशब्दार्थे

**काण्व** पु० काण्वस्य कण्वगोत्रापत्यस्य छात्रः कण्वादि० अण् यलोपः। १कण्वगोत्रापत्यस्य छात्रे 'यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः। जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः' भाग०१२,६,७७। २तदधीतशाखायां स्त्री ङीप्। कण्वस्यापत्यं शिवा० अण्। ३कण्वापत्ये पु० स्त्री "याभिः काण्वस्योप बर्हि" ऋ०८,१,८। "इत्था धीमन्तमद्रिवः काण्वं मेध्यातिथिम्" ८,२,४०। "काण्वं कण्वस्य पुत्रम्" भा०। गोत्रापत्ये तु गर्गा० यञ्। काण्व्य तद्गोत्रापत्ये बहुषु तस्य लुक्। स्त्रियां गोत्रान्तत्वात् ङीप् यलोपश्च। काण्वी तद्गोत्रापत्यस्त्रियाम्। "काण्वीपुत्रात् काण्वीपुत्र" इ० श०ब्रा०वंशवर्णने। ततः स्त्रियां लोहिता० फक्। काण्वायनी। ततोयून्यपत्ये तु "यञिञोश्च ४।१।१०१" पा० फक्। काण्व्यायन तदीययुवापत्ये पु० स्त्री। कण्वेन दृष्टं साम अण्। ४कण्वदृष्टे सामभेदे। "कौत्सं भवति काण्वं भवति" श्रुति। तच्च साम गेय(वे)गाने १६ प्रपाठके दृश्यम्।

**कात्** अव्य० कुत्सितमतत्यनेन अत-आधारे क्विप् कोः कादेशः। तिरस्कारे तिरस्कारस्य कुत्सितप्राप्तिहेतुत्वात्तथात्वम्। "यन्मय्यैश्वर्य्यमत्तेन गुरुः सदसि कात्कृत" भाग० ६,७,९। "कात्कृतस्तिरस्कृत" श्रीधर।

**कातन्त्र** न० ईषत्तन्त्रमस्य कोः कादेश। कालापकव्याकरणे तच्च कार्त्तिकेयप्रसादेन सर्व्ववर्म्मणा कृत यथोक्तं वृहत्कथासारे सर्व्ववर्म्मभ्यभापतेत्युपक्रमे "ततोऽन्त प्रभ्रणा तेन स्कन्देन मम दर्शनम्। दत्तं तत्र प्रविष्टा मे मुखे मूर्त्ता सरस्वती। अथासौ भगवान् साक्षात् षड्भिराननपङ्कजैः। "सिद्धोवर्णसमाम्नाय" इति सूत्रमुदैरयत्। तच्छ्रुत्वैव महष्यत्तद्बलमाज्ञापलात् परम्। उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम्। अथावदीत् स देवो मा नावदिष्य स्वय यदि। अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम्। अधुना स्वल्पतन्त्रत्वात्

कातन्त्राख्यं भविष्यति । महाहनकलापस्य नाम्ना काला-पकं तथा । इत्युक्त्वा शब्दशास्त्रं तत्प्रकाश्याभिनवं वषु । साक्षाद्देव स मा देवं पुनरेवमभाषत"

**कातर** त्रि० ईषत्तरति स्वकार्य्यसमाप्तिं गच्छति तृ—अच् कोः कादेशः । १अधीरे, व्यसनाकुले अमर २भीते, ३विवशे, ४चञ्चले च । "हेम्ना तदध्यासितकातराक्ष्या" रघु० । "तयोः समापत्तिषु कातराणि" कुमा० । "कातरोऽपि यदि चोद्यतासिना" रघुः । "मन्ये स्निग्धाः प्रिय इति सखे ! चेतसा कातरेण" मेघ० । "विद्धा मृगी व्याध-शिलीमुखेन मृगोऽपि तत्कातरवीक्षणेन" उद्भटः । के जले आतरति प्लवते न तु विशेषतो मज्जति । ५उडुपे । (कातला) ६मत्स्यभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष् । ७ऋषिभेदे पु० ततः गोत्रे नडा० फक् । कातरायण तद्गोत्रापत्ये पुंस्त्री । भावे ष्यञ् । कातर्य्य व्याकुल-तायां न० "कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम्" रघु० । तत्र कातरता स्त्री, त्व कातरत्व न० तदर्थे ।

**कातल** पु० कस्य जलस्य न तलमस्ति स्पृश्यत्वेनास्य अच् । (कातला) १मत्स्यभेदे राजनि० । स्त्रियां जातित्वात् ङीष् । "कातलो मधुरस्तोष्णो गुरुपाकी त्रिदोषकृत्" वैद्य० । २ऋषिभेदे च ततः गोत्रापत्ये नडा० फक् । कातलायन तदपत्ये पुंस्त्री स्त्रियां गोत्रत्वात् ङीष् ।

**काति** स्त्री कै—शब्दे क्तिन् । स्वे कृष्णकातिशब्दे उदा० ।

**कातीय** त्रि० कात्यायनस्य छात्रः तस्येदं वा "वृद्धाच्छ" पा० छ तत्र फको वा लुक् । १कात्यायनच्छात्रे २तत्-सम्बन्धिनि च त्रि० । कातीयं श्रौतसूत्रं गृह्यसूत्र-मित्यादि पक्षे न लुक् । कात्यायनीय तदर्थे त्रि० । कातीय श्रौतसूत्रप्रतिपाद्यविषयाश्च कात्यायनशब्दे दृश्याः ।

**कातु** पु० क जलमतति सातत्येन गच्छति अत—उण् ६त० । कूपे निरु० तस्य शोषेऽपि शेषेण शोषणाभावात् तथात्वम्

**कात्यक्य** पु० कत्थ-श्लाघायाम् ण्वुल् कत्थकः स्वार्थे ष्यञ् अग्निभेदे निरु० । "यज्ञैध्म इति कात्यक्योऽग्निरिति" शाकपूणि । "नाराशंसो यज्ञ इति कात्यक्य नरा आसीना" शाकपूणि । "नरा अस्मिन्नासीनाः शंसन्ति अग्निरिति शाकपूणि । इति च निरु० ८,५,६, [ मत्ये ।

**कात्य** पुंस्त्री कतस्यर्षे गोत्रापत्यम् गर्गा० यञ् । कतर्षिगोत्रा-

**कात्यायन** पु० कतस्य गोत्रापत्यं युवा गर्गा० यञ् यञन्तत्वात् यनि फक् । कतस्य युवगोत्रापत्ये ऋषिभेदे । स च त्रिविध विश्वामित्रवंश्यः, गोभिलपुत्र, कतवंश्यसोमदत्त द्विजपुत्रं वसुदत्तागर्भज वररुचिनाम्ना ख्यातश्च । तत्र विश्वामित्रगोत्रोत्पन्नं हरिवं २८३० उक्तो यथा । "विश्वामित्रस्य च सुता देवरातादयः स्मृताः । विख्याता-स्त्रिषु लोकेषु तेषां नामानि मे शृणु । देवश्रवाः कतश्चैव यत्र कात्यायनाः स्मृता" इति ।

अयञ्च गोभिलपुत्रकात्यायनात् भिन्न । गोभिलपुत्र-कात्यायनेन च कर्मप्रदीपाख्यं छन्दोगपरिशिष्ट-रूप शास्त्रं प्रणीतं तस्येदमादिमं वचनम् । "अथातो गोभिलोक्तानामन्येषाञ्चैव कर्म्मणाम् । असपष्टानां तथा सम्यग्दर्शयिष्ये प्रदीपवत्" । तत्र १प्रपाठके १०खण्डाः तत्र १ख० यज्ञोपवीतादिपरिभाषा । २ख०आवृद्ध्यादि परिभाषा । ३ख०अक्रियादिस्त्रैविध्यादिकथनपूर्वकं श्राद्ध-विधिनिरूपणम् । ४ख० पिण्डदानविधानम् । ५ख० नान्दीमुखश्राद्धादिकर्त्तव्यताविधानानि । ६ख० अग्न्या-धानादिकालाधिकारिधर्मविधानम् । ७ख०अरणीनिर्माण-प्रकारादि । ८ख० अग्न्युद्धारप्रकारादि । ९ख० अग्निहोत्रकालादितद्विधानादि । १०ख० दन्तधावन-स्नानादिविधानम् उपाकर्मोत्सर्गादिस्नानादिविधानञ्च ।

२प्रपाठके नव खण्डाः । तत्र१ख० सन्ध्योपासन-कालादितद्विधानानि । २ख० तर्पणप्रकारादि । ३ख० पञ्चयज्ञविधानप्रकारादि । ४ख० वैश्वदेवविधानप्रकार । ५ख० दक्षिणादानादिप्रकारः । ६ख० अमावास्यादि-श्राद्धकालव्यवस्था तद्विधानप्रकारश्च । ७ख० कर्मनि-र्माणप्रकार श्राद्धविधानप्रकारश्च । ८ख०दर्शपौर्णमास-विधानप्रकार ।९ख०प्रवासगमनकाले साग्निकस्य कर्त्तव्य-विशेषकथनम् ।

तृतीयप्रपाठके ।।खण्डा । तत्र १ख० साग्निकस्य पत्नी-मरणे कर्त्तव्यविशेषविधानम् । २ख०साग्नेर्दाहप्रकार । ३ख०शवस्पर्शिकर्त्तव्यभेदविधानम् साग्निकस्य विदेशमरणे दाहविधानञ्च । ४ख० सूतके सन्ध्यादित्यागेऽपि श्रौत-कर्मणामनुष्ठानविधानम् । ५ख० पुंसवनादिक्रियाङ्ग-होमाङ्गतिसङ्ख्याविशेषकथनं शुक्लापतिप्रतापञ्चाम्बुयवाट-यन्त्रकपुष्पिकाकपुच्छलक्षणादिशब्दपरिभाषा ब्रह्म-चारिकर्त्तव्यविधानञ्च । ६ख० समयनीयचरुकर्त्त-व्यताविषयोपदर्शनम् नवयज्ञकालकथनञ्च । ७ख० विहितकर्मातिक्रमे प्रायश्चित्तविशेषविधानम्, अन्यत्रैव-चरुश्रवशब्दपरिभाषा ।८ख० वर्णभेदेन दण्डप्रमाणकथ-नम्, प्रायश्चित्तदर्भनिरूपणञ्च । दक्षिणाया गो० प्रवर-

तोक्तिः उपाकर्म्मप्रकारश्च । ८ख० यज्ञपात्रादिशब्दानां पारिभाषिकार्थकथनम् । वेदोत्सर्गकथनं तत्र बलिप्रकारः स्नातकादिना तदकरणे प्रायश्चित्तकर्त्तव्यताविधानम् तत्र बलिदानवर्जनञ्च । त्र्यम्बकमण्डकगोलकचीवरशब्द-परिभाषा । ऋतुमन्त्रप्रकार । १०ख० । पशुप्र-स्कारस्याभिप्रायकथनम् । पशुप्रदाने एकादशस्थान-कथनम् । पश्वभावे पायसपिण्डैः होमविधानम् श्राद्धे पिण्डदानप्राधान्यं गयादौ पिण्डमात्रदानदर्शनादिति परमतमुक्त्वा अन्नदानस्य प्राधान्यमिति स्वमतकथनम् । आमश्राद्धविधाने पिण्डाभाव इत्युक्तिः । दीपार्घ्यमधु-पर्क्कादिशब्दपरिभाषा” ।

अनेनैव धर्म्मसंहिता कृता । “मन्वत्रिविष्णुहारीत-याज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्बसंवर्त्ताः कात्यायन-बृहस्पती” इत्युपक्रमे “धर्म्मशास्त्रप्रयोजकाः” याज्ञ० । तत्र च प्रायेणाष्टादशविवादनिर्णयः । कातीयश्रौत-गृह्यसूत्रसर्वानुक्रमणिकादिकमनेनैव कृतम् । वररुचि-नामकात्यायनश्च पुष्पदन्तावतारस्तत्कथा च बृहत्-कथायाम् । सुप्रतीकयक्षावतारकाणभूतये स्वजन्मादि श्रावणरूपशापान्तमुपवर्ण्य स्वजन्मकथादि तत्रोक्तं यथा । “ततः स मर्त्त्यवपुषा पुष्पदन्तः परिभ्रमन् । नाम्ना वररुचिः किञ्च कात्यायन इति श्रुतः । पारं संप्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम् । खिन्नः समाययौ द्रष्टुं कदाचित् विन्ध्यवासिनीम्” इत्युपक्रम्य तस्य काणभूतिना सह मेलने जाते काणभूतिना निजशापा-दिवृत्तान्ते उक्ते । “इत्थं मे शापदोषोऽयं पुष्पदन्तागमा-वधि । इत्युक्त्वा विरते तस्मिन् काणभूतौ च तत्-क्षणम् । स्मृत्वा वररुचिर्जातिं सुप्तोत्थित इवावदत् । स एष पुष्पदन्तोऽहं मत्तस्तां च कथां शृणु । इत्युक्त्वा पञ्च लक्षाणि सप्त सप्त महाकथाः । कात्यायनेन कथिताः काणभूतिस्ततोऽब्रवीत्” इत्युपक्रम्य “तद्ब्रूहि निजवृत्तान्तं जन्मन प्रभृति प्रभो ।” इति काणभूतिप्रश्ने “ततो वररुचिस्तस्य प्रणतस्यानुरोधतः । सर्व्वमाजन्मवृत्तान्तं विस्तरादब्रवीदिदम् । कौशाम्ब्यां सोमदत्ताख्यो नाम्ना ग्निशिख इत्यपि । द्विजोऽभूत् तस्य भार्य्या च वसुदत्ताभि-धाऽभवत् । तस्यां तस्मात् द्विजवरात् एष जातोऽस्मि शापतः” इति स्वजन्मभूम्यादिकमुक्तम् । पश्चाच्च व्याडि-समीपे तन्मात्रा तस्य जन्मवृत्तान्तो यथा वर्णितस्तदप्यु-क्तं तत्रैव “तया हि पूर्व्वं जातेऽस्मिन्नेकपुत्रे मम स्फुटा । गगनादेवमुदभूदशरीरा सरस्वती । एकश्रुतिधरो जातो विद्यां वर्षादवाप्स्यति । किञ्च व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति । नाम्ना वररुचिश्चायं तत्तदस्मै हि रोचते । यद् यद् वरं भवेत् किञ्चिदित्युक्त्वा वागुपारमत्” इत्य-तज्जन्मकथान्ते व्याडीन्द्रदत्ताभ्यां तन्मातुः सकाशादभ्यर्थ्य तं गृहीत्वा तेन सह वर्षसमीपं गतमित्यप्युक्तं तत्रैव यथा “व्याडीन्द्रदत्तौ तरसा निर्गतौ नगरात्ततः । अथ क्रमेण वर्षस्य गृहं प्राप्ता वयं गुरोः” इत्युपक्रमे “अध्यापयितुमस्मांश्च प्रवृत्तोऽभूदसौ ततः । सकृच्छ्रुतं मया तत्र द्विःश्रुतं व्याडिना तथा । त्रिःश्रुतञ्चेन्द्र-दत्तेन गुरुणोक्तमगृह्यत” इति स्वस्य वर्षसमीपेऽध्ययन वर्णितम् । “अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् । तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् । स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्य्यया । अगच्छत् तपसे खिन्नो विद्याकामो हिमालयम् । तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् । सर्व्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् । ततस्तत्रावयोर्वादे प्रवृत्ताः सप्त वासराः । अष्ट-मेऽह्नि मया तस्मिन् जिते तत्समनन्तरम् । नभःस्थेन महाघोरो हुङ्कारः शम्भुना कृतः । तेन प्रनष्टमैन्द्रं तदस्मद्व्याकरणं भुवि । जिताः पाणिनिना सर्व्वे मूर्खी-भूता वयं पुनः” । “अत्रान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः । आराधितो मया देवो वरदः पार्व्वतीपतिः । तदेव तेन शास्त्रं मे पाणिनीयं प्रकाशितम् । तदिच्छानु-ग्रहादेव मया पूर्णीकृतं च तत्” ।

अनेनैव पाणिनिव्याकरणतात्पर्य्यप्रकाशकं परिशिष्टरूपो वार्त्तिकपाठो निरमायि स च “सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्म्मनियमः” इत्या-दिकः अष्टाध्याय्यात्मकः । बृहत्कथायाम् “तदैवानीय दत्ता मे योगनन्देन मन्त्रिता” इत्यनेन वररुचेस्तन्मन्त्रि-ताकरणं वर्णितम् । तेन पाणिनेर्व्वररुचिनामकात्यायनस्य च योगनन्दसमकालता प्रतीयते । बृहत्कथाया इदा-नीमप्राप्यत्वेऽपि तत्कथासारस्याधुनोपलम्भात् तत्र च यथावर्णितकालताऽवगम्यते बृहत्कथासारस्य चाप्रामाण्य-माशङ्कनीयं तत्कथासारे “यथामूलं तथैवैतन्न मनाग-प्यतिक्रमः । ग्रन्थविस्तरसंक्षेपमात्रमात्रं न भिद्यते” इत्युक्त्या बृहत्कथामूलकतायास्तत्कथासारस्योक्तेः । स च कतगोत्रापत्यत्वात् कात्यायनः । अतएव हरिवं॰ “ततः कात्यायनाः स्मृताः” इति बहुत्वनिर्द्देशात् अन्य-

स्यापि तद्गोत्रभवयुवापत्यस्य कात्यायनत्वमिति भूतस्य भविष्यतो वा स्यादिति सूचितम्” इति । ततः प्राचीनेन कात्यायनेन शुक्लयजुर्वेदविहितकर्म्मणामनुष्ठानज्ञापकं षड्विंशत्यध्यायात्मकं कातीयं श्रौतसूत्रं गृह्याख्यसूत्रञ्च प्रणीतम् । तत्र श्रौतसूत्रे १अध्याये १कण्डिकायां २१सूत्राणि । तत्र अग्न्याधानादिषु अधीतसाङ्गवेदानां द्विजानां सपत्नीकानाम् रथकारस्य चाधिकारः । अङ्गहीनक्लीबपतितशूद्राणामनधिकारः । निषादस्थपतेर्गावेधुके चरावधिकारः । अवकीर्णिनश्च प्रायश्चित्तरूपगर्द्दभेज्यायाम् । तत्र गावेधुकचरुरवकीर्णिगर्द्दभेज्या च लौकिकेऽग्नौ कार्य्या । गर्द्दभेज्याया पुरोडाशश्रपणं भूमावेव न कपाले कार्य्यम् । तत्र अवदानहोम उदके एव नाग्नौ, अन्यदाघारादि अग्नावेव । प्राशित्रं गर्द्दभस्य शिश्नादवदेयम् । श्रौतं कर्म्म वैतानिकेषु विहारार्थेषु गार्हपत्याहवनीयदक्षिणाग्निषु कर्त्तव्यम् । स्मार्त्तन्तु आवसथ्येऽग्नौ कर्त्तव्यम् । गृह्यारम्भे मास-पाकनिषेध ।

२क० २२सू० । तत्र देवतोद्देशेन द्रव्यत्यागो याग इति यागलक्षणम् दर्शपौर्णमासादियज्ञशब्दवाच्यार्थस्त्यागविशेषः । तस्य च प्राधान्यं, तत्प्रकरणपठितान्वाधानादि-ब्राह्मणदक्षिणान्तस्य कर्म्मजातस्याङ्गत्वम् । एवं प्रयाजादय पूर्व्वाघारादिहोमाश्च तदङ्गानि । तिष्ठता होम वषट्कारप्रदानं यजतिशब्दार्थं तत्र याज्यापुरोऽनुवाक्ये च । उपविष्टेन स्वाहाकारप्रदानो होमः जुहोतिशब्दार्थं । सर्व्वकर्म्मसु ब्राह्मणा एव ऋत्विजः, न क्षत्रियवैश्याः तेषां हविःशेषभक्षणनिषेधात् । फलेच्छाभावे काम्यकर्म्माणि कर्त्तव्यानि नावश्यम् । नित्यानि तु अग्निहोत्रादीन्यवश्यं कर्त्तव्यानि अकरणे दोषश्रवणात् । दीक्षितेन सत्यवचनाधःशयनब्रह्मचर्य्यादिनियमा अवश्यं कार्य्याः । गृहदाहादिनिमित्तं धनहानिनिमित्तं च प्रायश्चित्तमवश्यं कार्य्यं न तस्य इच्छयानुष्ठानम् । नित्यानि यथाशक्त्यङ्गयुक्तान्यपि कार्य्याणि । काम्यानि तु सर्व्वाङ्गोपेतान्येव । काममात्रत्वेऽपि यदा यथाश्रुताङ्गानि कर्त्तुं शक्यन्ते तदैव काम्यं कार्य्यं नान्यदा ।

३क०४२सू० । तत्र ऋग्यजुःसामप्रभेदेन मन्त्रास्त्रिविधाः । ऋगादिलक्षणम् (ऋग्वेदशब्दे उक्तम्) । यजुषां यावति पदसमूहे उच्चारिते पदसमूहो निराकाङ्क्षो भवति । तावत्परिमितमेकं वाक्यं कर्म्मकाले प्रयोक्तव्यम् । यत्र तु मध्ये पठितैः पदैर्यजुर्निराकाङ्क्षं न भवति तत्र पदान्तरं योग्यमध्याहृत्य पूर्व्वपठितं यजुः तत् निराकाङ्क्षीकृत्य प्रयोक्तव्यम् । प्रयोगे मन्त्राः कर्म्मारम्भे प्रयोक्तव्याः । यजुर्व्वेदमन्त्राश्च उपांशु प्रयोक्तव्याः ऋग्वेदसामवेदयोस्तु मन्त्रा उच्चैः प्रयोक्तव्याः । याजमाना अपि प्रैषा उच्चैः प्रयोक्तव्याः । कुशजातिमात्रं बर्हिःशब्दार्थः । आरम्भणादौ वसोर्धाराहोमादौ च विशेषसंख्यानुक्तौ यावता कार्य्यसिद्धिस्तावत्संख्या ग्राह्या । इध्मबर्हिषोस्त्रीणि सन्नहनानि विषमसंख्यत्वमुद्दिश्य बन्नानीति । संनहने भेदस्तु प्रागग्रे सन्नहने उदगग्रं बर्हिर्निधाय सन्नहनेन दृढं बद्धा बर्हिर्मूलभागे पश्चिमतः उपगूहेत्, उदगग्रे संनहने तु प्रागग्रमिध्मभागं निधायेध्ममूले पश्चिमत उपगूहेत् इति । अष्टादशसंख्यारत्निमात्रकाष्ठं तथाभूतैकविंशतिकाष्ठको वा पालाशस्तदभावे वैकङ्कत इध्मः कार्य्यः । तदभावे श्रीपर्णीकाष्ठमयः वैल्व औदुम्बरः खादिरो वा तत्तदभावे इध्मस्तथाभूतः कार्य्यः । इध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानं कुर्य्यात् । सामिधेनीवृद्धौ चेध्मकाष्ठवृद्धिः पित्र्यादौ सामिधेनीह्रासेऽपि नेध्मस्य ह्रासः । अग्निप्रणयनार्थं इध्म उक्तसंख्याधिककाष्ठकोऽपि भवति । इष्टकापशौ अष्टाविंशतिप्रभृतिभिस्तथाभूतकाष्ठैः इध्मः कार्य्यः । एवं त्रिभिः संनहनैर्मूलभागे बद्ध कल्प्यः । दर्शपौर्णमास एव वेदकरणम् । सूत्रे आङ्शब्दार्थोऽभिविधिरिति प्रतिज्ञा । सर्व्वकर्म्मस्वनुक्तमपि गार्हपत्यात् आहवनीयदक्षिणाग्न्योरुद्धरणं कार्य्यम् । अन्यकर्म्मार्थमुद्धृतयोस्तयोरागन्तुकान्यकार्य्यापाते तत्करणं मोद्धरणान्तरम् । यथा दर्शाद्यर्थमुद्धृतयोस्तयो प्राप्तकालाग्निहोत्रहोमः । यत्कर्म्मार्थमुद्धृतौ तौ तत्समाप्तौ लौकिकावेव भवतः । तत ऊर्द्ध्वं तत्राहवनीयादिविहितं कर्म्म न कार्य्यं तयोः लौकिकत्वोपदेशात् । तेन यत्र पौर्णमासादौ पृथक्तन्त्रा बहवः इष्टयः सन्ति तत्र प्रतीष्टि पृथगग्न्युद्धरणेन ताः कार्य्याः । तथा च न सकृदुद्धृतयोः सर्व्वत्रोपयोगः । खादिरस्रुवादीनां क्वचिदनुक्तौ प्रकृतिवत् विकृतावपि कार्य्यता । स्रुवस्फ्यस्रुगजुहूप्रभृतिहोमसाधनपदार्थानां लक्षणम् । तानि च भाष्ये विवृतानि यथा ( खादिरः स्रुवोऽङ्गुष्ठपर्व्ववृत्तपुष्करो नासिकावत्पर्य्यन्तखातो भवति । स्फ्यश्च खादिरः खड्गाकृतिररत्निमात्रः । स्रुचो बाहुमात्र्यो मूलदण्डाग्रभागमिश्रा हंसमुखसदृशैकप्रणालिकायुक्ताः पा-

णिमात्रपृथुकरास्तावत्खातयुक्ताश्च कार्य्याः। पालाशी जुहूः। उपभृदाश्वत्थी, वैकङ्कती ध्रुवा, एतेषामलाभे एकस्य वा सर्व्वाः स्रुचः कारयेत्। अग्निहोत्रहवणी वैकङ्कती, अग्निहोत्रस्रुवो वैकङ्कतः। यैः पात्रैर्होमो न क्रियते तानि सर्व्वाणि वारणानि भवन्ति तानि चोलूखलमुषलकूर्च्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याष्टावदानाभ्र्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तब्रह्मासनादीनि। तत्रोलूखलमुषलौ लोकप्रसिद्धौ। कूर्च्चो बाहुमात्रः पीठाकारः। इडापात्री पिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते। पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलखातवती। शम्या प्रादेशद्वादशाङ्गुला। प्राशित्रहरणं हस्तमादर्शाकारं चतुरस्रं चमसाकारं वा तथैव द्वितीयमपिधानपात्रम्। षडवत्तं चोभयत्र खातवत्। आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि। सर्व्वेषु पात्रेषु मूलाभिज्ञानार्थं दण्डानि कार्य्याणि। अनादेशे सोमपानपात्राणि वैकङ्कतानि कार्य्याणि। षोडशिनः पात्रं खादिरं चतुरस्रम्। अश्वदाभ्यपात्रमौदुम्बरम्। वाजपेये सप्तदशपशुपात्राणि वरणवेणुमयानि। सुराग्रहपात्राण्यपि। मृण्मयानि वा”। इष्टिषु प्रणीतोत्करावन्तरेण सर्व्वेषां गमनागमनार्थो मार्गः, सोत्तरवेदिकेषु कर्म्मसु चात्वालोत्करयोरन्तरालेन मार्गः।

४क० १९सू०। तत्र विहितद्रव्याभावे काम्यं कर्म्म नारब्धव्यम्। नित्यन्तु मुख्यद्रव्याभावे प्रतिनिधिनाप्यारब्धव्यम्। काम्येऽङ्गसद्भावं ज्ञात्वाऽऽरम्भोत्तरम् मुख्यद्रव्यापचारे प्रतिनिधिद्रव्येण समापनम्। न तु असमाप्तस्य त्यागः। नित्ये तु आरब्धेऽनारब्धे वा प्रतिनिध्युपादानमिति भेदः। काम्यस्यावश्यकार्य्यत्वाभावात् प्रतिनिधिना नारम्भः। आरब्धे चावश्यसमापनीयत्वात् समाप्त्यर्थं प्रतिनिधिर्भवति। दीक्षितस्य पयआदिके व्रतेऽपि प्रतिनिधिरस्ति। प्रतिनिधिना करणपक्षे मुख्यद्रव्यवाचकपदघटितमन्त्रे ऊहो न कार्यः। यत्र जात्यन्तरं विहितं तत्र ऊहः। विकल्पस्थले अन्यतरद्रव्यारब्धे कर्म्मणि दैवात्तस्य दोषे विनाशे वा तत्प्रतिनिधिद्रव्यान्तरेणैव समाप्यं न तु वैकल्पिकद्रव्येण यथा व्रीह्यारब्धे कर्म्मणि व्रीहिनाशदोषयो व्रीहिसदृशनीवारादिना समापनं न तु यवेन, एवमन्यत्र। व्रीह्यभावे नीवारे प्रयोगे आरब्धे नीवारेषु विनष्टेषु कथञ्चिद् व्रीहिप्राप्तौ व्रीहिभिरेव, अप्राप्तौ व्रीहिसदृशैरेव कर्म्मसमापनम् न नीवारसदृशैः नापि वैकल्पिकैर्यवैः। मुख्यद्रव्येण सर्व्वप्रयोजनासिद्धौ तत्समर्थप्रतिनिधिनैव कर्म्म कार्य्यम्। यत्र कृष्णाः व्रीहयो विहितास्तत्र कृष्णव्रीह्यलाभे शुक्लव्रीहिभिः कर्म्म कार्य्यं न तु कृष्णनीवारैः गुणस्य द्रव्यापेक्षया दुर्ब्बलत्वात्। पुंवत्सत्वलक्षणगुणं हित्वा स्त्रीवत्सायाअपि गोः पयसा होमो न तु पुंवत्साया मेष्याः पयसा। एवमार्द्रत्वगुणालाभे शुष्कपलाशैरपि कर्म्म कार्य्यं न तु आर्द्रसमिदन्तरेण एवं सर्व्वत्र। एवं प्राशित्रादिसर्व्वकर्म्मसु पर्य्याप्तव्रीह्यलाभेऽपि अवदानद्वयपर्य्याप्तपुरोडाशनिष्पत्तिसमर्था व्रीहय एव ग्राह्या न तु प्राशित्रादिसर्व्वकार्य्यपर्य्याप्ता नीवारा इति

५क० १७सू०। तत्र श्रुतिपाठमन्त्रपाठार्थसिद्धिक्रमेण पदार्थानुष्ठानम्। यत्र च पाठक्रमार्थसिद्धिक्रमयोर्विरोधः तत्र पाठक्रममनादृत्यार्थसिद्धिक्रमो ग्राह्यः। यथा “स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्ति” इत्यत्र पाठक्रममनादृत्य पूर्व्वं छेदनं ततोऽपाकरणम्। यत्र तु श्रुतिपाठक्रमयोर्विरोधः “संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति” श्रुतिः संस्थिते यज्ञे ब्रह्मतर्पणं विदधाति पाठक्रमस्तु प्राशित्रावदानात् पूर्व्वम्। तत्र श्रुतिक्रमेण संस्थितएव कार्यम् न पाठक्रमेण। यत्र च श्रुतिपाठमन्त्रपाठयोर्विरोधः तत्र श्रुतिपाठक्रममनादृत्य मन्त्रपाठक्रमेण कार्य्यम्। यथा सोऽग्नावाज्यमधिश्रयतीत्यधिश्रयणं विधाय, तदनन्तरमेवोद्वासनं विहितम् मन्त्रक्रमस्तु पत्नीसन्नहनान्ते इति विरोधः तत्र मन्त्रपाठक्रमेणैवाज्योद्वासनम्। यत्र बहूनां प्रधानानां सह प्रयोगस्तदा सन्निपत्योपकारकाः पदार्थाः सर्व्वेषां प्रधानानां पृथक् पृथक् सदृशपदार्थानुसमये कार्य्याः, यथा सप्तदशसु प्राजापत्येषु पशुषु सर्व्वेषां प्रथममुपाकरणं ततः सर्व्वेषां नियोजनम् ततः सर्व्वेषां प्रोक्षणमित्यादि। आरादुपकारकास्तु तन्त्रेण कार्य्या न तेषु क्रमचिन्ता। यथा दर्शादौ प्रयाजाद्य आरादुपकारकास्तन्त्रेण कार्य्याः। चतुर्दृष्टिकनिर्वापे एकादशादिकपालोपधानस्य एकैकस्य कार्य्यम्। सोमे चैकैकस्य ग्रहस्यासादनान्तं ग्रहणं कार्य्यम्। सर्व्वत्र हविषोऽवदानं प्रदानान्तं कार्य्यम्। देवताऽभेदे हविर्म्मात्रभेदे देवतागुणे वा उपांश्वादिकेऽभिन्ने प्रदानान्तमवदानं न भवति किन्तु क्रमेण सर्व्वाणि हवींष्यवदाय पश्चा-

स्तोभ्य' प्रदानं कार्य्यम् । सप्तदशस्तु प्राजापत्यपशुषु उपाकरणरूपे प्रथमपदार्थे कृते द्वितीयपदार्थादौ उपाकरणक्रम आदर्त्तव्यः न क्रमान्तरम् । अथ प्रावृत्तिक क्रमः । प्रधानानामाग्नेयादीनां पाठक्रमेण तदङ्गानां निर्वापादिक्रमः । यथा प्रथमपठितस्याग्नेयस्य प्रथमं निर्वापादि । पश्चात् पठितस्याग्नीषोमीयस्य पश्चात् इत्ययं क्रमो ज्ञेयः । अनेकाहसाध्यदर्शादौ क्रियमाणे मध्ये नित्यस्याग्निहोत्रादेः काले प्राप्ते काम्यमध्येऽपि तत् कार्य्यमेव न तु दर्शाद्यनुरोधेन नित्याग्निहोत्रादिकालातिक्रमः कार्य्यः । सौत्रामण्यादिविकृतिमध्य एवामावास्याया दक्षिणाग्नौ पिण्डपितृयज्ञः कार्य्यः । षोडशितिरात्रादौ च षोडशिनो नियतकालत्वेऽपि दैवादुक्थ्योत्कर्षे तदनन्तरमेव षोडशियागः कार्य्यः न तु कालानुरोधात् ततः पूर्व्वम् । अग्निष्टोमादिसत्रपर्य्यन्तानां प्रधानानामनुष्ठाने क्रमाभावः । यदा यत्र यस्येच्छा तदा तदनुष्ठेयम् । अध्ययनार्थ एवैषां पाठक्रमः नानुष्ठानार्थः ।

६क० २६सूत्राणि । तत्र अवत्तहविर्नाशेऽन्यहविः कार्य्यं न स्विष्टकृदादिप्रतिपत्तिसहितः यागः कार्य्यः । तथा पुनःशेषात् अवदेयम् । अग्न्यादिदेवतानां, मन्त्राणां, प्रयाजानुयाजादिक्रियाणाञ्च न प्रतिनिधिरस्ति । द्रव्याणां तु क्रियान्तराणामवघातादीनां प्रतिनिधिरस्ति । प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि न प्रतिनिधेयम् । यथा सौद्रे चरौ माषादि । त्यागादौ वपनादौ संस्कारकर्म्मणि च यजमानस्य प्रतिनिधिर्नास्ति । गुणकर्म्मसु पात्रासादनाज्यावेक्षणाग्न्याधानव्यूहनवेदस्तरणादिषु यजमानस्यापि प्रतिनिधिरस्ति । पत्न्यभावेऽप्याज्यावेक्षणाग्न्यारम्भोपाञ्जनादौ गुणकर्म्मणि प्रतिनिधिरस्ति । सत्रेषु यजमानस्य प्रतिनिधिरस्ति । यजमानकर्म्मणा सम्बन्धात् यजमानधर्म्मा अपि दीक्षणादयः प्रतिनिधिस्थस्य भवन्ति सत्रेषु यजमानानामृत्विक्पदार्थकर्तृत्वविधानात् । ब्राह्मणस्यैव सत्रेषु अधिकारो न क्षत्रवैश्यानाम् । ब्राह्मणानामप्येककल्पानां न भिन्नकल्पानाम् । वैश्यक्षत्रिययोर्गृहपतित्वेऽपि सत्रेषु नाधिकारः । सहस्रसंवत्सरसत्रं मनुष्याणामपि भवति तत्र संवत्सरशब्दस्य अहःसु लक्षणा यतस्तत्र सहस्रसंवत्सरे सहस्रं सौत्यान्यहानि तानि च दिनसहस्रे सम्पद्यन्तीति ।

७क० २८सूत्राणि । यत्र एकफलार्थं बहूनि प्रधानानि एकवाक्येन विधीयन्ते । तत्र तेषां सह प्रयोगः । देशकालफलकर्म्मादिसाम्ये सति प्रधानानामारादुपकारीणि आधारप्रयाजाज्यभागादीनि सकृदेव कार्य्याणि । न प्रतिप्रधानं पृथक् पृथक् कार्य्याणि । देशभेदे कालभेदे च तन्त्रभेद एव भवति न सकृत्क्रिया । यथा दर्शपौर्णमासयोः कालभेदे । वरुणप्रघासेषु च मारुत्या देशभेदे । अश्वमेधे सप्तदश्यानिगदे द्वादशाहे सुत्यासुपगच्छेदित्यत्र कालस्य मुख्यकर्म्म तन्त्रेणैव सकृत् प्रयोज्यम् । एकद्रव्ये कर्म्माहसौ सत्यां मन्त्रवचनं सकृदेव कार्य्यम् न प्रतिक्रियम् । यथा स्फ्येन पदं त्रिः परिलिखेदिति एकवारं मन्त्रेण, द्विस्तूष्णीमिति । हविर्ग्रहणे बर्हिर्लवने तस्य स्तरणे आज्यग्रहणे च प्रतिक्रियं मन्त्रावृत्तिः न सकृत् । आज्यग्रहणे तु वचनात् त्रिधा मन्त्रेण ग्रहणम् यो वा तूष्णीं हविर्ग्रहणे चतुर्थं तूष्णीम् । अवदानस्य दुसमे लुटौ मन्त्रनिर्हासः । दीक्षितस्यानेकदुःस्वप्नदर्शने सकृदेव मन्त्रपाठः । एकनद्या अनेकप्रवाहतरणेऽनुमन्त्रणं सकृदेव । अधवर्त्तने अनेकहदिभारासंयोगेऽपि अनुमन्त्रणं सकृदेव । युगपदनेकामेध्यदर्शने सर्व्वोपस्थापनं सकृदेव । वमीवारूपे (विश्रम्य विश्रम्य पुनः पुनः प्रवाहे) अमेध्यदर्शने मन्त्रपाठ सकृदेव । एकरात्रिमध्ये पुनःपुनः शयनादौ अमेध्यदर्शनादिषु च कालभेदे भेदेनैवानुमन्त्रणं न सकृत् । अप्रधानकालीनमङ्गं सकृदेव, न प्रतिप्रधानमावर्त्तते । यथाऽग्नीषोमीयसवनीयानूबन्ध्यपशूनां साधारण एव बर्हिरपि यूपवत् सर्व्वपशुसाधारण एव । आधानादिकर्म्मसु प्रधानाय कर्त्तारोऽन्य स्वयं नैव यजमानः । तत्रायं भेदः देवतोद्देशेन द्रव्यत्यागात्मककर्म्माणि यजमानः स्वयं कुर्य्यात् । पुरुषयोगिमन्त्रान् यजमानः स्वयं जपेत् वपनाभ्यञ्जनादयो यजमानस्यैव संस्काराः । इति विशेषवचने ऋत्विजामपि ते संस्काराः यथा "हिरण्यमालिनोवाजपेयेन चरन्ति" । इति वचने उद्गात्रादेरपि यजमानस्य भवति । यथा यजमानोऽवरोधात् जुहोति । यजमानः पात्राण्यासादयतीत्यादि । येन कर्म्म यथासमाख्यमृत्विगादयः कुर्युः । यथा आध्वर्य्यवम् अध्वर्युः, होता हौत्रम्, उद्गाता औद्गात्रमित्यादि । सर्व्वाणि कर्म्माणि यज्ञोपवीतिनः कुर्य्युः तानि च प्राक्संस्थानि उदक्संस्थानि वा कुर्य्युः । परिस्तरणपर्य्युक्षणादौ प्रदक्षिणं कार्य्यम् । पित्र्येऽप्रदक्षिणम् । दैवे यत्राङ्गानि पैत्रे तत्र सकृत् । दक्षिणा च दिक् पित्र्या । यद्दैवे प्राक्संस्थादि पैत्रे तद्दक्षिणसंस्थं कार्य्यम् । प्रधान-

द्रव्यविनाशे सन्निपत्योपकारकाङ्गरहितस्यैव तस्यावृत्तिः नारादुपकारकसहितस्य ।

८क० ४७सू० । विकल्पस्थले एकेनैव कार्य्यकरणम् । अदृष्टार्थेषु बहुषु विहितेषु समुच्चयः यथा होतृमन्त्राणामग्निमन्थनीयादीनाम् अग्निस्थापनमन्त्राणाञ्च । होतृमन्त्रत्वेऽपि याज्यानुवाक्ययोर्न समुच्चयः । तथा च याज्या पुरोनुवाक्या च एकैकस्मिन् यागे एकैकैव । एकनिमित्तकप्रायश्चित्तानां समुच्चयः । यज्ञकाले मन्त्राणामेकश्रुत्या प्रयोगः, न संहितास्वरेण, नापि ब्राह्मणस्वरेण । सुब्रह्मण्यासामजपन्यूङ्खयाजमानानां मन्त्राणां संहितावदेव स्वरेण प्रयोगो नत्वेकश्रुतिस्वरेण । आधाने विहितदक्षिणाभेदस्य विकल्पः, न समुच्चयः । अनेकसाधनके कर्म्मणि जपध्यानादीनां समुच्चयः । सर्व्वपशूनां तानि कार्य्याणि । सोमक्रये विहितगवादिद्रव्यदशकस्य दृष्टार्थत्वात् न समुच्चयः । सर्व्वत्र गार्हपत्याहवनीययो प्रदक्षिणीकृत्यापसव्यावृत्तिः अपसव्यीकृत्य च प्रदक्षिणावृत्तिः कार्य्या । विहारोत्तरतः सर्व्वकर्म्म कार्य्यम् । विहारस्य दक्षिणतः ब्रह्मयजमानयोरासने कार्य्ये । तयोर्मध्ये यजमानस्य वेदिं स्पृष्ट्वा (वेदिमध्ये पादाग्रं निधाय) उपवेशनम् । पश्चात् ब्रह्मोपवेशनम् । अनादेशेऽध्वर्युः यजुर्विहितं कर्म्म कुर्य्यात् आदेशे तु अन्योऽपि । विरोधे तु अन्योऽपि कर्त्ता यथा पेषणेऽध्वर्य्योर्व्यापृतत्वेन विरोधात् कपालोपधानमग्नीत् कुर्य्यात् । हविष्पात्रस्थाल्यादीनामेकत्र समावेशे यद्यत् पूर्व्वं तत्तदन्तरं, यद्यदुत्तरं तद्बहिर्भवति । हविषामपि मध्ये पूर्व्वं पूर्व्वं हविरन्तरं कार्य्यं उत्तरमुत्तरं बहिः । प्रतापनाद्यग्निसाध्यसंस्कारा गार्हपत्याग्नौ कार्य्याः । सर्व्वकर्मसु हविःश्रपणं गार्हपत्ये आहवनीये वा कार्य्यम् । संस्काररहितं घृतमात्रमाज्यशब्दार्थो ग्राह्यः । घृत च गव्यमेव ग्राह्यम् । द्रव्यविशेषानुक्तौ सर्व्वत्र घृतेन होमः कार्य्यः विशेषवचने तेनैव । चात्वालात् बहिस्थ पुरीषं निवमेत् । आहवनीये यजतयः, आज्यभागोपांशुयाजादयः आज्यहविष्काः प्रयाजाः आज्यं गृहीत्वा चतुरवदाय कार्य्याः । दर्शपूर्णमासपशुसोमेष्टिष्ठानेषु वा ... । आघारौ प्राञ्चौ विदिशौ वा होतव्यौ उभयपक्षेऽपि ऋजू दीर्घौ सन्ततौ च तौ कार्य्यौ । अनादेशेसर्वे होमा आहवनीये एव कार्य्याः । आदेशे तु यथादेशं मन्त्राग्नौ । आदेशाभावे सर्व्वत्र सकृद्गृहीतमेव होतव्यम् आदेशविशेषेऽन्यथा ।

९क० २१सू० । सर्व्वत्र ब्रीहयो यवा वा हवींषि भवन्ति । ब्रीह्याग्रयणानन्तरं यवाग्रयणादर्वाक् ब्रीहिभिरेव दर्शपौर्णमासौ कार्य्यौ यवाग्रयणानन्तरं च प्राग्व्रीह्याग्रयणात् यवैरेव तौ कार्य्यौ । आपस्तम्बमते सर्व्वदा ब्रीहिभिरेवेति भेदः । दर्शपौर्णमासयोरेवायं द्रव्यनियमः न विकृतौ । द्विरवदानविधाने पुरोडाशचर्वादेर्मध्यदेशादेकमङ्गुष्ठपर्व्वमात्रं तिरश्चीनम् आद्यमवदानम् । द्वितीयं तु हविःपूर्व्वभागात् तथावदानम् । तयोरवदानयोर्मर्य्यादाभङ्गाभावेनैव कार्य्यम् । पञ्चार्षेयाणां जमदग्नीनां जमदग्निप्रवराणाञ्च हविषस्त्रिरवदानम् । तत्राद्यं मध्यात्, द्वितीयं पूर्व्वभागात्, तृतीयम् पश्चाद्भागात् । यत्र आज्यभागपत्नीसंयाजोपांशुयाजाग्निहोत्रहोमादौ चतुरवदानं विहितं तत्र जमदग्नीनां पञ्चमोऽवदानम् । दधिपयसोरपि स्रुवेणावदानग्रहणम् । तदप्यङ्गुष्ठपर्व्वमात्रमेव कार्य्यम् ।

पुरोडाशादिहविषोऽवदानात् प्रथममाज्यं सकृदवदाय ततोऽन्यद्द्विरवदेयम् । पुनरप्यन्ते आज्यं सकृदवदेयम् । स्विष्टकृद्धोमे तु प्रधानावदानादेकोनं हविषोऽवदानम् । तथा च येषां प्रधानयागेऽवदानद्वयं विहितं तेषां स्विष्टकृद्धोमे सकृदवदानं, येषां प्रधानेऽवदानत्रयं तेषां हविष उत्तरार्द्धादेव स्विष्टकृति अवदानद्वयम् । एवं चतुःपञ्चमोऽवदाने त्रि चतुर्वाऽवदानम् । उपस्तारः सकृत् । उपर्य्यभिघारणं तु द्विवारं भवति । हविषोऽवदेयावदानयोः प्रत्यभिघारणम् । स्विष्टकृदवदानानन्तरम् हविषो न प्रत्यभिघारणम् । एककपालः पुरोडाशः सर्व्वहुतः कार्य्यः । चतुर्थ्यन्तेन देवतापदेनानुवचनप्रैषा कार्य्या यथा अग्नयेऽनुब्रूहीत्येवंरूपा । आश्रावणानन्तरं यत्र मैत्रावरुणः प्रैष्यते तत्रापि चतुर्थ्यन्तं देवतापदं प्रयोज्यम् । अग्नये प्रेष्य, सोमाय प्रेष्येत्येवम् । आश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र द्वितीयान्तं देवतापदं प्रयोज्यम् । अग्निं यज सोमं यजेत्येवम् । प्रैषसम्बन्धिन्यनुयाचने द्रव्यात् षष्ठी भवति यथा इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति । वपायै धाना सोमेभ्यः इति प्रैषद्वये तु न षष्ठी । यत्रासौ यजेति विहितं यथा मामप्याह यजेति प्रयाजादीन् प्रति । तत्र देवतापदं न प्रयोज्यम् । प्रयाजस्येज पोतर्यजेत्येवं प्रयोज्यम् । यत्र यत्र मन्त्रे असाविति पदं श्रूयते तत्र तत्र असाविति पदमपनीय तस्य स्थाने तत्पदवाच्यस्य मैत्रादेर्नामो-

ज्ञार्यं यथा इमममुष्य पुत्रमित्यादौ देवदत्तस्य पुत्रमित्यादि । वषट्काराख्याहुतिषु वेदेर्दक्षिणभागे उदक्प्राङ् तृतीयामामित्युक्ष्विष्टन् वषट्कारानन्तरं वषट्कारेण सह वा जुहुयात् । यत्राज्यमिश्रं हविर्विहितं, तत्र पूर्व्वमाज्यं हुत्वा ततो मध्ये हविर्हुत्वा पुनरुपर्य्याज्यं जुहुयात् । अथ वा सहैव सर्व्वमाज्यं हविश्च जुहुयादिति पक्षद्वयम् ।

१०क० १४सू० । तत्र आग्नेयोऽष्टाकपालो भवतीत्यादौ घटः लिङ्गपरत्वकल्पनया विधिपरत्वम् । कर्म्मसु कर्त्तव्येषु तदुपकरणद्रव्यसमुदायामानादौ उपकल्पनं तानि चानीय कर्म्मदेशस्थाने स्थापयेत् । यथाशय्युत्तरतोग्राणि प्राग्ग्रीवाणि सर्व्वत्राहरणीयानि । हविषां मध्ये यत् पश्चात् पठितं तद्देशतः कालतश्चोत्तरं कार्य्यम् । ग्रहणादिक पूर्व्वपठितस्य पूर्व्वम् उत्तरपठितस्योत्तरम् कार्य्यम् । एवम् अधिश्रयणाद्यपि पूर्व्वपठितस्य दक्षिणतः पश्चात्पठितस्योत्तरत इति । एकद्रव्ये स्थालीपाकादौ चाज्ये दध्नहोम स्कन्ते सति शामीन वेदस्योपग्रहणं कार्य्यम् । एकद्रव्यइत्युक्तेः उपभृदादौ द्वितीयद्रव्ये सति वेदोपग्रहणाभावः । आज्यादन्यद्रव्येण द्रव्यवति यागे उपस्थानादौ च स्रुवेणोपग्रहणं कार्य्यम् । असत्सु वेदवर्ज्जद्वितीयद्रव्येषु कुर्य्यादुपग्रहणम् । यथा स्रुचि अन्यकर्म्मव्यापृते सोमे ग्रहहोमादौ द्वितीयद्रव्याभावे च कुशोपग्रहणम् । स्रुचोरादानकाले आसादितां स्रुवं जुहूञ्च पाणिभ्यां परिगृह्य उपभृतउपरि निदध्यात् । तत्र च परस्परसंसर्गजशब्दो न कार्य्यः । विश्वजिन्न्यायेन सर्व्वत्र स्वर्गः फलत्वेन कल्प्यते । एकस्मिन् कर्म्मणि वैकल्पिकानामङ्गानां यथाश्रुतञ्च विहितानां मध्ये अधिकाङ्गानुष्ठानपक्षे सर्व्वत्र फलाधिक्यम् । यथा पौर्णमासादौ वैकल्पिकत्वेऽश्वधाद्यधिकाङ्गानुष्ठाने । एवमन्वाहार्य्यादिदक्षिणादाने षड्दक्षिणापक्षतो द्वादशचतुर्विंशतिदक्षिणापक्षयोः फलतारतम्यम् । दानाम्बारम्भणवरणव्रतप्रमाणानि यजमानसम्बन्धीनि ग्राह्याणि । तथाच यानि दानादीनि प्रमाणानि विहितानि च तानि याजमानान्येव, व्रतञ्च सत्यवदनाधःशयनपयोव्रतादिकं यजमानस्यैव, प्रमाणं चाग्निचयवेदियाजमानदोम्पहादिमान यजमानहस्तमानेनैव कार्य्यम् । यूपावटोपरवादौ खाते, छन्ने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु पिष्टेषु तण्डुलधानादिषु, दुग्धे पयसि, दग्धेषु महावीरेष्टकादिषु तदवधानवत्यया क्रियादिसम्भवः । रौद्रमन्त्रं रक्षोदैवतम् असुरदैवतं पैत्र्यं मन्त्रमुच्चार्य्य तत्तद्देवताकं कर्म्म च कृत्वा आत्मानमुपस्पृश्यापां स्पर्शनं हस्तेन कुर्य्यात् । इति सर्व्वकार्य्योपयोगिविधानानि प्रथमाध्याये उक्तानि । एतेषां सर्व्वकर्म्मोपयोगित्वात् विस्तरेणोक्तिः । अन्यान्याध्यायार्थाः संक्षेपेणोच्यन्ते ।

२ अध्याये अष्टौ कण्डिकाः । तत्र १क० पौर्णमासेष्टिकालः तत्राग्न्यन्वाधानेऽध्वर्य्युयजमानयोरधिकारः । अग्निधानप्रकारः । दीक्षाग्रहणे दीक्षितधर्म्माः । दिवामैथुनमांसवर्ज्जनम् अधिश्रयणादिवाचनम् । अपराह्णे पत्नीयजमानयोरश्नगा हविषा सह व्रतकालयोग्यं माषमांसलवणवर्ज्जं हविष्यं भोज्यम् । तत्र व्रतयोग्यं भोज्यं भाष्ये दर्शितं यथा शुनक्यः "सकृत् पर्व्वणि सर्पिभुक् हविष्यं लघु भोजनम् । न मांसं मैथुनाद्यः स्यात् तैलाभिषविवर्ज्जितम्" बौधा० "सर्व्वमेवैतदृक्, कोशीधान्यं विवर्ज्जयेदत्र तिलेभ्य"। परिशिष्टे च "माष मांसं मसूरं च चणक कोरदूषकम् । शाकान् मधु पराम्नञ्च वर्ज्जयेदौपवस्तके"। कर्म्मप्रदीपे "लवणं मधु मांसञ्च क्षारान् प्रायेण वृणुते । उपवासी न भुञ्जीत नोच्छिष्टो न किञ्चन"। "तिलमुद्गादृते शैव्यं शस्यं गोधूमकोद्रवौ । चणकं देवधान्यञ्च शस्यं शाकं तथैव च (गुडम्)। वर्ज्जक्षारं लवणं क्षारं टङ्कणक्षारमेव च । व्रतस्थो वर्ज्जयेन्नित्यं शाकं मधु तथा"। शाखाविशेषात् वैकल्पिकयोर्निषेधः । "हैमन्तं लवणं यव च मानवत्सम् । पवित्रं लवणं हुते प्राश्य अपि सर्व्वतः इति स्मृतेः" । उपवसथाख्यकर्म्मार्थम् उपगमनोत्तरविहित उपवसथार्थः अत्र प्रायश्चित्तभेदः । रात्रौ तस्मिन्नेव विहारेऽग्निहोत्रहोमः । सायंप्रातरग्न्याधानयो होमानन्तरमारण्यौषधीर्वा नीवारादीनामवम् आरण्यशाकादीनां च कन्दमूलादीनो भुञ्जीत । आहवनीयस्य गार्हपत्यस्य वाऽध भवनं तत्राचारशयनविधिः, ब्रह्मचर्य्यञ्च । एष नियमः सपत्नीकयजमानस्यैव । पौर्णमासी अमावास्यादिकर्म्मापवर्गान्ते द्व्यहे एकाहे वा कालभेदोक्तिः तत्र प्रातरेव कार्य्यम् । २क० । अग्निहोत्रानन्तरं ब्रह्मवरणं तत्प्रकारः । ३क० ८क०पर्य्यन्ते ब्रह्मसदनादेः आलम्भपर्य्यन्तस्य कर्म्मकलापस्याङ्गानप्रकारक्रमादिकीर्त्तनम् । ३अध्याये अष्टौ कण्डिकाः । तत्र होतृसदनादिपौर्णमासयजमानचर्य्यकर्म्मकलापकालाङ्गप्रकारक्रमादि ।

१२क० । अग्निहोत्राङ्गस्य वात्समस्योपस्थानप्रकारः ।

१३।१४।१५क०। अग्निहोत्रकालद्रव्यदेवताविधानमन्त्रादि । तत्र कामनाभेदेनावस्थाभेदयुक्ते वह्नौ होमः कार्यं यथा प्रजाभ्योऽन्नेनाद्यादिक जिहीर्षया समिद्धे धूमयित्यग्नौ होमं कार्यं । प्रजाउपरुध्य ताभ्योऽन्नं जिहीर्षया अतिक्षुल्लक्षणयुक्ते, श्रीकामैः यशस्कामैर्ब्रह्मवर्चसादिभिः प्रदीप्ते, भिन्नभावेन प्रजाभ्योऽन्न जिहीर्षया राज्ञा ज्वालापसरणे जाते, ब्रह्मवर्चसकामेन देदीप्यमानेष्वङ्गारेषु सर्वत्र वह्नौ होमः । कामनाभेदे होम्यद्रव्यभेदाः । यथा स्वर्गकामः पशुकामो वा पयसाऽग्निहोत्रं जुहुयात् । एवं ग्रामकामो यवाग्वा, बलकामः श्रीहिश्यामाकनीवारयवगोधूमयावनाला तण्डुलैः, यावनालैः प्रियङ्गुभिश्च । इन्द्रियकामो दध्ना, तेजस्कामो घृतेन । एतस्य द्रव्यस्य प्रत्यहं संवत्सरहोमे तत्तत्फलसिद्धिः । अग्निहोत्रहोमे सर्वास्विष्टिषु च गार्हपत्यागारस्य दक्षिणद्वारेण प्रवेशनम् । सर्वदा यजमान स्वयं होमः कार्यः, कार्यपक्षात् तन्नियुक्तेन अध्वर्युणा वा । किन्तु दर्शपौर्णमासयोश्च सदा स्वयं होमः कार्यः । प्रवासे कृतकादौ च विशेषः ।

५ अध्याये । १२कण्डिकाः तत्र । १।२क०। चातुर्मास्ययज्ञवैश्वदेवपर्व्वकालद्रव्यदेवताप्रयोगादि ।

२, ४, ५, क० वरुणप्रघासरूपतदीयपर्व्वकालद्रव्यदेवतामन्त्रविधानादि । [मन्त्रादि ।

६क० । साकमेधरूपतदीयपर्व्वकालविधानद्रव्यदेवता-

७क० तत्र क्षिप्रविपक्वक्रैडिनीयेष्टिकालविधानद्रव्यदेवतामन्त्रादिकथनम् ।

८,९,क० तत्र पितृेष्टिकालद्रव्यदेवतामन्त्रादिकथनम् ।

१०क० तत्र त्र्यम्बकहोमकालविधानद्रव्यदेवतामन्त्रादि

११ क० चातुर्मास्यपर्व्वभेदशुनासीरीयकालद्रव्यदेवतामन्त्रादिकथनम् । तत्राय विशेषः । कृतवैश्वदेवपर्व्वण एव वरुणप्रघाससाकमेधादिपर्व्वत्रयस्य नियतकालत्वात् वरुणप्रघासादि कर्त्तव्यमेव । कृते पौर्णमासे दर्शेष्टिवत् । चातुर्मास्यानां पुनःप्रारम्भः कृतकादावपि कार्य एव । चातुर्मास्यानि त्रिविधानि ऐष्टिकानि, पाशुकानि सौमिकानि चेति तेषां द्रव्यदेवतामन्त्रविधानादि ।

१२,१२,क० मित्रविन्देष्टिद्रव्यदेवता मन्त्रविधानकथनम् ।

६अ० दशभि कण्डिकाभि निरूढपशुबन्धयागकालद्रव्यदेवतामन्त्रविधानादिकथनम् ।

७अ० ९क० । तत्र ज्योतिष्टोमकालद्रव्यदेवतामन्त्रादि विधानादि । तत्र सोमयागरूपस्याद्यस्यांशस्य द्रव्यदेवतादि विधानादि । [कथनम् ।

८अ०९क० । तत्र १,२,क० आतिथ्यकर्मद्रव्यदेवतामन्त्रादि

३क० औपवसथ्यकालद्रव्यदेवतामन्त्रादिकथनम् ।

४,५,६,७,८,९,क० । आसु—

९अ० १४ कण्डिकास्वद्ये १कण्डिकायाञ्च सौत्यकर्म्मकालद्रव्यदेवतामन्त्रविधानादिकथनम् । अध्यायशेषे समाप्तिपर्य्यन्ते प्रातःसवनद्रव्यदेवतामन्त्रविधानोक्तिः ।

१०अ० ९क० । तत्र किञ्चिदूनाध्यायसमाप्तिपर्य्यन्ते माध्यन्दिनसवनतृतीयसवनयोर्द्रव्यदेवतामन्त्रविधानकथनम् । अन्ते ज्योतिष्टोमे सोमोत्तरकर्त्तव्यानाम् 'अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रः आप्तोर्याम इत्येवं रूपाणां सप्ता सोमसंस्थानां सप्तानां नाम्नां ज्योतिष्टोमत्वसत्त्वं तत्र च ज्योतिष्टोमस्याध्वर्य्यवविधानप्रकारः ।

११अ० १कण्डिका । तत्र ज्योतिष्टोमाङ्गप्रायश्चित्तविधानादि ।

१२अ० ६क० । तत्र द्वादशाहयागविधानम् । तत्र एकादशाहादियागे च ज्योतिष्टोमधर्मातिदेशः । तत्राग्निष्टुतो धर्मातिदेश इत्येकस्य मतम् । द्वादशाहो द्विविधः सत्ररूपः अहीनरूपश्च । तत्रोभयरूपयोर्लिङ्गप्रदर्शनम् । यथा यस्याद्यन्तयोः अतिरात्रयागस्तत् सत्रं, यत्र तु अन्तएव अतिरात्रीयागः स अहीन इति तयोर्लिङ्गोक्तिः । सत्रेषु यजमानसहितानां षोडशर्त्विजां कर्त्तृत्वात् सर्व्वेषां यजमानत्वम् तेन तत्र दक्षिणाभावः सर्व्वेषां स्वामित्वयोगात् फलवत्त्वाच्च यजमानत्वातिदेशेन सप्तदशानामेव यजमानधर्म्मदीक्षणादि । अन्वारम्भस्तु गृहपतेरेव । प्रस्तुतिप्रपश्यर्थं पात्रासादनादौ कर्म्मणि एकस्यैककर्तृत्व तेनैव कृते सर्व्वं कृतत्वम् । गृहपत्याहवनीयेष एव अङ्गारप्रासनम् । अध्यायसमाप्तिपर्य्यन्ते तदीयद्रव्यदेवतामन्त्रदीक्षाकालविधानादि ।

१३अ० ४क० । तत्र १क० गवामयनसत्रप्रकारः तत्र द्वादशाहधर्मातिदेशः । २,३,४क० तत्रद्रव्यदेवतामन्त्रविधानादि

१४अ० २क० । तासु ज्योतिष्टोमसंस्थाभेदवाजपेयकालद्रव्यदेवतामन्त्रविधानादि ।

१५अ० १०क० । तासु राजसूययाग उक्तः तत्र क्षत्रियजातेरेवाधिकारः वाजपेयेनेष्ट्वा न राजसूयः कार्यः । तत्र द्रव्यदेवतामन्त्रविधानादि

१६अ० ८क० । तत्र १क० पञ्चचितिकस्याग्निचयनस्याग्निविधानप्रकारः, चयनरूपाङ्गकाले, सोमाङ्गत्वोक्तिः

तत्र च इच्छयाऽधिकारः तत्रायं भेदः महाव्रतसंज्ञक-स्तोत्रसाध्यसोमयागे एव पञ्चचितिकस्याग्नेः नियमः अन्यत्र इच्छया विकल्पः । ४क० पर्य्यन्ते उखानिर्माण-प्रकारादि । उखाशब्दे तद्विधिरुक्तः [मन्त्रादिकथनम् । ४कण्डिकान्ते ५क० च अग्निचयनप्रकारस्तत्रत्यदेवता-६क० अग्निविशेषपशुकचयनप्रकारः ७क० तत्रत्यप्रायश्चित्तहोमविधानम् [ तामन्त्रादि । ८क० अग्निचयनस्य पूर्व्वोक्तस्य प्रकारभेदतत्कालद्रव्यदेव-१७अ०१२क० । तत्र प्रायश्चित्तान्तकर्म्मोत्तरकर्त्तव्यविधान-भेदद्रव्यदेवतामन्त्रादिकथनम् ।

१८अ० ६क० तासु शतरुद्रियहोमः तदङ्गकर्मद्रव्य-देवतामन्त्रादिकथनम् । ६क० येये अग्निचितोनियमा उक्ता यथा अग्निश्चिद्वर्षति न पठेत् । पक्षिमांसा-भोजनम् । प्रथमचयने द्विजातिभार्य्यामेव गच्छेत् न शूद्राम् । द्वितीयचयने सवर्णामेवोपगच्छेत् नान्यवर्णां क्षत्रियां वैश्यां वा । तृतीये न काञ्चन स्त्रियं गच्छेत् । ब्रह्मचार्य्येव भूयात् । यावज्जीवमित्थं व्रतं कुर्य्यात् । संवत्सरं वेति पक्षान्तरम् । चित्यामस्तौ सोमेज्याया स्वय मातृस्याविश्वज्योतिषां तव्यानामन्यतमानामिष्टकानामुपधा-नम् । पुनश्चयनमचयन वेति पक्षान्तरोक्तिः ।

१९अ० । ७क० । तत्र सौत्रामणीयागोविहितः । तत्र ऋद्धिकामस्य ब्राह्मणस्यैवाधिकारः । स च अग्निमता सोम-याजिना सोमयागान्ते कार्य्यः । सोमातिपूतस्य(यस्य मुखा-तिरिक्तनासाकर्णगुह्यादिच्छिद्रेभ्यः पीतः सोमः स्रवति स सोमातिपूतः) सोमवामिनश्च (मुखेन यः पीतसोमं वमति स सोमवामी) तस्याऽत्राधिकारः । स्वराज्यात् रिपुभि प्रच्यावितस्य राज्ञोऽपि स्वराज्यमाप्त्यर्थमधिकारः । पशु-प्राप्तियोग्यस्यापि अप्राप्तपशोः पशुकामनया वैश्यस्याऽ-प्यत्राधिकारः । अयं चतूरात्रसाध्यः । तदङ्गसुरासन्धान प्रकारादि । तत् द्रव्यदेवतामन्त्रादि ।

२०अ० ८क० । तत्राश्वमेधयागोविहितः तत्र अभि-षेकवतः क्षत्रियजातेः राज्ञोऽधिकारः न विप्रवैश्ययोः । स च त्रिरात्रसाध्यः सर्वकामाप्तिफलकः । तत्र काल-द्रव्यदेवतामन्त्रादि । अश्वमेधशब्देऽस्य विवृतिः ।

२१अ० ४क० । तत्र १क० पुरुषमेधयज्ञोविहितः सर्व-भूतेभ्योऽतिशोत्कर्षकामस्यात्राधिकारः । स च पञ्चरात्र-साध्यः एकविंशतिदीक्षः ब्राह्मणक्षत्रिययोरत्राधिकारः न वैश्यस्य । तदीयद्रव्यदेवतामन्त्रादि । २क० सर्वकामस्य सर्वमेधयागोविहितः स च दशरात्रसाध्यः । ३ । ४क० । तत्र पुरुषः अश्वः गौः मेषः अजः इति पञ्चपश्वालम्भनं तद्विधानादि प्रोषितस्य मृतस्य वा संवत्सराष्ट्रौ पितृ-मेधो यज्ञो विहितः तत्र नक्षत्रादिकालद्रव्यदेवतामन्त्र-विधानादिकथनम् ।

२२अ०११क० । तत्र १क०यजुर्वेदोक्ताधानादिपितृमेधान्त-कर्म्माण्युक्ता सामवेदविहिता एकाहसाध्ययागा विहिताः । तत्र परिभाषा । संस्थान्तरानुक्तौ अग्निष्टोमसंस्थएव क्रतुर्भवति । भूर्नामैकाहः १ धेनुमात्रदक्षिणः । ज्योति-र्नामैकाहः २ । तौ च विशेषानुक्तौ अग्निष्टोमसंस्थौ । गो-संज्ञकः ३ आयुःसंज्ञकश्च ४ एतावेकाहौ उक्थ्यसंस्थौ अभिजिद्विश्वजितौ५ ६ एतौ अग्निष्टोमकल्पौ । तत्राभि-जिति गोसहस्रं शताश्वं वा सन्दितं वा दक्षिणा । विश्वजिति सहस्रं सर्व्वस्वं वा सन्दितं वा दक्षिणा । तत्र ज्येष्ठपुत्रस्य विभागयोग्यद्रव्यभिन्नं भूमिदासवर्ज्जं सर्वस्वपदार्थः । यतो भूमेः धारणचङ्क्रमणाहारेण उपयोगात् दासस्य शुश्रूषार्थमुपयोगात् तद्वर्ज्जं हिर-ण्यादिकं सर्व्वस्वपदार्थः इत्येकमतम् । स्वमते पुरुषमेधे गर्भदासदानदर्शनात् भूम्येकदेशपरित्यागे धारणसम्भ-वात् तद्व्यतिरिक्तं सर्व्वस्वं देयमिति । अवभृथस्नाने वत्सच्छविं परिदधातीतिश्रुतेः, तद्व्यतिरिक्तविषयं सर्व्व-स्वम् । एवं दीक्षोपयोगिद्रव्यव्यतिरिक्तविषयमपि । सह-स्रादधिकं सर्व्वस्वं दक्षिणा देयेति फलितम् । विश्वजिति द्वादशरात्रादिनियमभेदः । अभिजिति कृते विश्वजितोऽनुष्ठानम् अभिजिद्विश्वजितोर्युगपदनुष्ठानं वा । तयोर्युगपत्करणे देवयजनस्थानविशेषोक्तिः तत्र एतयोऽ-र्त्विजां बाहुल्यात् अन्यतमेनाप्यत्र कर्म सम्पाद्यम् । तत्र बहिर्वेदिकानि कर्म्माणि समानानि । अन्तर्वेदिकान्येव विशिष्टानि । युगपत्करणपक्षेऽपि अभिजित एव पूर्व्वं पूर्व्व-मङ्गं कृत्वा विश्वजितः उत्तरमुत्तरं कार्यम् । सर्वजिन्नामा ७ एकाहः स च महाव्रतसंज्ञसामस्तवसाध्यः तद्विधा-नादि तत्र संवत्सरं दीक्षा सप्ताहाभिषवः । तत्र तिस्रः षट् वा उपसदः । तथा च संवत्सरं दीक्षा कृत्वा तदूर्द्ध्वं सप्तमाहे अभिषवं कृत्वा सप्ताहे अतीते सुत्या भवति तत्र च तिस्रः षड् वा उपसदः कार्य्याः । तत्र संवत्सर दीक्षा-अभिषवनमकृत्वा दीक्षा कार्य्या । स च अग्निष्टोमसंस्थ एव । २क० सर्व्वजिति दक्षिणाभेदतद्विधानादि । अयञ्च उक्थ्यकस्य । उक्तानामभिजिदादीनां संस्थान्तरम् ।

कार्या॰। एवञ्च महाव्रतं सर्व्वाहेषु भवति। सर्वस्तोमउत्तमः शेषाहे ज्योतिर्गौरायुरभिजित् विश्वजित् सर्व्वजित् महाव्रतं सर्व्वस्तोमोऽतिरात्रः। जनकसप्तरात्रः षष्ठः सप्ताह। तद्विधानादि। उत्तमे सप्तमे सप्ताहे बृहद्रथन्तरसामयुक्तपृष्ठ्य ते च पृष्ठ्यस्तोमाख्याः इत्येवं सप्त सप्ताहा षष्टीना उक्ता। तत्र विधानादि। अष्टसत्ये अहीने पार्ष्ठिकात् षडहादवसितात् महाव्रतम् भवति। नवरात्रे त्रिककुभा ज्योतिः गौः आयु इत्येतस्मा मताः। नवरात्रे षडहादूर्द्ध्वं ज्योति गौः आयुरित्येते एकाहा भवन्ति। तस्यैव प्रकारान्तरम्। तद्विधानादि। दशरात्राश्चत्वारः। त्रिककुप् प्रथमः प्रतिष्ठाकामस्य। तद्विधानादि। कौसुरुबिन्दो नाम द्वितीयः अभिचर्य्य-माणस्य। पूर्व्वदशरात्रनामा तृतीयो दशरात्रः। तद्विधानादि। पशुकामस्य छन्दोमनामा चतुर्थो दशरात्रः। पौण्डरीकनामा एकादशरात्रः तद्विधानादि। २४अ० ७कण्डिकाः। तत्र १क०। द्वादशरात्रादीनि एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि उक्तानि। तत्र च येन क्रमेण यान्यहानि उपदिष्टानि तानि तथैवा-वगन्तव्यानि। तत्र आवापिकानामन्य॰ क्रमः औपदेशिकानान्तु उपदेशक्रमएव ग्राह्य॰। तत्रोपदिष्टाहव्यतिरिक्तानामह्ना-मावापक्रमोक्तिः। यथा अपूर्य्यमाणे सत्रे दशरात्रावापो-भवति स च भवन् पर एव भवति न पूर्व्वः। षट् पार्ष्ठिकानि अहानि, चत्वारि छन्दोमानि अहानीति दशरात्र॰। पृष्ठ्य॰ षडहः त्रयश्छन्दोमा अविवाक्योदशम इत्ययं वा दशरात्रो भवति। अयञ्च सर्व्वासामृद्धामन्ते परोभवति। प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमे-काहार्थे भवति। एकाहं विना सत्रसंख्यापूरणे दशरात्रात् परं महाव्रतं भवतीत्यर्थः। महाव्रतादन्यत् आवापान्तरं दशरात्रात् पूर्व्वं भवति। यत्र षड्भिरहोभिर्विना न पूर्य्यते सत्रसंख्या तत्राभिप्लवः षडहार्थे पूरणोभवति। अभिप्लवस्यादितः पञ्चाहानि। पञ्चाहार्थे, (पञ्चाहेन विना (संख्याऽपूरणे)। त्र्यहार्थे (त्र्यहेण विना सत्रसंख्याऽ-पूरणे) ज्योतिर्गौरायु। ज्योतिरादीनां त्रिककुप्का इति संज्ञा। चतुरहार्थे (चतुरहं विना सत्रसंख्याऽपूरणे)। ज्योतिरादित्रिकम् महाव्रतञ्च। एतत्प्रथमं पूरणं भवति। द्व्यहार्थे (द्व्यह विना सत्रसंख्याऽपूरणे) गौरायुश्च पूरणं भवति। यत्राद्यन्तयोरतिरात्रः कार्य्यः प्राय-णीयोदयनीययोरन्तराले आवापस्थानम्। यत्रा-वापः क्रियते तत्र तयोरतिरात्रयोर्मध्ये करणं विहि-तम्। आवापानां समवायेन यत्र सत्रं पूर्य्यते तत्र यद्-यदल्पं तत्तत्पूर्व्वं भवति। यथा एकोऽभिप्लवः षडहः अपरस्तस्यैव पञ्चाहः चतुरहस्त्र्यहो द्व्यहो वा तत्र पञ्चा-हादेः पूर्व्वमावापः। इति सत्रावापोपयोगिनी परिभाषा। द्वे त्रयोदशरात्रसत्रे। तत्र पृष्ठ्यादवसितात् सर्व्वस्तोम-संज्ञोऽतिरात्रो भवति। अय भावः-सर्व्वेषु सत्रेषु द्वादशाह-धर्माविहिता अतस्त्रयोदशरात्रे सत्रे सप्तमोऽपि द्वाद-शाहो भवति, एकमहरवशिष्यते। तत्र पृष्ठ्यात् परः सर्व्व-स्तोमोऽतिरात्रः कार्य्यः। तथाच १ प्रथमदिने प्राय-णीयातिरात्र॰, ततो द्वितीयादिषु षट्सु दिनेषु सप्त-माहान्तेषु पृष्ठ्य॰ षडह, अष्टमे सर्व्वस्तोमोऽतिरात्र॰, नव-मादिषु चतुर्षु छन्दोमाश्चत्वारः, त्रयोदशे उदयनीयाति-रात्र इत्येवं क्रम॰, एवमन्यत्रापि। द्वितीये त्रयोदशरात्रे तु दशरात्रादुत्तरं महाव्रतमिति भेद॰। सम्भार्य्यत्रयोदशरात्र-दशरात्रस्य गवामयनवत् सम्भरणप्रकारः। चतुर्द्दशरात्राणि त्रीणि सत्राणि। तेषां विधानादि। तत्रान्तिमे विवाहोदक-तत्त्वसंशयितानामधिकार। पञ्चदशरात्राणि चत्वारि। तद्विधानादि सप्तदशरात्रे अष्टादशरात्रे एकोनविंशरात्रे विंशतिरात्रे च एवमेवावापनपूर्त्ति। २क॰ षोडशरात्रा-दिषु चतुर्षु आवापप्रकार॰। तत्र षोडशरात्रे प्रायणीयात् त्रिककुप्का॰ दशरात्रोत्तरं व्रतञ्च। सप्तदशरात्रे प्रायणीयात् पञ्चाहः। अष्टादशरात्रे प्रायणीयात् षडहः, एकोन-विंशरात्रे प्रायणीयात् षडहोदशरात्रोत्तरं व्रतञ्च। इत्येवमावापोक्ता विधानप्रकारः। एकविंशतिरात्रौ अभो-त्तमिको द्वौ अतिरात्रौ। तत्रावापप्रकार॰। तद्विधानादि। अन्नाद्यकामस्य द्वाविंशतिरात्रो विहित। तद्विधानादि। प्रतिष्ठाकामस्य त्रयोविंशतिरात्रोविहितः। प्रजाकामस्य पशुकामस्य च चतुर्विंशतिरात्रोविहित॰। तत्र द्विविध तत् प्रथमस्य विधानादि। द्वितीयस्य संसदस्या। तत् विधानादि। अन्नाद्यकामस्य पञ्चविंशतिरात्रं, प्रतिष्ठा-कामस्य षड्विंशतिरात्रम्, ऋद्धिकामस्य सप्तविंशति-रात्रम्, प्रजाकामस्य पशुकामस्य वा अष्टाविंशतिरात्रम्, द्वात्रिंशद्रात्रञ्च विहितम्। तेषां क्रमशो विधानानि। एकोनत्रिंशद्रात्रस्य त्रिंशद्रात्रस्य एकत्रिंशद्रात्रस्य द्वात्रिंश-द्रात्रस्य च विधानादि। त्रयस्त्रिंशद्रात्रस्य त्रयो भेदास्तेषां विधानादि। चतुस्त्रिंशद्रात्रमारभ्य आ चत्वारिंशद्रात्रात् सत्राणि सत्राणि आवापक्रमेण पूर्णानि। तत्र च विशेषः

धानादि। तत्र पूर्व्वस्य पञ्चविंशः ५५ उत्तरस्य ज्योतिः संज्ञा ५६। तौ च साग्निचित्यौ सर्व्वजिद्वद्दीक्षायुक्तौ च ११क० तयोर्दक्षिणा। ऋषभगोसवौ ५७, ५८, द्वौ क्रतू विहितौ तत्र अग्निष्टोमसंस्थे ऋषभे राज्ञोऽधिकारः तद्दक्षिणाभेदश्च। गोसवः उक्थ्यसंस्थः गवायुतदक्षिणः तत्र वैश्यस्याभ्येषां वा अधिकार इति मतद्वयम्। तद्विधानादि। मरुत्स्तोमनामा ५९ यज्ञः तत्र भ्रातृणां सखीनां वा गणभूतानामधिकार। वैश्यस्तोमोक्तदक्षिणा। ऐन्द्राग्नकुलायोनाम ६० क्रतुः प्रजाकामपशुकामयोस्तत्राधिकारः। गोकुलदक्षिणा। तत्र च द्वयोर्भ्रात्रोः सख्योर्वाऽधिकारः न गणानाम्। राजकर्त्तव्यः उक्थ्यसंस्थ इन्द्रस्तोमो ६१ विहितः। पुरोधाकामस्य इन्द्राग्नोःस्तोमः ६२ क्रतुः विहितः। सायुज्यकामयोः राजपुरोहितयोरत्राधिकारः। तयोः पृथक् वा सह वाधिकार इति विकल्पः। पशुकामस्य अग्निष्टोमसंस्थौ विघनौ ६३, ६४ नाम यज्ञौ विहितौ। अभिचारकामस्य पशुकामस्य वा तयोरधिकारः तत्र पशुकामस्य सम्मता उक्ता, अभिचारकामस्य त्रिंशद्गावो दक्षिणेति भेदः। अभिचारकामस्य संदंशवज्रौ ६५, ६६ द्वौ यज्ञौ विहितौ, तौ च इन्द्रसोमौ कर्त्तव्यौ, तत्र वज्रः षोडशिसंस्थः कर्त्तव्यः तत्र विशेषोक्तिः। संदंशेन राजानमेवाभिचरेत् न जनपदम्। वज्रेण जनपदमेवाभिचरेत् न राजानम्। वैपरीत्येन वेति मतान्तरम्। अभिचारेण राजाद्युपघातं कृत्वा मारयित्वा वा आत्मशुद्ध्यर्थं ज्योतिष्टोमेन यजेतेति। इति सामवेदविहिता एकाहाः दर्शिताः।

२२अ० ५क० | तत्र १क०। अहीनसंज्ञकयागानां द्वादश उपसदः, मासमाप्यस्तश्च। तुल्योपसद्विशेषोपदेशः दीक्षाभेदश्च विहितः। तथा च सौत्यानि उपसदाश्च दिनानि परिगणय्य दीक्षा। द्विरात्रादिद्वादशाहपर्य्यन्तसाध्या यागाः अहीना इत्युच्यते। तत्र पाठात् अतिरात्रस्याप्यहीनसंज्ञत्वम् इत्येकीयमतम्। द्व्यहादिषु दशरात्रादिकादिसत्तिर्गौण्या इत्युक्तिः। द्वादशाहकर्त्तव्यदशरात्रस्य षडहादिषु कर्त्तव्यतोक्तिः। द्विरात्रादिषु सहस्रदक्षिणा चतूरात्रादिष्वधिका दक्षिणा। तत्र दक्षिणादाने प्रत्यहं समभागेन देयतोक्तिः। अन्त्येऽवशिष्टदानम्। १२त्रयोदश अतिरात्राः विहिताः। यथा तत्र षोडशिसहरहिताश्चत्वारः प्रथमा अतिरात्राः। तत्र प्रजातिकामस्य नवसप्तदशसंज्ञः १ [illegible]

ज्येष्ठपुत्रस्य कर्त्तव्यं विषुवन्नामातिरात्रं २। भ्रातृव्यवतः गौर्नामातिरात्रः ३। स्वर्गकामस्यारोग्यकामस्य वा आयुर्नामातिरात्रः ४। इति प्रथमाः चत्वारः। ऋद्धिकामस्य ज्योतिष्टोमनामा ५। पशुकामस्य विश्वजिन्नामा ६। ब्रह्मवर्च्चसकामस्य त्रिवृन्नामा ७। वीर्य्यकामस्य पञ्चदशनामा ८। अन्नाद्यकामस्य सप्तदशनामा ९। प्रतिष्ठाकामस्य एकविंशनामा १० इति षट् अतिरात्रा विहिताः। प्राप्तस्याप्राप्तस्य पशोर्भ्रंशे तल्लाभकामस्य आप्तोर्यामोऽतिरात्रः ११। भ्रातृव्यवतोऽभिजिन्नामातिरात्रः १२। भूतिमिच्छोः सर्व्वस्तोमोऽतिरात्रः १३। इति त्रयोदश अतिरात्राः।

२क०। द्विसुत्यास्त्रयः अहीनाः। तत्र द्वितीयतृतीययोः षोडशिसहरहितौ द्वौ अतिरात्रौ। आङ्गिरसचैत्ररथकापिवना इति तेषां संज्ञाः। द्वितीयं द्विरात्रमुक्थ्यपूर्व्वकमेके इच्छन्ति। पार्ष्ठिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्व्वन्ति। संस्थान्यत्वमात्रं धर्म्मास्तु तदीया एव। पुण्याहोऽपि यः पुण्यहीन इव स्यात् तस्य आङ्गिरसद्विरात्रेऽधिकारः। १। प्रजाकामस्य चैत्ररथे २। स्वर्गकामस्य पशुकामस्य वा कापिवनेऽधिकारः ३। त्रिसुत्या अहीनाः गर्गवैदच्छन्दोमान्तर्वसुपराकाख्याः पञ्च क्रतवः। तत्र वैदे त्रिरात्रे १ त्रिवृत्स्तोमयुक्ताः सर्व्वे अतिरात्राः तत्संस्थान्यत्वमात्रम्। तत्र राज्यकामस्याधिकारः। पशुकामस्य अन्तर्वसौ २। स्वर्गकामस्य पराके ३ इति भेदः। अत्रिचतुर्वीरजामदग्न्यवशिष्ठसंसर्पविश्वामित्राख्याश्चत्वारः चतुरहसाध्याः क्रतवो विहिताः। तत्र जामदग्न्ये चतुरहे पुष्टिकामोऽधिकारी। तत्र विंशतिर्दीक्षाः। सर्व्वेषु उपसदः पुरोडाशवत्यः स्युः। ३क० तेषां विधानादि।

४क०। पञ्चाहसाध्याः त्रयः अहीनाः। तत्र प्रथमः देवपञ्चाहसंज्ञकः पञ्चशारदीयः द्वितीयः तद्विधानादि व्रतवत्संज्ञकस्तृतीयः पञ्चाहः। तत्र ज्योतिर्गौर्महाव्रतं गौरायुः इत्येतन्नामकाः पञ्च एकाहाः। सर्व्वजितद्वत्र दीक्षा भवति। तद्विधानादि। ५क०। षडहा अहीनास्त्रयः। ऋतुषडहः १ पृष्ठ्यावलम्बाख्यः २ त्रिकद्रुकः ३ इति तेषां नाम। तेषु स्तोमविधानादि। सप्त सप्ताहा अहीना विहिताः। तत्र चतुर्थं महाव्रतमुत्तमं भवति। चतुर्णां मध्ये तृतीयः पशुकामस्य भवति। इन्द्रसप्ताहसंज्ञः पञ्चमः। तत्र पञ्चमे सप्ताहे द्वितीयादेकाहादारभ्य षडेकाहाः षडहाणि भवन्ति। तत्र ज्योतिर्गौः आयुः अभिजित् विश्वजित् सर्व्वजित् इत्येते षट् प्रत्येक समस्तामताः

गौण: । निमित्तकाले एव कर्त्तव्यतेतिहरस्वामिसिद्धान्त· तद्-कालाकरणेऽन्ते करणमिति,तस्य गौणकालताव्यपस्थापनम् । अनादेशे सर्व्वत्र प्रायश्चित्तं महाव्याहृतिहोमः । आदेश विशेषे तु यथादिष्टं करणीयम् । यथा "प्रणीताः स्वाहा अभिमृशेदिति" यजु॰५,२८, प्रणीताभिमर्शनमेव प्रायश्चित्तम् । महाव्याहृतिहोमेऽस्य विशेष· । हौत्रिके (ऋग्वेदोदिते) कर्म्मणि उपघाते गार्हपत्येऽग्नौ भूःस्वाहेति प्रा॰ होम अयमग्निदेवतः । स च अनादिष्टकर्त्तृकत्वात् ब्रह्मणा कार्य्यं । ब्रह्मवरणात् प्राक् निमित्ते जाते ब्रह्मवरणात् प्राक् व्याहृतिहोमाय ब्रह्मान्तरं कृत्वा तेन कारयितव्यम् । अब्रह्मवरणकेऽग्निहोत्रादौ तु स्वयं कार्य्यं । सोमे तु वाक्याहुतिभिरस्य समुच्चय । यजुर्व्वेदोक्तकर्म्मोपघाते दक्षिणाग्नौ भुवःस्वाहेति प्रा॰ होमं कार्य्यं स च प्राग्वत् ब्रह्मणैव कार्य्यं । सोमे तु तत्रापि आग्नीध्रीये भुव· स्वाहेति होम इति भेद· । तस्य वायुर्देवता । सामवेदविहितकर्म्मोपघाते आहवनीयेऽग्नौ स्वःस्वाहेति प्रा॰ होम· स च सूर्य्यदैवतः । चतुर्थहोतानि सर्व्वत्र । सर्व्ववेदोक्तकर्म्मोपघाते व्यस्तैस्त्रिभिः समस्तेन भूर्भुवःस्वःस्वाहेत्येकेनेति चतुर्णांरहोमः कार्य्यः । अत्राग्नेइत्याद्याभि पञ्चभिः प्रत्यृचमाहवनीये पञ्चाहुतिरूपः सर्व्वप्रायश्चित्तसञ्ज्ञोहोमः । अविज्ञाते कार्य्यादौ कर्म्मणि व्यस्तसमस्तमहाव्याहृतिहोमचतुष्टयं कार्य्यं । तथा हि यत्र ऋग्वेदोक्तत्वादिना विशेषपहोमाश्च अय च स्मृतिरुपलभ्यते । यथा यज्ञोपवीतिना यज्ञियेन दक्षिणपाणिना पवित्रपाणिना कर्म्म कर्त्तव्यमित्यादि स्मृतिविहितं यज्ञोपवीतधारणादि । तस्य कथञ्चिदुपघाते व्यस्तसमस्तमहाव्याहृतिहोमचतुष्टयं प्रायश्चित्तं कार्य्यम् । तदन्ते च याज्ञिकैः प्रायुक्तं सर्व्वप्रायश्चित्तसंज्ञकं पञ्चाहुतिरूपं सर्व्वत्र ज्ञातेऽविज्ञाते निमित्ते वा करणीयम् । अत्रायं सम्प्रदायभेद । भूरिति गार्हपत्ये, भुव इति दक्षिणाग्नौ, स्वरिति आहवनीये भूर्भुवः स्वरिति, सर्व्वप्रायश्चित्तसंज्ञकपञ्चाहुतिहोमश्च आहवनीये इति याज्ञिकादुदेव भक्ताः । भूरित्याद्याहुतिनवकमाहवनीय एवेति सम्प्रदायकारिकाकारो । महायज्ञपक्षे, दक्षिणाग्नौ अप अष्टेऽप्स्वेव, यतदग्निर्वै परिश्रितस्तु । तत्रभवांश्च अत "यथायाग्नौ" इति कर्क । अथ कर्म्मविशेषेषु प्रायश्चित्तभेदाः ७अ॰ ८सू॰ पर्य्यन्तेषु उक्ता· । ७अ॰ ८सूत्रादौ कर्म्मसमाप्तितः पूर्व्वं यजमाने मृते तदैव कर्म्मसमाप्तिर्भव-

मेव· पश्च ऋत्विगादिभिः शेषं समाप्यमित्यपर· पक्षः । तत् कर्म्मसमाप्तावपि उत्तरक्रियाविशेषोविहित· । ८अ॰ उपाकृतपशुपलायनादौ प्रायश्चित्तभेद· । ततोऽन्त्येष्टिपद्धति· । ९अ॰ । अस्थिचयनप्रकारादि । १०अ॰ । सत्रविशेषकरणार्थं कृते उद्यमे दैवात्तदकरणे विश्वजिन्नामकेनातिरात्रेण यजेत् । सत्राद्यर्थं कृतदीक्षाणां यदि दैवानुमानुषाद्वा निमित्तात् आमिक्षते दीक्षामात्रं कृते वा सत्रे स्वामिनः सत्रं न समापयामीति बुद्धिर्जायते तदा सोमेनोपकल्पित साधारण धान्यवस्त्रादिकं पुत्रादिभ्यः पृथगात्मीयं कृत्वा सर्व्वस्वदक्षिणेन विश्वजितातिरात्रेण यजेत् । स च सोमे क्रीतएव भवति नाक्रते इति साकरे स्थितम् । क्रीतेऽक्रीते वा सोमे विश्वजिद्भवतीति स्वमतम् । अध्वर्य्युप्रभृतीनां दैवात् स्वस्वकार्य्याकरणे अदक्षिणं कर्म्म समाप्य पुनरन्यवरणपूर्व्वक यागारम्भः । तत्र दिनभेदे विशेष । दीक्षितस्य पत्नी चेत् रजस्वला तदा दीक्षाकृपाणि यत्कादीनि निधाय सिकतासु वा रक्तस्रवणात् आसीत । स्नाता वर्त्तमानासु सिकतासूपविशेत् । प्रात वायव्य वेदिसमीपे सिकतास्वेव तिष्ठेत् । चतुर्थेऽहनि गोमूत्रमिश्रोदकेन स्नात्वा स्नानं विधाय वासो धृत्वा साधिपातिकं कुर्यात् नाराडुपकारकम् । नाराडुपकारकं च दीक्षणीयमूल्युद्भवनादि । प्रसूतायास्तु दशरात्रादूर्द्ध्वं स्नानादि । गर्भिण्यौ न दीक्षयेदिति तद्दीक्षानिषेध· इति मतान्तरम् । "जायापिता· गर्भी" इति स्मृते· अतुबन्ध्याग्रहणमकरणीयत्वात् निषेधस्य तद्विषयत्वेन गर्भवत्या अपि दीक्षाधिकार· इति स्वमतम् । दीक्षितस्य तु जन्मादिदर्शनादिप्रायश्चित्तविशेष· । चमसस्य पीतापीतत्वविभ्रमे प्रायश्चित्तम् । सोमस्योपरि मेघवर्षणे भयाभ्यभिमर्शपूर्व्वकं तत् प्रायश्चित्तम् । अवदोषे द्रोणकलशभेदे च प्रायश्चित्तम् । अभिषेकभेदे होमभेद प्रायश्चित्तम् ।

सोमापहरणे,अव्यक्तरामपुष्पाणि तृणानि सोमकार्ये निधाय अभिषवं कुर्यात् । यज्ञकालोनवादिरक्तस्य महीरूपा अङ्कुरा जायमाना श्येनहृतमित्युच्यते तत्, आमकान्, सोमसदृशान् लताविशेषान् पूतीकान्,अरुणदूर्व्वा अन्यत्र रागा दूर्व्वा हरितकुशान् अशुष्कान् दर्भान् वा पूर्व्वपूर्व्वाभावे उत्तरोत्तरान् प्रतिनिधायाभिषुणुयात् । तत्र सोदाम प्रायश्चित्तं कृत्वा उक्तद्रव्येण यागसमापनम् । तत्र च अत्र भूयान्ते पुनः यज्ञ. करणीय , सोमवमनभेदे ब्रह्मणाम

पाठ प्रायश्चित्तम् इति विकल्पः । अभिषवणचर्मणि मस्तु-स्थादिमात्रसोमरसलाभे जलादिना तस्य वर्द्धनेन कलसमापूर्य्य द्रोणकलसपूरणं सम्पाद्यम् । सोमेऽनुलभ्यमाने यत्किञ्चिद्विमतमानीय पुनः यज्ञः । तत्र गोदानं प्रायश्चित्तम् ।

१२क०। सोमातिरेके आद्यादिसवनभेदे प्रायश्चित्तभेदः । दीक्षितस्य रोगे द्रोणकलसे उष्णाना शुण्ठीपिप्पल्यादीनां मध्ये येन स्यात् तेन भिषक् चिकित्सेत् नान्येन । तस्य विधानादि । ज्वरितस्यापि रोगशान्तिं यावत् प्राग्विहितदेश एव वासो नान्यत्र । प्रातःसवने च तस्य मन्त्रविशेषेणाभिषेकप्रकारः । एवं दीक्षित सर्वे ऋत्विजः सवनान्तेषु स्पृशेयुः । तत्र यजमानस्य मन्त्रभेदेन स्पर्शः । तत्र मरणे तस्य दाहविशेषं कृत्वा दीक्षितस्यास्थीनि कृष्णाजिने बद्ध्वा मृतस्यैव पत्न्यपि स्वकर्म पतिकर्म च कुर्य्यात् । पत्नीमरणेऽप्येवम् इति पक्षान्तरम् । तस्य भ्रात्रादिक नेदिष्ठिनं दीक्षयित्वा सत्रस्य समापनम् इति मतान्तरम् । स्वमते मरणे एव कर्मसमाप्तिः । उभयपक्षेऽपि । तत्र प्रायश्चित्तविधानादि ।

१४क० । उखामरणदिने यजमानमरणे विशेषविधानप्रायश्चित्तानि । सत्रदीक्षामध्ये मरणेऽपि उक्तसोमादिकर्मान्तकरणाय दीक्षितस्य तत्कर्मफलं भवति दीक्षितस्य भ्रात्रादेरेव मृतकृतफलप्राप्तिरिति मतान्तरम् । साग्निना नेदिष्ठिना पुत्रादिना स्वकीयेष्वग्निषु स्वकीयेन द्रव्येणानुष्ठितस्य साग्निचित्यादिक्रतौ. नेदिष्ठिन एव फलं मृतकृतफलं तु मृतयजमानस्येति स्वमतम् । तत्र उपदीक्षी स्वेष्वग्निषु मखनिकृन्तनावधि द्वादशान्तं सान्निपातिकं कुर्य्यात् । यद्यनाहिताग्निर्नेदिष्ठी तदा मृतस्यैवाग्निषु करणं तत्र च वैश्वानरनिर्वापः प्रायश्चित्तम् ।

एकराजकयोरपर्व्वतान्तरेऽनद्यन्तरे समानदेशे यजमानयोः यज्ञकरणे सोमसवो भवति । तथाच द्वौ यजमानौ चेत् मिथो वैरिणौ समकाले एकस्मिन् देशे, गिरिनद्यादिव्यवधानं विना यागार्थं सोममेककालं सुनुतः तदा समेत्य सवनात् संसव इत्युच्यते । तत्र सर्व्वं कर्म सत्वरं कार्य्यम् । परयज्ञापेक्षया स्वयज्ञे स्वस्याधिक्यमिच्छन् सत्वरं सर्वं कार्य्यं कुर्य्यात् । तद्विधानादि । भिन्नदेशकालादौ पर्व्वताद्यन्तरे भीतौ च न संसव इति भेदः । संसवविषयएव होत्रादिभिस्तदृशमरणकाले. कर्त्तव्यकर्मविशेषविधानम् । यथा होता होतृ अध्वर्युश्चाऽध्वर्य्योः यजमानेन यजमानस्य लक्ष्यादिरूपेण मरणमिच्छता तत्कर्म कार्य्यम् । अयञ्च यज्ञः एकादिमरथगम्यदेशे परस्परद्वेषे भवति अन्यतरस्य द्वेषाभावे उक्तदेशतो दूरत्वेन न सम्भवति । उक्तानामेकतरेण तथानुष्ठिते एकतरस्य मरणे । स्वयज्ञान्तर्गता अध्वर्य्वादयः तदीयकर्म्मशेषं वरणपूर्व्वकं कुर्युः न वरणान्तरमपेक्ष्यते । सोमादिदाहे प्रतिनिधिना कर्म समापयेयुः । पञ्चगोदानं दत्त्वा यज्ञसमापनम् । द्वादश्या रात्रेः प्राक् तथाभूते दोषे पुनर्यज्ञारम्भः उत्तरन्तु पञ्चगोदानमात्रदक्षिणा प्रायश्चित्तमिति मतान्तरम् । ब्रह्मणएव विहितकर्माधिकारात् अनादेशे सर्व्वत्र प्रायश्चित्तहोमे तस्यैवाधिकारः । अब्रह्मके तु अग्निहोत्रादौ यजमानाधिकारः इत्युक्तं प्राक् ।

२६ अ० ६क० कण्डिकाः प्रवर्ग्योपयोगिमहावीरसम्भारपाककर्मप्रतिपादिकाः । यथा मृत्पिण्डसञ्चयं वल्मीकलोष्टं शूकरोत्खाता मृत्तिका पूतिकालताविशेषं गवेधुकाः (अजसन्निहितमहातृणजानि शुक्लानि फलानि) इत्येतान् सम्भारान् प्राक्संस्थान् उदक्संस्थान् वा कृत्वा कृष्णाजिनम् वक्ष्यमाणलक्षणम्, अभ्रिम् (कुद्दालम्) उत्तरतोनिदध्यात् । तेषामादानमिधानादिमन्त्राः । मृत्पात्र अतिचिक्कणा भाण्डादिनिर्माणयोग्या कुम्भकारस्यैव गृह्यते । तथाभूतमृदः कृष्णाजिने उत्तरतोनिधानम् । दक्षिणतः कृष्णाजिने वल्मीकलोष्टस्य । कृष्णाजिनं परिस्तीर्य्य पञ्चारत्निप्रमाणं समचतुरस्रं भूभागं प्राग्द्वारं कृत्वा तत्र भूसंस्कारान् कृत्वा विकृतोपकिरणे परिहृते उक्तस्थाने कृष्णाजिनस्थान् सम्भारान् निदध्यात् । उक्तस्थाने तेषामभ्युक्षणे सम्भारैः संसर्गे च मन्त्राः । ततोऽध्वर्युः गवेधुका अजापयश्च पृथक् निधाय वल्मीकलोष्टादिभिः सह मृत्पिण्डं मिश्रयेत् । ततो महावीरः कार्य्यम् । तत्स्वरूपं प्रादेशमात्रमूर्द्ध्वमासेचनवन्तं (गर्त्तवन्तम्) मध्यदेशे सङ्कुचितमेखलम् (उलूखलवत् मुष्टिग्रहणयोग्यम्) । मेखलाया ऊर्द्ध्वं त्र्यङ्गुलम् (प्रादेशमात्रस्योपरिभागे त्र्यङ्गुलम्) परिशेष्य ततोऽधस्तात् मेखला कार्य्या ; "मखस्य शिर" इति मन्त्रेण निष्पन्नमहावीरस्पर्शनम् । अनेनैव मन्त्रेण तदादानमपीत्येके । एवमितरौ महावीरौ कुर्य्यात् । अभिमर्शनानन्तरं सर्वेषां भूमौ निधानम् । मुञ्जमुखाकृती पिन्वने (दोहनपात्रे) रौहिणकपाले वक्ष्यमाणपुरोडाशकपाले वर्तुले सर्व्वसमीपे भूमौ निधाय । उपयामाम् (तद्वर्णपट्टामृदम्) प्रायश्चित्तार्थं निदध्यात् । "मखाय त्वेति मन्त्रेण"

शवेधुकाभिः श्लक्ष्णीकुर्य्यात् । दक्षिणाग्निनादीप्तेन अश्व पुरीषेण "अश्वस्य त्वेति" तस्या मृदोधूपनम् । उखावत् प्रदाहमादि । चतुरस्रमवटं खात्वा तत्र श्रपणम् (पाकसाधनमिन्धनादि) आकीर्य्य तत्र तीन् महावीरान् न्युब्जीकृतान् निधाय पिन्वने (दोहनपात्रे) रौहिणकपाले च न्युब्जे निधाय पुन श्रपेणावच्छाद्य दक्षिणाग्निना दीपयेत् । "अर्चिषे त्वेति" मन्त्रेण पक्वा मृदमुद्धरेत् दिनैव प्रदाहमोद्धारौ कार्य्यौ । ततस्तानि अजापयसावसिञ्चेत् । तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णधूपनप्रदहनोद्धरणावसेचनादि कुर्य्यात् ।

२क० महावीरसञ्ज्ञा प्रवर्ग्यचरणप्रकारः । यथा प्रत्यह सायप्रात प्रागुपसद प्रवर्ग्यचरणं कार्य्यम् । अपिहितद्वारे प्रवर्ग्यचरणम् । पत्नीसन्निधावपि तया तस्य दर्शन न कार्य्यम् । वैदिकशब्दानुनिश्चय कार्या । प्रकृत्यन्तराभावात् यावदुक्तं तावदेवात्र भवति नाधिकम् । अत्र घर्मसम्भिपात्रमौदुम्बरम् मानस्तत्र मौञ्जं स्यात् । तत्र विशेष यजमानस्कन्धप्रमाणपादाया औदुम्बर्या आसन्द्या वाल्वज वस्त्रत्रयं बन्धनरज्जुर्भवति ।

गार्हपत्य पूर्व्वेण प्रागग्रकुशानास्तीर्य्य तेषु पात्रासादनं द्वन्द्व कार्य्यम् ] पात्राणि तु उपयमनी महावीर, परीशासौ, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ । अनुत्कीर्णे स्रुचौ, स्थूणामयूखम्, धृष्टी, शतमाने, विशति मुञ्जप्रलवान्, प्रादेशमात्रान् विकङ्कतशकलान्, स्रुव षड्वेदम्, धवित्राणि, परिधीन्, रज्जुसन्दानमाभन्दीम् कृष्णाजिनमधिम्, खरार्थां सिकता अर्थवज्र, पाठक्रमेणैवासादयेत् । तत्र बाहुप्रमाणा औदुम्बरी उपयमनी । महामुखा प्रचरणीया स्रुक् । परीशासौ सदशाकारौ, स्थूणा गोर्बन्धनार्थं स्तम्भभेद । मयूखं अजाबन्धनार्थं शङ्कुरूप: कीलक । धृष्टी उपवेषौ औदुम्बरौ । एक रजतरत्तिकाशतमान, द्वितीय स्वर्णरत्तिकाशतमानम् इति द्वे शतमाने । औदुम्बरप्रारत्निमात्र स्रुव । वेदोमुञ्जमय । धुनोत्येभिरिति धवित्राणि कृष्णाजिनखण्डनिर्म्मितानि दण्डवन्ति त्रीणि व्यजनानि । सन्दान दोहनकाले गोपादबन्धनार्थी अजाबन्धनार्थी च रज्जु । अयैवत् प्रयोजनोपयोगि अन्यदपि द्वन्द्व आसादयेत् । प्रयोजनवद्द्रव्यञ्च स्फ्य पवित्रे, अग्निहोत्रहवनी आज्यस्थाली प्रभूतमाज्य, शूर्पं, पात्रीपिष्टम्, उपसर्ज्जनीपात्रम्, उपयमा, इतरौ महावीरौ, च । होदपटन मौञ्ज कार्य्यम् चौडुम्बरी समिदित्यादि द्वन्द्व आसादयेत् । प्रोक्षणीः संस्कृत्य उत्थाय ब्रह्मणोऽनुज्ञाकरणम् । होत्रादिप्रेषणञ्च "यमाय त्वेति, मन्त्रेण प्रतिमन्त्रम् उक्तद्रव्याणां प्रत्येक प्रोक्षण दार्वीकृत्य च तूष्णीं प्रोक्षणञ्च कार्य्यम् । शालाया पूर्व्वद्वारेण स्थूणां मयूख च निष्काश्य, शालाया दक्षिणस्या होतृ सन्दर्शने निखननम्, ( गार्हपत्यसमीपे उपविष्टो होता यत्र निखातां स्थूणां मयूख च पश्यति तादृश स्थान होतृसन्दर्शनम् ) । गार्हपत्याहवनीययोरन्तरत खरनिवाप । दक्षिणतश्च भित्तिलग्नमुच्छ्रितखरनिवाप कार्य्य । आहवनीय पूर्व्वेण सम्राडासन्दीं पर्य्याहृत्य दक्षिणत प्राचीमासादयेत् । राजासन्द्या उत्तरत कृष्णाजिनमयास्तृणाति तस्मिन्नभ्युपगमे निदध्यात् महावीरौ चाच्छादयेदुपेति । स्थूणादिनिर्हरणानि अध्वर्युरन्यो वा कुर्य्यात् । "देवस्य त्वेति मन्त्रेण एतेषामङ्गन होता कुर्य्यात् । महावीरमाज्य च संस्कृत "पृथिव्या सम्पृच" इति मन्त्रेण रजतशतरत्तिकामानं सिकतामध्ये प्रवेशयेत् । ३क० शुक्रं गायेति प्रस्तोतु प्रेषणम् । पत्नीशिर आच्छादनम् । सवीदस्वेति यदाऽऽज्य संस्कृत्य होता वक्ति तदा मुञ्जप्रलवान् शरेषीकापरितोभवानि शरकाण्डानि मध्यमोटनेन द्विगुणीकृतानादीप्य प्रतिदिश सिकतासु निदध्यात् । तेषु मुञ्जप्रलवेषु संस्कृत प्रचरणीय महावीर घृतपूर्णम् "अर्चिरसीति" मन्त्रेण निदध्यात् । महावीरस्योपरि प्रादेशधारकं यजमानम् "अनाधृष्टेति" मन्त्रं वाचयेत् । प्रतिदिशं वा तथा वाचनमिति विकल्प । दक्षिणत उत्तान पाणि यजमानोनिदध्यात् ।"मनोरश्वेति" मन्त्रेण महावीरस्योत्तरत प्रादेशनिधानम् । महावीर परित भस्मलेप कृत्वा गार्हपत्याङ्गारै उपवेषाभ्या महावीर "मरुद्भिरिति" परिकीर्य्य ( महावीरस्य सर्व्वतो निरन्तरानङ्गारान् निधाय ) । अङ्गारै विकङ्कतशकलैश्च प्रागुदगभि त्रयोदशभिः "स्वाहामरुद्भिरिति" मन्त्रेण परिश्रयेत् । तेषां त्रयोदशानां मध्ये प्रतिदिशं त्रीन् त्रीन् स्थापयेत् तत्र द्वौ द्वौ समन्त्रकमेकं तूष्णीं तयोरुपरि इत्येवं प्रागादिषु चतुर्षु दिक्षु स्थापितानां द्वादशानामधिकमेकं दक्षिणतः स्थापयेत् स्थापनक्रमेणैव श्रपणञ्च । सुवर्णशतरत्तिकामानेन "दिव स्पृश" इति मन्त्रेण महावीर पिदध्यात् ।

४क० तत्पिधानकाले "चन्द्र गायेति " प्रस्तोतु प्रेष-

णम्। कृष्णाजिनखण्डनिर्म्मितैर्व्यजनैर्दण्डसहितैस्त्रिभिः महावीरं परितः प्रकीर्णाङ्गारान् दीपनाय उपवीजयेयुः। तेषु व्यजनेषु एकं प्रतिप्रस्थाता, अपरमग्नीध्र, शिष्टमध्वर्युणा गृहीत्वा धूनयन्तः सव्यापसव्यं त्रिः प्रदक्षिणं कार्यम्। तत्र सव्यावृत्तौ व्यजनधूननम् दक्षिणावृत्तौ व्यजनान्यन्तः कुर्वन्तीति भेदः। धूननेन प्रदीप्तत्वात् जाते अर्चिषि सुवर्णशतमानं शिखायामाज्येन स्रुवेण महावीरं सिञ्चेत्। एतच्च सुवर्णशतमानं महावीरादन्यत्र शुभ्रे देशे स्थापयित्वा कार्यम्। अध्वर्यौ महावीरसेके व्यापृततया प्रतिप्रस्थाता लौकिकपिष्टाम्नौ श्रीहीणा यवानां रौहिणौ पुरोडाशौ पचेत्। रौहिणपुरोडाशयोरन्यपुरोडाशधर्म्मत्वं तेन कपालयोः संस्कारादि कार्यम्। "ईडे द्यावापृथिवी" इति मन्त्रेण परिधीन् परिधाय रौहिणौ पुरोडाशौ पात्रीस्थानीययोरुपस्तीर्णयोः रौहिणहवन्योः स्रुचोरुद्वास्य तत्स्थानेव आहवनीयदक्षिणोत्तरयोः एक दक्षिणतोऽपरमुत्तरतश्च स्थापयेत्। "घर्म्मस्य तन्वौ गायेति" प्रस्तोतृप्रेषणम्। यजमानसहितानामृत्विजां परिक्रमणम्। प्रस्तोतृव्यतिरिक्ताः पञ्चर्त्विज उपतिष्ठेयुः। छन्दोगानां मते तद्वहिताः षट् परिक्रमेयुः। "गर्भो देवानामिति" सकृत्, द्विस्तूष्णीं परिक्रमेयुः। पत्नीशिरोऽपगताच्छादनं कृत्वा महावीरमीक्षमाणां पत्नीं "त्वष्टमन्त" इत्येतं मन्त्रं वाचयेयुः। प्रातः "अहः केतुनेति" मन्त्रेण दक्षिणं रौहिणं, सायं "रात्रिरिति" मन्त्रेण उत्तरं रौहिणं जुहुयात्। ५क०। घर्म्मधुगवत्सनार्थां पाशवती रज्जुः तस्याएव पश्चात्पादबन्धनार्थं सन्दानं तद्द्वयमादाय "इडएहीति" मन्त्रेण उपाहूय, नाम्ना च त्रिरुक्त्वे गार्हपत्य गच्छन् तामाह्वयेत्। "धेनुं गायेति" प्रस्तोतृप्रेषणम्। "अदित्यै रास्नासीति" मन्त्रेण समागतां गां पाशेन प्रतिमुच्य (तस्याः रज्जुपाशं शृङ्गयोः प्रोतं कृत्वा सूणायां बद्धा) "पूषासीति" मन्त्रेण धेनुं पश्चात्पादयोः सन्दानेन (नियमनेन) बद्धा "घर्म्माय दीष्वेति" वत्सं ततोऽपाकुर्य्यात्। (स्तनपानात् निवर्त्तयेत्) "अश्विभ्यां पिन्वस्वेति" मन्त्रेण पिन्वने (पात्रभेदे) दुहेत्। "साहेन्द्रवदिति" मन्त्रेण पिन्वने पतितान्बिन्दूनभिमन्त्रयेत्। "दस्रे साम" इति सामाख्यनम्। प्रतिप्रस्थाता अजामेवं मयूखे तूष्णीं बद्धा दुहेत्। "पयोगायेति प्रतिप्रस्थातृप्रेषणम्। "उत्तिष्ठ ब्रह्मणस्पते" इति मन्त्रे होत्रोच्यमाने अध्वर्युः गोः समीपादुत्तिष्ठेत्। "उपद्रव पयसेति" मन्त्रे होत्रोच्चार्यमाणे गार्हपत्यं प्रति अध्वर्युगतिः। "गायत्रं छन्दोऽसीति" प्रतिमन्त्रं परीशासावादद्यात्। "वषिष्ठयकौ गायेति" प्रस्तोतृप्रेषणम्। "द्यावापृथिवीभ्यां त्वा परिगृह्णामीति" मन्त्रेण परीशासाभ्यां महावीरग्रहणम् परीशासाभ्यां महावीरमुद्गृह्य उञ्जवेदेनोपमृज्य उपयमन्या "अन्तरिक्षेणोपयच्छामीति" गृह्णीयात्। उपयमनीं च दुग्धरूपघर्म्मस्य अधस्तात् स्थापयेत्। उपयमन्या गृहीतं महावीरमजपयसा सिक्तेन शान्ते महावीरे "प्रैतु ब्रह्मणस्पते इति" वाक्ये होत्रोच्यमाने "इन्द्राश्विनेति" गोः पयोऽवनयेत्।

६क० आहवनीयं गच्छन् "समुद्राय त्वेति" मन्त्रेण वातनाम जपेत्। उपयमन्यां पतितं पयोघृतं वा घर्म्मे (दुग्धे) "स्वाहा घर्म्मायेति" आसिञ्चेत्। "स्वाहा घर्म्मः पित्रे" इति जपित्वाऽतिक्रम्याश्राव्य प्रस्तोतारं घर्म्मस्य यजेतिप्रेषयेत्। वषट्कारेण "विश्वा आशा इति" मन्त्रेण होमः। "दिवि धा इति" मन्त्रेण महावीरं त्रिरुत्कम्पयेत्। "स्वाहाऽग्नये इति" मन्त्रेण वषट्कारयोजितेन होमः। हुतावशिष्टद्रव्यस्य "अश्विना घर्ममिति" ब्रह्मानुमन्त्रणम्। "अपातामिति" मन्त्रेण घर्मस्य यजमानानुमन्त्रणम्। अतितप्तत्वात् पात्रमध्ये सर्वतः इतस्तत उत्क्रान्तौ ये घर्मलेशास्तेषाम् "इषे पिन्वस्वेति" मन्त्रेणानुमन्त्रणम्। "घर्मादिति" मन्त्रेण ऐशान्यामध्वर्युरुद्गच्छन् "अमेन्यस्मे" इति मन्त्रेण महावीरं सिकतासु निदध्यात्। तच्च परीशासगृहीतमेव स्थापयेत्। शीर्षघर्म्ममध्ये शकलं प्रवेश्य तत्स्थेनाज्येन विकङ्कतशकलम् अक्त्वा अक्त्वा "स्वाहा पूष्णे शरसे" इति मन्त्रेण तदेव जुहुयात् हुत्वा हुत्वा च प्रथमपरिधौ विकङ्कतशकलान् निदध्यात्। एवं त्रिधा हुत्वा चतुर्थमहुतं तच्छकलमीक्षमाणो दक्षिणतो बर्हिषि उपगूहेत् (प्रवेशयेत्)। अहुतं सप्तमं च विकङ्कतशकलम् दक्षिणेनमाषः सर्वेषाक्तं (महावीरस्थहुतशेषमेवाक्तम्) मूलाग्रपर्यन्तं प्रतिप्रस्थात्रे दद्यात्। प्रतिस्थाता तं मध्यमुदञ्चं नियच्छेत्। घर्मसम्बन्धि नवनीतादि "स्वाहा सं ज्योतिषा" इति मन्त्रेण परीशासाभ्यामुद्धृत्य उपयमन्यां स्रुच्यासिञ्चति (स्रुग्भागोपरि अधोमुखं करोतीत्यर्थः) ततो द्वितीयरौहिणहोमः। मध्यमपरिधौ निहितानि पञ्च वैकङ्कतशकलानि आहवनीये जुहुयात्। उपयमन्यां

स्थितं घर्मोऽग्रमग्निहोत्रविधानेन हुत्वा "भक्षु हुतमिति" मन्त्रेण सर्वे ऋत्विगादयो वाजिनवत् भक्षयेयुः । उच्छिष्ट-खरे प्रक्षाल्य उपयमनीं निदध्यात् । अत्र काले उप-स्थितानां पञ्चशकलानामाहवनीये प्रहरणम् । अध्वर्युर्होत्रा ससाद्यमानाय महावीरायानुब्रूहीति अनुवाचयेत् । ततो धेनवे तृणोदके दद्यात् । सर्वं पात्रजातमना-शाय आसन्द्यां कुर्यात् । "अभीनमिति" मन्त्रेण महा-वीरमासन्द्यां स्थापयेत् । इतराणि तु पात्राणि तूष्णी-मिति भेदः । तत्र शान्तिपाठ द्वारोद्घाटनञ्च । खर-स्थूणामयूखकृष्णाजिनाभ्रुपगयासन्दीनां सकृदासादन प्रोक्षणे । आरादुपकारकत्वात् प्रथमे प्रवर्ग्यचरणे एव आसादनप्रोक्षणे इत्येकपक्षः । अथवा, "प्रतिप्रधानं गुणा-वृत्तिरिति" न्यायात् इति पक्षान्तरम् । ७क०। उपसदन्ते प्रवर्ग्योत्सादनप्रकारः । यथा शालामध्यात् दक्षिणेन द्वारेण घर्मसम्बन्धि द्रव्यं निष्कास्य अन्तःपात्यसमीपे सादितपात्रेभ्यो दक्षिणत एव निदध्यात् । आहवनीये त्रीन् शलाकान् मर्द्य प्रदीप्य आग्नीध्रो धारयेत् यजमान सक्थ्योः सुखमात्रनाभिमात्रजानुमात्रप्रमाणेषु तान् प्रदी-प्तान् शलाकान् निदध्यात् । अध्वर्युराज्यं संस्कृत्य चतु-र्गृहीतं गृहीत्वा तेषां प्रदीप्तानां शलाकानामुपरि "याते घर्म। दिव्या शुगिति" प्रतिमन्त्रं जुहुयात् । एकमेव चतु-र्गृहीतं गृहीत्वा त्रिष्वपि शलाकेषु जुहुयात् । तथाच शलाकानां समूहः शालाकः तेन त्रिस्रभिः शलाकाभि एकः शालाकः । तादृशान् त्रीन् शलाकान् हस्ते गृहीत्वा तेषामेकं शालाकं शालाद्वार्य्ये प्रदीप्याग्नीध्रोयजमानमुख-मात्रे आहवनीयस्योपरि धारयेत् । अध्वर्युश्चतुर्गृहीत तृतीयांशं तस्मिन्छालाके प्रदीप्ते जुहुयात् । ततस्तं शालाकमाहवनीयमध्य एव क्षिपेत् । ततो द्वितीयं शालाकं प्रदीप्याग्नीध्रो यजमानस्य नाभिदघ्ने आहवनीयस्योपरि धारयेत् अध्वर्युस्तथैव जुहुयात् । तृतीयन्तु आग्नीध्रः प्रदीप्य यजमानजानुमात्रे धृतमध्वर्युराहवनीये निक्षिप्य तत्र उपविश्य सर्वं चतुर्गृहीतशेषं जुहुयात् । अत्र उपविश्ये युक्ते पूर्वयोः तिष्ठता होमौ कार्य्यौ । ततोऽध्वर्युः पुरस्तात् पत्नीमपि कृत्वा "चतस्र त्वेति" मन्त्रेण शालाया निष्क्र-मेत् । अन्वक्रमयत् अध्वर्युणा प्रस्तोत सामगानार्थं प्रेष-णम् । अवक्रमयत् देशगति निधनञ्च । सामगानात् परं सर्वे उत्सादनदेशं गच्छेयुः । (उत्सादनदेशश्च महावीरादि पात्रादीनां परित्यागदेशः "परिष्यन्दोवा अन्योवा देशः"

इति शत०ब्रा० १४,२,१,१४, विहितदेशः') । तत्र अग्निचित्यारहिते यज्ञे उत्तरवेदिं प्रति सर्वे गच्छेयुः । अग्निचित्यायुक्ते यज्ञे तु परिष्यन्द (जलपरिवृत द्वीपम्) (निर्जनस्थल वा) प्रत्येव गमनम् । तत्तत्सादनदेशम् उत्तरवेदिं वा "अधिक्रदंदति" त्रि परिषिच्य उत्तरकार्य्यं कार्य्यम् । अध्वर्युरुत्तरवेदौ उत्सादनपक्षे प्रथमं महा-वीरं नाभिसृष्टं "चतुःस्रक्तिरिति" निदध्यात् । इतरौ महावीरौ प्राक्संस्थौ प्राञ्चा मन्त्रावृत्त्या निदध्यात् । उपयामम् (महावीरघटमावसरे परिग्रहीता म्रदम्) तथैव तूष्णीं निदध्यात् । महावीरादिकमभितः परीशासौ निदध्यात् । अग्रकृष्टे (नीचे पाश्वे) रौहिणहवन्यौ स्रुचौ निदध्यात् । रौहिणहवन्योरुत्तरतः अभ्रिनिधानम् । तयोरेव दक्षिणत आसन्दीम्, अभ्रेरुत्तरतः सर्वधवित्राणि च निदध्यात् । तथा च दक्षिणत, पश्चात्, उत्तरतश्चैकैकं धवित्रं निदध्यात् । परिधीनपि निहितद्रव्याण्यभितो निदध्यात् । निहितपात्रगणस्य पश्चात् उपयमनीं स्रुचं प्रागग्रां निधाय रज्जुसदानं वेदञ्च तन्मध्ये निद-ध्यात् । पिन्वने (दोहनपात्रे) उपयमन्युत्सस्य पश्चात् अभितो दण्डं निदध्यात् । पिन्वनयोः पश्चात् दक्षिणतः स्थूणाम्, उत्तरतो मयूखं, निदध्यात् स्थूणामयूखयोः पश्चात् रौहिणकपाले निदध्यात् । तयोरेव पश्चात् धृष्टी (उपवेषौ) निदध्यात् । घर्मोपयुक्तं सुवर्णोक्ष-कूर्चादि आसादितपात्राणां मध्ये निदध्यात् । सर्व-पात्राणामुत्तरत प्रचरणीयौ खरौ निदध्यात् । मार्जा-लीयस्थानस्य दक्षिणतो वेदेर्बहिर्भागे उच्छिष्टखरं निद-ध्यात् । खगर्त्तानि सप्त पात्राणि (महावीरत्रयं द्वे पिन्वने उपयमनीं स्रुवञ्च) एतानि "घर्मैतत्ते" इति प्रतिमन्त्रं पयसा पूरयेत् । प्रतमिन्न पयःशेषं पूर्व्वमदस्य चेत् सान्निके सोमे प्रागेव सक्तु देयमिति विधानात् । वर्माहारेष्टाहोतृीय सामगानार्थं प्रस्तोतरध्वर्युणा प्रेषणम् । सपत्नीकाः सर्वे "सुमित्रिया न इति" मन्त्रेण चात्वाले मार्जयेयुः । ऐशानीं प्रति "उद्वयमिति" मन्त्रेण यजमान उद्गच्छेत् । प्रादेशमात्रामेकां समिधं हस्तेन "अन्मेत्त्वमेत्र्योऽसीति" मन्त्रेणादाय "समिदसीति" मन्त्रेण आहवनीये दद्यात् । गार्हपत्ये तु तादृशीं समिधं तूष्णीं दद्यात् । यजमानः रजत-सुवर्णशतमाने ब्रह्मणे दद्यात् । यजमानव्रतदुघां रूपा घर्मदुघां यजमान अध्वर्य्यवे दद्यात् । पत्नीव्रतदुघां गाथादान्ने दद्यात् । अजामग्नीधे दद्यात् । घर्मस्य महा

वीरस्य भेदने यथाकालं प्रायश्चित्तं कुर्यात्। तत्प्रायश्चित्त प्रकारादि। अनन्तरेण द्वितीयतृतीययोर्मध्ये द्वयेनान्यतरेण वा प्रवर्ग्य चरेत्। तत्र पूर्णाहुतिहोमप्रकारः। संभ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता। निहिताभिमर्शनादारभ्य अजापयोऽवसेचनान्तकाले महावीरभेदने प्रायश्चित्तभेद। तत्र प्रथमदिने भेदने प्रा० सविता देवता। द्वितीयेऽहनि भेदे अग्निर्देवता तृतीयदिने भेदने वायुर्देवता।

अथ प्रवर्ग्याधिकारिणः। अग्निष्टोमस्याद्यस्याहितानस्य प्रथमे प्रयोगे न प्रवर्ग्यचरणम् इत्येकः पक्षः। विकल्पेन तत्रापि प्रवर्ग्यचरणमिति शाखान्तरम्। सप्रवर्ग्ये यज्ञे दधिघर्मसम्बन्धिनीतिकर्त्तव्यता। सपवित्रायामग्निहोत्रहवन्या दधिघर्मग्रहणं कुर्यात्। तच्च यथाकथञ्चित् स्थालीमुखेनैव स्रुचि निनयेत्। प्रस्तरणाभिमारणे अप्यत्र न। हुतशेषस्य "मयि त्य इति" मन्त्रेण भक्षणम्। तच्च महाव्रतीयेऽह्नि कर्त्तव्यम्। दधिभक्षानन्तर पात्राणां मार्ज्जनम्। प्रवर्ग्यचरणस्यादौ अन्ते च शान्तिकाध्यायपाठः। (शान्तिकाध्यायश्च ऋचं वाचमित्याद्यध्यायः)। शान्तिकरणद्वयमध्ये द्वारपिधानोत्तरकाले आदिमम्। पात्राण्युद्वासन्या निधानानन्तरमन्तिमम् इति भेदः।

कातीयसूत्रप्रतिपाद्यविषयाश्च विस्तरभयान्नालोचितास्तत एवावसेयाः। कात्यायनसर्व्वानुक्रमणिकाप्रतिपाद्यविषयाश्च सर्व्वानुक्रमणिकाशब्दे वक्ष्यन्ते।

**कात्यायनी** स्त्री कतस्य गोत्रापत्यं स्त्री गर्गा० यञ् लोहितकतन्ता० ष्फ षित्त्वात् ङीष्। १ कतगोत्रापत्यस्त्रियाम्। पत्न्यां ङीष्। २ कात्यायनर्षेः पत्न्याम् ३ तत्तुल्यकषायादिवस्त्रधारिण्यामर्द्धवृद्धायां विधवायां स्त्रियां ४ कल्पभेदे कतगोत्रोत्पन्नायां दुर्गायां ५ याज्ञवल्क्यर्षिपत्नीभेदे च। "याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः मैत्रेयी कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी" वृ० उ०। [ यके शिवप्रणीते तन्त्रभेदे।

**कात्यायनीतन्त्र** न० ६ त०। कात्यायनीपूजामन्त्रादिविधा-

**कात्यायनीपुत्र** पु० ६ त०। कार्त्तिकेये।

**काथक्य** पु० स्त्री कथकस्य गोत्रापत्यं गर्गा० यञ्। कथकर्षेर्गोत्रापत्ये यूनि तु यञन्तत्वात् फक्। काथक्यायन तदीय युवगोत्रापत्ये। स्त्रियां लोहितकतान्तादि० ष्फ षित्त्वात् ङीप्। काथक्यायनी तद्गोत्रापत्यस्त्रियाम्।

**काथञ्चित्क** न० कथञ्चित्+विनयादि० स्वार्थे ठक् तान्तत्वात् ठस्य कः। कथञ्चिदित्यर्थे।

**काथिक** त्रि० कथायां साधु कथादि० ठक्। कथारचनासमर्थे

**कादम्ब** पु०स्त्री सौ०कदि-णिच्-अम्बच्। (ग़ालिहांस) १ हंसभेदे स्त्रियां जातित्वेऽपि संयोगोपधत्वान्न ङीष् किन्तु टाप्। तस्य च नीलवर्णत्वम् "क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः" सितासितगङ्गायमुनासङ्गमवर्णने रघु। तद्व्या० "कादम्बसंसर्गवती नीलहंससंसृष्टा" मल्लि०। सुश्रुते हंससारसेत्युपक्रमे कादम्बस्य सुषवत्वं सघचारित्वञ्चोक्त्वा "रक्तपित्तहराः शीता स्निग्धा वृष्या मरुज्जितः। सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः" इति तेषां मांसगुणा उक्ताः। २ इषौ पु० विश्वः। ३ बाणे मेदि०। "कादम्बानामेकपातैरदीव्यत्" माघः। कदम्बे समूहे भवः अण्। ५ समूहभवे त्रि०। कदम्बस्येदम् अण्। ६ कदम्बसम्बन्धिनि त्रि० "कादम्बमर्द्धोद्गतकेशरञ्च" रघु। "कादम्बं नीपकुसुम"मिति मल्लि०। वस्तुतः कदम्बशब्दस्य पुष्पपरत्वे कदम्बमित्येव ह्रस्वपाठः स्यात् दीर्घपाठे तु कदम्बानां कुसुमानां समूह इत्यर्थेऽण्। इति तस्य कदम्बसमूहपरतेति बोध्यम्। कदम्ब एव स्वार्थेऽण्। ७ कदम्बवृक्षे पु० "वेत्रकादम्बमल्लकरम्भमहाकरम्भाः पञ्च पुष्पविषाणि" स्थावरविषकीर्त्तने सुश्रु०। स्वार्थे कन् बाणे हारा०।

**कादम्बर** न० कादम्बं जाति प्रकृतित्वेन ला-क लस्य रः। १ ऐक्षवे गुडादौ, तस्य २ विकारे मद्ये च। "निपेव्य मधु माधवाः सरसमत्र कादम्बरम्" माघः। तद्व्याख्यायां मल्लिनाथेनोक्ता व्युत्पत्तिरुक्ता। कादम्बं कदम्बोद्भवं रसं राति रा-क। तत्तुल्यरसयुक्ते ३ दधिसरे पु० मेदि०।

**कादम्बरी** स्त्री कुत्सितं मलिनमम्बरं यस्य कोः कदादेशः कदम्बरो नीलाम्बरो बलभद्रस्तस्य प्रिया अण्। हलिप्रियायाम्, मदिरायाम्। अस्यानिरुक्तिर्बलभद्रप्रियता च हरि० ९८ अ० दर्शिता यथा "अथ सङ्कर्षणः श्रीमान् विना कृष्णेन वीर्य्यवान्। चचार तस्य शिखरे नगस्य नगसन्निभः। प्रफुल्लस्य कदम्बस्य प्रच्छाये निषसाद ह। वायुना मदगन्धेन वीज्यमानः सुखेन वै। तस्य तेनानिलौघेन-सेव्यमानस्य तत्र वै। मदसंस्पर्शजो गन्धः संस्पृशन् घ्राणमागतः। तृष्णा चैनं विवेशाशु वारुणीप्रभवा तदा। शुशोष च मुखं तस्य मत्तस्यैवापरेऽहनि। स्मारितः स पुरावृत्तमन्वेषन्नागमत् ।

विभु । तर्पितोमदिराम्भोभी ततस्तं तदमैक्षत । तस्य प्राहृषि फुल्लस्य यदम्भो जलदोज्झितम् । तत्कोटरस्थं मदिरा व्यजायत मनोहरा । तान्तु तृष्णाभिभूतात्मा पिब-न्मार्गं ह्यासदत् । मदाच्च चलिताकारं समजायत स प्रभुः । तस्य मत्तस्य वदनं किञ्चिच्चलितलोचनम् । घूर्णि-ताकारमभवच्छरत्कालेन्दुसप्रभम् । कदम्बकोटरे जाता नाम्ना कादम्बरीति सा । वारुणी रूपिणी तत् देवानाम-मृतारणी । कादम्बरीमदकलं विदित्वा तृष्णपूर्व्वजम् । तिस्रस्त्रिदशनार्य्यस्तमुपतस्थुः प्रियंवदा । मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा" । "कादम्बरीमदविघूर्णितलोचनस्य युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम्" उद्भ० । तेन कादम्बं कदम्बकोटरसमुत्पन्नत्वात्मानत्वेन याति या—क वस्य र० मत्वर्थे र वेति बोध्यम् । कादम्बं रवं राति रा—क गौरा०ङीप् । २ कोकिलायाम्, ३ सरस्वत्याम्, ४ शारिकायाञ्च मेदि० बाणभट्टरचिते ५ कथाभेदे । सा च बाणभट्टेन सामिकृता तत्पुत्रेण समाप्तिं नीता ।

**कादम्बरीवीज** न० ६त० । मद्यसाधने किण्वादिद्रव्यभेदे रत्नमा० । [ तस्य कादम्बरीमद्यहेतुत्वात् तथात्वम् ।

**कादम्बर्य्य** पु० कादम्बर्य्या हितं यत् । कदम्बवृक्षे जटाधर

**कादम्बा** स्त्री कादम्ब इवाचरति कदम्ब+आचारे क्विप् अच् । कदम्बपुष्प्याम् (मुण्डरी) लतायां शब्दच० ।

**कादम्बिनी** स्त्री कादम्बाः कलहंसा अनुधावकत्वेन सन्त्यस्याः इनि । मेघमालायाम् अमर० "मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी" रसग० । [ठञ् । कदलेन निर्वृत्तादौ ।

**कादलेय** त्रि० कदलेन निर्वृत्तादि कदल+सख्या० चातुरर्थ्यां

**कादाचित्क** त्रि० कदाचिद्भवः कालवाचित्वात् ठञ् । कादाचित्ककालभवे । "तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपपद्यते" सा० द० । 'अनियतावधिकत्वे च कादाचित्कत्वव्याकोप" । "अनादिश्चेत् कार्यकारणप्रवाह कादाचित्कत्वान्यथानु-पपत्त्या कल्प्यः" इति च कुसु०हरिदास । "अधिकत्वञ्च स्वाधिकरणसमयप्रागभावाधिकरणानुत्पन्नत्वे सति कादा-चित्कत्वम्" नौ० चि० । कादाचित्कत्वञ्च प्रागभाव प्रतियोगित्वञ्च सप्रतियोगित्वान्यतरत्वम् । अन्यतरत्व-निवेशेन च ध्वंसे प्रागभावप्रतियोगित्वस्य, प्रागभावे च ध्वंसप्रतियोगित्वस्य सत्त्वान्नाव्याप्तिः नित्ये च तदुभयाभ-वान्न प्रसक्ति० ।

**काद्रवेय** पुंस्त्री कद्र्वाः अपत्यम् शुभ्रा० ढक् । फणा-लाङ्गूलवति सरीसृपभेदे नागे, सर्पे । स्त्रियां जातित्वात् ङीप् । "काद्रवेयाश्च बलिनः सहस्रममितौजसः । सुपर्ण-वशगा नागा जज्ञिरेऽनेकमस्तकाः" हरिवं० ३अ० काश्यपपत्नीभेदकद्रुपुत्रवर्णने

**कानक** त्रि० कनकस्येदमण् । १कनकसम्बन्धिनि । कनकं फल-मिव उग्रं फलम स्यस्य अण् । जयपालबीजे राजनि० ।

**कानन** न० कन—दीप्तौ णिच् ल्युट् ल्यु वा । १वने, २गृहे, कस्य ब्रह्मण आननम् । ३ब्रह्मणो मुखे च मेदि० । "तत्रो-पान्तं परिणतफलश्योतिभिः काननाम्रैः" "शीतोवायु परिणमयिता काननोदुम्बराणाम्" मेघ० । "सकानना निपपतितेव भूमिः" "पुष्पगन्धेन काननम्" रघु० ।

**काननाग्नि** पु० ६त० । दावानले

**काननारि** पु०काननस्यारिरिव । शमीवृक्षे शब्दच० । शमी-गर्भस्याग्निना निखिलवनदाहात्तस्य तदरित्वम्

**कानलक** त्रि०कनलेन निर्वृत्तादि० कनल+अरीहणा० चतु-रर्थ्यां वुञ् । कनलनामजननिर्वृत्तादौ ।

**कानिष्ठिक** न० कनिष्ठिकैव कनिष्ठिका+शर्करा० स्वार्थे अण् स्वार्थिकस्यापि प्रत्ययस्य क्वचिल्लिङ्गातिक्रमोक्तेः क्लीवता । कनिष्ठायाम् ।

**कानिष्ठिनेय** पुंस्त्री कनिष्ठाया अपत्यं कल्याण्यादि० ढक् इनङ् च । कनिष्ठाया अपत्ये । 'हते कानिष्ठिनेयस्य ज्यैष्ठिनेयोविवासितः" भट्टि० स्त्रियां ङीप् ।

**कानीत** पु० कनीतस्यापत्यम् शिवा० अण् । कनीतनामकनृप-स्यापत्ये पृथुश्रवसि राज्ञि । "पृथुश्रवसि कानीते अ-व्युष्टादद्दे' ऋ० ८,४६,२१ ।

**कानीन** पु०कन्याया अनूढाया अपत्यम् अण् कनीनादेशश्च । "कानीनः कन्यकाजातो मातामहसुतो मतः" इति याज्ञ० उक्ते पुत्रभेदे । यथा व्यासः कर्णश्च । याज्ञ०मातामहसुत-त्वमुक्तम् । मनुना तु "पितृवेश्मनि कन्या तु यं पुत्रं जनये-द्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्" इत्य-नेन वोढुः सुतत्वमुक्तम् । अनयोर्विरोध अभ्युपगमा-नभ्युपगमाभ्यामन्यतरयोः सपुत्रापुत्रत्वाभ्यां वा समा-धेयः । "कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः" इति मनुना तस्यादायाद बान्धवत्वमुक्तम् ।

कर्णस्य यथा कानीनत्वं तथा कथा तत्तजशब्दे २५८६पृ० उक्तम् । "कानीनश्चापि जानामि सविद्यः प्रथम सुतम् । पितृमधरि

कथं मे प्रसूतं स्रुतता गतम्" हरि०६०अ०। "भीष्म खलु पितुः प्रियचिकीर्षया सत्यवती मातरमुद्वाहयत् यामाहु-र्गन्धकालीमिति। तस्या पूर्वं कानीनो गर्भो पराशराद् द्वैपायनोऽभवदिति" भा० आ० ६५ अ०। व्यासस्य कानीनत्वमुक्तम्।

कान्त पु० कन दीप्तौ कम-वा क्त। १, पत्यौ "कान्तवक्त-स्यर्तास्थिता" उद्भट:। "शिवराशौ ददास्यर्धमनाकान्त। स्वहाय मे" शिवाधिदानमन्त्र:। स्रय पूर्वकः सूर्यका-न्तशिलायाम्, चन्द्रपूर्वकः चन्द्रकान्तमणौ, अय पूर्वः अयस्कान्तमणौ (चुम्बकपाथर) २चन्द्रे ३वसन्ते ४हिज्जल वृक्षे च। ५कुङ्कुमे, न० ६शोभने, "कान्ताखकान्ताललनाः सुराणाम्" माघ: "नात कान्तमुपगीतया तया" माघ। ७अभीष्टे च त्रि०। "भीमकान्तैर्नृपगुणैः" रघुः। ८ नार्यां, ९ प्रियङ्गुवृक्षे च स्त्री। मेदि० १०वृहदे-लायां ११रेणुकौ षधौ १२ नागरमुस्तायां स्त्री राज-नि०। १३सुखमात्रे १४लौहभेदे न०। भावप्र० तस्य लक्षणगुणादि तत्रोक्तं यथा

"यत्पात्रे न प्रसरति जले तैलविन्दुः प्रतप्ते, हिङ्गुर्गन्धं त्यजति च निजं तिक्ततां निम्बकल्कः। तप्तं दुग्धं भवति शिखराकारकं, नैति भूमिं, कृष्णं न स्यात् सजलकणतः कान्तलौहं तदुक्तम्"। मारितस्य चूर्णीकृतस्य तस्य सेवने गुणा उक्तास्तत्रैव "गुल्मोदरार्शःशूलाममामवातं भगन्द-रम्। कामलाशोथकुष्ठानि क्षयं कान्तमयो हरेत्। प्लीहाम-म्लपित्तञ्च यकृच्चापि शिरोरुजम्। सर्वान्रोगान् विजयते कान्तलौह न संशयः। बलं वीर्यं वपुः पुष्टिं कुरुतेऽग्नि विवर्धयेत्"। तत्रैव सामान्यलौहमारणविधिगुणादि।

"शुद्धं लौहभवं चूर्णं पातालगरुडीरसैः। मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम्। पुटत्रयं कुमार्याश्च कुठार-च्छिन्निकारसैः। पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत्"। अन्यच्च। "त्रिफलाष्टगुणे तोये त्रिफलाषोडशं पलम्। तस्मिन् जलेऽष्टमांशे स्याद्रुल्वं दत्त्वा पुनः पुनः। ...चूर्णित तीक्ष्णचूर्णं तु मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत्। एवं सप्तपुटै-र्मृत्युं लौहचूर्णमवाप्नुयात्। सत्यानुभूतो योगीन्द्रः क्रमोऽयंलौहमारणे। कथ्यते रसराजेन लौहस्याधि-याऽधुना। स्रुतकात् द्विगुणं गन्धं दत्त्वा कुर्याच्च कज्जलीम्। द्वयोः समं लौहचूर्णं मर्दयेत्कन्यकाद्रवैः। यामद्वयं तत-पिण्डं कृत्वा ताम्रस्य पात्रके। घर्मे धृत्वा रुबूकस्य पत्रैराच्छादयेद्बुधः। यामद्वयाद्भवेदुष्णं धान्यराशौ न्यसे-त्ततः। दत्त्वोपरि शरावं तु त्रिदिनान्ते समुद्धरेत्। पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं भवेत्। दाडिमस्य दलं पिष्ट्वा तज्जलेन प्रशारिया। तद्रसेनायसश्चूर्णं सञ्चीय स्नावयेदिति। आतपे शोषयेत्तच्च पुटेदेवं पुनः पुनः। एकविंशतिवारै-स्तन्म्रियते नात्र संशयः। एवं सर्वाणि लौहानि स्वर्णा-दीन्यपि मारयेत्"। एवं मारितस्य लौहस्य गुणाः। "लौहं तिक्तं सरं शीतं कषायं मधुरं गुरु। रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत्। कफपित्तज्वरं शूलं शोफार्शःप्ली-हपाण्डुताः। मेदोमेहक्रिमीन् कुष्ठं तत्किट्टं तद्गुवेव हि। गुञ्जामेकां समारभ्य यावत् स्युर्नवरत्तिकाः। तावल्लौह समश्नीयाद्यथादोषानलं नरः। कुष्माण्डं तिलतैलं च माषान्नं राजिका तथा। मद्यमम्लरसश्चैव वर्जयेल्लौह सेवकः। शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः। म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा"।

"कामिनि कान्ते रसिका काकुरुतेन" माघः। "कान्ताजनेन रहसि न्यहीता।" "वपुष्प्रवेशेऽखिललोककान्ता सामन्य-कान्तात्स्वरसीतरा तु" माघः कं अज्ञाघमन्तयति हिप-राद्भिकाले। १५ वासुदेवे परमेश्वरे पु० "कामदेवः काम-पालः कामी कान्तः कृतागमः" विष्णुस०। १६ पत्न्यां स्त्री "मा कान्ते पक्षसान्ते पर्याकाशे देवि स्वाप्सीः"श्लो०न० "कान्तया कान्तसंयोगे किमकारि नवोढया" विदग्धमु०। १७ कार्त्तिकेये पु०। "आग्नेयश्चैव स्कन्दश्च" इत्युपक्रमे "कामजित् कामदः कान्तः" इत्युक्ता। "नामान्येतानि दिव्यानि कार्त्तिकेयस्य यः पठेत्" भा०वन० २३१अ०। "भवेत् कान्ता युगरसहयैर्यभौ नरसा लगौ" इत्युक्तलक्षणे १८छन्दोभेदे स्त्री। १९कामदेवभेदे पु०कामशब्दे विवृतिः।

**कान्तपक्षिन्** पु०स्त्री कान्तोमनोहरः पक्षोऽस्यस्य प्राशस्त्येन इनि। मयूरे शब्दच०। स्त्रियां ङीप्।

**कान्तपुष्प** पु० कान्तं पुष्पमस्य। कोविदारवृक्षे। राजनि०।

**कान्तलक** पु० कान्तं लक्यते लक-आस्वादने कर्मणि घञर्थे क। (तुंद) तुन्नवृक्षे अमरः।

**कान्तलौह** पु० कान्तं प्रियं लौहं यस्य। अयस्कान्ते। कर्म०। (कान्तिलौह) लौहसारे। कान्तशब्दे तद्गुणाद्युक्तम्।

**कान्ताङ्घ्रिदोहद** पु० कान्ताङ्घ्रिःस्ताडनं दोहदमस्य पुष्पो-द्गमे। अशोकवृक्षे त्रिका०। यथा च तस्य तथात्वं तथा-ऽशोकशब्दे ४८५पृ० उक्तम् कान्तापाददोहदादयोऽप्यत्र।

**कान्तायस** न० नित्यकर्म० जातित्वात् अच् समा०। कान्त-लौहे राजनि०।

**कान्तार** पु० कान्ता अभीष्टा आराद्य यन्ययोऽस्य, कस्य जल-

तत्कृतिसाध्योऽचिकीर्षितत्वात् कृते स्वध्वंसप्रागभावातिरिक्ते चिकीर्षाविषयमात्रे जनकत्वात् नहि भोजनादिचिकीर्षाधीनकृत्या गमनं साध्यत इति केचित् तन्न गुरुतरभारोत्तोलने कृतिसाध्ये श्रमात् पृष्टस्य निगडनिश्चलबद्धदेहस्य वा कृतौ सत्यामुद्देशमचलनक्रियानुत्पादेऽपि श्रमानुभवात् कृतेरेव कारणत्वात्। न तु तज्जन्यक्रियायाः, सुखे व्यभिचाराच्च न हि सुखं कृतिसाधनचिकीर्षाविषयः उपायचिकीर्षाजन्या हि कृतिः न तु सुखचिकीर्षाजन्या। चिकीर्षाजन्यकृतिसाध्यत्वं न श्रमे, द्वेषयोनियत्नादपि तदुत्पत्तेरित्यपरे तन्न यत्नं प्रत्येवेष्टसाधनत्वेन चिकीर्षाजन्यकृतिसाध्यत्वात् द्वेषस्य यत्नाजनकत्वात् द्वेषसिद्धिस्तु यत्नं द्वेष्मीत्यबाधितानुभवबलात्। यत्तु श्रमः कृतित्वेन कृतिसाध्यो न चिकीर्षाधीनकृतित्वेन, यद्यचिकीर्षितेऽपि श्रमे चिकीर्षाधीनकृतित्वेन कारणता स्यात्तदा चिकीर्षितमेव भोजनं कृत्या साध्यते नाचिकीर्षितं गमनादीति न स्यात् श्रमवद्गमनेऽपि तज्जन्यत्वप्रसङ्गात् भोजनादिव चिकीर्षाधीनकृतिविशेषात् नहि कृतिमात्रं व्यभिचरति जीवनयोनिकृतेस्तदनुत्पादात्। यद्वा श्रमो न भोजनकृतिसाध्य किन्तु तदनन्तरोत्पन्नाज्जीवनयोनियत्नादेवेति तन्न नहि कृतित्वेन श्रमजनकत्वं नापि कृत्यन्तरादेव श्रमोत्पत्तिः जीवनयोनियत्नेन चापि भारोद्वहनादि कर्म कुर्वतस्तावच्छ्रमानुभवेन तस्य श्रमाजनकत्वात्। तथाङ्गोलनादिवत् श्रमविशेषाणामपि भोजनादिकृतिसाध्यत्वमनन्यगतिकत्वात्। सुप्तस्य स्वेदादानुमितः श्रमस्तज्जन्य इति चेत् न स्वेदादेः श्रमान्यहेतुकत्वात् अन्यथा जागरेऽपि तदनुवृत्तौ श्रमानुवृत्तिप्रसङ्गादिति मैवं स्वेच्छाधीनत्वस्य कृतिविशेषणत्वात्। श्रमश्च नियमतोऽन्येच्छाधीनकृतिसाध्यः श्रमे तु स्वत्वेन इच्छाविरहात्। अतएवान्येच्छाजन्यकृतिसाध्यत्वेन श्रमो नान्तरीयक इत्युच्यते। स्वचिकीर्षाधीनत्वन्तु न कृतौ विशेषणं, गौरवात्। अन्ये तु कृतिगतधर्मान्तरमेवोद्देश्यत्व तद्विशिष्टकृतिसाध्यश्च न श्रमः अचिकीर्षितत्वात् किन्तु कृतिमात्रसाध्यः अतएव कष्टं कर्मेत्यनुभवो लोकानाम्। एवं चिकीर्षायां मम कृतिसाध्यत्वं प्रयोजकं तत्र तु कृतिसाध्यत्वे सतीष्टसाधनत्वं सुखत्वं दुःखाभावत्वञ्चेति चतुष्टयम् इच्छाप्रयोजकन्तु मम सुखत्व दुःखाभावत्वञ्चेति द्वयं इष्टसाध्ये सुखे चेच्छा इष्टमपि विषयीकरोति। बलिष्टसाधनत्वेन तत्त्वेच्छासाधनत्वस्य इच्छाविरोधित्वात्

तत्र तु नयम् विषभक्षणे कृतिसाध्यत्वेऽपि बलवदनिष्टसाधनत्वेन चिकीर्षा नास्तीति कृतौ चिकीर्षाजन्यत्वं विशेषणमिति कश्चित् तत्तुच्छं विषभक्षणे कृतिसाध्यत्वमेव न स्यात् जीवनयोनिकृतेस्तस्यानुत्पत्तेरिति व्यर्थविशेषणम्। स्यादेतत् इष्टसाधनताभ्रमाद्विषभक्षणे चैत्यवन्दने च चिकीर्षाजन्यकृतिसाध्यत्वमस्ति ज्ञानप्रयुक्तत्वात् कार्यत्वस्य, तथाच सञ्जातबाधोऽपि तत्र कार्यज्ञानात् प्रवर्त्तेत तथा तृप्तोऽपि भोजने न तु कृतिसाध्यतानुभवस्तथा, अन्यथेष्टसाधनताभ्रमे विषभक्षणेऽपि प्रवर्त्तेत। नचेष्टसाधनताज्ञानं वेदोक्तानुमापकोऽस्त्विति चेत् न वस्तुतस्तत्र कृतिसाध्यत्वे लिङ्गान्तरेणाप्रज्ञाकृतेन वा तदनुभवासम्भवात् लिङ्गाभावाच्छब्दाभावाद्वा प्रवृत्तिप्रसङ्गाच्च भेदाग्रहवादिन स्वत्व तत्र तदनुभवाभावात् मैवं स्वविशेषणवत्ताप्रतिसन्धानजन्यं हि कार्यताज्ञानं प्रवर्त्तकं तथाहि काम्ये पुरुषविशेषणं कामना तत काम्यसाधनाज्ञानेन यागपाकादौ कार्यताज्ञानं नित्ये च कालशौचादि स्वविशेषणं तथाचैतत्सन्ध्यायामहं कृतिसाध्यसन्ध्यावन्दनः सन्ध्यासमये शौचादिमत्त्वात् पूर्वसन्ध्यायामहमिवेति, कार्यताज्ञानं शौचादिस्वविशेषणज्ञानजन्यम्। तदुक्तं "स कार्यविशेषः पुरुषविशेषमाश्रयते प्रवृत्तिहेतुरिति"। सञ्जातबाधस्य च विषभक्षणे चैत्यवन्दने च भ्रमदशायामिव नेष्टसाधनताज्ञानमस्ति येन तज्जन्यकार्यताज्ञानात् प्रवर्त्तेत। तृप्तस्य च तृप्तौ कामनाविरहेणेष्टसाधनताज्ञानाभावान्न तथा बोधः। अन्ये त्वात्मनो जीवत्वप्रतिसन्धानजन्यं श्रमे कृतिसाध्यताज्ञानं न सम्भवतीति जीवनव्यतिरिक्तत्वं स्वविशेषणे विशेषणमिति, तन्न श्रमे स्वेच्छाधीनकृतिसाध्यत्वज्ञानाभावेन साध्यत्वाभावात्। इष्टसाधनतालिङ्ग कार्यताज्ञानं प्रवर्त्तकमित्यपरे तन्न नित्ये तदभावात्। ननु विषभक्षणव्यावृत्तमिष्टसाधनत्वमेव कृतिसाध्यताज्ञाने विषयतया विशेषणमस्तु स्वविशेषणज्ञानजन्यत्वापेक्षया लघुत्वात्। किञ्च भोगार्थविषया चिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छावत इष्टेच्छावत्। भोगचिकीर्षायां तदभावादप्रयोजकमिष्टसाधनत्वमिति चेत् न तथापि स्वविशेषणधीजन्यत्वाभावेन तत्र तस्याप्रयोजकत्वात् कृतिहेतुचिकीर्षायां तत्प्रयोजकं न भोगचिकीर्षाया तथा, उपायचिकीर्षात एव कृतिसम्भवादिति चेत् तुल्यमिति मैवं साध्यत्वसाधनत्वयोर्विरोधेनैकत्र प्रागसमयकत्वात् असिद्धावस्थस्य हि साध्यत्वं, सिद्धावस्थायां तदभावात् सिद्धावस्थायाश्च साधनत्वम्

साध्यतानिश्चयस्य प्रतिबन्धकत्वेऽपि यत्र कारणान्तराभावादिष्टसाधनताज्ञाने कृतिसाध्यत्वस्य न भान तत्र केवलेष्टसाधनताज्ञानाच्चिकीर्षापत्तेर्दुर्व्वारत्वाच्च इत्यपि बोध्यम्। उक्तनियमसत्त्वेऽपि तटस्थ शङ्कते अथेतीति। अभाव - कृतिसाध्यतानिश्चयाभावः। उभयसिद्धः - चिकीर्षापूर्व्वमुभयसिद्धः, असिद्धा - चिकीर्षापूर्व्वमुभयासिद्धा। न लाघवावसर इति कृतिसाध्यताज्ञानत्वस्य यदपि लाघव न कारणतावच्छेदकताया विनिगमकम् इत्यर्थः लघु गुरुधर्म्मद्वयावच्छिन्न यदि फलपूर्व्वमुभयवादिसिद्धं तदैव लाघवस्य कारणतावच्छेदकत्व या विनिगमकत्वादिति भावः। द्वेषात्प्रतिबन्धकविरहात्। सा - चिकीर्षापूर्व्वं कृतिसाध्यताधीः। लाघवावतारादिति कृतिसाध्यताज्ञानत्वरूपलघुधर्म्मावच्छिन्नस्य चिकीर्षापूर्व्वमुभयमते सत्त्वादित्यर्थः। इच्छाया इति तत्प्रकारकसर्वादीच्छायास्तत्प्रकारकज्ञानजन्यतानियमेनेत्यर्थः। आवश्यकत्वात् - चिकीर्षाहेतुतावश्यकत्वात् अपि च कृतिसाध्यताज्ञानप्रतिबन्धकतान्यथानुपपत्त्या कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुतासिद्धिरित्याह जनकज्ञानमिति। तज्जनकीभूतज्ञानविघटकस्यैव ज्ञानस्य विधिप्रतिबन्धकत्वाच्चेत्यर्थः। अत्र व्याप्तौ दृष्टान्तमाह व्याप्तिज्ञानविघटनद्वारेति अनुमितिजनकव्याप्तिज्ञानविघटनेनेत्यर्थः। तथा च यत् यत्प्रतिबन्धक ज्ञानं भवति तत्तज्जनकज्ञानविघटक यथा व्यभिचारज्ञानमनुमितिप्रतिबन्धकं ज्ञान भवत् अनुमितिजनकव्याप्तिज्ञानविघटकमपि भवति इति सामान्यतोव्याप्त्या कृतिसाध्यतानिश्चयस्य चिकीर्षाप्रतिबन्धकज्ञानत्वेन हेतुना चिकीर्षाजनकज्ञानविघटकत्वसाधने पक्षधर्म्मतावलात्कृतिसाध्यताज्ञानस्यैव चिकीर्षाजनकत्वसिद्धिरिति भावः। न च जनकज्ञानविघटकत्वेनाऽन्यथासिद्धतया तदभावस्याहेतुत्वात् स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च इति वाच्यं प्रतिबन्धकत्वं हि न कारणीभूताभावप्रतियोगित्वम् किन्तु प्रयोजकीभूताभावप्रतियोगित्वम्। प्रयोजकत्वं च कारणकारणव्यापकत्वान्यथासिद्धिशून्यत्वाहित्ये सति नियतपूर्व्ववर्त्तित्वम् - कारणतत्कारणसाधारणम्। हेतौ ज्ञानपदोपादानादेव च विषयान्तरसञ्चारादौ न व्यभिचारः। साध्ये च ज्ञानपद स्वरूपकथनम्। विघटकत्वञ्च प्रतिबन्धकत्वनेव भत्येककालावच्छेदेन तदधिकरणावृत्तित्वरूपविरोधित्वं गुरुमयेऽधिकरणज्ञानरूपतया कृतिसाध्यताज्ञानस्यापि कृतिसाध्यताज्ञानाभावस्य ज्ञानात्मकस्य

विरोधितया सिद्धसाधनापत्तेः। यथासाधुत्वज्ञाने साधुत्वज्ञानाजन्यशाब्दधीप्रतिबन्धके व्यभिचार इति वाच्यम् निराकाङ्क्षत्वरूपासाधुत्वज्ञाने आकाङ्क्षाज्ञानमादाय साध्यस्यापि सत्त्वात् असाधुत्वज्ञानस्य च प्रतिबन्धकत्वे मानाभावात्। न च तथापि सिद्धौ व्यभिचार इति वाच्यम् गुरुमते सिद्धेरप्रतिबन्धकत्वात तद्व्यावृत्तप्रतिबन्धकताया वा हेतौ निवेशात्। अतएवासिद्धत्वज्ञानाजन्येच्छाप्रतिबन्धकसिद्धत्वज्ञानेऽपि न व्यभिचारः तद्व्यावृत्तप्रतिबन्धकताया एव हेतौ निवेशात असिद्धत्वनिश्चयस्यापि इच्छाहेतुत्वाद्वा। अथ तथापि बाधसत्प्रतिपक्षादौ व्यभिचारः। न च तद्व्यावृत्ताऽपि प्रतिबन्धकता हेतौ निवेशनीयेति वाच्यम् कृतिसाध्यताज्ञानाभावव्यभिचारज्ञानाभावयोरपि बाधाभावसत्त्वेन चिकीर्षानुमित्योः प्रयोजकतया स्वरूपासिद्धिदृष्टान्तासिद्ध्योरापत्ते। न च साक्षाद्विरोधित्वे सतीत्यनेन हेतुर्विशेषणीय इति वाच्यम्, साक्षाद्विरोधित्वं हि न पाक्षाभावतद्व्याप्याद्यनवगाहित्व, प्रकृतेऽपि तदसिद्धेः कृतिसाध्यताज्ञानस्य चिकीर्षाप्रकारीभूतकृतिसाध्यत्वाभावावगाहित्वात् अतएव न कारणीभूताभावप्रतियोगित्वमपि, प्रकृतेऽपि तदसिद्धेः पूर्वपक्षिणा कृतिसाध्यताधियः साक्षादेव प्रतिबन्धकत्वाभ्युपगमात् न च हेतौ प्रतिबन्धकज्ञानत्वपदेन ज्ञानत्वावच्छिन्नप्रतिबन्धकताशालित्वं विवक्षित बाधसत्प्रतिपक्षादेश्च निश्चयत्वेन प्रतिबन्धकत्वमिति वाच्यम् प्रकृते तदसिद्धेः उक्तयुक्त्या कृतिसाध्यतानिश्चयस्यैव पूर्वपक्षिमते प्रतिबन्धकत्वादिति चेन्न हेतौ स्वपाक्षविरोधावगाहिज्ञानभिन्नत्वेन यत्पदार्थविशेषणात्। अयदं प्रतिबन्धकज्ञानपरं चिकीर्षायाश्च ज्ञानभिन्नत्वादेव संग्रहः स्वपाक्षविरोधावगाहित्वन्तु स्वं यत्र यदभावतद्व्याप्य तदवच्छेदकाद्यन्यतमवगाहते तत्र तदवगाहित्वं, संवादित्वेनापि हेतौ यत्पदार्थो विशेषणीयः तेन इष्टभेदपक्षे प्रवृत्त्यादिप्रतिबन्धके तन्मये न व्यभिचारः। संवादिप्रवृत्तौ विशिष्टज्ञानमेव हेतुरिति साध्यसत्त्वादेव न तमादाय व्यभिचार। न च तथापि कूटभ्रमपराभर्शस्थले लिङ्गासंसर्गापहेषु लिङ्गिकासंसर्गापग्राधीनसंवादीच्छाप्रवृत्तिप्रतिबन्धकेष्टभेदपक्षे जनकीभूतविशिष्टज्ञानविघटकत्वाभावाद्व्यभिचार इति वाच्यम् विशिष्टज्ञानस्य संवादीच्छाप्रवृत्तिहेतुत्वेनानायत्या तत्रापीच्छाप्रवृत्त्योर्विषयान्तरविषयकत्वकल्पनेन विसंवादित्वस्य तैः स्वीकारादिति दिक्। अन्यथा - एतादृशव्याप्त्यनङ्गीकारे। इष्टेऽपणीयत्वम्

इष्टसाधनतावच्छेदकरूपशून्यत्वम्। निष्फलत्वम् इष्टफलोपधानशून्यत्वम्, प्रतिबन्धकं—चिकीर्षाप्रतिबन्धकम्। क्रियाज्ञानमेवेत्येवकारेण इष्टसाधनत्वादिज्ञानव्यवच्छेदः। सोऽस्तु यद्भवेत् नन्विति। सन इति। धर्मित्वात् बोधकत्वात् एतच्च चिकीर्षापदस्य यौगिकत्वपक्षे चिकीर्षापदस्याखण्डरूढत्वपक्षे त्वाह लाघवादिति। कृतिसाध्यत्वप्रकारकेच्छात्वापेक्षया कृतीच्छात्वस्य प्रवृत्तिनिमित्तस्य लघुत्वादित्यर्थः। चिकीर्षा-चिकीर्षापदप्रतिपाद्या। वृष्टिर्भवत्विति वृष्टिर्भवत्वितीच्छैवेत्यर्थः। इष्टसाधनताज्ञानात्—इष्टसाधनताज्ञानमात्रात् कृतिसाध्यताज्ञानं विनापीष्टसाधनताज्ञानादिति यावत्। तत्र कृतिसाध्यत्वस्याप्रकारतया कृतिसाध्यतानिश्चयस्याप्रतिबन्धकतया च कृतिसाध्यताज्ञानस्य हेतुत्वे मानाभावादिति भावः। अत्र वृष्टिर्भवत्वितीच्छेवेति पूरणसाध्याङ्गको दृष्टान्तः गुरुनये दृष्टिसाध्यं सुखं भवत्वितीच्छैव विशेषणतया सुखत्वमिव दृष्टिमपि विषयीकरोति न तु दृष्टिर्भवत्विति स्वातन्त्र्येणेच्छा कृतिसाध्यत्वप्रकारकेच्छां प्रति सुखत्वदुःखाभावत्वप्रकारकज्ञानयोर्हेतुत्वेन कृतिसाध्यत्वाप्रकारकोपायेच्छाया अलीकत्वात् वृष्टिसाध्यं सुखं भवत्वितीच्छायान्तु सुखे वृष्टिसाध्यत्वज्ञानमेव हेतुरिति मन्तव्यम्। वह्निना साधयामीतिवदिति साध्यत्वप्रकारिकाया इति शेषः। अनुभूयमानाया—नियमतोऽनुभूयमानायाः। सम्ताबाध्यर्थेन-सनन्ताप्रतिपाद्यत्वेन। गौरवेण-प्रवृत्तिनिमित्तगौरवेण। प्रत्याख्यातुमशक्यत्वात् इति कारणताया प्रत्याख्यातुमशक्यत्वादित्यर्थः तथाच चिकीर्षापदाप्रतिपाद्यापि सा प्रवृत्तिहेतुरिति भावः। प्राधान्येनेति विशेष्यतयेत्यर्थः। अप्राधान्येन विषयत्वस्य तत्र द्वितीयार्थत्वे पाकत्वं चिकीर्षति इत्यपि प्रयोगापत्तेरिति भावः। न तु कृतेरिति अतो न कृतीच्छा चिकीर्षाप्रतिपाद्येति भावः। ननु चिकीर्षतीत्यत्र पाकस्य विशेष्यतया इच्छाविषयत्वमनुभूयते इत्युक्तं सनुप्रत्ययसमभिव्याहृतधातोरिच्छाविशेषणविषयतया धात्वर्थस्यैव विशेष्यत्वात् इत्यत आह धातोरिति। इच्छाप्रकारत्वमित्यर्थ न तु विशेष्यत्वमिति शेषः। प्रकारश्च कृतिसाध्यत्वं साध्यतासम्बन्धेन कृतिर्वा। आद्ये तु लक्षणादिकं शरणमित्यन्यदेतत्। भोजनविशेष्यत्वे तु भोजनप्रकारकेच्छाविशेष्यत्वेत्यर्थः। ओदनविशेष्यकभोजनप्रकारकेच्छाश्रय इत्यन्वयबोधादिति भावः। ननु कृतिसाध्यत्वप्रकारकेच्छाया नियमतः कृतिपूर्व्वमनुभवसिद्धत्वेऽपि न सा प्रवृत्तेर्हेतुरवच्छेदकगौरवात्, किन्तु कृतीच्छैव इष्टसाधनताज्ञानेन, तस्या अपि पूर्व्वं सम्भवात्। मन्वेव क्रियाया इष्टसाधनतादिज्ञानेऽपि कृतेरिष्टोपायत्वादिज्ञानात् प्रवृत्त्यापत्तिरिति वाच्यम् इष्टत्वात्। अन्यथा तथापि कृतेरिष्टाजनकत्वादिज्ञानदशायामपि क्रियाया इष्टजनकत्वादिज्ञानात्प्रवृत्त्यापत्तेस्तुल्यत्वादत आह इष्टसाधनत्वेनेति इष्टसाधनत्वज्ञानेनेत्यर्थः। वृष्टाविवेति प्रवृत्तिपूर्व्वमिति शेषः। करोमीति ताद्दशानुव्यवसायेनेत्यर्थः। ज्ञानचिकीर्षाप्रवृत्तीनामिति प्रवृत्त्या सह प्रवृत्तिकारणज्ञानचिकीर्षयोः समानविशेष्यकत्वस्य विषयीकरणात् इत्यर्थः। इष्टसाधनत्वम् अतिप्रसङ्गभङ्गाय तद्विशेष्यककृतौ तदनुकूलकृतीच्छाया एव हेतुताया वक्तव्यत्वात् पाकानुकूलकृतीच्छात्वस्य कृतिसाध्यत्वप्रकारकेच्छात्वयोः समशरीरत्वेन लाघवगौरवमपि नास्तीत्यवधेयम्। कृत्वा साधयितुमिति कृतिसाध्यत्वप्रकारिकेत्यर्थः। सा—चिकीर्षा, चिकीर्षितस्य पाकस्येति चिकीर्षाविषयतावच्छेदकपाकत्वावच्छिन्नस्येत्यर्थः। अन्यत सिद्धौ अन्यतः सिद्धत्वपक्षे, सा-पाकत्वप्रकारिका नाप्यन्तरेत् न न जायेत जायेतेति यावत्। उपायविशेषसाध्यत्वेनेति एकोपायसाध्यत्वप्रकारिकेत्यर्थः। उपायान्तराधीनेति उपायान्तराधीनसिद्धत्वज्ञानेनेत्यर्थः। प्रीत्येति प्रीत्या धनलाभस्य प्रीत्या सिद्धत्वज्ञानेऽपीत्यर्थः। प्रतिपक्षेणेति प्रतिपक्षसाध्यत्वप्रकारकधनलाभेच्छाया इत्यर्थः। अनिष्टत्वेनतूपपत्त्यनिष्टत्वे-नतूपपत्तेरिति यावत्। तथा च तदुपायसाध्यत्वप्रकारकेच्छां प्रति तदुपायतः सिद्धत्वज्ञानस्यैव प्रतिबन्धकतया उपायान्तराधीनसिद्धत्वज्ञानेऽपि न तत्साध्यत्वप्रकारकेच्छोत्पत्तौ न बाधकमिति भावः। स्वविषयसिद्धत्वस्येति स्वविषयतावच्छेदकावच्छिन्नविशेष्यताकसिद्धत्वज्ञानस्येत्यर्थः यथा स्तुते पाके कृत्वा साधयामीतीच्छाया अन्यत सिद्धपाकाविषयतया तत्सिद्धौ तन्निवृत्तेरनुपपादनात्। न च तथा अन्यत सिद्धपाकोऽपि विषयः व्यधिकरणप्रकारकेच्छाया अभ्युपगमात् इति वाच्यं तथापि पाकत्वरूपेणान्यतः सिद्धपाके सिद्धत्वज्ञाने तेन रूपेण सिद्धपाकमात्रे तदापत्तेस्तादवस्थ्यात् भिन्नप्रकारकस्यापि सिद्धत्वज्ञानस्य प्रतिबन्धकत्वापाताच्च। सिद्धत्वञ्च कस्यचिदुत्पन्नत्व, कस्यचिद्विद्यमानत्वं, कस्यचिच्च असाध्यताविरोधित्वरूप, यथा तु च प्रागभावादौ प्रतिबन्धकाभावकूटस्य हेतुत्वाच्च नानुगमोदोषाय। मन्वेव सिद्धे ग्रामादौ कथमिच्छेति वाच्य तत्र ग्रामादिलाभस्यासिद्धस्यैव इच्छाविषयत्वात् न तु ग्रामादेरिति भावः। उपायेच्छाविरोधित्वाद् उपायेच्छा इदृश

प्रयोजकत्वात्, फलेच्छाविच्छेदस्य प्रतिबन्धकत्वाभावेन यथा श्रुतासङ्गतेः। तत्र-चिकीर्षितस्य पाकस्यान्यतः सिद्धत्वज्ञान स्थले। सिद्धत्वम्-भिन्नत्वपक्षः पाकस्य सिद्धत्वज्ञानात् स्वविषय सिद्धत्वज्ञानम् ओदनस्य सिद्धत्वज्ञानात् फलेच्छाविच्छेद इति भाव। ननु स्वविषयतावच्छेदकावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन प्रतिबन्धकत्वे स्वत्वानन्तर्भावात् अननुगमः, न च तद्धर्म्मान्वयविशेष्यकेच्छां प्रति तादृशसिद्धत्वज्ञानं विरोधीति वाच्य विषयादीच्छाया असंग्रहात्। अथ तद्धर्म्माव च्छिन्नविशेष्यताकसिद्धत्वज्ञानं विरोधि नचैवं शूद्रादिपाके सिद्धत्वज्ञानेऽपि ब्राह्मणस्य पाके चिकीर्षा न स्यादिति वाच्यं तदानीं स्वीयपाकत्वादिरूपेणैव" ब्राह्मणस्य चिकीर्षोत्पादात् पाकत्वरूपेण तदनुत्पादात् इति चेन्न ग्रामे स्वत्वं मे भवत्वित्यादिसिद्धग्रामादिगोचरेच्छाया ग्रामत्वादि रूपेण सिद्धत्वज्ञानेऽपि जायमानाया व्यभिचारात् कपालकृविरादिरूपेण सिद्धत्वज्ञानेऽपि कपालकृविराद्युपादानेच्छायां व्यभिचारात् सिद्धत्वज्ञानदशायां तदनभ्युपगमे तदानीं प्रवृत्तेरप्यपलापप्रसङ्गात् उपादानेच्छायाः प्रवृत्तौ हेतुत्वादतएव तद्धर्म्मप्रकारकत्वावच्छिन्नमुख्यविशेष्यताकेच्छां प्रति तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञान विरोधि मातो ग्रामे स्वत्वं मे भवत्विति सिद्धग्रामादिगोचरेच्छाया व्यभिचार इति कस्यचित् प्रलपितमपास्तं, कपालकृविराद्युपादानेच्छायां व्यभिचारात् पाकत्वादिरूपेण सिद्धत्व ज्ञानदशायां मम कृतिसाध्यपाको भवत्विति चिकीर्षाया अनुत्पादवत् घटत्वादिरूपेण सिद्धत्वज्ञानदशायामपि मौक्षोपटोभवत्वितीच्छाया अनुत्पत्तिप्रसङ्गाश्च इति चेत्? नैवं तद्धर्म्मोद्देश्यतावच्छेदकेच्छां प्रति तद्धर्म्मप्रकारकसिद्धत्वज्ञानस्य प्रतिबन्धकत्वात्। उद्देश्यत्वञ्च भवत्वित्यादिपदाभिलप्यमानो विषयताविशेषः ग्रामे स्वत्वं मे भवत्वित्यादौ ग्रामादिर्नोद्देश्य किन्तु स्वत्वमेव एवं कपालाद्युपादानगोचरेच्छायामपि कपालादिर्नोद्देश्य। उद्देश्यतावच्छेदकत्वञ्च तत्पर्य्याप्त्यधिकरणत्वं तेन घटत्वादिरूपेण सिद्धत्वज्ञान दशायां मौक्षोपटोभवत्वितीच्छोत्पत्तिः। अतएव यस्य पाकादिविशेष्यकचिकीर्षायां, पाकत्वादिमात्रमुद्देश्यता पाकत्वादिरूपेण सिद्धत्वज्ञानादेव सापैति, यस्यान्तु स्वकृतिसाध्यपाकत्वादिरूपेण, सा तु स्वकृतिसाध्यपाकत्वादिरूपेण सिद्धत्वज्ञानादेवापैति इति विभागः। तादृशविलक्षणविषयतानङ्गीकारे तु तत्तद्व्यक्तित्वेनैव प्रतिबध्यता, प्रतिबन्धकता तु सामान्यतस्तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन तत्तद्व्यक्तित्वेन वेत्यन्यदेतत्। केचित्तु यद्धर्म्मावच्छेदेनेष्टसाधनताज्ञानाधीना इच्छा तद्धर्म्मप्रकारकसिद्धत्वनिश्चयो विरोधी। इष्टसाधनविषयत्वञ्च यत्र पाकत्वरूपेण गृहीतं, तत्र पाकत्वप्रकारकसिद्धत्वधियैव सापगच्छति यत्र मत्कृतिसाध्यपाकत्वादिना तदवगतं, तत्र तदवच्छिन्नसिद्धत्वधियैवेति विभागः। तेन प्रतिपक्षसाध्यधनलाभस्येष्टसाधनत्वावच्छेदकत्वात् प्रकारान्तरेण तल्लाभेऽपि न तदपगमः। न च सिद्धत्वज्ञानदशाया घटयागादिसाध्यकप्रवृत्तिजनककपालकृविराद्युपादानेच्छायां व्यभिचार इति वाच्यम् गुरुमते उपादाननिष्ठचिकीर्षाविषयसाधनताज्ञानस्य साक्षादेव प्रवृत्तिहेतुत्वेन तादृशेच्छाया मानाभावात्। तच्चाग्रे स्फुटोभविष्यति एवं न्यायनयेऽपि। न च तथापि यथा पाकत्वरूपेण इष्टसाधनताज्ञानात् कृतिसाध्यत्वप्रकारकज्ञानसहकृतात् पाकः कृतिसाध्यो भवतु इतीच्छाया ग्रामत्वादिरूपेण सिद्धग्रामादाविष्टसाधनताज्ञानात् स्वीयत्वप्रकारकज्ञानसहकृतात् ग्रामो मे स्वत्ववान् भवतु इति सिद्धग्रामविशेष्यकेच्छायाश्चोत्पत्तौ बाधकाभावात् तत्र व्यभिचारः ग्रामत्वादिरूपेण सिद्धत्वज्ञानेऽपि तदुत्पत्तेरिति वाच्यम् स्वकृतिसाध्यतातिरिक्तस्थले तत्प्रकारकफलार्थीच्छायां तत्प्रकारकफलसाधनताज्ञानस्य फलबलेन हेतुतया ग्रामत्वरूपेणेष्टसाधनताज्ञाने तादृशेच्छाया एवासिद्धेरित्याहुः, तदसत् गुरुनये नित्यविषयकेच्छाया असंग्रहात्। घटादिसाध्यकप्रवृत्तौ घटादिचिकीर्षावत् कपालाद्युपादानकप्रवृत्तौ घटादिचिकीर्षावत्कपालाद्युपादानकप्रवृत्तौ कपालादीच्छाया अपि हेतुत्वेन कपालाद्युपादानेच्छाया व्यभिचारस्य दुर्वारत्वाच्च, अन्यथा चिकीर्षाविषयसाधनताज्ञानस्य लौकिकप्रत्यक्षस्य चाविशिष्टत्वेऽपि यत्रेच्छा तत्रैवोपादानतया प्रवृत्तिर्यत्र नेच्छा तत्र नेति नियमानुपपत्ते। न्यायमीमांसासिद्धान्तस्य च युक्तिविरुद्धत्वेनानुपादेयत्वादिति संक्षेपः"। अधिकं तद्ग्रन्थे द्रष्टव्यम्। न्यायमते तु कार्य्यत्वज्ञानमिष्टसाधनत्वज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं चेति यथायथम् प्रवर्त्तकमिति भेदः विस्तरस्तु आकरे द्रष्टव्यः।

कार्य्यपुट पु० कार्य्यां कर्त्तव्ये कर्म्मणि म् पुटति पुट-संश्लेषे क वत०। १चपणके २उन्मत्ते ३अनर्थकरे त्रि० मेदि०।

कार्य्यप्रद्वेष पु० कार्य्यं प्रद्विषत्यनेन प्र+द्विष-करणे घञ् ६त०। आलस्ये राजनि० आलस्येन हि कार्य्यद्वेषापत्तस्य तथात्वम्।

**कार्य्यशब्दिक** त्रि० कार्य्यः शब्दः इत्याह ठक्। कार्य्यः शब्दः इति कथके नैयायिके तेन शब्दस्यानित्यत्वस्य स्वीकारात्तस्य तथात्वम्।

**कार्य्यसिद्धि** स्त्री कार्य्यस्याभीष्टस्य सिद्धिः। १अभीष्टसिद्धौ "यत्र प्रस्थाने कार्य्यसिद्धिरतुला शङ्के कृतान्ते भयम्" इति० त० खञ्जनशकुने। २कर्त्तव्यकर्म्मनिष्पत्तौ नील० ताजकोक्ते ३सहमभेदे च तत्र हि "पुण्य गुरुज्ञानयशोऽथ मित्रम्" इत्युपक्रमे "स्यादन्यकर्म्म बणिक् स्वकार्य्यसिद्धि" इत्यादिना पञ्चाशत् सहमानि विभज्य "स्यात् कर्म्मसिद्धिः सतत (दिवनिशो) विशोध्य मन्दं सितात् स्यात्, पिशाङ्कसश्च' इत्यनेन तदानयनप्रकारोदर्शित तथा च सर्पलग्नकालिकस्फुट शनि शुक्रस्फुटात् त्यक्त्वा लग्नयोगे तत्सहमस्फुट भवति इयांस्तु भेदः शोध्यमन्दशुक्रयोर्मध्ये यदि लग्नस्फुट न भवेत्तदा राशौ एकाङ्कयोगः कार्य्य इति। तत्फलञ्च तत्रैवोक्तं यथा "कार्य्यसिद्धिसहमं युतं शुभैर्दृष्टमूर्थशिलगम् जयप्रदम्। सङ्करेऽथ शुभपापदृष्टियुक् क्लेशतोऽजय उदीरितो बुधैः"

**कार्य्या** स्त्री कृ-ण्यत्। कारोहसे राजनि०।

**कार्य्याधिप** पु० ६त०। ज्योतिषोक्ते १व्यापाररूपकार्य्यस्याधिपे लग्नावधिकदशमस्थानाधीश्वरे। २कार्य्याध्यक्षे च। कार्य्याधीशादयोऽप्यत्र।

**कार्य्यान्वित** त्रि० कार्य्येण कर्त्तव्येनान्वितः। १कार्य्ययुक्ते २कार्य्यताबोधकपदप्रतिपाद्यार्थान्विते च। मीमांसकनये कार्य्यान्विते एव शब्दस्य यथा शक्तिस्तथा पूर्व्वपक्षविधया शब्दचि० निर्णीतं यथा

"नन्वर्थवादानां सिद्धार्थतया न प्रामाण्यं कार्य्यान्वित एव पदानां शक्त्यवधारणात् वृद्धव्यवहारादेव हि सर्वेषामाद्या व्युत्पत्तिः उपायान्तरस्य शब्दव्युत्पत्त्यधीनत्वात्। तथाहि प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यस्य वृद्धस्य प्रवृत्तिमुपलभमानो बालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयव्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यवृद्धप्रवृत्तिमेव प्रयोजनमवधारयति न च किञ्चित् कुर्वतस्तादृश्ये सम्भवतीति च तज्जन्यप्रवृत्त्यनुकूलं कार्य्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ तेन कार्य्यताज्ञानस्य हेतुत्वावधारणात् नान्यत प्रवृत्ते कार्य्यताज्ञानावरुद्धत्वात्, नचैव शब्दस्य स्वार्थज्ञानद्वारा प्रवृत्तिहेतुत्वम्। स्वप्रवृत्तौ चान्येन शब्दाहितविशेषस्य कार्य्यताज्ञानस्य हेतुत्वेनानवधारणात्। ज्ञाने च प्रत्यक्षादिनामोपायकत्वदर्शनात् शब्दोऽपि कार्य्यताज्ञानहेतुरित्यवधार्य्य तत्रैव शक्तिं कल्पयति उपस्थितत्वात्। पश्चादावापोद्वापेन क्रियाकारकपदानां कार्य्यान्वितस्वार्थेषु शक्तिं गृह्णाति प्रथमगृहीतसामान्यशक्त्यनुरोधात्। अथ यद्यपि वृद्धव्यवहारादौ कार्य्यान्वितार्थेऽनुमिता तथाप्यन्वितमात्रशक्त्यैव कार्य्यवाचकपदसमभिव्याहारादाकाङ्क्षादिमहिम्ना कार्य्यत्वधीसम्भवात् कार्य्यांशेऽपि शक्तिः परम्परयापि शब्दस्य कार्य्यान्वितज्ञानानुकूलत्वादर्थापत्त्यन्यथोपपत्तिरपि। अथाह्वाकाङ्क्षादेः कारणत्वं कार्य्यांशशक्तावपि। तद्व्यतिरेकादन्विताभिधानव्यतिरेकनियमात् सति चाकाङ्क्षादौ कार्य्यत्वव्यतिरेकदर्शनादन्विताभिधानव्यतिरेको न क्वाप्यस्ति। अन्यथा गवादिपदानां व्यक्तावपि शक्तिः स्यात्। उच्चारादेव व्यक्तिलाभदर्शनाच्च तथेति यदि, तदा कार्य्यवाचकपदादेव कार्य्यान्वितलाभ इति किं शक्त्या वृद्धव्यवहारे नियमतः कार्य्यान्वितज्ञानं दृष्टमिति तत्र शक्तिकल्पने, वृद्धव्यवहारे शब्दोपस्थापितैर्नैयायिकबोधदर्शनात्कार्य्यसन्निधेरन्वयहेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याह्रियेत। क्वचिदपूर्व्ववाक्ये वृद्धव्यवहाराद्युत्पन्ने शब्दसन्निधिं व्यभिचरतीति चेत् तर्हि सिद्धार्थेऽप्यन्वयप्रतीतिदर्शनात् कार्य्यत्वमपि व्यभिचारि। न च तत्र लक्षणा, बाधकाभावात्। शक्तिकल्पनभियाह्यन्यत्र लक्षणा मता। इह तु लघीयसी उभयसाधारणपदार्थमात्रशक्तिः इत्यस्यैवोचितत्वात्। किञ्च कार्य्यवाचिलिङादीनामाकाङ्क्षाद्युपेतपदार्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यम् अतोऽविशेषात् पदान्तराणामपि तथात्वमस्तु लाघवादिति चेन्नैवं, व्यवहारहेतुतयानुमिते हि कार्य्यान्वितज्ञानेऽन्वयव्यतिरेकाभ्यां शब्दस्य साक्षात्कारणत्वमवधारयति न परम्परया, साक्षात्कारणत्वौत्सर्गिकत्वेन तत्सम्भवे परम्पराया अन्याय्यत्वादिति तत्रैव शक्तिं कल्पयति नान्वितज्ञाने, पदार्थज्ञाने वाऽप्रवर्त्तकतया प्रवृत्त्या अकारणत्वेन तयोरनुपस्थापनात्। न चान्वितज्ञानशक्तावपि परम्परया कार्य्यत्वधीसम्भवतीत्यर्थापत्त्या सैव कल्प्यतां, लाघवात्, न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वादिति वाच्यम् अर्थापत्तेः साक्षादुपपादकमात्रविषयकत्वेन न्यूनाधिकापादकत्वात्। साक्षादुपपादककार्य्यान्वितज्ञाने शक्तिं कल्पते लिङादीनां शक्तेरकल्पनादन्यलभ्यत्वस्याभावात्। आद्यव्युत्पत्तेर्विचार्य्यत्वात्। किञ्च प्रवृत्तिकारणतयोपस्थितं कार्य्यान्वितज्ञानमपहायानुपस्थितान्वितज्ञानमात्र

शक्तिकल्पनमयुक्तं हेत्वभावात् उपस्थितान्तरे गौरवात्। अथ कार्य्यान्वितज्ञानोपस्थितावाप्यन्वितज्ञानमप्युपस्थित-मिति लाघवात् कार्य्याशमपहायान्विते शक्तिर्गृह्यतामिति चेत् न ज्ञाने हि पदानां शक्तिः शक्यत्वात्, नार्थे। अन्यच्च कार्य्यान्विते ज्ञानमन्यदन्वितज्ञानं विषयभेदेन ज्ञान-भेदात्। तदुक्तमभाषवादे, "अन्यद्भूतज्ञानं अन्यच्च घटवद्भूतलज्ञानमिति" अन्वितज्ञानमुपस्थाप्य तत्र शक्ति-रह इति गौरवमेव लघुनि शक्ये सम्भवत्यन्यलभ्य गुरु-ण, युगपदुपस्थितौ तथात्वात्। न च तस्याप्यनुपस्थिति. पुरुषविशेषदोषात् सर्व्वैरेवाद्यप्रवृत्तौ तथानवगमात्। तथापि न कार्य्यान्विते शक्तिः कार्य्यवाचिलिङादीनां व्यभिचारादिति चेत् न सर्व्वपदानां कार्य्यत्वविशिष्टधी-जनकत्वात् तच्च कार्य्यान्वितस्वार्थप्रतिपादकतयेतरान्वित स्वार्थकार्य्यप्रतिपादकतया वेति। एवं कार्य्यान्वितव्युत्पत्तौ सत्यामनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादेरुपाधित्वम्। तयोश्चोपजीव्यप्रथमभाविकार्य्यान्वितव्युत्पत्त्यनुरोधेन सिद्ध-श्रुतावपि कार्य्याध्याहारः। क्वचिल्लक्षणा क्वचिदसंसर्गाग्रह इति सिद्धार्थेऽन्वयप्रतीतिदर्शनादुत्तरकालमन्वितमात्रे शक्तिरेव कल्प्यतां प्राचीनकार्य्यान्वितज्ञानं बाध्यतामि-त्यप्यतएव निरस्तं पूर्व्वकल्पनातः कल्पनान्तरप्रसङ्गाच्च। उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेरन-न्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् उपजी-व्यव्याघाताच्च। अथ सिद्धार्थेऽपि व्युत्पत्तिः सम्भवति तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्वाहशेनैव वार्त्ता-हारेण चैत्रसमीपं गत -चैत्र। पुत्रस्ते जात, इति वार्त्ता-हारवाक्यं स्मरन् चैत्रस्य मुखप्रसादं पश्यन् श्रोतुर्हर्ष-मनुमिमीते। हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति उपस्थितत्वात् उपपादकत्वात् अन्योपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवादिति चेत् न हर्षहेतूनां बहूनां सम्भवात् हर्षेण लिङ्गेन पुत्रजन्म-ज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परि-शेषयितुमशक्यत्वात्। अथ पुत्रजन्मज्ञानाव्यभिचारि वृद्धि-श्राद्धादिक्रियाविशेषदर्शनात् पुत्रजन्मज्ञानानुमानमिति चेत् तर्हि पुत्रस्ते जात इति वाक्यं तत्तत्क्रियाकर्त्तव्यता परमेवेति कार्य्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो ज्ञायते तदुत्तरकालं पुत्रजन्मज्ञानानुमानमिति न व्युत्पत्ति कार्य्यं जहाति। यत्रापीह सहकारतरौ पिकोरौ-तीति प्रसिद्धार्थकपदसामानाधिकरण्यादिभिर्व्युत्पत्ति-

स्तत्रापि व्यवहाराधीनव्युत्पत्तिपूर्व्विका कार्य्यान्वित एव युक्ता पिकपदशक्तिः। पूर्व्वं नावष्टेति चेत् तत्रापि पिकमानयेत्यादौ कस्यचित् कार्य्यान्वित एव व्युत्पत्ते उपजीव्यजातीयतया च तस्याबलवत्त्वम्। किञ्चेदमपि पद कार्य्यान्वितज्ञानशक्तम् पदत्वादिति सामान्यतोऽवगत विशेष स्वार्थः पर नाधिगत. स इदानीं हृष्टदुपदेशादिभिरव-गम्यते। अत· सिद्धप्रवृत्तिपराणां शब्दानां प्रवर्त्तकज्ञान-जनकता तच्च क्वचित् साक्षात् क्वचित् परम्परया, कार्य्या-न्वयात् कार्य्यान्वितस्वार्थबोधकमिति। यत्र पुराण-भारतादिपाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधि-शेषीभूतत्वेन प्रवृत्तिपरत्वेन तेषामिति परम्परया कार्य्या-न्वयात् कार्य्यान्वितस्वार्थबोधकत्वं स्वरूपाख्यानपराणान्तु काव्यनाटकादीनां पदार्थासंसर्गाग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति'।

तदेतन्मतं पूर्व्वपक्षत्वेनोक्त्वा मणिकृता निराकृतं यथा- "अत्रोच्यते घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य घटा-नयनगोचरप्रवृत्त्या घटानयनकार्य्यताज्ञानमनुमितं बालेन न तु कार्य्यान्वितज्ञानं प्रवृत्तिविशेषं तस्याऽहेतुत्वात् विषया-दिपदशक्तिग्रहे तस्यानुपयोगाच्च तत्र च ज्ञानविशेषे घट-मानयेति वाक्यविशेषज्ञानाकलितपदविभागस्य हेतुत्वमव-धार्य घटपदद्वितीयाधातुविधिप्रत्ययानां प्रत्येकावापोद्वा-रेण घटकर्मत्वानयनकार्य्यत्वज्ञानेषु प्रत्येकं कारणत्वमव-गम्य शक्तिं कल्पयति। पश्चात्प्रवृत्तिसामान्येनानुमित कार्य्यतान्वितज्ञाने वाक्यमात्रस्यानन्यलभ्यत्वेन कार्य्याशनप-हायान्वितज्ञानमात्रे शक्तिं कल्पयति न तु प्रथमं वाक्य-मात्रस्य कार्य्यान्वितज्ञानमात्रहेतुत्वकल्पनम्।

अथ घटानयनक्रियायाः प्रथमं क्रियात्वज्ञानात्प्रवृत्ति-मात्रानुमानं न तु कार्य्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शक्तिं कल्पयति तदु-त्तर विशेषयोः कार्य्यकारणभाव इति चेत् न प्रथमं प्रवृत्तिमात्रकार्य्यान्वितज्ञानमात्रयोरनुमानं प्रागस्य क्रमशो भवतीत्यत्र मानाभावात् घटादिपदशक्तिग्रहस्य तेन विनापि सम्भवात्, न च तदनुमानसामग्री तदा वृत्तेति वाच्यम् तदा व्याप्त्यादिस्मृतौ मानाभावात्, सामान्ययो कार्य्यकारणभावग्रहो विशेषयोस्तथात्वग्रहे हेतुरिति चेत् न विशेषयोरन्वयव्यतिरेकाभ्यामेव तद्ग्रहात् यथा धूमवह्निविशेषयो कार्य्यकारणभावग्रहे तत्सामान्ययोरपि हेतुहेतुमद्भावो भासते अन्यथा न सहदर्शनगम्या व्याप्ति

स्यात् तथात्वापि । विशेषयोः कार्य्यकारणभावग्रहस्य पक्ष-वेद्य एव सामान्ययोस्तथाभाव इति चेत् न प्रत्यक्षेण विशेषपक्षे योग्यत्वात् सामान्यमपि भासते । प्रकृते च कार्य्यविशेषेण कारणविशेषोऽनुमितो न सामान्यमिति न युगपदुपस्थितिः । अत्र विशेषयोः कार्य्यकारणभावात् सामान्ययोरपि तथात्वमवधारयतीति चेत् तर्हि विशेषयोः कार्य्यकारणभावावगमः प्राथमिक इति तन्मूलकः प्रथम कार्य्यान्वितपदविशेषशक्तिपक्ष एव स्यात् निष्प्रयोजन-कत्वेनानन्तरानुमितौ मानाभावात् । यच्चोक्तं प्रवृत्तिकारण-तयोपस्थित कार्य्यान्वितज्ञानमपहायान्वितज्ञानं कल्पयित्वा तत्र शक्तिकल्पनमयुक्तम् उभयथा गौरवादिति तन्न कार्य्यान्वितज्ञानेऽन्वितज्ञानत्वस्य सत्त्वात् तद्बाधकत्वाच्च तस्य । अतस्तत्रैव शक्तिपक्षो न कार्य्यत्वांशेऽपि । अतएव घटवद्-भूतलज्ञाने भूतलज्ञानत्वमपीति तद्भिन्नं तज्ज्ञानमभाव व्यवहारकारणं त्वया स्वीकृतम् । अस्त्वेवं किन्तु तदुपस्थिता-वप्यन्विताज्ञानत्वं न विषय इति तस्योपस्थित्यन्तरं कल्प्य-मिति चेत् न कार्य्यान्वितज्ञानेऽन्वितज्ञानत्व विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् विशिष्टज्ञानसामग्रीतो विशेष्यभानावश्यम्भावात् । अन्यथान्यज्जातिज्ञानमन्यच्च जातिविशिष्टज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तत्र जातिरेव पदार्थः स्यात् । जाते केवलोपस्थितौ च न व्यक्तिप्रमाणसंवित्वेद्यत्वम् । अथ जातिविशिष्टज्ञानोपस्थितेर्व्यक्तिज्ञानविषयत्वेऽपि गौर-वात्, व्यक्तेरनन्यलभ्यत्वाच्च जातिविशिष्टज्ञानत्वं न शक्य-तावच्छेदकं किन्तु जातिज्ञानत्व लाघवादिति चेत् तर्हि तुल्यम् । न च युगपदुपस्थितौ लाघवावतारः । नचात्र युग-पदुपस्थितिरिति वाच्यम् विशिष्टज्ञानस्य विशेष्यविषयकत्व-नियमात् । किञ्च ममेदं कार्य्यमिति ज्ञानं साक्षादुपपादक प्रवृत्त्या स्वकारणत्वं नानुमितमतस्तत्र शक्तिं गृह्णीयात् । साक्षादुपपादकविषयत्वात् कल्पनाया, ममेदं कार्य्यमिति ज्ञाने तस्य साक्षादुपपादकत्वात् । अथेदं कार्य्यमिति ज्ञानशब्देन परम्परयानुमानद्वारा ममेदं कार्य्यमिति ज्ञानलाभादन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तर्हीत-रान्वितज्ञानशब्देन कार्य्यवाचकपदसमभिव्याहारेण कार्य्या-न्वितज्ञानलाभादन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तुल्यम् । नन्विदं कार्य्यमिति ज्ञानं साक्षादेव प्रवर्त्तक कर्त्तव्यताप्रयोजकतावच्छेदकविशेषणस्य स्वगतत्वप्रतिसन्धानसहकारि तेन नातिप्रसङ्गः न च सहकारित्वेन

कार्य्योत्पादे साक्षात्साधनत्वं निवर्त्तत इति चेत् न लाघवेन ममेदं कार्य्यमिति ज्ञानादेव प्रवृत्तेः । तथा च भविष्यद्विषयाकर्त्तव्यतानुमितिस्तयोक्तमयुक्तात् । अपि च याहवस्य पुरुषस्याविगीतकृतिसाध्यमिदं तादृशोऽहमिति धीर्न प्रवृत्तिहेतुः अनक्रियमाणविषयकृतिसाध्यताज्ञानस्य सिद्धविषयस्यासिद्धविषयेच्छानुत्पादकत्वात् इच्छाया स्वप्रकारकधीसाध्यत्वेन कृत्या साधयामीतीच्छया स्व कृत्यनन्तरभविष्यत्ताद्रूपकृतिसाध्यताधीजन्यत्वाच्च । अपि चास्तु प्रथमं कार्य्यान्वितज्ञाने वाक्यस्य साक्षात्कारण-ताबोधात् तत्र शक्तिपक्षः तथापि पश्चादावापोद्वापेन पदविशेषस्येतरान्वितस्वार्थज्ञाने शक्तिं कल्पयति लाघवात् न तु कार्य्यत्वांशेऽपि गौरवात् अन्यलभ्यत्वाच्च । नचैवं प्रथमं प्रवृत्तस्य साक्षात्कारणताबोधकस्य तन्मूलककार्य्यान्वि-तशक्तिपक्षस्य च बाधः स्यादिति वाच्यम् इष्टत्वात् अन्यथा सिद्धिमपहरतो हि बाधस्य स (बाध) भूत इति तस्याव-श्यत्वात् गौरवान्यलभ्यत्वतर्कसहकृतप्रमाणजन्यत्वेनोत्तरस्य बल-वत्त्वात् नचोपजीव्यबाधाच्च तथा प्रवृत्तेतीति वाच्यम् उप-जीव्यत्वे मानाभावात् देशादि प्रथमं तद्वृत्तं न तु पद-विशेषशक्तिपक्षे तस्य हेतुत्वम् तेन विनापि तत्सम्भवात् । न च प्राथमिकत्वेन बलवत्त्वं, व्यभिचारात् । नापि सर्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वम् । सर्व्वेषां शरीरात्म-प्रत्यये, चन्द्रतारकादिपरिमाणस्य सर्षपत्वपक्षे च व्यभि-चारात् । अतएव पूर्वकल्पनातः कल्पनान्तरमयुक्त-स्यादिति निरस्तम् । यत्रानन्यथासिद्धतयोपजीव्यतया बलवत्त्व पूर्व्वकल्पनायास्तत्र तथात्वात् । किन्तु प्रथमं कार्य्यान्वितज्ञाने वाक्यस्य साक्षात्परम्परोदासीन कारण-त्वमात्रं गृह्यते न तु विशेषोऽपि उपायज्ञानव्यति-रेकादुभयविशेषसाधारणत्वेन तद्ग्राहकत्वात् । उक्त-र्गोऽपि बाधकाभावनिश्चयसहकृतोनिश्चायकः । नचा-न्यलभ्यत्वस्य बाधकस्याभावमापातत इतो दर्शनमात्रेण बालो निश्चेतुमर्हति अतएव प्रामाण्यस्यौत्पत्तिकत्वेऽपि बाधकाभावनिश्चयादेव निश्चयः । अन्यथा प्रमाऽप्रमा वा साक्षात्परम्परासाधनमेतत् उभयं क्वापि न स्यात् । यच्च हर्षहेतुः पुत्रजन्मादिस्तादि तत्र स्वतो गृहीत हर्षहेतुस्तनपानादेर्बाधावतारः तस्य हर्षहेतोरपह्नवात् । उपस्थितत्वादुपपादकत्वाच्च पुत्रजन्मज्ञानस्यैव हर्षहेतुत्वेन कल्पनात् । अन्यनिष्ठज्ञान हर्षकारणं भविष्यतीति सङ्कायां कथमेवमिति चेत् एवन्तर्हि कार्य्यान्वितज्ञानेऽपि

शक्तिर्न गृह्येत शब्दोत्थज्ञानहेतुर्मा भ्रमत्वात्। अनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वात् अन्यथियज्ञानस्याज्ञानाच्च ज्ञानेऽपि वा तदुपस्थितिनियमे मानाभावात् सन्देहाभावोपपत्तेः लिङ्गाभासजन्यकाकतालीयसम्प्रचर्षादानुमितिवद्धर्षेण लिङ्गेन पुत्रजन्मज्ञानानुमानसम्भवाच्च। नचाभासत्वेनानुमितेर्भ्रमत्वे तद्धेतुशक्तिग्रहो भ्रमः, विषयस्य तथाभावेन तयोर्यथार्थत्वात्। यथा कश्चित् सूत्रसञ्चाराधिष्ठितं दारुपुत्रकं घटमानयेति नियुङ्क्ते स च समानयति तदा चेतनव्यवहारादिवत् तद्दर्शी बालो व्युत्पद्यते—इयं क्रिया, कृतिजन्या, सा ज्ञानजन्या, ज्ञानं तद्वाक्यजन्यमित्यनुमितिपरम्परायाः भ्रमत्वेऽपि तद्धेतुशक्तिग्रहः तज्जन्यशाब्दबोधश्च यथार्थ एव विषयस्य तथाभावादिति सिद्धं सिद्धार्थे शक्तिग्रह इति। अतएव "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्" इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः"।

**कार्य्यिन्** त्रि॰ कार्य्यमस्त्यस्य इनि १कार्य्ययुक्ते २कार्य्यार्थिनि (उमेदार) व्याकरणोक्ते ३आदेशस्थानिनि च "कार्य्यमनुभवन् हि कार्य्यी निमित्ततया नाश्रीयते" परिभा॰। अत्र कार्य्यीति निर्द्देशात् "एकाक्षरात् कृतो जाते सप्तम्याञ्च न तौ (इनिठनौ) स्मृतौ" इत्युक्तिरप्यनित्या। ततः मतुप् मस्य वः। कार्य्यवत्। ठन् कार्य्यिक तत्रार्थे त्रि॰। तत्र इनौ मतुपि च स्त्रियां ङीप्।

**कार्शकेय** पुंस्त्री॰ कशकृत्स्नेरपत्यं वा॰ ढञ्। कशकृत्स्नेरपत्ये ऋषिभेदे स्त्रियां ङीप् "कार्शकेयीपुत्रात् कार्शकेयीपुत्र" शत॰ ब्रा॰ १४,९,४,३२, वेदवंशवर्णने।

**कार्शाश्वीय** त्रि॰ कृशाश्वेन निर्वृत्तादि कृशाश्वा॰ चतुरर्थ्यां छण्। कृशाश्वनिर्वृत्तादौ।

**कार्श्मरी** स्त्री कृश–स्वार्थे णिच्–भावे मनिन् कार्श्म तत् राति रा–क गौरा॰ ङीष्। ओषधीभेदे कर्के २गाम्भारीवृक्षे भरतः।

**कार्श्य** न॰ कृशस्य भावः ष्यञ्। १कृशत्वे "निर्बन्धसञ्जातरुषार्थकार्श्यम्" रघु॰। स्वार्थे ष्यञ्। २कृशे ३शालवृक्षे, ४कर्चूरे (केचो) वृक्षे ५कच्चूरे च पु॰ राजनि॰।

**कार्ष** त्रि॰ कृषिः शीलमस्य छत्रा॰ ण। कृषिशीले कृषीवले भरतः।

**कार्षापण** पुंन॰ कर्षस्येदम् स्वार्थे वा अण्। तेन आपण्यते आ+पण–कर्म्मणि घ। १अशीतिरक्तिके ताम्रिके कर्षे "कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः" मनुः। २षोडशपणात्मके पुराणे (काहन) इति ख्याते मानभेदे। "माषः षोडशभागस्तु ज्ञेयः कार्षापणस्य तु। काकिनी (कड़ि) तु चतुर्भागो माषस्य परिकीर्त्तिता। पञ्चनद्याः प्रदेशे तु सञ्ज्ञेयं व्यावहारिकी। कार्षापणप्रमाणन्तु तन्निबद्धम् (परिभाषितम्) इहैव तत्" कात्या॰स्मृ॰षोडशेत्यत्र हेमाद्रौ विंशतीति पाठः। अतएव "द्वात्रिंशत्पणिकः गाणो नृत्यः पौराणिकोभवेत्" कात्या॰ स्मृतौ पुराणद्वयशाच्च द्वात्रिंशत्पणात्मकत्वं नाभिधानम्। "अशीतिभिर्वराटकैः पण इत्यभिधीयते। ते षोडशः पुराणः स्यात् रजतं सप्तभिस्तु तैः" भविष्यपु॰। "कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" मा॰त॰। "कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतोजनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा।" "समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यात्" मनुः। "कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते। पणैर्निबद्धः पूर्व्वस्यां षोडशैव पणाः पलम्।" इति नारदोक्ते ३दक्षिणदेशप्रसिद्धे पूर्व्वदेशप्रसिद्धपणपरिमाणे च। कार्षापणेन क्रीतं टिठन् वा प्रतरादेशश्च इडुच्चारणार्थं कार्षापणिक पक्षे प्रतिक तत्क्रीते त्रि॰ स्त्रियां ङीप्। कार्षापणिकी प्रतिकी अध्यर्द्धपूर्व्वात् द्विगोश्च तस्य वा लुक्। अध्यर्द्धकार्षापणं अध्यर्द्धकार्षापणिकं सार्द्धकार्षापणक्रीते एवं द्विकार्षापणं द्विकार्षापणिकं कार्षापणद्वयक्रीते त्रि॰। पर्श्वादिपाठात् स्वार्थेऽण्। कार्षापण कार्षापणसङ्घजीविषु त्रि॰ ब॰व॰।

**कार्षि** त्रि॰ कर्षतीति कर्षः ततः स्वार्थे बा॰ इञ्। १कर्षणशीले २अन्तर्गतमलापनेतरि। "कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि" यजु॰६,२८। कर्षतीत्येवंशील कार्षिः अन्तर्गतमलापनेतासि" वेददी॰ "कार्षिरसीत्याह शमलमेवासायपप्लावयति" तैत्ति॰।

**कार्षिक** त्रि॰ कर्षं नित्यमर्हति छेदा॰ ठञ्। १नित्यकर्षणार्हे कर्षेण क्रीतं ठञ्। १कर्षेण क्रीते। तत्परिमाणमस्य ठक्। ३कर्षपरिमाणयुक्ते। कर्ष कर्षणं शीलमस्य ठक्। ४कृषके हेमच॰। स्वार्थे ठक्। ५कर्षपरिमाणे। "ताम्रिकः कार्षिकः पणः" मनु।

**कार्ष्ट्य** न॰ कृष्टस्य भावः दृढा॰ष्यञ्। कृष्टत्वे पक्षे इमनिच् कर्ष्टिमन् तत्रार्थे पु॰। मित्त्वात् स्त्रियां ङीप्यलोपौ।

**कार्ष्ण** त्रि॰कृष्णस्येदम् अण्। १कृष्णमृगसम्बन्धिनि। "कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः" मनुः। २कृष्णद्वैपायनसम्बन्धिनि च। "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा॰आ॰प॰१अ॰। कृष्णोदेवताऽस्य अण्। २कृष्णास्य-

विष्णुदेवताके हविरादौ त्रि० । "कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्" रघु० । ४शतावर्य्यां स्त्री राजनि० ।

**कार्ष्णाजिनि** पु० कृष्णाजिनस्यर्षेरपत्यम् इञ् । कृष्णाजिनर्षेरपत्ये "कृत्स्नत्विमिति कार्ष्णाजिनिः" कात्या० श्रौ० १,६ २३

**कार्ष्णायन** पु० कृष्णस्य व्यासस्य गोत्रापत्यम् नडा० ब्राह्मणे वाशिष्ठे च विशेष्ये फक् । कृष्णस्य व्यासस्य गोत्रापत्ये १ब्राह्मणे २वाशिष्ठे च ।

**कार्ष्णायस** न० कृष्णस्यायसो विकारः अण् । कृष्णायसस्य विकारे "कार्ष्णायसमलङ्कारं परिगृह्णीत च नित्यशः" मनु । स्त्रियां ङीप् । "अभि कार्ष्णायसीं दद्यात्" मनु ।

**कार्ष्णि** पु स्त्री कृष्णस्यापत्यं बाह्वा० इञ् । कृष्णस्य व्यासस्यापत्ये शुकदेवे । "युगपत्तूर्णयं कार्ष्णिर्नन्दिघोषरथस्तथा" भा० आ० १२२अ० अर्च्चिकीर्त्तने । २रौक्मिणेये कामदेवे च । "सा च तं वर्द्धयामास कार्ष्णिं कमललोचनम्" हरि० १६२ अ० । अस्योत्पत्तिकथा कामशब्दे उक्ता ।

**कार्ष्ण्य** न० कृष्णस्य भावः दृढादि० ष्यञ् वा । १कृष्णत्वे कृष्णस्य गोत्रापत्यम् गर्गा० यञ् । ब्राह्मणवाशिष्ठे कृष्णस्य व्यासस्य गोत्रापत्ये पु स्त्री स्त्रियां ङीप् तस्य छात्र कण्वा० अण् । कार्ष्ण्यं कृष्णगोत्रापत्यच्छात्रे स्त्रियां ङीप् ।

**कार्ष्मन्** न० कर्षत्यत्र कृष-स्वार्थे णिच्—आधारे मनिन् । १युद्धे तत्र हीतरेतरं योधा कर्षन्तीति तस्य तथात्वम् । "कार्ष्मन् वाजी न्यक्रमीत्" ऋ० ९।३६।१ "कार्ष्मन् कार्ष्मं युद्धम्" भा० । तत भावे मनिन् । २कर्षणे च ।

**कार्ष्मरी** स्त्री कृष-णिच्—मनिन् कार्ष्म कर्षणं राति ददाति रा-क गौरा० ङीप् । श्रीपर्णीवृक्षे तस्या विकारः यत् । कार्ष्मर्य्यं श्रीपर्णीवृक्षावयवे । "पालाशबैकङ्कतकार्ष्मर्य्य बैल्वान्" कात्या० श्रौ० २,८,१ । कर्कभाष्ये कार्ष्मर्य्येति पाठस्यापि दृष्टत्वात् तालव्यमध्योऽपि तत्रार्थे ।

**कार्ष्य** पु० कृष्यतेऽसौ कृष–घञ् स्वार्थे ष्यञ् । शालवृक्षे अमरः ।

**काल** कालोपदेशे (इयत्तया कालनिश्चयार्थोपदेशे) अद० चु० उभ० सक० सेट् । कालयति ते अचकालत्-त, कलयाम्—बभूव-आस-चकार-चक्रे । कालयिष्यति-ते

**काल** पु० ईषदर्थात अल–अच् कोः का । १कृष्णवर्णे तस्य वर्णेषु ईषद्भूषकत्वात् तथात्वम् । अस्त्यर्थे अर्श आद्यच् । २तद्वर्णयुक्ते त्रि० । ३लौहे न० वाचस्पतिः । धातुषु तस्य कृष्णत्वात् तथात्वम् । ४कक्कोले न० राजनि० ५कालीयके गन्धद्रव्यभेदे न० शब्दच० । रयोर्गन्धद्रव्येषु कृष्णत्वात्तथात्वम् । ६कोकिले पु स्त्री० राजनि० तस्य वर्णेषु कृष्णत्वात्तथात्वम् स्त्रियां ङीप् । ७रक्तचित्रके ८कासमर्दे (कालकासुन्दा) वृक्षे च पु० राजनि० । १०शनिग्रहे मेदि० कृष्णत्वात्तस्य तथात्वम् । कालयति सर्व्वं चु० कल–अच् "कालसमयवेलासु तुमुन्" पा० निर्द्देशात् नि० उपधावृद्धिः । ११यमराजे १२महाकाले शिवे मेदि० । १३परमेश्वरे "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" "कालः कलयतामहम्" इति च गीता "कृतः प्रदत्तप्रणवः कालः परमेष्ठी पिरपर्ययः विष्णुस० । "तथैव योऽयं भगवान् कालात्मा कालकृद्विभुः" सू० सि० । स्वनामख्याते परत्वापरत्वधीहेतौ न्यायादिमतसिद्धे १४द्रव्यभेदे । तन्निरूपणं कणादसूत्रे उपस्कारवृत्तौ च यथा

"अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि" क० सू० ।

"इतिशब्दो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते तथा चापरमिति प्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः । अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यं, तेनायमर्थः—बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यते तच्चापरत्वमसमवायिकारणसापेक्षम्, न च रूपाद्यसमवायिकारणं व्यभिचारात् तथाणां गन्धादीनां यावौ परत्वाद्यनुत्पादकत्वात् स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारात् न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात् तपनपरिस्पन्दानाञ्च व्यधिकरणत्वात् तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात् आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्य्यभिघातात् सर्व्वभेरीषु शब्दोत्पत्तिप्रसङ्गः । तथाच कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगोऽपरत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायकः आत्मनस्तु द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षित्वात् अन्यथा वाराणसीस्थेन महाराजनाराविका पाटलिपुत्रेऽपि स्फटिकमणेराकर्षणप्रसङ्गात् । कालस्य तु तत्स्वभावतयैव कल्पनादयमदोषः । कालेनापि रागश्रमः कथं न इति चेत् नियतक्रियोपनायकत्वेनैव तत्सिद्धेः एवं स्थविरमवधिं कृत्वा यूनि परतोत्पत्तिर्निरूपणीया । युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत् कुर्व्वन्ति इत्यादि-प्रत्ययानाञ्च एकस्मिन् काले एकस्या क्रियाया एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः, न चाप्राप्ता एव

सर्व्वगतयो विशेषणतामनुभवन्ति। न च स्वरूपप्रत्ययासत्ता एव ता तस्मादेताद्यविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणप्रापकं यद् द्रव्यं स कालः" उपस्कारवृत्तिः।

"ननु सिध्यतु कालः स तु नित्यो द्रव्यं वेति न प्रमाणमत आह"।

"द्रव्यत्वनित्यत्वे वायुना व्याख्याते" क०सू०।

"यथा वायुपरमाणोर्गुणवत्त्वाद्द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः" उप०।

"तथापि सन्तु बहवः कालाः इत्यत आह"।

"तत्त्वम्भावेन" क०सू०।

व्याख्यातमिति विपरिणतेनान्वयः। चिरादिप्रत्ययानां काललिङ्गानां सर्व्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात् सत्तावदेकत्वं कालस्येत्यर्थः। ननु च क्षणलवमुहूर्त्तयामदिवसाहोरात्रपक्षमासर्त्त्वयनवत्सरादिभेदेन भूयांसः कालास्तत् कथमेक इति चेन्न भेदमानस्य उपाधिनिबन्धनत्वात् यथा एक एव स्फटिकमणिर्जवातापिञ्छाद्युपाध्युपरागेण भिन्न इव भासते तथैक एव कालः सूर्य्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्य्यावच्छेदकभेदेन च भिन्न इव भासते इत्यभ्युपगमात् तथाच कालोपाधिव्यापकं कालोपाधिः, स्वाश्रयकादाचित्काभावप्रतियोग्यनाधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम्। क्षणद्वयञ्च न इत्याद्यागमप्रसिद्धम्। ननु तथाप्यतीतानागतवर्त्तमानभेदेन कालत्रयस्तु, श्रूयते हि "त्रैकाल्यमुपावर्त्तते" "त्रैकाल्यसिद्धिः" इत्यादीति चेन्न, त्रैकाल्यव्यवहारात् येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः यत्प्रध्वंसेन यः कालोऽवच्छिद्यते स तस्यातीतकालः तथाचावच्छेदकत्रित्वाधीनं कालत्रित्वव्यवहारः" उपस्कारवृत्तिः।

"इदानीं सर्व्वोत्पत्तिमतां कालः कारणमित्याह"।

"नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति" क०सू०।

इतिशब्दो हेतौ इतिहेतोः कारणे—सर्व्वोत्पत्तिमत्कारणे काल इत्याख्या। हेतुमाह नित्येष्वभावात् अनित्येषु भावादिति नित्येषु आकाशादिषु युगपज्जातः चिरजातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जात इत्यादिप्रत्ययस्याभावात् अनित्येषु घटपटादिषु यौगपद्यादिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः। न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्व्वोत्पत्तिमन्निमित्तकारणत्वम् अपि तु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिव्यावृत्तादेव तदध्यवसेयम् उप०। भाषापरिच्छेदमुक्तावल्योश्च सङ्क्षेपेण तन्निरूपणं यथा

"जन्यानां जनकः कालो जगतामाश्रयो मतः।"

"परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः" भाषा।

"कालं निरूपयति जन्यानामिति तत्र प्रमाणं दर्शयितुमाह जगतामिति तथाहि इदानीं घट इत्यादिप्रतीतिः सूर्य्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न सम्भवतीति कालएव तत्सम्बन्धघटकः कल्प्यते इत्थञ्च तस्याश्रयत्वमपि सम्यक्। प्रमाणान्तरं दर्शयति परापरत्वेति परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह क्षणादिरिति कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः। उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म, पूर्व्वसंयोगावच्छिन्नविभागो वा पूर्व्वसंयोगावच्छिन्नोत्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म्म वा। नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं कर्म्मान्तरसत्त्वादिति। महाप्रलये क्षणादिव्यवहारो यद्यपि, तदा ध्वंसेनोपपादनीयः। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति" मुक्तावली।

तार्किकशिरोमणिना रघुनाथशिरोमणिना च पदार्थनिरूपणप्रकरणे "तत्र दिक्कालौ नेश्वरादतिरिच्येते" इति वदता विभुरूपस्यैकस्य कालस्य खण्डनं कृतम्। रघुदेवरामभद्राभ्यां समर्थितं तत् संक्षिप्य पदार्थतत्त्वसारे च जयनारायणतर्कपञ्चाननेन दर्शितं यथा

"दिक्कालौ नेश्वरादतिरिक्तौ, प्राच्यां घट इदानीं घटः इत्यादिव्यवहारस्य ईश्वरात्मकविभुविषयकत्वेनैवोपपत्तेः, न च तयोर्भिन्नविषयकत्वमनुभवसिद्धमिति वाच्यं तथा सति प्राच्यां घटः प्रतीच्यां घटः इदानीं घटः तदानीं घट इत्यादेरपि भिन्नभिन्नविषयकत्वानुभवात् कालादेरपि बहुत्वाङ्गीकारप्रसङ्गात्, तथा च उपाधिभेदादेकया दिशा एकेन कालेन च यथा भवतां बहूनां व्यवहाराणामुपपत्तिः तथाऽस्माकमपि एकेनेश्वरेणागमानुमानाभ्यां सिद्धेन सर्व्वेषामेव तादृशव्यवहाराणामुपाधिभेदादुपपत्तिः सम्भवति,

दुर्यक्रियादौ स्वसंयुक्तस्वरसंयोगितपनपरिस्पन्दादिसम्बन्धेन घटादेः सत्त्वसम्भवेन तत्सम्बन्धघटकतयाऽप्यतिरिक्तकालासिद्धेः । अथवा क्षणा एवातिरिक्ताः इदानीमित्यादिव्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्म्मैव क्षण स्तस्य सम्भवात् भाविकर्म्मान्तरजन्यविभागान्तरप्रागभावावच्छिन्नस्य कर्म्मण क्षणचतुष्टयादिस्थायित्वेन तादृशस्योपाधित्वासम्भवात् न च विभागे स्वजन्यत्वं विशेषणीयम्, स्वपदाननुगमादननुगमापत्तेः, विभागजनकादृष्टाद्युपाध्यन्तरस्य व्याप्यतया तावतामननुगमाच्च, एवञ्चोपाधीनामतिरिक्तानां क्षणिकपदार्थस्वरूपाणां क्षणानामवश्याभ्युपेयतया तैरेव तादृशाः सर्वे व्यवहारा उपपादनीयाः किमतिरिक्तेन कालेनेति' ।

सांख्यमते तस्याकाशान्तर्भावः न पृथक्तत्त्वान्तरत्वं तदेतत् सांख्यसूत्रभाष्ययोर्दर्शितम्

"खण्डदिक्कालयोः सृष्टिमाह" भा० ।

"दिक्कालावाकाशादिभ्यः" सां० सू० ।

"नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव । अतो दिक्कालयोर्विभुत्वोपपत्तिः । "आकाशवत् सर्वगतश्च नित्यः" इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम् । यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः आदिशब्देनोपाधिग्रहणादिति । यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकमते प्रोक्तस्य कार्य्यतावत् तत्कार्य्यत्वमत्रोक्तम्" प्र० भा० ।

"अनुपद दर्शयिष्यमाणमाधवग्रन्थे च वाचस्पतिमतेन कालखण्डनं तु नित्यविभुकालखण्डनपरं तथाहि "उपाधिर्भिद्यते न तु तद्वानिति" सा० सू० उपाधिभेदेन धर्म्मिभेदासम्भवस्य व्यवस्थापनात् धर्म्मिणः कालस्य एकत्वेन उपाधिना भेदासम्भवात् उपाधिना नाऽनागतादिभेदव्यवहारसम्भव तथा च क्रियादेरेव उपाधिभूतस्यानागतादिव्यवहारोपपादकतया तस्यैव कालत्वम् । अत एव क्रियैव काल इत्यभियुक्तोक्तिः ।

कालमाधवीये च माधवेन शङ्कापूर्व्वकं कालस्वरूपं व्यवस्थापि

"ननु नायमुद्यमः सफलः कालस्य गगनकुसुमायमानत्वात् तदेतत्परमरहस्यमविजानानः कपिलमहामुनिप्रणीतानि निर्विवेक्तुकाम कालसमेघ्याऽऽम्नायेव पञ्चविंशतितत्त्वानि विवेच "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष" इति । न चैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षित इति शङ्कनीयम्, त्वदभिमतस्य कालस्य पञ्चविंशतितत्त्वानां व्याख्यायमानानि अनन्तर्भावात् । अव्यक्तस्य गुणानां साम्यावस्था मूलप्रकृतिर्महदहङ्कारपञ्चतन्मात्राख्यानां सप्तानां प्रकृतिविकृतीनां मध्येऽध्यवसायहेतुर्महत्तत्त्वम् अभिमानहेतुरहङ्कारः । शब्दस्पर्शरूपरसगन्धात्मकानि पञ्चतन्मात्राणि पृथिव्यादिपञ्चमहाभूतानामेकादशेन्द्रियाणाञ्च षोडशविकाराणां कारणानि प्रसिद्धानि । अप्रकृतिरविकृतिः पुरुषश्चिदात्मकः । न चोक्तमञ्चविधतत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते नापि पञ्चविंशतितत्त्वान्तरं मुनिरनुमन्यते । अथ तर्हि मुनिप्रणीतानि तत्त्वानि स्वीकुर्वन् घटक्रम ईश्वरकृष्णो वहिरङ्गस्वान्तःकरणे विविचन् कालं व्याजहार? "साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणमिति" । परमर्षिणा परो बोधनीय इति न्यायेनाव्यवहारो न तु स्वसिद्धान्ताभिप्रायेणेति ब्रूमः । अत एवैतद्वचो व्याचक्षाणा वाचस्पतिमिश्राः सांख्यकौमुद्यामेवमाहुः 'कालस्तु वैशेषिकाभिमत एको नानागतातीतादिभेदप्रवर्त्तनमर्हति । तस्मादयं यैरुपाधिभेदैरनागतादिभेदभावं प्रतिपद्यते सन्तु त एवोपाधयो व्यवहारहेतवः कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्य्याः" । तस्मात् कालरूपतत्त्वान्तराभ्युपगम इति । अथोच्येत-भूतकालो वर्त्तमानकालो भविष्यत्काल इति एषु त्रिष्वपि भूतादिष्वनुगत कालप्रत्यय एकमनुगतं कालत्वमन्तरेणानुपपन्न इति तन्न पदार्थप्रत्ययवदुपपत्तेः यथा भवन्मते द्रव्यपदार्थो गुणपदार्थ इति षट्सु भावेषु षड्भावेष्वनुगत पदार्थप्रत्यय एकमनुगतं पदार्थत्वजात्याख्यं तत्त्वान्तरमन्तरेणाप्युपपन्न । तथा कालप्रयोगोऽपि कुतो नोपपद्येत ।। तस्मात्सिद्धान्तस्य काल निर्णयं बहूनामयम् पैशाचिकरोमन्थनीमवाधावेश्म न कश्चिदप्युपयोग इत्येवं प्राप्ते ब्रूमः आयुष्मतस्तवैव निरूढकालतत्त्वे प्रद्वेष स कस्य हेतो? इति वक्तव्यम् । किं कपिलमहामुनिना निराकृतत्वात् ?१ किंवा सांख्यशास्त्रप्रणीतेषु तत्त्वेष्वपठितत्वात् ?२ उत लक्षणाभावात् ?३ आहोस्वित् प्रमाणाभावात् ?४ अथवा प्रयोजनाभावात् ?५, अथवा तत्त्वगतपञ्चविंशतिसङ्ख्याव्यापाटनेनाभ्यधितात् भयात् ?६, न प्रथम आद्यनिराकरणस्य मुनिना प्रणीतसूत्रानुपलम्भात् । न द्वितीय अतिप्रसङ्गात्, ऋग्वेदप्रोक्तानां ज्योतिष्टोमादीनामायुर्वेदधनुर्वेदगान्धर्व्ववेदप्रोक्तानामौषध-

कालेऽपूर्वयितृत्वेन सम्वत्सरस्याभ्यर्हितत्वादल्पमक्षत्वतया सूचीकटाहन्यायानुसारेण च सम्वत्सरादौ निर्णीयत इतिस्थितम्” ।

सू० सि० रङ्ग० कालविभागश्चेत्थं प्रदर्शितः

“लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः । स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तश्चामूर्त्त उच्यते” सू० सि० ।

“कालो द्विधा तत्रैकः कालोऽखण्डदण्डायमान शास्त्रान्तरप्रमाणसिद्ध । लोकानां जीवानां सुपलक्षणादचेतनानामपि । अन्तकृद्विनाशकः । यद्यपि कालस्तेषामुत्पत्तिस्थितिकारकस्तथापि विनाशस्यानन्तत्वात् कालस्यप्रतिपादनाय चान्तकृदित्युक्तम् । अन्तकृदित्यनेनैवोत्पत्तिस्थितिकृदित्युक्तमन्यथा नाशकत्वासम्भवात् । अतएव “कालः सृजति भूतानि कालः संहरति प्रजाः” इत्याद्युक्तं ग्रन्थान्तरे । अन्यो द्वितीयः कालः खण्डकालः । कलनात्मको ज्ञानविषयस्वरूपः । ज्ञातुं शक्य इत्यर्थः । स द्वितीय कलनात्मकः कालोऽपि द्विधा भेदद्वयात्मकः । तदाह स्थूलसूक्ष्मत्वादिति महत्त्वाणुत्वाभ्याम् । मूर्त्तः—इयत्तावच्छिन्नपरिमाणः । अमूर्त्तस्तद्भिन्नः कालतत्त्वविद्भिः कथ्यते । चकारो हेतुक्रमेण मूर्त्तामूर्त्तक्रमार्थकः । तेन महान् मूर्त्तः कालोऽणुरमूर्त्तः काल इत्यर्थः । अथोक्तं भेदद्वयं स्वरूपेण प्रदर्शयन् प्रथमभेदं प्रतिपिपादयिषुस्तदवान्तरभेदेषु भेदद्वयमाह” रङ्गनाथः ।

“प्राणादि कथितो मूर्त्तस्त्रुट्याद्योऽमूर्त्तसंज्ञकः । षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिका स्मृता” सू० सि० ।

“प्राणः स्वस्थसुखासीनस्य श्वासोच्छ्वासान्तर्वर्त्ती कालो दशगुर्वक्षरोच्चार्य्यमाण आदिर्यस्यैतादृश प्राणान्तर्गतो मूर्त्तः काल उक्तः । त्रुटिराद्या यस्यैतादृशः काल एव प्राणान्तर्गतत्रुटितत्परादिकोऽमूर्त्तसंज्ञकः । अथामूर्त्तस्य मूर्त्तादिभूतस्य व्यवहारायोग्यत्वेनाप्रधानतयानन्तरोद्दिष्टस्य भेद प्रतिपादनमुपेक्ष्य मूर्त्तकालस्य व्यवहारयोग्यत्वेन प्रधानतया प्रथमोद्दिष्टभेदान् विवक्षुः प्रथमं पलषष्ट्यामाह । षड्भिरिति । षड्भिः प्राणैरसुभिः पानीयपलं भवति पलानां षष्ट्या घटिकोक्ता कालतत्त्वज्ञैः । अथ दिनमासादिकमाह” रङ्ग० ।

“नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्त्तितम् । तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा” ।

“ऐन्दवस्तिथिभिस्तद्वत् सङ्क्रान्त्या सौर उच्यते । मासैर्द्वादशभिर्वर्षं दिव्यं तदह उच्यते” ।

“सुरासुराणामन्योऽन्यमहोरात्रं विपर्य्ययात् । तत्षष्टिः षड्गुणा ३६० दिव्यं वर्षमासुरमेव च” ।

“तद्द्वादश सहस्राणि चतुर्युगमुदाहृतम् । सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः ४३२०००० ” ।

“सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् । कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया” ।

“युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः । क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययोः स्वकः” ।

“युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते । कृताब्दसङ्ख्या १७२८००० तस्यान्ते सन्धि प्रोक्तो जलप्लवः” ।

“ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः” ।

“इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती” ।

“परमायुः शतं तस्य तयाऽहोरात्रसङ्ख्यया । आयुषोऽर्द्धमितं तस्य शेषे कल्पोऽयमादिमः” सू० सि० । अहरादिकालभेदाः (अहन्) शब्दे उक्ताः ।

सि० शि० तु निमेषतत्परत्रुटिरूपाः सूक्ष्माः कालावयवाः दर्शिताः तस्य वाक्यं १७८८ पृ० दर्शितम् । स च कालस्त्रिविधः वर्त्तमानभूतभविष्यद्भेदात् तत्र भूतभविष्यत् कालावपि प्रत्येकं द्विधा अद्यतनानद्यतनभेदात् तद्भेदेनैव लकारविशेषं पाणिनिरन्वशात् ।

सोऽयं कालः षडिन्द्रियवेद्यः इति मीमांसका मन्यन्ते “न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते” इति तेषामुक्तेः । वेदान्तिनस्तु तस्य साक्षिप्रत्ययभास्यत्वमङ्गीचक्रुः तत्र प्रमाणं कालमा० अनुपदमेव दर्शितम् । सोऽयं कालः देशवृत्तेरव्याप्यवृत्तितानियामकः । तथाहि यः पदार्थः स्वाधिकरणवृत्त्यभावप्रतियोगी सोऽव्याप्यवृत्तिरिति भण्यते तत्तानिर्वाहकस्य कालो देशश्च । कश्चिद्देशे स्थितस्य तादृशपदार्थस्य कालभेदेन तत्र स्वाधिकरणेऽभावस्तिष्ठति यथा ज्ञानाश्रये आत्मनि सुषुप्तिकाले इच्छादिविशेषगुणान्तरकाले च ज्ञानाभावः । यथा वा गुणवति जन्यद्रव्ये उत्पत्तिकाले गुणाभावः श्यामले अपक्वे घटे रक्तत्वाभावः रक्तत्वस्य पाकोत्तरं जायमानत्वात् । कालवत्त्वे च देशोऽपि तथा । यथा आत्मनि ज्ञानकाले शरीराद्यवच्छेदेन ज्ञानं, घटाद्यवच्छेदेन तदभावः । तथा वृक्षे कपिसंयोगकालेऽपि मूले तदभावः । कालेन कृतसम्बन्धः कालिकसम्बन्धः तेन सम्बन्धेन सर्वेषु जन्यभावेषु जन्यभावानां वृत्तिमत्ता

तस्य धर्मानुष्ठानेषूद्देशत्वेन ह्येयत्वादनुपादेयत्वाच्च । यस्त्वितरो मासपक्षतिथ्यादिरूपः सोऽपि ज्योतिःशास्त्रे सम्यङ्निर्णीत इति कृतमनया कालनिर्णयप्रस्तावेति प्राप्ते ब्रूमः उभयमप्यत्र निर्णेतव्यं कालकालस्य जगदीश्वरस्य सर्व्वेषु कर्मारम्भेषु अनुसर्त्तव्यत्वात् अतएव शिष्टा पुण्याहवाचनादावीश्वरमनुस्मरन्ति। "सर्वेषु कालेषु समस्त देशेषु सर्वकार्येषु तथेश्वरेश्वर । सर्वैः स्वरूपैर्भगवाननादिमान्ममास्तु माङ्गल्यविवृद्धये हरिः । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतमिति" । मासादिरूपभेदस्य तु स्वरूपेण ज्योतिषे निर्णीतत्वेऽपि श्रौतस्मार्त्तकर्मविशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः । यद्यप्यसौ हेमाद्रिप्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णत्वेन सङ्ग्रहार्थमत्र यत्नः क्रियते । तदेवं चिकीर्षितस्य ग्रन्थस्य कालरूपो विषयः सङ्ग्रहरूपं प्रयोजनं चास्तीति अथ ग्रन्थ आरभ्यते" । "नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः । सोऽवाङ्मनसगम्योऽपि देहो भक्तानुकम्पया" नित्यकालस्य परमेश्वरत्वे प्रमाणं पूर्वमेवोपन्यस्तम् । परमेश्वरस्य चावाङ्मनसगोचरत्वे सर्वे वेदान्तास्तदनुसारिस्मृतिपुराणानि तत्त्वविदनुभवश्च प्रमाणम् । भक्तानुग्राहिमूर्त्तिस्वीकारश्च तलवकाराख्ये सामवेदशाखाविशेषे कस्या चिदाख्यायिकायामाम्नायते तस्या आख्यायिकायामिवषुक्तम्—अग्निवाय्विन्द्रादयो देवा ईश्वरानुगृहीताः सर्व्वत्र विजयमानाः स्वकीयमेव तत्सामर्थ्यमित्यभिमन्यन्ते स्म । तान् बोधयितुमवाङ्मनसगम्यं परमेव ब्रह्म पूज्या यक्षरूपया काञ्चिन्मूर्त्तिं धारयित्वा प्रादुर्बभूव । तया सह वादं कृत्वापि राजसचित्तावग्निवायू तद्ब्रह्मतत्त्वं नैव बुबुधाते इन्द्रस्तु सात्त्विकचित्तो बुबुधे इति । वाशिष्ठरामायणेऽपि शुक्रोपाख्याने शुक्रं मृतमवलोक्य तत्पिता भृगुः क्रुद्धो मारयितारं कालं शप्तुमुद्यत तदानीं कालोऽनुपद्रुतमीदृशेन रूपेणाविर्भूबेति पठ्यते "अथाकल्पितरूपोऽसौ कालः कवलितप्रजः । आधिभौतिकमास्थाय वपुर्दुर्निरुपाययौ । खड्गपाशधरः श्रीमान् कुण्डली कवचान्वितः । षडुपटकमयोदारवक्त्रषट्कसमन्वितः । मासद्वादशकोद्दामभुजद्वादशकोत्कटः । ज्वाकारसमया बङ्ग्रा वृतः किङ्करसेनया । स उपेत्य प्रणम्यादौ कुपितं तं महामुनिम् । कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्वमुवाच ह । त्वमत्यन्ततपा विप्र ! वयं नियतिपालकाः । तेन सम्पूज्यसे पूज्य ! साधो ! नेतरयेच्छया । मा तप क्षपय व्यर्थं कल्पकालमहानलम् । यो न दग्धोऽस्मि तस्य किं त्वं शापेन धक्ष्यसि ? । संसाराब्धस्यो ग्रस्ता निगीर्णा रुद्रकोटयः । भुक्तानि विष्णुवृन्दानि केन शक्ता वयं मुने । भोक्तारो हि वयं ब्रह्मन् भोजनं युष्मदादयः । स्वयं नियतिरेषा हि नावयोरेतदोचितमिति ।" न च भक्तानुजिघृक्षया स्वीकृता मूर्त्तिरीदृश्येवेति कश्चिन्नियमोऽस्ति सर्वात्मकस्य परमेश्वरस्य भक्तचित्तप्रियायाः सर्वस्या अपि मूर्त्तेः स्वकीयत्वात् अतएव भगवद्गीतायाम् "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हितानिति" । विष्णुरुद्रादिवत् अचेतनमूर्त्तयोऽपि तत्तत्फलविशेषार्थिभिरीश्वरत्वेनोपास्याः । तदेतद्बह्वृचे समाम्नायते । "एत ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव, एतं महाव्रते छन्दोगा, एतमस्याम् (पृथिव्याम्) एतं दिव्येतं वायावेतमाकाश एतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्विति" वाजसनेयिनोऽपि मण्डलब्राह्मणे "तमेतमग्निमध्वर्यव उपासत इत्यारभ्य पठन्ति "विषमिति सर्पाः, सर्प इति सर्पविदः, ऊर्गिति देवाः, रयिरिति मनुष्याः, मायेत्यसुराः, स्वधेति पितरो, देवजन इति देवजनविदो रूपमिति गन्धर्वा, गन्ध इत्यप्सरसस्तं यथायथोपासते तदेव भवतीति" । तैत्तिरीयाश्च पठन्ति "क्षेम इति वाचि, योगक्षेम इति प्राणापानयोरित्यादि" । परब्रह्मण्यारोपितं यच्छावरजङ्गमरूपम् अस्ति तेन सर्व्वेण रूपेणानया परमेश्वरो रूपवान्भवतीति-हिरण्मयाधिकरणतेजोमयाधिकरणयोः प्रपञ्चितम् । एवं च सति यो यदा यत्कर्मारभते स तदा तत्कर्मोपयुक्तां कालात्मकस्येश्वरस्य मूर्त्तिमिष्टदेवतारूपेणानुस्मरेत् । अत एव मन्त्रशास्त्रेषु नानाविधानि ध्यानान्युपदिष्टानि । लोकेऽप्याविद्वद्गोपालाङ्गनं सर्वोऽपि जन एकैकां देवतां स्वेच्छया पूजयति तदेतद्भगवानाह "यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" इति तस्मादारभ्यमाणकर्मफलप्रदो निजेष्टदेवतारूपो नित्यः कालः कर्मारम्भेषु अनुसर्त्तव्य इति सिद्धम् ।

अथ जन्यं कालं निरूपयामः । ननु कालस्य जन्यत्वे सति कथं प्रलये कालव्यवहारः । प्रत्ययस्य जन्याभधिकरणत्वरूपत्वात् । प्रलयोऽतीतः प्रलयो भावीति कालनित्यत्वमादिनस्तत्रापि समो दोष । नित्यस्य कालस्य

"प्राग्दृग्ग्रहश्चेदधिको रवेः स्यादूनोऽथ वा पश्चिमदृग्ग्रहश्च। प्रोक्तेष्टकालासयुतैः कलाभिः साध्यास्तदानीं दिवसागतैष्याः। तथा यदीष्टकालांशाः प्रोक्तेभ्योऽभ्यधिकास्तदा। व्यत्ययस्त्वगतैष्यत्वे ज्ञेयोऽज्ञा सुधिया खलु" सि॰ शि॰

"यदि प्राग्दृग्ग्रहो रवेरधिको भवति। अथ वा पश्चिमदृग्ग्रहो न्यूनो भवति तदा ये इष्टकालांशा आनीतास्तेषां प्रोक्तानां च योगकलाभिर्दिवसाः साध्याः। अन्तरकलाभिः तथा प्राग्दृग्ग्रहेऽर्कादधिके सति पश्चाद्दृग्ग्रहे वा न्यूने ये इष्टकालांशा आगतास्ते च यदि प्रोक्तेभ्योऽधिकान्तराः तदा प्रोक्तेष्टकालांशयुतैः कलाभिर्ये दिवसाः साधितास्तेषां दिवसानां गतैष्यत्वे विपर्ययो ज्ञेयः।

अत्रोपपत्तिः। यो ग्रहः प्राच्यामुदेति प्रतितिष्ठति वा असौ रवेरूनः सन् पश्चिमायाम्, अधिकः सन् प्राच्यां दिशि प्रोक्तकालांशैरूनः सन् दृश्यतामेति। तावद्भिरेव पश्चिमायामधिकः सन्। अतो रवेः पृष्ठतः प्राच्यां प्रोक्तकालांशाः प्रतीच्यामग्रतः। प्राच्यामूने ग्रहे ये इष्टकालांशाः साध्यन्ते ते रवेः पृष्ठतः। अतः पृष्ठगतैरेव प्रोक्तकालांशैस्तेषामन्तरं कर्तुं युज्यते। अथ प्राच्यां रवेरधिके दृग्ग्रहे ये इष्टकालांशाः साध्यन्ते ते रवेरग्रतो भवन्ति। अतोऽग्रगतानां पृष्ठगतानाञ्च कालांशानां योगे कृतेऽप्यन्तरं कृतं भवति तथा उक्तेभ्य ऊनाभ्यधिका यदोष्टा इति यद्गतगम्यलक्षणमुक्तं तत् सजातीयानामेव। यदा पुनरेके पृष्ठगता एकेऽग्रगतास्तदा तद्गतगम्यलक्षणं व्यत्ययेन भवति। अत उक्तं व्यत्ययश्च गतैष्यत्व इत्यादि। अत्र सुधियेति विशेषणाद्बुद्धिमतैतदनुक्तमपि ज्ञायते" प्रमि॰। व्यवहारे वादिप्रतिवादिनोः प्रतिज्ञातार्थसाधनाय राज्ञा देये २५ अवसररूपे समयभेदे च तत्कालविशेषः स्मृतौ दर्शितो यथा "प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च। अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते"। प्रत्यर्थिनोऽपि कश्चिद्विषये न कालो देयः, कश्चिच्चार्थिप्रत्यर्थिनोरिच्छया कालो देय यथाह याज्ञ॰ "साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम्। विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः"।

समयरूपकालस्य वैशेषिकमते संयोगविभागपृथक्त्वसंख्यापरिमाणरूपाः पञ्च गुणाः। भीमो भीमसेनवत् उत्तरपदलोपः। कालदण्डरूपे २६ योगे कालदण्डशब्दे उदा॰। वारविशेषे दिग्भेदेन ज्योतिषोक्ते यात्रादौ निषिद्धे २७ योगभेदे। स च योगः सु॰ चि॰ उक्तः। "कौबेरीतो वैपरीत्येन कालोऽर्काद्ये वारे सम्मुखे तस्य पाशः। रात्रावेतौ वैपरीत्येन गण्यौ यात्रा युद्धे दक्षिणौ वर्जनीयौ"। अयमर्थः। रवावुत्तरस्यां कालः, सोमे वायव्याम्, भौमे पश्चिमायाम्, बुधे नैरृत्याम्, गुरौ दक्षिणस्याम्, शुक्रे आग्नेय्याम्, शनौ पूर्वस्याम्। "रवावुत्तरतः कालः सोमे वायव्यभागके। भौमे तु पश्चिमे भागे बुधे नैरृतभागके। जीवे च याम्यदिग्भागे शुक्रे चाग्नेयकोणके। शनौ तु पूर्वदिग्भागे कालचक्रं प्रकीर्त्तितम्। स्वरोदये "यत्रस्थस्तत्र कालः स्यात् पाशस्तस्य तु सम्मुखे। दक्षिणस्थः शुभः कालः पाशो वामदिगाश्रयः। यात्रायां समरे श्रेष्ठस्ततोऽन्यत्र न शोभनः। रात्रौ च वैपरीत्येन यथा रवौ रात्रौ दक्षिणस्यां कालः उत्तरस्यां पाशः इत्यादिक्रमेणोह्यम्। २८कलाये (मटर) शिम्बीभेदे, वैज॰। "विकसत्कलायकुसुमम्" माघः। कालकुसुममिति मल्लि॰ ध्रुवनामकवसोः २९ पुत्रभेदे पु॰। "ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः" हरिव॰ ३अ॰।

**कालक** न॰ काल-स्वार्थे क कलयति रक्ततां कल-णोदने ण्वुल् वा। १कालशाके भावप्र॰ तस्य कृष्णवर्णत्वात् तथात्वम्। २यकृति हेमच॰। निखिलदेहरक्तप्ररक्तत्वात् तस्य तथात्वम्। यथोक्तं भावप्र॰। "यदा रसो यकृत् याति तत्र रञ्जकपित्ततः। रागं पाकं च सम्प्राप्य स भवेद्रक्तसंज्ञकः"। "यकृत् प्लीहा च रक्तस्य स्थानं तद्धिस्थितम्। अन्यत्र संस्थितानां रक्तानां पोषकं भवेत्"इति च। ३देहस्थे कृष्णवर्णे (जडुल) ४चिह्नभेदे जलौकायां पु॰ अमरः ५अलगर्द्दे जलव्याले (कालढोंड़ा) सर्पे पु॰ शब्दर॰। अनित्ये वर्णे तेन रक्ते वाच्ये "कालाल" प॰ वन्॰। कालवर्णेन रक्ते ५पटादौ त्रि॰ तस्य वर्णस्यानित्यत्वात् रागेण रक्ततयाऽनित्यत्वाच्च तथात्वम्। स्त्रियां टाप्। "कालिका शाटी" सि॰ कौ॰। शीजगतितोक्ते ६ अमलराशिसंख्याभेदे पु॰ अव्यक्तशब्दे ४६७पृ॰ विवृतिः।

**कालकञ्ज** स्त्री नि॰ कर्म॰। कृष्णवर्णे वचभेदे शब्दच॰।

**कालकञ्ज** न॰ नि॰ कर्म॰। १नीलपद्मे। २दानवभेदे पु॰। "पौलोमैः कालकञ्जैश्च कूटयुद्धैरधिष्ठितम्" भा॰ व॰ १७१अ॰

**कालकटङ्कट** पु॰ कालरूपः कटङ्कटः। शिवे। "वैवस्वतो पटभी तास्तौ कालो कालकटङ्कट" भा॰ आनु॰१७अ॰ शिवनामे।

**कालकण्टक** पु॰ स्त्री काला कण्टकः कण्टकोऽस्य। १दात्यूहे (डाक) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष्। २पीतसारे हरे मेदि॰।

**कालकण्ठ** पु॰ कालः कण्ठोऽस्य विषपानात्। १शिवे च शि

गौरी विवाहदा। अक्तं यमिहोरायां सम्हौरांफल-निदम्" उदयकाले यदा होरा तदा उदयादारभ्यहोरागयनप्रयोजनन्तु "पादं खवर्ये चदकं समासे दिने स्वकीये चरखोनस्पम्। तुयं सहोरास्विति कालवीर्यसक्तं हि होरामितुयं पुरार्थैरिति"। युक्तं चैतत् मर्वेषादीना उदयादित. प्रवृत्तानां साइचर्याहारे या अभ्युदयादेव गणनीया" पीयूषा०।

**काला** स्त्री कालोवर्णोऽस्यास्य-अर्श०अच्। "कालात् वर्णे-ष्वेतु" वार्त्ति० कालशब्दस्यैव वर्णवाचित्वे ङीप् इष्टः न च अर्श आद्यजन्तत्वात् न ङीप्। १नीलिन्याम् २ कृष्णत्रिवृताया (कालतेओड़ी) ३कृष्णजीरके च अमरः फर परत्वेऽपि ङरी० स्त्री। कल-विक्षेपे णिच्-पचाद्यच्। ४मञ्जिष्ठायां मेदि० कुक्किकवृक्षे (कुलियाखाड़ा) रत्नमा०। ६कृष्णगन्धावृक्षे राजनि०७पाटलावृक्षे भावप्र०। ८दक्ष-प्रजापतिकन्याभेदे कश्यपपत्नीभेदे। "प्रजापते महाभाग। दक्षकन्यास्तयोदय॥ अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा" इत्यादिना भा० आ० ६५अ० ताः उक्ताः "कालायाः प्रथिताः सुताः कालकल्पाः प्रहारिणः। प्रविख्याता महावीर्या दानवेषु परन्तपा। विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च। क्रोधशत्रुस्तथैवान्ये कालकेया इति श्रुताः" कालाया अपत्यम् ढक्। कालेय तदपत्ये [ लवभेदे कालशब्दे विवृतिः

**कालांश** पु० कालरूपोंऽशः। पञ्चाशयां इस्ततायोग्ये काल-

**कालाक्षरिक** स्त्री काले यथायोग्यकाले अक्षरं वेत्ति ठक्। शिक्षिताक्षरे त्रिका०।

**कालागुरु** न० कर्म०। कृष्णागुरुणि अमरः तद्गुणादि भावप्र० उक्तं यथा "अगुरु प्रवरं लोहं राजार्हं योगजं तथा। वंशिकं क्रमिजं चापि क्रमिजग्धमनार्यकम्। अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णं च पित्तलम्। लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत्। कृष्णं गुणाधिकं तत्तु लोहवहारि मज्जति। अगुरुप्रभवः स्नेह कृष्णागुरुसमः स्मृतः"। तद्गुत्पत्तिदेशश्च प्राग्ज्योतिषदेश यथाह रघौ "चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः। तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः"।

**कालाग्नि** पु० कालः सर्वहिंसकोऽग्निः। १ प्रलयाग्नौ। कालानलप्रभृतयोऽप्यत्र २तदधिष्ठातरि रुद्रे ३ तत्तुल्ये पञ्च रुद्रे रुद्राक्षे। "पञ्चवक्त्रः स्वयं रुद्र कालाग्निर्नाम नामतः। अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात्। मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात्" तिथि० स्कन्दपु० रुद्रपरत्वे कालरुद्रशब्दे उदा० दृश्यम्।

**कालाग्निरुद्र** पु० कालाग्निरिव रुद्रः। सर्वसंहारके प्रलयाग्नितुल्ये रुद्रे तमधिकृत्यैव कालाग्निरुद्रोपनिषत् प्रवृत्ता। अभेदोपचारात् तदुपासके २ ऋषिभेदे वैदिक मन्त्राणां तद्दृष्टत्वात् तदार्षत्वम् कात्या० सर्वानुक्रमिकायामुक्तम्।

**कालाङ्ग** न० ६त०। १कालपुरुषस्याङ्गे। कालपुरुषशब्दे प्रमाणादि। कर्म०। २कृष्णवर्णदेहे न० कालमङ्गं यस्य। ३कृष्णवर्णाङ्गयुक्ते त्रि० "असिश्च कालाङ्गमकोषमप्रथम्" भा० वि०७अ०।

**कालाजिन** न० कालञ्च कृष्णमृगस्याजिनम्। १कृष्णसारमृगचर्मणि "कालमजिनं यत्र। २कालाजिनप्रधाने देशभेदे स च देशो वृह०सं०कूर्मविभागे दक्षिणस्यामुक्तः यथा "अथ दक्षिणेन लङ्काकालाजिनसौरिकीर्णतालिकटा"।

**कालाञ्जन** न० कालमञ्जनम्। कृष्णवर्णाधिक्ययुक्ते अञ्जनभेदे (काजल)"न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम्" कुमा०।

**कालाञ्जनी** स्त्री अज्यते अनया अनुज-करणे-ल्युट् ङीप् काली अञ्जनी पुंवद्भावः। रेचन्यां क्षुपभेदे राजनि०

**कालाण्डज** पु स्त्री० त्रि० कर्म०। कोकिले तस्याण्डजेषु (पक्षिषु) अतिकृष्णत्वात् तथात्वम्। "कालाण्डजकण्ठरागरक्तशुक्रचरारतिरणायमनाङ्कयाधिनि" दशक० स्त्रियां जातित्वात् ङीष्।

**कालातिरेक** पु०६त०। उचितसमयातिक्रमे संवत्सरातिरेके च। "कालातिरेके द्विगुणम् प्रायश्चित्तं समाचरेत्" मा०त० देवल.। कालातिरेके सम्वत्सरातिक्रमे- "संवत्सराभिशस्तस्य दुष्टस्य द्विगुणोदमः" इति मनुवचनेन वाक्यत्वात् दशवत्प्रायश्चित्तानि भवन्तीति न्यायात् कालातिक्रमकालात्ययादिकमप्यत्र "कालात्यये च कन्याया. कालदोषो न विद्यते" उद्वा० त० मलवल०।

**कालातीत** न० कालस्यातीतमत्यय अति+इण-भावे क्त ६त०। १ कालातिक्रमे। "कालातीते द्वया सम्भ्या बन्ध्यस्त्रीमैथुनं यथा" म०त० काशी०। अतीत कालोऽत्र निष्ठान्तत्वात् परनिपात २अतिक्रान्तकाले त्रि०। गौतमोक्ते कालात्ययापदिष्टापरनाम्न बाधरूपे ३हेत्वाभासभेदे कालात्ययापदिष्टशब्दे विवृतिः।

**कालात्मन्** पु० कालआत्मास्य । कालस्वरूपे परमेश्वरे । "कालात्मा कालकृद्विभुः" ॥ हरि० वि० ॥ वा कप् । कालात्मकोऽप्यत्र । कालेन तत्कृत आत्मा स्वरूपं यस्य वा कप् । २ कालकृतस्वभावके स्थावरजङ्गमादौ त्रि० "सात्त्विका राजसाश्चैव तामसा ये च केचन । भावा कालात्मकाः सर्वे प्रवर्त्तन्ते हि जन्तुषु । जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि । सर्वे कालात्मकाः सर्वं । कालात्मकमिदं जगत् । प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः । तासां विकृततायाश्च सर्वं कालात्मकं स्मृतम् । भा० आनु० १अ०

**कालात्ययापदिष्ट** पु० कालात्ययेनापदिष्टः ३ त० गौतमोक्ते हेत्वाभासभेदरूपे हेतुदोषे तल्लक्षणादिक गौ० सू० भाष्यादौ दर्शितम् यथा

"कालात्ययापदिष्ट कालातीत" सू०

"कालात्ययेन प्रयुक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानः स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम् । नित्यः शब्दः संयोगव्यङ्ग्यत्वात् रूपवत्, प्रागूर्द्ध्वञ्च व्यक्तेरवस्थितं रूप प्रदीपघटसंयोगेन व्यज्यते तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा । तस्मात् संयोगव्यङ्ग्यत्वात् नित्य शब्द इत्ययमहेतुः कालात्ययापदेशात् व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति न निवृत्ते संयोगे रूपं गृह्यते, निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते । विभागकाले सेयं शब्दव्यक्तिः संयोगकालमत्येतीति न संयोगनिर्मिता भवति । कस्मात् ? कारणाभावाद्धि कार्य्याभाव इति । एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति" । भा० । उक्तसूत्रं वृत्तौ त्वेवं व्याख्यातं यथा ।

"क्रममप्राप्तमतीतकाल लक्षयति । अतीतकालस्य समानार्थकत्वात् कालातीतशब्देनोक्तकालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतु एतेन साध्याभावप्रमालक्षणार्थ इति सूचित साध्याभावनिर्णये साधनासम्भवादयमेव बाधितसाध्यक इति गीयते । तथा वह्निरनुष्णः कृतकत्वादित्यादौ । न च बाधे व्याप्यत्वासिद्धस्य व्यभिचारस्वरूपासिद्ध्यन्यतरस्यैव दोषत्वमुचितमिति वाच्यं तदप्रतिसन्धानेन बाधस्य दोषत्वावश्यकत्वात् उपाधेरसङ्करेऽप्युपाधेरसङ्करात् । उत्पत्तिकालावच्छिन्नो घटो गन्धवान्, शिखरावच्छिन्नः पर्वतो वह्निमानित्यादावसङ्कराच्च साध्याभाववत्प्रत्यक्षतावच्छेदकावच्छिन्नकालस्य तत्र सत्त्वात् । परे तु घटः सकर्तृकः कार्य्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासते तत्र तदभावोऽसङ्कीर्णोदाहरणमिति वदन्ति" ।

मणिकृता तु बाधत्वेनायं व्यवहृतः तल्लक्षणादिकं तत्रोक्तं यथा

"बाधो न साध्याभाववत्पक्षकत्वं पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं वा पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वक्ष्यते अतएव साध्याभाववत्पक्षवृत्तित्वमपि न, असिद्धिसङ्कीर्णबाधाव्याप्तेश्च । किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं चेति विवक्षितविवेकेन साध्याभावप्रमैव दोषः सा च प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् प्रमात्वज्ञानं विना अधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च" ।

"कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा" भाषा० ।

**कालादर्श** पु० काल० कालस्वरूपकर्म्माङ्गत्वादि व्यादर्श्यतेऽत्र आ+दृश—णिच्—आधारे अच् । स्मृतिनिबन्धभेदे

**कालाध्यक्ष** पु० कालानां खण्डकालानामध्यक्ष.स्वगत्या प्रवर्त्तनात् । १ सूर्य्ये "कालाध्यक्षः प्रजाध्यक्षो विश्वकर्म्मा तमोनुदः" भा०व० ३० । सूर्य्यस्याष्टाधिकशतनामकथने । सर्व्वकालप्रवर्त्तके २ परमेश्वरे च ।

**कालानल** पु० कालःसर्व्वसंहारकः अनल. । १ प्रलयाग्नौ "दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि" गीता । २ नृपभेदे "सभानरश्चाक्षुषश्च परमेषुस्तथैव च । सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः । कालानलस्य धर्म्मज्ञः सृञ्जयोनाम विश्रुतः । सृञ्जयस्याभवत् पुत्रो वीरोराजा पुरञ्जयः" । हरिवं० ३१ अ०

**कालानलचक्र** न० कालानल इव हिंसकं चक्रम् । नरपतिजयचर्य्योक्ते ऽनिष्टादिज्ञापके चक्रभेदे तद्भेदादिकञ्च चक्रशब्दे वक्ष्यते ।

**कालानुनादिन्** न० कलएव कालः तं, काले वर्षाकाले वा अनुनदति अनु+नद—णिनि । १ भ्रमरे २ चटके ३ कपिञ्जले ४चातके पक्षिणि च मेदि० । स्त्रियां जातित्वात् ङीष्

**कालानुसारिवा** स्त्री कालेन वर्णेन अनुसृता सारिवा अनुसारिवा । १तगरमूले २शीतलीजटायाञ्च (शितकीलोप) रत्नमा० तयोः कालवर्णतया सारिवातुल्यत्वात्तथात्वम् ।

**कालानुसारक** न० कालं कृष्णवर्णं मृगमदमनुसरति गन्धेन अनु+सृ—ण्वुल् । १ पीतचन्दने कालानुसार्य्यके कालीयके(कलम्बक) भावप्र० २ समयानुसारिणि त्रि०

**कालानुसारिन्** न० कालं मृगमदमनुसरति गन्धेन दूरतो गच्छति अनु+सृ—णिनि । १ शैलजे गन्धद्रव्यभेदे शब्दरत्ना० २ समयानुसारके त्रि० स्त्रियां ङीप् ।

**कालानुसार्य्य** न० कालोमृगमदोगन्धेनानुसार्य्यो यस्य । तगरभेदे भावप्र० (कलम्बक)"कालानुसार्य्यं तगरं कुटिलं नहुषं तथा । अपरं पिण्डतगरं दण्डहस्ती च बार्हिणम् । तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु स्मृतम् । विषाप-स्मारशूलाक्षिरोगदोषत्रयापहम्" तत्रैव तद्गुणादिकमुक्तम् । स्वार्थे वा कप् । कालानुसार्य्यक १ कालीयके शैलजे राजनि० २ शिंशपावृक्षे (शिशु) मेदि० ।

**कालान्तर** न० अन्य काल मयू० नि०स० । १अन्यस्मिन् काले २उत्तरकाले "कालान्तरक्षमा" मनु० । ३सम-यान्तरस्थायिनि च ।

**कालान्तरविष** पु स्त्री० कालान्तरे दंशनकालात् दीर्घकाले विषं विकारकारि यस्य । मूषिके हेम० तस्य दंशनाद्दीर्घ-काले विषस्य विकारकारित्वात्तथात्वम् स्त्रियां ङीष् ।

**कालाप** पु०कालो मृत्युराप्यते यस्मात् आप—अपादाने घञ् ६त० । १ सर्पभोगे २ राक्षसे पुं स्त्री० भरत० स्त्रियां ङीष् । कलापं व्याकरणभेदं वेत्त्यधीते वा अण् । ३ कलापव्याकरणाभिज्ञे ४तदध्येतरि च त्रि० । कलापिना वैशम्पायनान्तेवासिभेदेन प्रोक्तमधीयते "कलापिनोऽण्" पा० अण् इनोलोप । ५ कलापिना प्रोक्ताध्येतृषु भूम्नि "उदगु कठकालापा" सि०कौ० ।६ तत्प्रोक्तवेदशाखाभेदे च

**कालापक** न० कालापस्य कलापिना प्रोक्तस्य शाखाभेदस्य धर्म्म आम्नायो वा "चरणाद्धर्म्माम्नाययोः" पा० वुञ् । १कलापिप्रोक्तशाखाभेदस्य २ धर्म्मे आम्नाये च

**कालाभ्र** पु० कर्म्म० । सजले तथाविधे मेघे सजलस्यैव मेघस्य कालत्वात् तथात्वम् "कालाभ्राभैः कटाक्षैररिकुलभय-दाम्" तन्त्रसा० । कालमेघादयोऽप्यत्र । ते गर्दभाना दूयकालमेवा" भा०आ०१८१अ० ।

**कालाम्र** पु०काल आम्रोयत्र । द्वीपभेदे "जम्बून् आम्रुतरान् वीर ! कालाम्रद्वीपमेव च" हरि० १५१अ० ।

**कालायन** त्रि० कालेन निर्वृत्तादि पक्षा०चतुरर्थ्यां फक् । कालनिर्वृत्तादौ ।

**कालायस** न० कर्म्म० अच् समा० । कृष्णवर्णे लौहभेदे । कालखौहशब्दे दृश्यम् । २लौहमले हेम० । "वक्त्रिणा ग्राम्यमाणं कालायसं निषिञ्चन्ति" भाग० ५,२६,२७,

**कालाशुद्धि** स्त्री कालस्य कर्म्मयोग्यत्वसम्बन्धाशुद्धि । समयाशुद्धौ कालस्य कर्म्मविशेषानर्हत्वप्रयोजके धर्म्म-भेदे सा च गुरुशुक्रास्तत्वादिकृता भवति । "वक्रातिचार वृद्धास्तबालत्वे गुरुशुक्रयो । गुरौ मकरसिंहस्थे चैव मासद्विमासयोः । लयोदयदिने पक्षे गुर्व्वादित्ये तथैव च । शुभाब्दे त्रिदिनोत्पाते कालाशुद्धिरुदाहृता" । ज्योत०प्र० । एतदुपलक्षणम् अन्यान्यपि तन्निमित्तानि तत्तद्ग्रन्थे उक्तानि तत्र कालस्य शास्त्रादेव तत्तत्कर्म्म-साधनत्वेऽवगते शास्त्रेण च कालविशेषस्य पर्य्युदस्तत्वाद-शुद्धत्वम् । "द्रव्यक्रियागुणादीनां धर्म्मत्वं स्थापयि-ष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्म्मता । श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते" भट्टवार्त्ति-कोक्तेः तस्य पुण्यत्वं तत्र रिक्तादिदोषराहित्ये अष्टमचन्द्रा-दिदोषराहित्ये मलमासादिराहित्ये च भवति अतस्तेषां पर्य्युदासात् कर्म्मविशेषे कालाशुद्धिः । तन्निमित्तज्ञापकञ्च रत्नाकरादिधृतं न्यायरत्नवाक्यम् म०तत्त्वे यथा "तत्र मलिम्लुच—गुरुशुक्रबाल्यवृद्धास्तमय—सिंहमकरान्त-रगुरुस्थिति—पूर्वराशिमागतातिचारिगुरुकवत्सर—पूर्व-राशिगमिष्यमाणातिचारिगुरुकपक्षत्रय—वक्रिगुरुकाष्टावि-शतिवासर—कम्पाद्यद्भुतोत्तरसप्ताह—सिंहादित्य—गुर्वा-दित्य—पौषादिमासचतुष्टयान्यतमैकद्वित्रितदधिकान्यतम-दिनवृष्ट्याकालिकवृष्ट्युत्तरैकत्रिसप्ताहान्यतमदिन—नि-षिद्धरूपसमयान्यत्वमिति"। म०त०"एषु प्रमाण वक्ष्याम । अत्र गच्छवर्द्धमान" "एकद्वित्रितदधिकान्यतमदिनवृष्ट्या-कालिकवृष्ट्युत्तरैकत्रिसप्ताहेत्यत्र उत्तरदिनत्वस्य पूर्व-दिननिरूप्यत्वात् उत्तरत्वपूर्वत्वयोर्विरुद्धतया नानात्वात् । अतोऽग्निमदिनादित्वप्राप्तिरिति" जीवमिश्रैर्व्याख्या-तम् । तच्चैकमेकदिनं वृष्टयवच्छेदात्पदच्छेदाभ्यां भिन्नमिति वाच्यं विशेष्यीभूतदिनस्यैकत्वेन प्रत्यभिज्ञानविरोधेन उपाधिमात्रभेदात् अन्यथा अपार्थिकवृष्ट्याद्याव-च्छिन्नवृष्ट्याभेदेनाभ्योन्याभावस्याप्यप्रवृत्तिलक्षणादि-स्यात्" तत्र वृष्टिदिनोत्तरदिनस्य निषेधविषयत्वे वृष्टि-दिनस्य कर्म्मार्हता स्यात् । तस्मात् विशेष्यावा वृष्टेरेको-त्तरत्वम्, न तु तदवच्छेदकदिनस्यापीति । तेनैकस्मिन् दिने वृष्टा तद्दिनमारभ्य द्वितीयदिनादौ तु अग्निम दिनमारभ्य सप्ताहपर्य्यन्तोक्ताः । तथा च व्यासः

मौनदिमेश्वराणां देवप्रतिष्ठामपि कर्णवेधम्। हित्वाद्य शुभकर्माणि कुर्यादतमे सिते। विवाहं मेखलाबन्धं यात्राञ्च परिवर्जयेत्"। अत्र यात्राञ्चेति चकारः पूर्ववचनोपात्तमन्यत्तदोक्तप्रतिषिद्धकर्माणि च समुच्चिनोति। "बाले शुक्रे, वृद्धे शुक्रे, नष्टे शुक्रे, जीवे नष्टे। बाले जीवे, जीवे सिंहे, सिंहादित्ये जीवादित्ये। तथा मलिम्लुचे मासि सुराचार्येऽतिचारगे। वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्"। एवञ्च कालाशुद्धौ विद्यारम्भं न कुर्य्यात् तद्विधानञ्च विष्णुधर्मोत्तरे। "सप्तमे पञ्चमे वर्षे ह्यष्टमे जगार्हने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्। रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनन्तथा। एवं सुनिश्चिते काले विद्यारम्भः प्रशस्यते" देवल "बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि। उद्वाहिताया कन्याया दम्पत्योरेकनाशनम्"। अस्तक इति शेषः। राजमार्त्तण्डे "सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पितादिषु वशिष्ठगर्गादयः प्राहुः"। पितादिषु—सिंहस्थकमघापूर्वफाल्गुन्युत्तरफाल्गुनीप्रथमपादेषु। प्रतिप्रसवमाह शातातपः "माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम्"। तत्रैव हेमाद्रिधृतमाण्डव्यवचनम् "श्रुतिवेधजातकान्नप्राशनचूडादिकं शुभं। रविभवनस्थे जीवे कार्य्योऽज्यौ विवाहस्तु"। माघ्यां मघायोगे तु सर्वैकमन्दिरगतावित्यादिना सर्वकर्मनिषेधात्। अथैव विवाहोऽपि श्रूयते तथाच राजमार्त्तण्डे दक्षः "गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखास्तुमीन्द्राः। यदा न माघी मघसंयुता स्यात् तदा च कन्योद्वहनं वदन्ति"। इत्यञ्च माघ्या मघायोगाभावेऽपि व्रतिषेधादि, मघास्थेऽपि गुरौ भवति विवाहस्तु गुरोर्भचार्परित्यागादेव तथाच माण्डव्यः "मघाख्यं परित्यज्य यदा सिंहे गुरुर्भवेत्। तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत्"। वात्स्यायनः "बालोद्वाहव्रतिबन्धादिव्रतचूडाव्रतादिकम्। यत्नतो वर्जयेन्नैव जीवे चक्रातिचारगे। कीर्त्तिभङ्गः प्रतिष्ठायां, भयं चौरात्तथाऽध्वनि। चूडोद्वाहे भवेन्मृत्युर्व्रते हानि,भयं स्टेहे। अतिचारे त्रिपक्षं स्यात् वक्रे पक्षचतुष्टयम्। न कुर्य्यात्तत्र यात्रादि गुरोर्वक्रातिचारयोः" गर्गः "गुरोर्वक्रातिचारे च वर्जयेत्तदनन्तरम्। यत्नतो विवाहादीनष्टाविंशतिवासरान्"। माण्डव्यः "यदा वक्रातिचाराभ्यां राशिं गच्छति वाक्पतिः। दिनानि सप्तविंशानि त्यक्त्वा कर्म्म समाचरेत्"। अत्रापि पूर्वं पूर्वः पक्षः श्रेयान्। राशिं—राश्यन्तरम् अन्यथा व्यर्थं स्यात्। अतएव न्यायरत्नेनापि पूर्वराशिगमित्यमात्रातिचारिगुरुत्वेत्युक्तम्। बृहद्राजमार्त्तण्डे "वक्रातिचारोपगताः कुजाद्या यद्यन्यराशौ,परिवर्जनीयाः। यथाक्रमस्थाः स्वस्थस्थिता वा न वर्जनीया यवना वदन्ति"। व्यवहारसमुच्चये ज्योतिश्चिन्तामणौ च हारीतः "कृताऽतिचारं यदि पूर्वराशिं नायाति मन्त्री विबुधाधिपानाम्। यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम्। अतिचारं गते जीवे वृषे वृश्चिककुम्भयोः। यशोद्वाहादिकं कुर्य्यात्तत्र कालो न दुष्यते"। ज्योतिस्तत्वतायां वाचस्पतिमिश्रः "पूर्वराशिं यदा त्यक्त्वा ह्यपूर्वे वत्सरे गुरुः। लुप्तकालः स विज्ञेयः परतोऽन्ये गतो यदा। मीने मेषे वृषे चैव तथा मिथुनकर्कयोः। अतिचारात्त दोषः स्यान्नियतं कालदोषजः"। इति निर्णये "कन्यावृश्चिकमेषेषु मन्मथे च झषे वृषे। अतिचारेषु कर्त्तव्यं विवाहादि शुभं सदा" इति मयूरकमित्युक्तम्। वराहसंहितायाम् "अतिचारं गतो जीवस्तत्रैव कुरुते स्थितिम्। तदा महातिचारः स्यात् लुप्तसम्वत्सरक्रियः। अतिचारेण योराशिर्लङ्घितो देवमन्त्रिणा। तदाद्यो वत्सरोलुप्तो योऽनर्हः सर्वकर्मसु"। तत्र वर्षे कर्म्मलोपत्वात् वत्सरो लुप्त इति तदाह योऽनर्ह इति। भुजबलभीमादिनिबन्धेषु "शुभं भवनमासाद्य यदातिक्रमते गुरुः। तत्र संवर्द्धिता कन्या सुख भर्त्तुः प्रमोदते" दीपिकायाम् "त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयाति। यदा,तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः"। त्रिकोणं नवपञ्चमम्। जाया-सप्तमं, धनं-द्वितीयं, लाभ-एकादशस्थानम्। रत्नकोषे "पञ्चोदश्वाहानि तथा त्रिपक्षो मासत्रिमासः वसु षट् च मासाः। एषोऽतिचारे कथितोऽपवादो भौमादिकानां परतश्चु चारे"। प्रतिष्ठाकाण्डे कल्पतरौ देवीपुराणम् "यथा जीवे स्थिते सिंहे तथैव मकरस्थिते। देवारामतडागादिपुरोद्यानस्वहाणि च। विवाहादि महाभागा भयदानि विनिर्द्दिशेत्। यदा द्वादशगे जीवे अष्टमे वाथ भास्करे। प्रतिष्ठा कारिता विष्णोर्महाभयकरी मता"। ज्योतिश्चिन्तामणौ देवीपुराणम् "सिंहस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत्। आरम्भञ्च न कुर्वीत महा-

भयकरं भवेत् । कूपारामतड़ागेषु पुरोद्यानगृहेषु च । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् । कारकोऽजते नाशं सन्तानं क्षीयतेऽचिरात्” । शुचिसर्व्वस्वे मकरस्थगुरौ प्रवर्त्तकं नरसिंहपुराणम् “विवाहोनैव कर्त्तव्यः सिंहसंस्थे गुरौ सदा । मकरस्थे च तत्कार्य्यं कल्याणं सर्व्वतोमुखं । तथा देवीपुराणम् “मकरस्थो यदा जीवो वर्जयेत् पञ्चमांशकम् । शेषेष्वपि च भागेषु विवाहः शोभनो मतः” । एतद्वाक्यं व्यवहारापरिस्फुटीतमिति कृत्यचिन्तामणिः । एतेनैतदनाकरं न भवति किन्तु मैथिलानामनाचारः इति स्वरसोऽवगम्यते । अतएव रत्नावल्यादिषु नीचस्थगुरावेव दोष उक्तः । गुरोर्नीचस्थत्वमपि त्रिंशांशमकरराशेः पञ्चमांशं यावदिति ज्योतिस्तत्त्वे ध्येयम् । रत्नावल्याम् ‘नीचस्थः सिंहगोवा यदि भवति गुरुः सूर्य्यराशौ च लीनः संयुक्तो वा यदि स्यात् दशमतदर्पितः क्षीणरूपोऽथ बालः । वास्तागेहं विवाहोत्सवमखगृहं यज्ञचूड़ादि सर्व्वं वापी चोद्यानकूपम् न भवति शुभदं यद्यदिष्टञ्च लोके” । श्रीपतिरत्नमालायां कृत्यचिन्तामणौ च वात्स्यः “शाखाधिपे बलिनि केन्द्रगतेऽथ वास्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम् । नीचस्थितेऽरिस्थगेऽथ पराजिते वा जीवे भृगौ व्रतविधौ स्मृतिकर्म्महीनः” । अस्य शाखाधिपस्य । तेन सामगानां कुजवारेऽप्युपनयनम् “सामवेदाधिपो भौमः” इत्युक्तत्वात् । कामरूपीयनिबन्धे स्मृतिसागरे देवीपुराणम् ‘मकरस्थो यदा जीवस्तदा त्रिंशद्दिनं त्यजेत् । त्यक्त्वा तु षष्टिदिवसं कुर्य्यात् कर्म्माणि मानवः” । रायमुकुटज्योतिःकालकौमुद्याम् यत्तु ‘मकरस्थं गुरुं यत्नात् सिंहवत् परिवर्जयेत् । देवारामतड़ागेषु पुरोद्यानगृहेषु च” इत्यादि देवलवचनं तदपि सिंहवत् परिवर्जयेदित्यनेन यथा सिंहस्थस्य गुरोस्त्याज्यता तथा मकरस्थस्यापीति गम्यते । सिंहस्थगुरोर्मघायुक्तमाघ्या तस्यामेव त्याज्यता अतो मकरस्थस्यापि गुरोस्तस्यामेव त्याज्यता इत्यवगम्यते । अतएव देवीपुराणम् ‘यथा जीवस्थिते सिंहे तथैव मकरस्थिते” इत्यत्र यथातथोपादानम् । तदपि देशविशेष एव दूषणम् तथाहि “गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्” । अतएवान्यदेशाभिप्रायेण भीमपराक्रमे ‘वापीकूपतड़ागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्कार्य्यं न दोषः कालजोपजः । कार्य्यं मकरगे जीवे विवाहाद्यखिलं शुभं । न तु सिंहगते जीवे कुर्य्याद्विप्रः कथञ्चन” । अत्र पूर्व्वोक्तनरसिंहपुराणवचने मकरस्थमात्रे विवाह उक्तः । अतएव तत्सारभूतं व्यवहारमात्रं विमथितं श्रीपतिनाहमुद्धरेति प्रतिज्ञाय समयाशुद्धौ मकरस्थवृहस्पतिदोषमनभिधाय केवलमुपनयने नीचस्थवृहस्पतिर्निषिद्धः । एतेन द्वैतनिर्णये श्रीपतिसंहितायां व्यवहारोपवृंहितमेव वचनं नच व्यवहारविरुद्धमिति । एतेन यत् मकरस्थगुर्व्वादौ विवाहादिविधायकं वचनं तदाचारविरहादनादरणीयम् इति वाचस्पतिमिश्रोक्तं ज्ञेयम् मकरस्थगुरौ प्रतिज्ञाव्यतिरिक्तकर्म्मनिषेधकश्रीपतिग्रन्थविरहात् । अथ तन्निषेधकमुनिवचनानि प्रामाणिकान्तरधृतत्वादुपादेयानीति चेत् तर्हि प्रतिप्रसववचनान्यपि तथा । एवञ्चातिचारे विवाहादिनिषेधकवचनानि श्रीपतिना लिखितानि नतु तदपवादकानीति तेन तान्यप्रामाणिकानीति यदुक्तं तदपि ज्ञेयम् प्रकृते पूर्व्वोक्तयुक्तेस्तौल्यात् भुजबलभीमे ‘जीवोऽर्केण युतः करोति मरणं बालाशुक्रोभागुरि नक्षत्रैकगतो वदन्ति यवनाः पादस्थितो देवलः । प्रायो गर्गपराशरादिमुनयो नेच्छन्ति चास्तंगते तस्मादस्तमिते सुरेन्द्रसचिवे नेष्टं विवाहादिकम्’ श्रीपतिरत्नमालायाम् ‘प्रागुद्गत शिशुरह्नस्त्रितयम् सितः स्यात् पश्चाद्दशाहमितपञ्चदिनानि वृद्धः । प्राक् पक्षमेव कथितोऽत्रिवशिष्ठगर्गैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः” । वृद्धशिशुत्वगन्तेति क्वचित्पाठः । सितः शुक्रः । इह—पश्चाद्दिशि । राजमार्त्तण्डे ‘भवेत् सन्ध्यागतः पश्चात् अस्तमेष्यन् दिनत्रयम् । दिनानि पञ्च पूर्व्वेण, तत्कृते कर्म वर्ज्जयेत् । बाले वृद्धे च सन्ध्यायां चतुःपञ्चत्रिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्ज्जयेत् । बाले वृद्धे च सन्ध्यायां नष्टे च भृगुनन्दने । दुर्भगा चासती वन्ध्या मृत्युयुक्ता फलं क्रमात् । बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् । नष्टे च मृत्युमाप्नोति सर्व्वमेव गुरावपि” । वृद्धे पञ्चदिनत्वकीर्त्तनमध्यापद्विषयं ज्योतिःपराशरेण भृगो पादास्तेऽपि दशाहविधानात् । एवं गुरावपि । रत्नमालादौ पक्षविधानात् तयोर्मते न सन्ध्यायाः पृथङ्निर्द्देशोऽपि वृद्धत्वेनैव तद्ग्रहणात् । दीपिकायाम् “गुर्व्वादित्ये, गुरौ सिंहे, नष्टे शुक्रे मलिम्लुचे । याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेत् ।

सूर्य्येप्रातिस्विकोक्ताः एवं शुभान्यानीति अन्यथा विशेषवचनवैयर्थ्यादिति वदन्ति। भोजराजः "वापीतडागगृहगोपुरदेवसद्मप्रासादवारिमठकूपविवाहचै-त्यान्। कर्त्तुं यथागमविधानविधिर्विधाता प्रोक्तस्तथैव कथयामि समासतोऽहम्। सुप्ते हरौ प्रकटशेषफणोप-धाने लक्ष्मीकराब्जपरिमार्जितपादपद्मे। मीने रवौ धनुषि चासमिते तथेज्ये वास्तुक्रियाविधिरसौ मुनिभि-र्निषिद्धः"। इज्योगुरुः। नारदः "वापीकूपतडागा-दिप्रतिष्ठायज्ञकर्म्म च। न कुर्य्यान्मलमासे च महादान-व्रतानि च"। दानपदं सामान्यदानपरमिति वदन्ति। तथाच स्मृतिः "अस्ते सन्ध्यागते बाले भृगौ वापि मलिम्लुचे। देवतादर्शनं दानं महादानं विवर्जयेत्"। लघुहारीतः "भृगावस्ते गुरौ सिंहे गुर्वादित्ये मलि-म्लुचे। त्यजेत् दानं महादानं व्रतं देवविलोकनम्"। एतद्वचनद्वयं कालविवेकेऽपि। अत्र दानमहादानयोरु-पादानात्" म० त०। मुहूर्त्तचिन्तामणिपीयूषधारादौ विशेष उक्तो विस्तरभयान्नोक्त स्ततएवावसेयः।

**कालिक** पुंस्त्री काले वर्षाकाले चरति ठञ्, के जले अलति अल—वा० इकन् ७त० वा। १ क्रौञ्चे बके शब्दरत्ना० स्त्रियां ङीष्। कालोवर्णोऽस्त्यस्य ठन् कालात् वर्ण-वाचित्वे जानपदा० नि० ङीष् ततः स्वार्थे क ह्रस्वः इति वा। कालिका २ देवीमूर्त्तिभेदे "तस्यां विनिर्गतायां तु कृष्णाऽभूत् साऽपि पार्व्वती" देवीमा० तस्याः कृष्णवर्ण-तयाविर्भावात्तथात्वम् विवृति कालिकापुराणे ६०अ०यथा "सर्व्वे सुरगणा सेन्द्रास्ततो गत्वा हिमाचलम्। गङ्गावतारनिकटे महामायां प्रतुष्टुवुः। अनेक संस्तुता देवी तदा,सर्व्वैरमरोत्करैः। मातङ्गवनितामूर्त्ति-र्भूत्वा देवानपृच्छत। युष्माभिरमरैरत्र स्तूयते का च भाविनी। किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति। एवं ब्रुवत्या मातङ्ग्यास्तस्यास्तु कायकोषतः। समुद्ग-ताऽब्रवीद्देवी मां स्तुवन्ति सुरा इति। शुम्भो निशुम्भो ह्यसुरौ बाधेते सकलान् सुरान्। तस्मात्तयोर्व्वधा-यार्थ स्तूयेऽद्य सकलैः सुरैः। विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा। भिन्नाञ्जननिभा कृष्णा साऽभूत् गौरी क्षणादपि। कालिकाख्याऽभवत् सापि हिमाचलकृ-ताश्रया"। ३ वृश्चिकपत्रवृक्षे ४ क्रमदेयवस्तुमूल्ये ५ मस्याम् ६ जटामांस्या ७ काक्यां ८ पटोलशाखायां ९ रोमावल्या १० शिवायाम् ११ मेघावल्यां स्त्री मेदि०। १२क्षीरकीटे हारा० १३ मस्यां शब्दरत्ना० १४ काकोल्यां १५श्यामापक्षिणि स्त्री राजनि०। १६ हिमाचलभा-र्य्यायां शिशिरायां हरीतक्याम् स्त्री मेदि०। १७चतुर्वर्ष-कुमारीभेदे अन्नदाकल्पः कालसङ्कर्षणीशब्दे विवृतिः। कालस्य भावः वा० वा वुण्। १८ कृष्णवर्णे स्त्री। १९ स्वर्णदोषे जटाधरः वह्निना दाहे यद्दोषात् स्वर्णस्य कृष्णता भवति सा च ताम्रादिधातुयोगे। "हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा" रघौ अग्नाविव कालिकाज्ञान-स्योक्तेस्तस्यैव तथात्वम्। काय जलाय अलति पर्य्याप्नोति अल—पर्य्याप्तौ ण्वुल् टाप् अतइत्वम्। २०कुज्झटिकायाम् भरत २१ नवमेघे स्त्री मेदि०। काले दीयते ठक्। २२ प्रतिमासदेयवृद्धौ (सुद)"प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता" नारदः। कं जलमलति भूषयति अल—भूषणे ण्वुल् टाप् अतइत्वम्। २३ सुरायां स्त्री हेमच०। कालोवर्णोऽस्त्यस्य ठन्। २४कालीयके कृष्णचन्दने न० शब्द-च०। प्रकृष्टः दीर्घःकालोऽस्य प्रकृष्टे ठञ्। २५ वैरे न० तस्य दीर्घकालस्थायित्वात्तथात्वम्। "वर्णे चानित्ये" इत्यधिकारे "कालाच्च" पा० कन्। कालक स्त्रियां टाप् अत इत्वम्। २६ कालिका अनित्यकृष्णवर्णयुक्त शाट्यादौ स्त्री "कालिका शाटी" सि० कौ०। कालेन नि-र्वृत्तः ठञ्। कालिक २७ कालनिर्वृत्ते कालकृते त्रि०। "विशेष कालिकोऽवस्था" अमरः। काले भवः ठञ्। २८ कालभवे त्रि०। उभयत्र स्त्रियां ङीप् इति भेदः।

**कालिकापुराण** न० कालिकाया माहात्म्यादिप्रतिपादकं पुराणम्। उपपुराणभेदे उपपुराणशब्दे दृ० तस्य तथात्व-मुक्तं तत्प्रतिपाद्यविषयाश्च

१अ० ब्रह्मर्षिनारदादिक्रमेण तत्पुराणसंप्रदर्शनम्। ऋषिप्रश्ने मार्कण्डेयोक्तिः। प्रजासृष्टि—ब्रह्ममनसः सन्ध्यासृष्टिः कन्दर्पसृष्टिः। तस्य ब्रह्मणा स्त्रीपुरुषयोर्मेल-नाय निदेशः। २अ०तस्य मन्मथनामादिनिरुक्तिः। तस्य हर्षणरोचनद्रावणशोषणमारणाख्यपञ्चबाणोक्तिः। सन्ध्यां दृष्ट्वा ब्रह्मणो मनोविकारः सन्ध्यादर्शनेन जातसात्त्विक-भावात् अग्निष्वात्तादीनामुत्पत्तिः। तां दृष्ट्वा विकारा-न्वितदक्षघर्म्मतः रतिनामककन्योत्पत्तिः।

३अ० ब्रह्मणः कामदेवशापः। रत्या कामेन विवाहः। ४अ० शिवमोहनाय ब्रह्मणा कामस्य नियोगः। शिवमोह-नाय ब्रह्मणा विष्णुमायाया स्तुतिः। दक्षकन्यासतीत्वेन तस्याः प्रादुर्भावप्रार्थनः दक्षेण महामायायाः स्तुतिः। ५अ०

विष्णुमायाया दक्षाय वरदानम्। ६अ० शम्भोर्दारग्रह-णाय ब्रह्मणा कामस्य नियोजनम्। तेन सह मारादिगणस्य प्रेरणम्। ७अ० कामेन स्मरमोहनप्रकारोक्तिः। ८अ० दक्षकृतमहामायास्तवः। सतीजन्मतत्पालनप्रकार तन्नामनिरुक्तिः। नारदेन सत्या हररूपवरप्राप्त्युक्तिः। ९अ०सतीकृतशिवव्रतम्। ब्रह्मणः शिवसमीपे दारग्रहणप्रार्थनम्। तदङ्गीकारे तत्परिणययोग्यतया दक्षकन्यायाः कथनम्। १०अ० सत्या नन्दीव्रतसमाप्तौ शिवेन तस्यै स्वस्य भार्य्याभवनरूपवरदानम्। दक्षसमीपे स्वेन सतीविवाहार्थं शिवेन ब्रह्मणः प्रेरणम्। ब्रह्मणो-दक्षं प्रति तत्प्रार्थने तेन तदङ्गीकारः। सतीविवाहार्थं ब्रह्मादिभिः सह शिवस्य दक्षपुरगतिः। ११अ० विवाहकाले सतीरूपं दृष्ट्वा ब्रह्मणोमनोविकारः। ततः संवर्त्तादिमेघादीनामुत्पत्तिः। ततो दक्षवाक्येन ब्रह्माणं प्रति शिवस्य कोपः। विष्णुना सान्त्वनम्। १२अ० ऋषिप्रश्ने ब्रह्मविष्णुशिवानामभेदोक्तिः। १३अ० शिवाय विष्णुना ब्रह्माण्डसंस्थानस्य दर्शनम्। तथा रूपदर्शनेन तेषामेकत्वोक्त्या ब्रह्माणं प्रति तस्य क्रोधनिवृत्तिः। १४अ०शिवसत्योर्विहारवर्णनम्। १६अ०दक्षयज्ञप्रारम्भः। तत्र शिवसतीनिमन्त्रणाभावे सत्याः पितरं प्रति कोपः। तत्र दक्षकोपेन सत्या देहत्यागः। १७तेन क्रुद्धशिवेन वीरभद्र रुद्रान् प्रति दक्षयज्ञनाशनायादेशः। तेन तद्यज्ञस्यनाशनम्। सतीविरहे शिवविलापः। १८अ०शिवस्य सतीविरहस्पर्शनम्। शिवरोदनाम्बुनो भूमौ पतने तद्धारणाशङ्कया देवानां शनिं प्रति तच्छोषणप्रार्थने तेन तस्याङ्गीकारः। तद्बाष्पेण वैतरणीनदीप्रादुर्भावः। सतीमृतदेहग्रहणपूर्व्वकं शिवस्य भ्रमणम्। शनिना सतीशवदेहावयवानां क्रमश खण्डनेऽङ्गभेदेन तत्तत्स्थानानां पीठत्वप्राप्तिः। क्रमशः सर्व्वसतीदेहपतने शिवस्य लिङ्गत्वप्राप्तिः। ब्रह्मणा तस्य सान्त्वनम्। १९ चन्द्रभागान्तिके शिप्रसरः शिप्रानदीसमुत्पत्तिः। चन्द्रभागानद्युत्पत्तिः। चन्द्रभागानामनिरुक्तिः। सप्तविंशतौ अश्विन्यादिषु स्त्रीषु रोहिण्यामिन्दोरत्यनुरागे अश्विन्यादीनां चन्द्रेण विवादः। तत्र २ ३ ८ १० १२ १६ २१ २६ भरण्यादिभिर्नवभिश्चन्द्रस्य भर्त्सने कृते चन्द्रस्य ताः प्रति यातनायां वज्रभीषणतारूपशापदानम्। सर्व्वासां दक्षसमीपे गतिः ताभिः चन्द्रदौरात्म्यस्य कथने दक्षेण चन्द्रं प्रति सर्व्वासु तुल्यवर्त्तनोपदेशेऽपि चन्द्रेण तथानाचरणे दक्षेण राजयक्ष्मणः गदमुत्पाद्य चन्द्राभिभवाय तस्य नियोगः। तस्य प्रवेशेन चन्द्रस्य क्षयः। चन्द्रक्षये ओषधीनामपुष्टौ यज्ञाभावात् वृष्ट्यभावेन प्रजाक्षयोक्तिः। २१ तदालोक्य दक्षसमीपे देवानागमने तदुपदेशेन राजयक्ष्मणा शीर्षकलानां अग्नीत्त्वादीनाञ्च निष्कासनम्। बृहल्लोहितानदीस्नानात् चन्द्रयक्ष्ममोक्षः। राजयक्ष्मस्थितिस्थानकथनम्। तत्पत्नीकथनम्। दक्षवाक्यानुसारेण चन्द्रमसो मासार्द्धे ह्रासवृद्धिप्रकारकथनम्। सूर्य्यविम्बेन चन्द्रवृद्धिकथनम्। शिवेन चन्द्रस्यैककलाधारणं ततश्च अग्नीन् स्वाया चौष चन्द्रे प्रवेशेन चन्द्रवृद्धिकथनम्। सीतानदीप्रादुर्भावः। चन्द्रभागानामप्राप्तिसमर्थनम्। निर्विण्णां सन्ध्यां प्रति विष्णूपासनार्थं वसिष्ठोपदेशः। सन्ध्यां प्रति विष्णोः प्रसादे तया तस्य स्तुतिः। तस्यै तेन वरस्य दानम्। विष्णोरुपदेशान्मेधातिथियज्ञाग्नौ तस्या देहत्यागः तच्छरीरस्य विष्णोराज्ञया सूर्य्यमण्डले गमनम्। सूर्य्येण तस्य त्रिधाकरणेन सन्ध्यात्रयकल्पनम्। मेधातिथियज्ञाग्ने अरुन्धतीसमुत्थान तन्नामनिरुक्तिः। २३अ०चन्द्रभागानदीमाहात्म्यम् अरुन्धत्या वसिष्ठेन सह विवाहः। २४अ०ब्रह्मादिभिः शिववैकल्यवारणार्थं योगनिद्राया स्तुतिः। विष्णुना शिवस्य सान्त्वनम्। निमेषादिपरार्द्धपर्य्यन्तकालमानोक्तिः। मन्वन्तरोक्तिः। प्रलयप्रकारः। सृष्टिप्रकारः। २५अ०सृष्टेर्विवृतिः। ब्रह्माण्डादिसंस्थानम्। २६अ०वराहकल्पे प्रतिसर्गः। २७अ० यज्ञवराहेण पृथ्वीधारणप्रकारः। २८अ० जगतोनिःसारत्वोक्त्या तत्त्वज्ञानेन मोक्षोपदेशः। २९ शिवगणानामुत्पत्त्यादि। ३० यज्ञवराहस्य धरारूपया तारया सह क्रीडनेन तदनुरागात् तद्देहत्यागेऽनिच्छा। तद्देहत्यागार्थं देवैर्विष्णोः स्तवः। वराहदेहनाशार्थं शिवस्य शरभमूर्त्तिधारणम् तेन तस्य युद्धे पृथिव्या नष्टप्रायताशङ्कया रोहितमत्स्यरूपेण विष्णोराविर्भावः। तेन पृथिवीवेदमुख्यादीनां धारणम्। शिवेन नानाविधगणानां सृष्टिः। वराहमूर्त्तेः शरभेण सह युद्धे तस्मान्नरनारायणयोरुत्पत्तिः। शिवेन वराहस्य वधः। शिवगणानां स्वरूपवर्णनादि। ३१अ० मृतवराहदेहावयवेभ्यो अग्निष्टोमादियज्ञकल्पनम्। वराहपुत्रत्रयस्य त्रेताग्निरूपेणोत्पत्तिः। ३२अ० स्वायम्भुवमनुं प्रति कपिलशापः। मनोर्विष्णूपासनम्। तत्समीपे विष्णोर्मत्स्यरूपेणागत्य वासस्थानप्रार्थनं, कुम्भतलादिषु तत्सरोवरपर्य्यन्ते क्रमशो वर्द्धमानस्य मत्स्यदेहस्याधारत्वाभावोक्तिः। ३३अ०मनुनाप्सु तदङ्गेन

तं प्रति तस्य स्वरूपज्ञानाय प्रश्ने तस्मै तेन आत्मस्वरूपस्य कथनम्। कपिलवाक्यानुसारेणाचिरेण भाविखण्डप्रलयापहारणार्थं मनुस्थेन दृढनौकानिर्म्माणस्य तत्र बीजसङ्ग्रहस्थापनस्योपदेशः। खड्गरूपेण च तन्नौकायाः समाकर्षणं कर्त्तव्यमित्युक्तिः। प्रलयान्ते जगतां शेषरूपेण धार्य्यतोक्तिः। ३४ अ० कूर्म्मरूपेण वराहशरभयुद्धेन नष्टमायायाभूमेः समीकरणम्। नरनारायणाभ्यां तपसा सूर्य्यादिस्थितिकरणम्। पूर्व्वसञ्चितबीजैः मनुना पुनः शस्यप्रवर्त्तनम्। ३५ अ० शिवस्य पूर्व्वगृहीतशरभमूर्त्तित्यागकाले अष्टाभिः पादैः सूर्य्याद्यष्टमूर्त्तिग्रहणम् तेन तस्याष्टमूर्त्तिनामता। शरभकायात् कपालिभैरवप्रादुर्भावः। तद्यजनप्रकारः। ३६ अ० रजस्वलायाः पृथिवीरूपवराहपत्न्याः वराहेण सङ्गमात् नरकासुरोत्पत्तिः। ३७ अ० जनकयज्ञात् सीताद्युत्पत्तिः। धरोपदेशेन जनकेन नरकस्य प्रतिपालनादि। ३८ अ० तस्य प्राग्ज्योतिषदेशे राजत्वकरणम् तद्देशसीमादि। ३९ अ० द्वापरयुगे उत्पन्नबाणासुरसंसर्गात् नरकस्यासुराचारः। नीलकूटे स्थितदेवीदर्शनार्थमागतवशिष्ठदर्शननिषेधाय नरकेण तद्देवीद्वाराच्छादाने कृते तं प्रति तेन जनितस्य मानुषरूपेण तेनैव तव वधो भविष्यतीति, वशिष्ठस्य शापदानम्। ४० अ० तस्य भगदत्तादिपुत्त्रोत्पत्तिः। वशिष्ठशापानुसारेण कृष्णेन द्वापरयुगे नरकस्य वधः। ४१ अ० मेनकायाः मैनकादिपुत्त्रशतस्य कालीनामककन्यायाश्चोत्पत्तिः। नारदेन तस्याः शिवविवाहयोग्यत्वस्य तद्देहार्द्धहरत्वस्य च हिमाचलसमीपे कथनम्। ४२ अ० शिवप्रवरस्यागेन हिमवत्प्रस्थे शिवमतिः। शिवशुश्रूषार्थं हिमाद्रिणा सखीयुताकालीनियोजनम्। देवानां तारकासुरपीडनकथा। तद्वधाय देवप्रार्थितब्रह्मणा शिवस्य पार्व्वतीसङ्गमात् उत्पन्नतेजोजात् कुमारात् तस्य वधो भविष्यतीत्युक्तौ तया सह शिवस्य मेलनार्थं शक्रेण कामस्य प्रेषणे कृते तेन कालीसन्निधाने हरस्य मनसोविकारे जनिते शिवेन ललाटनेत्रोत्थापितेन वह्निना तस्य दाहः तद्भस्मधारणञ्च। हरनेत्रोत्थिताग्नेः षाड्वाग्निरूपेण सिन्धुप्रवेशः। ४३ अ० नारदोपदेशेन काल्याः शिवाराधनार्थं पित्रोः समीपे वनगमनप्रार्थना। तस्या उमानामप्राप्तिकारणोक्तिः। तदाराधनेन तुष्टस्य हरस्य ब्रह्मचारिवेशेन तदन्तिके आगतस्य तत्कर्त्रीं प्रति कालीतपसःप्रयोजनप्रश्नः। तच्छ्रुत्वा ब्रह्मचारिणा हरस्य निन्दनेन अन्यपतिवरणोपदेशः। तच्छ्रवणे तं प्रति क्रोधात् काल्या शिवस्वरूपादेः कथनम्। शिवस्य निन्दाश्रवणापराधमार्ज्जनाय काल्या तस्य स्तुतिः, अन्यत्र गमनोद्योगश्च स्वरूपग्रहणेन शिवेन तस्याः निवारणम् वरदानञ्च। ४४ अ० काल्याः शिवं प्रति कन्यायाः पितृदेयत्वोक्त्या पितृसमीपे प्रार्थनकर्त्तव्यतोक्तिः। काल्यास्तपःफललाभे स्वगृहगतिः। शिवेन सारुन्धतीकसप्तर्षीणां तत्कृत्ये नियोजनम् तैर्हिमाचलं प्रति काल्याः शिवेन विवाहदानार्थप्रार्थना तेन तथाङ्गीकारे शिवेन कालीविवाहः। भिन्नाञ्जननिभायाः काल्याः गौराङ्गत्वप्राप्तिकथा। ४५ अ० अर्द्धनारीश्वरमूर्त्तिप्रादुर्भावः तन्मूर्त्तिवर्णनम्। अ० ४६ कालीशिवयोर्मैथुनानिवृत्तौ देवप्रार्थितेन हरेण अमले तेजउत्सर्गः। तदुत्सर्गकाले तेजोद्वयस्य हिमप्रस्थे पतनात् ततो भृङ्गिमहाकालभैरवयोरुत्पत्तिः। देवैर्मैथुनविघ्ने कृते कुपितया काल्या देवानां स्वस्वभार्य्यासु अपत्याभावरूपशापदानम्। हरोपदेशेन कालीज्येष्ठभगिन्या गङ्गायां वह्निना हरोत्सृष्टतेजोनिषेकः। गङ्गया स्कन्दविशाखयोर्द्वयोः पुत्त्रयोः प्रसवः ततस्तयोरेकत्वोक्तिः। जातमात्रस्य तस्य शरवणे गङ्गया त्यागः। कृत्तिकाभिः स्तनदानेन तस्य पोषणम्। ततः काल्यै तत्पुत्त्रदानम्। मैथुनात् निवृत्तया गलितवस्त्रया पूर्व्वं द्वारि नियुक्तयोर्भृङ्गिमहाकालयोः स्वपुत्त्रयोर्दर्शनेन लज्जितया काल्या तयोर्मर्त्यजन्मप्राप्तिरूपे शापे दत्ते निरागोभ्यां ताभ्यामपि शिवाशिवयोर्मानुष्यप्राप्तिशापस्य दानम्। पौष्यपुत्त्रत्वेन चन्द्रशेखरनाम्ना शिवजन्म। ४८ अ० काल्याः ककुत्स्थभार्य्यायां जन्म तस्यास्तारावतीति नाम। पौष्यतारावत्योर्विवाहः। ४९ अ० तारावत्यां कामुकस्य कापोतमुनेर्वञ्चनाय चित्राङ्गदानामस्वभगिन्याः स्ववेशेन प्रेरणे तेन तस्याः सुतद्वयस्योत्पादनम् चित्राङ्गदोत्पत्तिकथा। •

५० अ० पश्चात् तस्याः स्वपच्छ्लं ज्ञात्वा क्रुद्धकापोतमुनिना कपालिना ते पुत्त्रौ जनयिष्येते इति तारावतीं प्रति शापे दत्ते तदनुसारेण कपालिवेशधारिणा शिवेन तारावतीदेहे कालीं प्रवेश्य तया सह सङ्गम्य वेतालभैरवयोरुत्पादनकथा। नारदात् श्रुतवृत्तान्तेन चन्द्रशेखरस्नेहेन तयोः ज्येष्ठस्य भैरवेति कनिष्ठस्य वेतालेति नामकरणम्। ततो वृद्धे तु उपरिचरः दमनः अलर्क इति त्रयः पुत्त्रास्तारावत्यां चन्द्रशेखरस्य बभूवुः। ५१ अ० चन्द्रशेखरस्य पौरजनैरपि शिवपुत्त्रयोर्वेतालभैरवयोः स्नेहाभावेन तयोर्निर्वेदः। कापोतमुनेरुपदेशात् तयोः शिवाराधनाय [illegible] कापोतेन

तदुपासनास्थानकथनम् । तत्रादौ शारदायाः मुख्यत्वमुक्त्वा अन्यानि कामरूपादीनि तीर्थानि तत्स्थानत्वेन कथितानि शिवोपासनाप्रकारः तदुपदेशानुसारेण ताभ्यां स्वजनकस्य शिवस्याराधनम् । ताभ्यां तथाचरणे शिवेन तदुद्देशेन गाणपत्यपदलाभवरदानम् । ५२अ० कालीपूजनार्थं शिवेन तयोर्नियोगः । ५३, ५४, ५५, ५६, ५७,अ० कालीपूजा तत्पूजास्थानविशेषोक्तिः । ५८अ०कामाख्यादेः विशेषफलोक्तिः । ५९अ०तस्याअङ्गमन्त्रादि । महिषमर्दिनीध्यानपूजादि । तस्या पूजाविधिः । महिषासुरवृत्तान्तकथनम् । ६०अ०देव्या समीपे हननकाले महिषासुरवरप्रार्थना । महिषस्य पूर्व्वं दृष्टो उग्रचण्डामूर्त्तौ, पश्चात् कालीमूर्त्त्या, एतत्कल्पे दुर्गामूर्त्त्यौ च विनाशमोक्तिः । शिववरात् रम्भासुरात् महिष्यां महिषासुरोत्पत्तिः । पित्राराधितशिववरेण तस्यैश्वर्य्यप्राप्तिः । ६१अ० अष्टादशभुजोग्रचण्डाया प्रादुर्भावः । तस्या एव उग्रतारारूपत्वम् । तस्याध्यानपूजापीठयन्त्रादि । कौशिकीप्रादुर्भावः तद्रूपमन्त्रादि । शिवदूतीप्रादुर्भावः तद्रूपमन्त्रपूजादि । ६२अ०कामाख्यानामनिरुक्तिः । मधुकैटभोत्पत्तितन्नामनिरुक्ती । विष्णुना तयोर्वधप्रकारः । तन्मेदसोत्क्षेपनेन पृथिव्याश्चताकरणात् मेदिनीति नाम प्राप्तिः । कामाख्यातीर्थोत्पत्तिः । नीलादिपर्व्वतोत्पत्तिः । शिलारूपेण ब्रह्मादीनां तत्र स्थितिः । तत्रत्यकामकुण्डादिनानातीर्थकथनम् । ६३अ० कामाख्यामन्त्रपूजाविधिः । तत्र जयन्त्याद्येकादशमूर्त्तिपूजा-उग्रचण्डादिनवशक्तिपूजाविधिः । त्रिपुराध्यानपूजाप्रकारः । ६४अ० कामेश्वरीमूर्त्तिध्यानपूजाविधिः । ६५अ०शारदीयापूजाविशेषविधिः । ६६अ०कामाख्याङ्गन्यासादिविधिः । ६७अ०वलिच्छेदनप्रकारनिरूपणम् । देव्यै दत्तवलेस्तद्गणत्वप्राप्तिः । काणखञ्जादीनां वलिदाने निषेधः । ६८अ० षोडशोपचाराः । तत्रासनादिषु वस्त्रांशवर्जं गन्धपुष्पादौ विशेषः । ७०अ०नैवेद्यद्रव्यादि । ७१अ०प्रदक्षिणप्रणामप्रकारः । ७२अ०कामाख्याकवचम् । ७३अ०मातृकान्यासविधिः । ७४अ०अष्टचा योनिमुद्रास्वरूपाणि तद्दर्शनफलञ्च । मन्त्ररहस्यम् । तद्यन्त्रधारणविधिः । बालात्रिपुरामन्त्ररूपपूजाविधिः । त्रिपुरभैरव्या पूजादि । ७५अ० त्रिपुरभैरव्या पुरश्चरणहोमादिविधिः । ७६अ० मन्त्रशोधनप्रकारः । तत्र सिद्धसाध्यादिचक्रवर्ग्गचक्रादिकथनम् । एवं शिवोपदेशं प्राप्तयोर्वेतालभैरवयोर्वशिष्ठोपदेशेन कामाख्यातीर्थगतिस्तत्र पुरश्चरणादिसमाप्तौ देव्याः प्रसादे तयोर्मानुषत्वत्यागेन देवत्वप्राप्तिः । शिवयोः सेवकत्वप्राप्तिश्च । ७७अ०कामरूपस्थनन्दिकुण्डादिनानातीर्थमाहात्म्यम् । तत्रत्यजटोदकानदीनामनिर्व्वाचनम् । नवतोयानदीनामनिरुक्तिः "अगदनदमाहात्म्यादि । ललितानामनिरुक्तिमाहात्म्यादि । ७८अ० तत्रत्यमङ्करीनदीमाहात्म्यादि । हस्तिपादगिरिचन्द्रिकानदीफेनिलाख्यमदनानदीमाहात्म्यादि । भद्रानदीसुभद्रानदीमानसवैरटगिरिभैरवीनदी वर्षणानदीमाहात्म्यादि । त्रिस्रोतः कपोतकुण्डवारुणकुण्डतत्पावनमाहात्म्यादि । वरनदीक्षीरोदानीलानदीखण्डिकाचन्द्रिकानदीमाहात्म्यादि । मन्तरावककुण्डमहाङ्गकुब्जपीठमणिकूटगिरिलौहित्यब्रह्मपुत्रादिमाहात्म्यादि । भद्रकामाचलकामेश्वरलिङ्गपुनर्भवकुण्डहयग्रीवशिलागोकर्णशिवलिङ्गकेदारलिङ्गकमलासिद्धमाहात्म्यादि । हयग्रीवमन्त्रादि । ७९अ० तत्रत्यदर्पणसरोदर्पणनदाग्निमानगिरिचक्रकुण्डकणकरवायुकूटाचलचन्द्रकूटाचलसोमकुण्डनन्दनाचलमत्स्यध्वजकौर्मीकुण्डसदामृतकुण्डमणिकूटमणिकर्ण लिङ्गसङ्गमानदीमत्स्यध्वजकुशाचलसमितानदीकामवरश्वरःसुकान्ताचलरत्नकूटाचलपाण्डुनाथभैरवपाण्डुनाथाचलमग्नकुण्डनीलकूटाचलोग्रतारास्थानमाहात्म्यपूजादि । कर्णटाचलशिलाचलकज्जलाचलचन्द्राचलकपिलभङ्गिकानदीदमनानदीदेवाचलाकाशगङ्गास्थावरसरोदुर्ज्जयाचलकोमकाचलकान्तानदीदिव्यकुण्डपुष्करिणीविटङ्ककलिङ्गसन्ध्याचललिताानदीमाहात्म्यादि ८० अ० दीपवतीनदीशृङ्गाटगिरिसिद्धत्रिस्रोतोनदीमहावेदिकाभट्टारिकानदीनाटकाचलस्थसरःसरित्स्वर्णादिकुमारिकानदीदेवगङ्गासर्व्वनदीश्रीनदीविश्वनाथलिङ्गविश्वदेवीमूर्त्तिमाहात्म्यादि । सोमाशनानदी सितगङ्गाललितकान्तालिङ्गतीर्थललिताकान्तोग्रतारामूर्त्तिपूजामाहात्म्यादि । ललितकान्तालिङ्गमध्यस्थचण्डिकापूजाविधिः तत्र स्वविष्णुमूर्त्तिभेदतत्पूजाप्रकारादि । ८१अ० कामरूपस्थतीर्थसेवनेन सर्व्वेषां निर्व्वाणादिप्राप्तौ यमेन स्वकार्य्याभावकथने ब्रह्मादिसमीपगमनेन तन्निवारणोपायचिन्तनम् । ब्रह्मप्रार्थितेन शिवेन कामरूपस्थतीर्थेभ्य सर्व्वलोकोत्सारणार्थं गणैः सह उग्रताराया नियोजनम् । उग्रतारया च तत्रस्थवसिष्ठोत्सारणे कृते वसिष्ठेन तां प्रति च कोपाद्वाम्यतानाममार्गोपास्यतादिरूपशापदानम् । कामरूपस्य म्लेच्छाक्रान्तत्वशापदानम् कामाख्यातारागमयोश्च चिरकालादिशापदानम् । तेन शापेन उग्रतारा वहिर्गतागतानचाच

मखेश्वरी प्राप्ता उग्रताराऽपि तदवधि वाममार्गरता शिवस्य मखेश्वरतिस्तदवधि जाता वशिष्ठशापाच्च तत्रत्यस-र्वतीर्थगुप्तिः लौहित्यमात्रस्य तत्रमाहात्म्यप्रस्थितिः। ८२अ० लौहित्योत्पत्तितन्माहात्म्यादि। जाम-दग्न्योपाख्यानम्। ८३अ० तत्कृतमातृवधपापनिर्मो-चनेन लौहित्यप्रशंसा। पूर्व्वकल्पेऽनुजकयाण्वासुर-योर्भृङ्गिमहाकालरूपगणत्वप्राप्तिकथा। ८४अ० राज-नीतिकथनम् दुर्गादिकरणप्रकार ८५अ०। प्र-कारु राजाहस्तिप्रकार। नृपकर्त्तव्यदुर्गापूजाविशेष कालाः। तत्पूजाप्रकारः नीराजनप्रकार।८६ अ०पुष्याभि-षेकप्रकार. ८७अ०शक्रध्वजोत्थानविधि। ८८ दशहरा-यां विष्णोरिष्टिप्रकारः। श्रीपञ्चम्यां लक्ष्मीपूजाविधि वृत्रार्थकाचारविशेषाः। द्वादशविधपुत्रविधिः। दत्तकादीना पञ्चीत्वा संस्कारकरणे पुत्रत्वप्राप्तिः। पितृगोत्रेण संस्कारे कृतेऽपि पुत्रत्वाभावः। पञ्चीश्गोत्रेण चूड़ादिसंस्का-राभावे दासत्वम्, पञ्चमवर्षादूर्द्धग्रहणे न पुत्रत्वसिद्धिः। पञ्चमवर्षीयग्रहणे तत्र पुत्रेष्टिविधानम्। दासीपुत्र विशेष। शूद्राणां पुराणादिश्रावणेऽनधिकार। सर्व्व पुरोहितलक्षणम्। विशिष्य नृपकर्त्तव्याचारभेद। आ-मुष्कामस्य कर्त्तव्याचारः ८९अ०। अपुत्रस्य गतिर्नास्तीति नन्दिगणउपदेशात् वेतालभैरवयो पुत्रोत्पादनाभिलाषे जाते-भैरवस्य ऐर्श्वया सङ्गमे सुरेशनामपुत्रोत्पत्तिः। तपसा तस्य-विद्याधराध्यक्षताप्राप्तिः। तस्य छतराष्ट्रकन्यायां देवसेनना-मपुत्रोत्पत्तिः। तत देवसेनादिवंशवर्णनम्। तद्वंश्यविजयेन खाण्डवनस्य निर्म्माणम्। अर्ज्जुनेन वह्निप्रीत्यर्थं तस्य दाहनम्। ९०अ० वेतालस्य कामधेनौ वृषभरूपपुत्रोत्-पादनम्। तस्य भङ्गनाम्ना भृङ्गित्वेन शिववाह-नताप्राप्तिः। तस्य वंशवर्णनम्। वेतालवंशोद्भवा एव सर्वे गावइत्युक्ति ततउपसंहार"। इत्येते प्रधान भूताः पदार्थास्तत्रत्याः प्रसङ्गागताश्चान्येऽपि पदार्था अ-भिधेयाः सन्ति विस्तारभयान्नोक्ताः

अत्रेदं चिन्त्यते ८९,९०अ०वेतालभैरवयोर्विभिन्नवंशकथने स्थिते दत्तकचन्द्रिकादौ भैरवपुत्रस्यैव वेतालेन ग्रहण-श्रायपुत्रकरणप्रतिपादकवाक्यानि यान्युद्धृतानि तानि निर्मूलानीत्यवगम्यते। पितृगोत्रेत्याद्यिवचनानां तत्र वा निर्मूलतायुक्ता क्वापि कालिकापुराणाद-न्यतमूलिकैव ८९अ० तद्वचनानां प्रत्यक्षत उपल-भ्यमानत्वात् इति। कालीपुराणमप्यत्र न०।

**कालिकाव्रत** न० कालिकायाः प्रीत्यर्थं व्रतम्। पुराणोक्ते व्रतभेदे

"ऋष्युवाच। "विधानं चास्य मे ब्रूहि कालिकाया व्रतस्य च। ममोपदिश्यतामेव तद्व्रतञ्च करोम्यहम्। तस्यास्तद्वचनं श्रुत्वा प्रत्युवाचाथ सा तदा। शुक्लकाले समारभ्य कृष्णपक्षे चतुर्द्दशीम्। सकल्पञ्च विधिना पूर्व्वं ममावास्या व्रतं चरेत्। समारभ्य गुणैकेन द्विगुणं परिशोधयेत्। न रात्रौ भोजनं कार्य्यं वामहस्ते भुजि-क्रिया। सिद्धमन्नं रात्रिकाले दग्धमीनञ्च सर्व्वदा। वर्ज्जयेत् पिष्टकं किञ्चित् रक्तशाकञ्च चाम्लकम्। द्विषट्का विप्रजायाश्च सधवा भोजयेत्तत। एव क्रमेण कृत्वा तु कतिकालं नयेद्व्रतम्। ततः शुद्धदिने प्राप्ते भौमाख्ये मन्दवासरे। यथाशक्त्युपचारैश्च पूजां कुर्य्या-द्विधानतः। तथापराह्णकाले तु सन्ध्योपसमये तथा। रात्रौ तु कदलीकाण्डे गृहं निर्माय प्राङ्गणे। तस्य मध्ये समारोप्य कालिकां पूजयेत् सदा। पाद्यार्घ्याचम-नीयैश्च गन्धपुष्पादिभिस्तथा। धूपैर्दिव्यप्रदीपैश्च नैवेद्यै र्विविधैस्तथा। पिष्टकं चैव सिद्धान्नं व्यञ्जन दग्धमीनकम्। निवेद्य सकल देव्यै च बलिं दत्त्वा प्रणम्य च। तदन्न व्यञ्जनं सर्व्वं नैवेद्यादि बलिं तथा। महारण्ये प्रदातव्यं सर्वैतत् व्रतमुत्तमम्। वैणवे कदलीमूले वा कुर्य्यात् कालिकाव्रतम्। कार्य्यसिद्धिर्भवेत् तस्य भविता मति सत्तमा"।

**कालिकाश्रम** न० ६त०। भारतप्रसिद्धे विपाशानदी-तीरस्थे तीर्थभेदे "कालिकाश्रममासाद्य विपाशायां कृतोदकः। ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात्" भा०अनु० २५अ०।

**कालिङ्ग** न० केन जलेनालिङ्ग्यते आ+लिगि—कर्म्मणि घञ् ३त०। (तरमुज) मध्यस्थजलके फलभेदे। "कालिन्दं कृष्णबीजं स्यात् कालिङ्गं च सुवर्त्तुलम्। कालिङ्गं ग्राहि हृत्पित्तशुक्रदृक्शीतलं गुरु। पक्वं तु सोष्णं सक्षारं पित्तलं कफवातजित्" भावप्र० तत्पर्य्यायस्वरूप गुणादिकमुक्तम्। "कलिङ्गे भव: अण्। २कलिङ्गदेशोद्भवे त्रि० स्त्रियां ङीप्। तद्देशानां राजा अण्। ३कलिङ्ग-देशभूपे।"प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः" रघु। "वर्गैरास्मेयाद्यै कूरयङ्पीडिते क्रमेण त्वया। मावलोमार्गधिकः कालिङ्गस्य ययं यान्ति" वृहत्सं०। "निर्वृत्तयत् कालिङ्गं गान्धाराधिपतिं तथा" हरि०

१११७अ०। षष्ठ्युत्त अणोलुक्। कलिङ्गा इत्येव तद्राजेषु तद्वासिषु च भूम्नि। क्वचिन्न लुक्। "कारस्करान् माहिषकान् कालिङ्गान् केरलांस्तथा" भा० क० ४४अ०। "कोशलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा" ४५अ०। "कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे।। दक्षिणस्यां महेशानि!। कालिङ्गं परिकीर्त्तितः" इत्युक्तदेशभेदे एतत्परतयैव प्रागुक्तभारतवाक्ये लुगभावो न कल्पनीयः। ३ जलमालिङ्गति आ+लिगि—अच् उप०स०। ४हस्तिनि ५सर्पे च पुंस्त्री स्त्रियां जातित्वात् ङीष्। ६भूमिकर्कारौ पु०मेदि०। "कालिङ्गोलिङ्गवान्यः स्यात् भग्नः स्वल्पाङ्गकोमलः" इति सुश्रुतोक्ते ७लोहभेदे पु०। ८राजकर्कट्यां स्त्री गौरा०ङीष् मेदि०। स्वार्थे क अत इत्त्वम्। कालिङ्गिका त्रिवृति(तेओडी) राजनि०।

**कालिदास** पु० ६त० संज्ञायां ह्रस्वः। रघुवंशादिकाव्यकारके महाकविभेदे तद्वृत्तान्तकाचादिकछपत्रे "इतः पूर्वं संवत्सरनामकशाकाब्दप्रवर्त्तको भारतवर्षे मालवदेशे उज्जयिनीनामराजधान्यामतीवगुणधाम विक्रमादित्यनामा नृपतिरासीत्। तस्य धन्वन्तरिप्रभृतयो नव कविवराः सभासदो बभूवुः। तेषु कालिदास एव प्रथितयशा महाकविरासीत्। तेन च रघुवंश-कुमारसम्भव-मेघदूताभिधं काव्यत्रयं, स्मृतिचन्द्रिकाभिध उत्कलदेशप्रचलितो वेदोक्तकर्म्मप्रतिपादकग्रन्थो ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निरमायि। अनन्तरञ्च मालविकाग्निमित्र-विक्रमोर्वशी-शाकुन्तलाभिधानि दृश्यकाव्यानि प्रणीतानि। एतच्च तत्कृतज्योतिर्विदाभरणग्रन्थे शेषाध्याये स्पष्टमुपलभ्यते यथा—

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत्" इति। "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटखर्[क]र्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य"। "यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी"।

"शङ्कादिपण्डितवराः कवयस्त्वनेके ज्योतिर्विदः सममवंश्च वराहपूर्वाः। श्रीविक्रमस्य बुधसंसदि मान्यबुद्धेस्तैरप्यहं नृपसखा किल कालिदासः"। "काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं जातं ततो ननु कियच्छ्रुतिकर्म्मवादः। ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव" इति "वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ संमिते मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः।" इति च अनेन ३०६८ अष्टषष्ट्युत्तरत्रिसहस्रवत्सरात्मके कलेरब्दवृन्दे याते तद्ग्रन्थकरणं व्यक्तम्। इदानीञ्च कलेर्गताब्दाः ४९७५ तेषु निर्दिष्ट ३०६८ वत्सरयोजितेषु १९०७ वर्षाः समायान्ति। तेन इतः १९०७ वर्षगणात् पूर्वं कालिदासकृतितो ज्योतिर्विदाभरणं जाततः पूर्वं रघुवंशादिकमभूदिति प्रतिभाति। एतत् ग्रन्थैर्यद्यपि दृश्यकाव्यत्रयकरणं न प्रतीयते तथापि दृश्यकाव्यानां प्रागुक्तानां ज्योतिर्विदाभरणग्रन्थात् पश्चात् काले कालिदासकृतत्वेन न तेषां तत्र समुल्लेखः किन्तु तत्तद्ग्रन्थस्यैव तत्कृतत्वं व्यक्तमेव। शृङ्गारनलोदययोर्यदि तत्कालिदासकृतत्वं तदा तत्र पराचीनतया न तत्रोल्लेखः। कालिदासश्च कतमस्मिन् कतमञ्च जनपदमलञ्चकार तन्नाकलयामः। किन्तु तस्य चरितविषयेऽशेषे भूयिष्ठप्रवादमेवमैतिह्यमस्ति। तदत्र सर्वत्र विज्ञापनाय प्रदर्श्यते। काचित् विदुषी कन्या विवाहार्थं पित्रानीतान् बहून् पात्रभूतान् द्विजान् वादविचारेण पराजिग्ये। एवम् आगत्यागत्य तस्याः सकाशात् विचारे पराजयमाप्ताः प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभयेनेतरे वरा यदा नैवागन्तुमैच्छन् तदा तत्पित्रा विचाराभावेनैव आगतमात्राय पात्राय कन्या देयेति प्रतिज्ञाते पूर्वपूर्ववरानयने निष्फलप्रयत्नतया बहुधा खिन्ना जातेर्ष्या दूताः पुनर्वरानयनार्थं तत्पित्रा नोदिताः स्वावमानितताकाङ्क्षोदितया कालिदासमल्पबुद्धिमनेन तत्कन्यायाः वरत्वेनावधार्य्य निन्युः। आनीताय च तस्मै अविचार्य्य तद्दोषगुणौ तत्पिता तां कन्यां प्रायच्छत्। एवं तस्य विवाहे संवृत्ते दम्पत्योः परस्परालापकाले कालिदासेनापभ्रंशशब्दमात्राभिधेनापभ्रंशशब्दः प्रायोजि। तत् श्रुत्वा च तद्भार्य्या तमत्यन्तं तिरस्कृत्य स्वगृहात् निष्कासयामास। एवं पत्न्या निष्कासितः कालिदासोऽतीव निर्वेदमापद्यारण्यं गत्वा सरस्वतीमाराध्य तत्प्रसादात् लब्धविद्यः स्वगृहं प्रति निववृते। आगत्य च रात्रौ स्वगृहद्वारं रुद्धं विलोक्य तेन स्वपत्नीं प्रति (अनावृतकपाटं द्वार देहि) इत्यभिहितम् तत् श्रुत्वा च स्वरविशेषेण तं स्वपतिमवगत्य कालिदासपत्न्याऽप्युक्तम् (अस्ति कश्चित् वाग्विशेष)इति इत्थं पत्न्या उक्ते वाग्विशेषजिज्ञासाप्रश्ने तद्वाक्यं पदत्रयघटितमिति मत्वा तत्रत्यमेकैकं पदमवलम्ब्य तेन एकैकं काव्यं विरचितम्। तत्र तद्वाक्यस्थम् अस्तीति प्रथमं

र्जुनशिरीषशिंशपासनराजवृक्षेन्द्रवृक्षनिन्दकशोमवल्कश्वेतकार्जुनप्रभृतीनां क्षुद्रप्रमाणो दण्डपन्निर्भवेत्। यस्तु समाधिं परशुं स यथाकामं प्रयोजयेत्।

कुठारलक्षणं तु कुठारशब्दे दृश्यं। २वृक्षे पु० शब्द-रत्ना०। तस्येदम् शिवा० अण्। कौठार तत्सम्बन्धिनि त्रि० स्त्रियां ङीप्। अल्पार्थे क। कुठारक क्षुद्रकुठारे पुंस्त्री० स्त्रियां कुठारिका। [ कारे पु० शब्दरत्ना०।

**कुठारु** पु० कुठ—आरु। १वृक्षे २वानरे पुंस्त्री०मेदि०। ३अस्त्र-

**कुठि** पु०कुठि—इन् किच्च। १पर्व्वते २वृक्षे च उणा० कौ०।

**कुठिक** पु० कुठ—इकन् किच्च। (कुड़) कुष्ठे हारा०।

**कुठेर** पु०कुठि—एरन् बा०नुमभावः। १पर्णासे उज्ज्व०। २वह्नौ शब्दमा०। ३श्वेततुलस्याम् (बाबुइतुलसी) राजनि०।

**कुठेरक** पु०कुठेर इव कायति कै—क। नान्दीवृक्षे राजनि०। स्वार्थे क। ४श्वेततुलस्यां (बाबुइतुलसी) शब्दच०।

**कुठेरज** पु० कुठेरइव जायते जन—ड "सह सुपा" पा०स०। श्वेततुलस्याम् शब्दरत्ना०।

**कुठेरु** पु० कुठ—एरुक्। चामरवाते त्रिका०।

**कुड** वैकल्ये भ्वा० इदित् पर० अक० सेट्। कुण्डति अकुण्डीत् प्रनिकुण्डति कुण्डः। [ प्रनिकुण्डते। कुण्डम्।

**कुड** दाहे भ्वा० इदित् आत्म० सक० सेट्। कुण्डते अकुण्डिष्ट

**कुड** रक्षणे चुरा० इदित् उभ० सक० सेट्। कुण्डयति ते अचुकुण्डत् त। प्रनिकुण्डयति ते।

**कुड** अदने सक० बाल्ये अक० तुदा० पर० सेट् कुटादि। कुडति अकुडीत् चुकोड। प्रनिकुडति कुड्य कुडव.

**कुडप (व)** पु० कुड—कपन् (कवन्) वा। प्रस्थचतुर्थांशरूपे परिमाणभेदे अमरः अर्द्धशरावे। कर्षशब्दे विवृतिः क्षीर-स्वामिमते मानम्। "द्रोणस्तु खार्य्याः खलु षोड़शोऽंशः स्यादाढकोद्रोणचतुर्थभागः। प्रस्थश्चतुर्थांश इहाढकस्य प्रस्थाङ्घ्रिराद्यैः कुडवः प्रदिष्टः" लीला० तेन षोड़शक-र्षमितः कुडवः आर्द्रद्रव्याणां तु द्वात्रिंशत्कर्षमित इत्याह सुश्रुत.

"पलकुडवादीनामतो मानन्तु व्याख्यास्यामः। तत्र द्वादशधान्यमाषा मध्यमाः सुवर्णमाषकः। ते षोडश सुवर्णम्। अथ मध्यमनिष्पावा वा एकोनविंशतिर्ध-रणम्। तान्यर्द्धतृतीयानि कर्षः। ततश्चोर्द्ध चतु-र्गुणमभिवर्द्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यभिनि-ष्पद्यन्ते तथा पलशतं तानि विंशतिभीर शुष्काणामिदं मानमार्द्रद्रव्याणाञ्च द्विगुणमिति"।

"अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयन्। यवप्रस्थं तु तं सक्तूनकुर्व्वन्त तपस्विनः। कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि। कुडवं कुडवं सर्व्वे (चत्वारः) व्यभजन्त तपस्विनः" "इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः" भा० आश्व० ६०,।

**कुडि** पु० कुण्ड्यते दह्यते कुडि—दाहे इन् नलोपश्च। देहे सि० कौ० "कुठिकम्प्योर्नलोपश्चेति" उणा० उज्ज्वलदत्तेन कुठि गतिप्रतिघाते इति व्याख्यातम् कौमुदीकृता तु कुडि—दाहे इति व्याख्यातम्। अतः मतभेदेन उणादिसूत्रे पाठद्वयम्।

**कुडिश** पुंस्त्री० कुड्यते कुड—अदने बा० श इट्। (कुड़शी) ख्याते मत्स्यभेदे राजनि०। "कुडिशो मधुरो बल्यः कषायो वह्निदीपनः। लघुः स्निग्धो वातरोगे पथ्यश्च रोचनस्तथा। बलकारी कोष्ठबन्धकारी च भिषजां मतः" राजनि०।

**कुडिहुञ्ची** स्त्री० क्षुद्रकाण्डवेल्लवृक्षे (छोट उच्छिया) राजनि०।

**कुड्मल** कुड—बाल्ये वा० क्मलच्। १मुकुले विकाशोन्मुखे कुसुमे सि०कौ०। २नरकभेदे न० कुट्मलशब्दे उदाहृत मनुवचने कुड्मलमिति वा पाठः "दलितकोमलपाटल कुड्मले" माघ तारका०इतच्। कुड्मलित जातमुकुले त्रि०।

**कुड्य** न० कुड्ड कार्कश्ये ण्यत् औतेरप्रा० यक् डुगागमश्च इत्युज्ज्वलदत्तः। १भित्तौ (भित) अमर २विलेपने मेदि० ३कौतूहले शब्दरत्ना०। "चैत्यं सभाप्रपास्थोऽङ्गं कुड्य-मास्तरणानि वा। "चन्दनरसैरुपलिप्तकुड्ये" सुश्रु०। "वैदूर्य्यकुड्येषु शशिद्युतिष्व" माघः। स्वार्थे क। भित्तौ शब्दर०।

**कुड्यच्छेदिन्** पु० छिद—णिनि ६त०। चौरभेदे येन गृह-भित्तिं विदार्य्य चौर्य्यं क्रियते तत्र शब्दरत्ना०।

**कुड्यच्छेद्य** पु० कुड्यं छेद्यं यस्य। १खनके। कुड्यस्य तन्निर्म्माणाय तदर्थं छेद्यम् चतुर्थ्यर्थे ६त०। भित्ति-निर्म्माणाय खाते २गर्त्ते त्रिका०।

**कुड्यमत्स्य** पुंस्त्री०कुड्ये मत्स्य इव। स्थूलगोधिकायां हेम० जातित्वात् स्त्रियां ङीष् यलोप। कुड्यमत्सी तत्रैव शब्दर०। [कुणयति ते अचुकुणत् त। प्रनिकुणयति

**कुण** आमन्त्रणे, मन्त्रणे च अद० चु० उभ० सक० सेट्।

**कुण** उपकरणे शब्दे च तुदा०पर०सक० सेट्। कुणति अकोणीत्। प्रनिकुणति उपकरणं दानादिना पोषणम्।

**कुणक** पु० कुण्यते उपक्रियते कुण—कर्म्मणि घञर्थे क ततः

वा। वेदास्राण्येव तानि स्युर्व्वृत्तान्यथ वा क्वचित्।
वेदास्राणि, चतुरस्राणि। आम्नायरहस्ये "कुण्डानि
चतुरस्राणि वृत्तानाकृतीनि वा। नव पञ्चाथ वा चैकं
कर्त्तव्यं लक्षणान्वितम्। नवकुण्डविधाने तु दिक्षु कुण्डा-
ष्टके स्थिते। नवमं कारयेत् कुण्डं पूर्व्वेशानदिगन्तरे।
विधाने पञ्च कुण्डानामीशाने पञ्चमं भवेत्"। ज्ञानरत्ना-
वल्याम् "दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरे"। ना-
रदीयेऽपि "अतोपदिश्यते कुण्डचतुष्कान्तत्र कर्म्मणि।
वेदास्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभं तथा। कुर्य्यात् कुण्डानि
चत्वारि प्राच्यादिषु विचक्षणः। कुण्डयोरन्तरञ्चैव
सपादकरसम्मितम्। पीठवत्तु यत्कुण्डं तत्प्रमाणं
सुगर्त्तकम्"। बह्वृचपरिशिष्टे "भुक्तौ मुक्तौ तथा पुष्टौ
जीर्णोद्धारे विशेषतः। सदा होमे तथा शान्तौ वृत्तं
वरुणदिग्गतम्"। कामिके तु तत्तद्दिक्षु तत्तत्फलार्थं
कुण्डोक्तिर्यथा "ऐन्द्र्यां—स्तम्भे चतुष्कोणमग्नौ भागे
भगाकृति। चन्द्रार्द्धं मारणे याम्ये, नैरृते हि त्रिकोणकम्।
वारुण्यां शान्तिके वृत्तं, षडस्रमुच्चाटनेऽनिले। उदीच्यां
पौष्टिके पद्मं रौद्र्यामष्टास्रमुक्तिदम्"। सर्व्वेषु चैतेषु
होमानुसारेण हस्तादिमानं क्षेत्रफलमुपकल्पनीयम्।
तदुक्तं भविष्यपुराणे "मुष्टिमानं शतार्द्धे तु शते चारत्नि-
मात्रकम्। सहस्रे त्वथ होतव्ये कुर्य्यात् कुण्डं करात्मकम्।
द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम्। अष्टहस्तात्मकं
कुण्डं कोटिहोमेषु नाधिकम्"। मुष्टिमानमिति, बद्धमु-
ष्टिहस्तमात्रमित्यर्थः। इदानीं चतुरस्रादिकुण्डानामुद्धा-
रक्रमोऽभिधीयते। चतुरस्रं तावदाह विश्वकर्म्मा "कृत्वा
प्राक् सूत्रमद्धाङ्कं दक्षिणोत्तरमत्स्ययोः। न्यस्य सूत्रं ततः
कोणैरङ्कितैश्चतुरस्रकम्"। पूर्व्वोक्तेनाप्युपायेन प्राचीं
निश्चित्य प्राक्पश्चिमायातां रेखामालिख्य तामर्द्धभागे
लाञ्छयित्वा दक्षिणोत्तरदिशोर्म्मत्स्यद्वयं कुर्य्यात् सूत्रोपरि
सूत्रान्तरनिपातनात् स्वस्तिकमत्स्याकृतिः शिल्पशास्त्रेषु
मत्स्य इत्युच्यते। मत्स्यद्वयनिष्पत्तिश्चात्रैव कार्य्या। पूर्व्वो-
क्तरेखापरिमितस्य सूत्रस्यादिं तस्या एव रेखाया मूले
निधाय तत्सूत्रान्तरं परिभ्राम्य वृत्तं रचयेत् तस्या एव
रेखाया अपरप्रान्ते तस्यैव सूत्रस्यादिं निधाय तत्सूत्रा-
न्तं परिभ्राम्य द्वितीयान्तं कुर्य्यात् एवं वृत्तद्वये कृते द-
क्षिणोत्तरदिशोर्म्मत्स्यद्वयं निष्पद्यते अथ मत्स्यद्वये पूर्व्वोक्त-
रेखालाञ्छने चैकं सूत्रं निपात्य दक्षिणोत्तरायतां रेखां
लिखेत्। एवं दिक्साधितायां विदिक्साधनार्थं कोणान्
लाञ्छयेत्। तत्रायं प्रकारः—पूर्व्वनिष्पन्नरेखाप्रान्तच-
तुष्टयस्य प्रत्येकं पार्श्वद्वये चिकीर्षितपरिमाणस्यार्द्धमर्द्धं
निधाय तत्सन्धौ कोणलाञ्छनानि कुर्य्यात् ततः कोणला-
ञ्छनेषु सूत्रचतुष्टयनिपातनात् पूर्व्वदिश्युदङ्मुखयोनिक
चतुरस्रं कुण्डं कुर्य्यात्। योन्याकारादीनामप्यत्र चतु-
रस्रप्रकृतिकत्वं कामिकशास्त्रात् "पञ्चमांशं पुरोन्यस्य
मध्ये वेदांशमानतः। भ्रमादश्वत्थपत्राभं कुण्डमाग्नेय-
मुच्यते"। क्षेत्रस्य पञ्चमभागं पुरःप्राच्यां दिशि विन्यस्य
मध्ये कोणसूत्रस्येति शेषः। वेदांशः, तुरीयांशः।
भ्रमात्, सूत्रान्तपरिभ्रमणेन अश्वत्थपत्राकारं कुण्डमाग्ने-
यदिशि कुर्य्यादिति। तत्रायं निर्म्माणप्रकारः पूर्व्वोक्त-
न्यायेन समचतुरस्रीकृतस्य क्षेत्रस्य पश्चिमरेखामध्यात्
पूर्व्वरेखामध्यभेदिनीं क्षेत्रसूत्रपञ्चमांशाधिका गर्भरेखा-
मालिख्य नैरृत्यदेशे कोणसूत्रतुरीयांशे लाञ्छयित्वा
तल्लाञ्छनोपरि विन्यस्तादेः सूत्रस्य पूर्व्वोक्तगर्भरेखामूलवि-
न्यस्तं प्रान्तं परिभ्राम्य वायव्यवृत्तार्द्धं निष्पाद्य वायव्यको-
णेऽप्येवमेव वृत्तार्द्धं रचयेत्। ततो गर्भरेखाप्रान्तात्
वृत्तद्वयप्रान्तस्पर्शि सूत्रद्वयं निपात्य पिप्पलपत्राकार-
माग्नेयदिश्युदङ्मुखयोनिकं योनिकुण्डं विदध्यात्।
"चतुरस्रे षडैर्भक्ते त्यक्त्वाद्यन्तौ तदंशकौ। मध्यसप्तांश-
माने तु कुण्डं खण्डेन्दुवत् क्रमात्"। चतुरस्रे क्षेत्रे
षडैर्नवभिर्विभक्ते आद्यन्तौ त्यक्त्वा अवशिष्टसप्तमांशमा-
नेन सूत्रभ्रमणात् खण्डेन्दुसदृशं कुण्डं कुर्य्यात्। अत्रैवं
कृतिः—चतुरस्रं क्षेत्रं नवधा विभज्य तत्र प्रथमोऽन्ति-
मश्चेति भागद्वयं परित्यज्य अवशिष्टसप्तभागादिमरेखाग-
र्भदेशे सूत्रादिं निधाय तत्रैव भागसप्तकस्यान्तिमरेखाग-
र्भदेशे सूत्रान्तं निवेश्य तत्सूत्रपरिभ्रमणेन प्रथमरेखातुल्यं
विश्रान्तप्रान्तवृत्तार्द्धं विरचयेत्। अथ प्रथमरेखाप्रान्तद्वय-
मपि वृत्तार्द्धे संयोज्य दक्षिणदिगवस्थितमुत्तराशाभिमुखयो-
निकं कुण्डं चन्द्रखण्डं विदध्यात्। "त्रिभागवर्द्धितो म-
त्स्यैस्त्रिभिर्नैशाचरं भवेत्"। स्थानत्रये तृतीयांशत्रयं
वृद्ध्या मत्स्यत्रयेण नैशाचरं नैरृत्यदिक्सम्बन्धि कुण्डं
कुर्य्यात्। इत्ययं सम्प्रदायः। पूर्व्ववत्समचतुरस्रं क्षेत्रं
निर्म्माय तत्तिरश्चीनपश्चिमरेखामध्यात् तिर्य्यगवस्थितपूर्व्व-
रेखामध्यभेदिनीं क्षेत्रसूत्रतृतीयभागाधिकां गर्भरेखामा-
लिख्य पूर्व्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभा-
गाधिकं कुर्य्यात् ततो गर्भरेखाप्रान्तात् पूर्व्वोक्तपश्चिमरे-
खाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्य्यात्।

ततो गर्भरेखाप्रान्तात् पूर्व्वोक्तपश्चिमरेखाप्रान्तद्वयस्पर्शिसूत्रद्वयं निपात्य नैरृत्यदिशि पूर्व्वाभिमुखयोनिकं त्रिकोणं कुण्डमुत्पादयेत्। एवञ्च विधीयमाने स्थानत्रये तृतीयामत्स्यद्वयस्थितसूत्रत्रयमपि निष्पद्यत इति। "कर्म्मार्द्धाष्टमसंन्यासाद् वृत्तं कुण्डमिहोदितम्। कर्म्मसूत्रार्द्धस्य योऽष्टमोंऽशस्तस्य सन्यासात् सम्यक् न्यासात् वृत्तकुण्डं स्यादिति। अत्रैवं रचनाप्रकारः चतुरस्रे क्षेत्रे कोणात् कोणान्तरगामिनः सूत्रस्यार्द्धं कोणार्द्धमर्द्धकाख्यमष्टधा विभज्य यावानष्टमो भागस्तावन्तं भागं चतुर्द्दिक्षु बहिर्विन्यसेत्। ततः क्षेत्रगर्भदेशे सूत्रादिं निधाय बहिःस्थिताष्टमभागविन्यस्त तस्यैव सूत्रस्य प्रान्तं सर्व्वत परिभ्राम्य पश्चिमदिशि पूर्व्वाभिमुखयोनिकं वृत्तकुण्डं कुर्य्यात्। "षड्भागहृतितो मत्स्यैश्चतुर्भिः स्यात् षडस्रकम्" क्षेत्रपार्श्वयोः प्रत्येकं षड्भागद्वयं कृत्वा अवशिष्टदिशोर्मत्स्यचतुष्टयमुत्पाद्य सूत्रषट्कपातात् षडस्रकुण्डनिष्पत्तिरिति। अत्रैव सम्प्रदायः—समचतुरस्रं क्षेत्रं षोढा विभज्य यावान् षष्ठोभागस्तावता मानेन क्षेत्रस्य दक्षिणोत्तरपार्श्वे समन्ताद्वर्द्धयित्वा तदेव क्षेत्रमायतचतुरस्रं सम्पादयेत्। अथाभ्यन्तरोक्तपार्श्वद्वयरेखास्पर्शिनीं दक्षिणोत्तरायतां गर्भरेखां रचयेत्। ततः क्षेत्रमध्यादुत्तरपार्श्वरेखामध्याच्च पूर्व्वोक्तगर्भरेखार्द्धपरिमितमेकैकं सूत्रं निपात्य पूर्व्वेशानदिशोरन्तराले मत्स्यमुत्पाद्य तेनैव प्रकारेण पश्चिमवायव्ययोरन्तराले मत्स्यं कुर्य्यात्। अथ भूयोऽपि क्षेत्रमध्याद्दक्षिणपार्श्वरेखामध्याच्च प्रागुक्तगर्भरेखाप्रान्तद्वयात् लाञ्छनचतुष्टयस्पर्शिसूत्रचतुष्टयं निपातयेत्। एवं लाञ्छनान्तरालस्थितसूत्रद्वयेन सह सूत्रषट्कयोगादाग्नेयदिशि प्राङ्मुखयोनिकं षट्कोणकुण्डं कुर्य्यात्। "चतुरस्राष्टभागेन कर्णिका स्याद्द्विभागया। तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत्। तृतीये दलमध्यानि तुरीये दलकोटयः। भ्रामणात् पद्मदलं स्याद्धाम्नाय दर्शनेष्विह"। चतुरस्रस्याष्टधा विभक्तस्य मध्ये अष्टमभागेन कर्णिका स्यात् कर्णिकाया बहिः परिधिस्थे द्वितीये अष्टमभागे विन्यासे केसराणि स्युः। केसराद्बहिः परिधिस्थिते तृतीये अष्टमभागे विन्यासे दलमध्यानि कल्पयित्वा चतुर्थे दलकोटीं विधाय चतुरस्राद्बहिर्दलानि दर्शयेत्। चतुरस्राष्टमभागेनेति सम्बध्यते। विभागद्विभागे विभागे सर्व्वदिग्भागेष्वित्यर्थः। भ्रामणात्—सूत्रस्येति शेषः एतच्च पद्मदलं सर्व्वत्र योजनीयम्।

अयमर्थः—चतुरस्रक्षेत्रं प्रागग्राभिरुदगग्राभिश्च रेखाभिरष्टधा विभज्य मध्यदेशे लाञ्छयित्वा क्षेत्राद्बहिश्चतुर्द्दिक्षु समन्तादपरमष्टभागं विन्यसेत् तत्रैव लाञ्छनात् परितः प्रतिदिशं षट्पञ्चाष्टमभागावधिरेखा भवन्ति। ततः पूर्व्वोक्तलाञ्छनोपरि विन्यस्तादेकसूत्रस्य विन्दस्य प्रान्तस्य च सूत्रस्य परिभ्रामणात् पञ्च वृत्तानि तस्माद्वृत्तातिरिक्तरेखा परिमार्ज्जयेत्। ततः प्रथमे वृत्ते कर्णिका द्वितीये केसराणि तृतीये दलमध्यानि चतुर्थे दलकोटयः पञ्चमे दलाग्राणीति कृत्वा अष्टदलं पूर्व्वाभिमुखयोनिकं पद्मकुण्डमुत्तरदिशि कुर्य्यात्। इदानीमेतदेव कुण्डं प्रकारान्तरेणोच्यते "वृत्तकुण्डं समं चान्यद्यथान्यप्रकारतः। वृत्तकुण्डं पुरा कृत्वा चतुर्द्धा ऽमेखलं भजेत्। उत्सेधश्च तथा कृत्वा कर्णिका चार्द्धिका भवेत्। अवशिष्टं दलं वेददलमष्टदलन्तु वा" यथा प्रतीच्यां दिशि वृत्तकुण्डमभिहितमिहापि तथैव कृत्वा तन्मध्ये यथाविभागं पद्मकुण्डं कुर्य्यादिति। अथवेत्यादिना तृतीयप्रकार उच्यते पूर्व्वं वृत्तकुण्डमेव आमेखलं मेखलमपर्यन्तं चतुर्द्धा भजेत्। वृत्तकुण्डमध्ये अन्यथापि समभागस्य वृत्तत्रयस्य करणाच्चतुर्धा क्षेत्रविभागः कार्य्य इत्यर्थः। ततः क्षेत्रमध्ये चार्द्धभागेन विस्तृता कर्णिका विधेया। उत्सेधश्च तथा कल्पेति, कर्णिकाया उच्छ्रयमपि चार्द्धभागेन कल्पयेदित्यर्थः। अवशिष्टेन सार्द्धभागद्वयेन केसरव्यतिरिक्तानि दलान्येव कुर्य्यात्। एवञ्चतुर्द्दलमष्टदलं वा पद्मकुण्डं कुर्य्यात्। "क्षेत्रात् द्वादशमं भागं चतुर्द्दिक्षु तदन्तरे। विन्यस्य तत्प्रमाणेन तुर्य्याश्रमपरं भवेत्। तस्य कर्णप्रमाणेन तद्बहिःस्थमपि लाञ्छयेत्। ततोऽष्टसूत्रसंयोगादष्टास्रं कुण्डमुच्यते"। द्वादशधा विभक्तस्य क्षेत्रस्य यावान् द्वादशो भागस्तावन्तं भागं चतुर्द्दिक्षु विन्यस्य, तदन्तरे, तस्य क्षेत्रस्य अन्तरे बहिःप्रदेशे "अन्तरं बहिर्योगोपसंव्यानयोरिति" ज्ञापकादन्तरशब्दोऽत्र बहिर्व्वचनः। तत्प्रमाणेनेति तस्य बहिर्विन्यस्तद्वादशभागस्य परिमाणेन अपरं द्वितीयं तुर्य्याश्रं चतुरस्रं भवेत् प्रचयेत् कुर्य्यात् इति यावत्। तुर्य्याश्रमिति, स्वार्थिकोऽत्र पूरणप्रत्ययः। तस्य कर्णप्रमाणेनेति। कोणात् कोणान्तरस्पर्शिसूत्रं तिर्य्यङ्मानेषु कर्ण इति प्रसिद्धम्। एक तु क्षेत्रगर्भादारभ्य चतुष्कोणान्तगामिनः पृथगेव चत्वारः कर्णाः तदभिप्रायेण कर्णार्द्धमपि कर्णपदेनोक्तम्। तेनायमर्थः। चतुरस्रचतुर-

स्य गर्भदेशावधिर्यावान् कर्णस्तावता मानेन तद्भुजाद्य तस्य कर्णस्य भुजाद्य लाञ्छयेत् । अत्र बाह्यचतुरस्र सूत्राण्येव कर्णोभयपार्श्ववर्त्तीनि तिर्य्यग्भुजाकारतया भुजाशब्देनोच्यन्ते । अयमाशयः—बाह्यचतुरस्रस्याग्निकोणादिकिन् कोणे कर्णार्द्धपरिमितस्य सूत्रस्यादिं विधाय तत्सूत्रं चतुरस्ररेखोपरि प्रसार्य्य सूत्रप्रान्ते लाञ्छयेत् । एवं प्रतिकोणं सूत्रादिं विधाय प्रातिलोम्यानुलोम्येन सूत्रप्रसारणात् तत्तत्प्रान्ते लाञ्छयन् प्रतिदिशं लाञ्छनद्वयकरणाद्दिक्चतुष्टयेन लाञ्छनेषु सूत्राष्टकनिपातनादष्टास्रकुण्डं कुर्य्यादिति । अयमिह निर्म्माणप्रकारः—पूर्वप्रसाधितचतुरस्रीकृतस्य क्षेत्रस्य बहिश्चतुर्दिक्षु द्वादशं भागं विन्यस्य तत्परिमाणेन अपरं चतुरस्रं कुर्य्यात् । अथ तदीयकर्णार्द्धपरिमितस्य सूत्रस्य प्रतिकोणमादिं विधाय चतुरस्ररेखोपरि प्रसारणात् तत्तत्प्रान्तेषु लाञ्छयन् दिक्चतुष्टयेन लाञ्छनाष्टकं कृत्वा तल्लाञ्छनोपरि सूत्राष्टकनिपातनादैशानदिशि पूर्व्वाभिमुखयोनिकमष्टास्रकुण्डं कुर्य्यात् । इदानीं दिग्नियममन्तरेणैव तत्तत्कर्म्मोपयोगितया विधानसहितोपदिष्टं कुण्डमुच्यते । "सप्तमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । चतुर्थभागन्यूनेन पूर्वक्षेत्रेण वर्ज्जितैः ॥ चतुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रकुण्डकम् । होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे" । चतुरस्रस्य क्षेत्रस्य बहिःप्रदेशे चतुर्दिक्षु क्षेत्रसप्तमांशं विन्यसेत् । ततः क्षेत्रगर्भविन्यस्तादेः बाह्यस्थितसप्तमांशोपरि विन्यस्तप्रान्तस्य सूत्रस्य सर्वतः परिभ्रामणात् वृत्तं निष्पादयेत् । पूर्वक्षेत्रेणेति, बहिःस्थितवृत्तापेक्षया, पूर्वक्षेत्रशब्देन आन्तरचतुरस्रक्षेत्रमेवोच्यते । ततश्चायमर्थः आन्तरचतुरस्रस्य यद्दैर्घ्यं तत् स्वकीयचतुर्थभागन्यूनं कृत्वा यन्मानं भवति तावता मानेन परिमितं सूत्रं निधाय तादृशानि पञ्च सूत्राणि बाह्यवृत्तस्यान्तर्विन्यस्य सूत्रसन्धौ कोणं कुर्य्यात् । तानि च पञ्च सूत्राणि प्रत्येकं प्रान्तद्वयसंस्पृष्टवृत्तत्वात् चतुर्ज्याकृतीनि धनुराकृष्टमौर्वीसदृशानि स्युः । ततः पञ्चसूत्रातिरिक्तं सर्वं परिमृज्य पञ्चास्रकुण्डं रचयेत् । तच्च ग्रहनिग्रहादिहोमे प्रयोज्यम् । "दशमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । भक्ता क्षेत्रं चतुःषष्ट्या तद्भागैस्त्रिंशता त्रिभिः ॥ समानसूत्रं तादृक्षात् सप्तास्रं सूत्रसङ्क्रमात् । अभिचारोपशान्त्यर्थं होमकुण्डमिति स्मृतम्" । इहापि चतुरस्रस्य क्षेत्रस्य दशमभागं चतुर्दिक्षु बहिर्विन्यस्य पूर्ववत् वृत्तं कुर्य्यात् । अथ पूर्वक्षेत्रं चतुःषष्ट्या विभज्य तेषां चतुष्षष्टिसंख्यानां भागानां मध्ये त्रयस्त्रिंशत्संख्यैर्भागैः परिमितं सूत्रं कृत्वा तादृशानि सप्त सूत्राणि वृत्तस्यान्तर्विन्यस्य सप्तास्रं कुण्डं कुर्य्यात् । अत्रापि सूत्राणां धनुर्ज्याकारत्वं सूत्रसन्धौ कोणनिर्म्माणं सप्तसूत्रातिरिक्तपरिमार्ज्जनं चेति पूर्ववदेव वेदितव्यम् । एतच्च कुण्डमभिचारदोषोपशमनहोमेषु प्रयोज्यम् । आह विश्वकर्म्मा "यावन्मात्रः कुण्डविस्तार उक्तस्तावत् खातस्यापि मानं प्रदिष्टम् । यादृक् कुण्डस्याकृतिः संप्रदिष्टा तादृग्रूपं मेखलाया विदध्यात् । स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिदः"। सर्वेषु चैतेषु प्रोक्तमानादङ्गुलयवादि न्यूनमतिरिक्तं वा विधाय ध्वजायः साधनीयः । विस्तारे दैर्घ्यगुणिते अष्टभिर्विभक्ते यद्येकः परिशिष्यते तदा ध्वजाय इति । "खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्य्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते । अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्ज्जितम्" । खातहीने भवेद्रोग इत्यादिना खातादिलक्षणरहितस्य कुण्डस्यानिष्टफलत्वदर्शनादिदानीं खातादीनामेव लक्षणमभिधीयते । तद्यथा मौक्तिचूडोत्तरशास्त्रे "चतुर्विंशतिमं भागमङ्गुलं परिकल्प्य तु । चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत् । हस्तमात्रं खनेत्तिर्य्यगूर्द्ध्वं मेखलया सह" । खातमानयतार्द्धे इत्यादिना प्रसिद्धेनैव हस्ताङ्गुलव्यवहारेण होमानुसारात् कुण्डमानमुक्तम् । इयन्तु खातादिमानकथनार्थं परिभाषा क्रियते । चिकीर्षितकुण्डक्षेत्रं चतुर्विंशतिधा विभज्य यावान् चतुर्विंशतितमो भागस्तावत्परिमाणमङ्गुलं परिकल्प्य चतुर्विंशत्या अङ्गुलैर्हस्तं परिकल्पयेत् । ततस्तेन हस्तेन परिमितं सर्वकुण्डानां तिर्य्यक्खातमानं विधाय मेखलासहितस्य खातस्य तेनैव हस्तेन परिमितमूर्द्ध्वमानं विदध्यात् । प्रथमे उक्तम् "कुण्डं जिनाङ्गुलम् । तिर्य्यगूर्द्ध्वं मेखलया सह" जिनाङ्गुलं चतुर्विंशत्यङ्गुलम् । प्रतिष्ठासारसङ्ग्रहेऽपि "पञ्च-त्रि-मेखलोच्छ्राया ज्ञात्वा शेषमधः खनेत्"। विश्वकर्म्मणाप्युक्तम् "व्यासात् खातः करः प्रोक्तो निम्नाख्यमङ्गुलेन तु" । तिर्य्यङ्गुलानि—पञ्चदशाङ्गुलानि खातस्य निम्नत्वम् । "उच्छ्रिता सा नवाङ्गुलैरिति, वक्ष्यमाणत्वान्मेखलात्रयपक्षे नवाङ्गुलं प्रथममेखलयोच्छ्रितं इत्यनयोश्चतुर्वि-

तदा पश्चिमे उत्तरे वा ऐशान्यां वा स्यात् परन्तु चतुरस्रं, वेद्याः सकाशात्तानि सर्व्वाणि कुण्डानि सपादेन करेण त्रिंशदङ्गुलान्तरेण वा पादान्तरेण द्वादशाङ्गुलान्तरेण वा वेदीपादान्तरेण वेद्याश्चतुर्थांशेन वा मण्डपे नवकोष्ठकतेऽष्टसु भागेषु मध्ये भवन्तीति व्याख्या"नारदीये"यत्नोपदिश्यते कुण्डचतुष्कं तत्र कर्म्मणि। वेदास्रमर्द्धचन्द्रं च वृत्तं पद्मनिभं तथा"। चतुःकुण्डपक्षे सातीनाऽत्तीत्युक्तं नारदीये "पीठशक्तवेत् कुण्ड सुप्रमाणमगर्त्तकम् कुर्य्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः। पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विजेति"अयं मध्यमः पक्षः। कैश्चित्पूर्व्वशयोरिति लिखितन्तदसत् सोमशम्भौ "एवं वा शिवकाष्ठायां प्रतीच्याङ्कारयेद्बुधः "आचार्य्या अपि "अथवा दिशि कुण्डसुत्तरस्यां मपि दध्याच्चतुरस्रमेकमेव"इयं कनिष्ठः पक्षः। मण्डपहोमविकारे वशिष्ठसंहितायाम्"कुण्डन्तमध्यभागे तु कारयेच्चतुरस्रकम्। वितस्तिद्वयमात्रं तत् कुण्डं तु चतुरङ्गुलमिति। वेदीपादान्तरन्त्वत्र कुण्डानि नव पञ्च वेति"। नारदीये"कुण्डेऽष्टान्तरस्यैव सपादकरसंमितमिति"कैश्चित्त्रयोदशाङ्गुलमष्टान्तरमुक्तं तत्र मण्डपानुसारेण व्यवस्था। अथ वर्णविशेषस्य स्त्रीणाञ्च कुण्डविशेषमाह "विप्राणां चतुरस्रं च वृत्तं च वृत्तार्द्धं त्र्यस्रं स्याद्वेदकोणानि वापि। सर्वस्माकृष्ट सङ्ख्यानि चान्ये योन्याकाराण्यङ्गनानां मतानि "विप्रादारभ्य विप्रक्षत्रियविट्शूद्राणां चतुःकोणवृत्तार्द्धत्रिकोणानि भवन्ति। अथवा विप्रादिवर्णेषु चतुःकोणानि वर्त्तुलानि वा सर्व्वाणि कुण्डानि भवन्ति यदा स्त्री यजमाना तदा योन्याकाराण्येव कुण्डानि भवन्तीति व्याख्या। शारदायाम्"विप्राणां चतुरस्रं स्याद्राज्ञां वर्त्तुलमिष्यते। वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् चतुरस्रन्तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः"। पञ्चरात्रे "सर्वाणि तानि वृत्तानि चतुरस्राणि वा सदा" सनत्कुमारः "स्त्रीणां कुण्डानि विप्रेन्द्र। योन्याकाराणि कारयेदिति"। अथ प्राच्यादिकुण्डेषु फलविशेषमाह "सिद्धिं पुत्रान् शुभं शत्रुनाशं शान्तिमुच्छित्तिं दृष्टिमारोग्यमुक्तं हि फलं प्राच्यादिकुण्डके" प्राच्यादिकुण्डेष्वष्टसु फलानि स्युः। शारदायाम् "सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम्। पुत्रप्रदं योनिकुण्डमर्द्धचन्द्राभं शुभप्रदम्। शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्म्मणि छेदमारणयोः षडस्रं पद्मसन्निभम्। दृष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम्"। कामिके तु फलान्तरम् "ऐन्द्र्यां स्तम्भे चतुःकोणमग्नौ भोगे भगाकृति। चन्द्रार्द्धं मारणे याम्ये, क्षेमे त्र्यस्रन्तु नैर्ऋते। वारुण्यां शान्तिके वृत्तं, षडस्रं उच्चाटनेऽनिले। उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रि भुक्तिदमिति" अथ होमसंख्यया कुण्डमानम्। "शतार्द्धे रत्निः स्याच्छतपरिमितेऽरत्निविततः सहस्रे हस्तः स्यादयुतहवने हस्तयुगलम्। चतुर्हस्तं लक्षे प्रयुतहवने षट्करमिभैः ८ ककुभिर्वा १०कोटौ नृपकरमपि प्राहुरपरे" शतार्द्धमिते पञ्चाशन्मिते होमे रत्निमितं कुण्डं, शतमिते अरत्निमितं, सहस्रमिते होमे हस्तमितं, दशसहस्रमिते द्विहस्त, लक्षहोमे चतुर्हस्तमितं दशलक्षहोमे षड्ढस्तमितं, कोटिहोमेऽष्टहस्तमितं दशहस्तमितं वा। केचित् षोडशकरमपि प्राहुरिति व्याख्या भविष्यपुराणे "मुष्टिमात्रं शतार्द्धे तु शते चारत्निमात्रकम्। सहस्रे त्वथ होतव्ये कुण्डं स्याद्धस्तकरात्मकम्। द्विहस्तमयुते तच्च लक्षमाने चतुःकरम्। दशलक्षमिते होमे षट्करं सम्प्रचक्षते। अष्टहस्तात्मकं कुण्डं कोटिहोमेषु साधिकम्" शारदायाम् "दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते" स्कान्दे "कोटिहोमे चतुर्हस्तं चतुर्हस्तं समन्ततः। योनिवक्त्रद्वयोपेतन्तदप्याहुस्त्रिमेखलमिति" इदं मायस्यूलहव्यविषयम् "अथ केषाञ्चिन्मते कुण्डमानम् "लक्षैकहस्तादयुतलक्षकान्ताद्द्वैकवृद्ध्यादशहस्तकस्य। कोट्यर्द्धदिग्विंशतिलक्षलक्षद्वये सुनीन्द्वत्रयाद्धस्तम्"। लक्षस्यैकवृद्ध्या दशलक्षकाणामन्तं समाप्तीकृत्यादशलक्षकान्तम् एकलक्षमारभ्य लक्षवृद्ध्या दशलक्षपर्यन्तमित्यर्थः करस्य एकवृद्ध्यादशहस्तकम्पर्यादीकृत्येत्यादशहस्तकम् एककरमारभ्य एककरवृद्ध्या दशहस्तं यावत्कुण्डं प्राहुरिति पूर्वेणान्वयः कोटेरर्द्धे पञ्चाशल्लक्षे दशविंशतिलक्षे लक्षद्वये पञ्चाशत्सहस्रे क्रमात् सप्तपञ्चषट्त्रिकरं कुण्डमिति व्याख्या। शारदायाम् "एकहस्तमितं कुण्डं लक्षहोमे विधीयते। लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत्" सिद्धान्तशेखरे "लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुःकरम्। कुण्डं पञ्चकरञ्चोक्तं दशलक्षाकृतौ क्रमात्। षड्ढस्तं लक्षविंशत्या, कोट्यर्द्धे सप्तहस्तकमिति"। इदमेव कुण्डमानं कामिकादिमतसिद्धान्तशेखरशारदातिलकादिमन्त्रसु प्राचीनैः राघवभट्टरामवाजपेयिकुण्डरत्नाकरकुण्डकौमुदीकारादिभिर्नवीनैश्च लिखितं क्वचिदन्यथापि कुण्डमानान्युक्तानि तानि तत्तद्ग्रन्थेषु-

"इमानि कुण्डानि कादिपञ्चविंशतीनीयमादरणीयानि। तानि वचनानि तु तदाकारत्वमात्रसम्पादकानि न क्षेत्रफलानुसिकराणि तत्र विंशत्यंशोना भूरिति स्थूलमार्गेण योन्याद्याकारमात्रं प्रतिपाद्यते। योगचिन्तामणिग्रन्थेन चतुरस्रकुण्डं तण्डुलादिना पूरयित्वा तानेव तण्डुलान् योन्यादिकुण्डे धृत्वा तत्पूर्त्तौ तोष्टव्यमिति। अङ्गुलयवयूकालिक्षा कृत्वा गोमूत्रिकारीत्या गणयित्वा षष्टिभागे गृहीते फले उपर्य्युपरि च योज्यमाने फलाद्युत्पद्यते यवसर्षपादि कुण्डमात्रे चिति प्रेयम्। वृत्तार्द्धकुण्डमाह "जिनांशयुतेषुभागहीन स्वकरिलौमितकर्कटेन मध्यात्। कृतवृत्तदलेऽपतत्र जीर्यामिदधातीन्दुदलस्य साधु सिद्धौ"। जिनांशेन युतोय इषुभागः पञ्चमांशः अर्थात् क्षेत्रस्यैव, तेन हीना याऽसौ समभूमिः क्षेत्रतन्मितेन कर्कटेन सूत्रेण वा मध्याङ्कात् कृतं यद्वृत्तार्द्धं तस्मिन् पूर्वापरा रेखा जीवारूपां वृत्तार्द्धस्य सिद्धौ साधु स्याद्यथा, तथा करोतु विद्वानिति व्याख्या। अत्र क्षेत्रफलम् क्षेत्रस्य पञ्चांशोऽङ्गुलाद्यः ४ । ६ । २ । १ । ५ । तस्य शतांशोऽङ्गुलाद्यं ०।०। १ । ० । ४ । अनेनान्वितः पञ्चांशः ४ । ६ । ६ । २ । १ अनेनोना क्षेत्रभूमिः १९ । १ । १ । ५ । ७ एतद्व्यासार्द्धं द्विगुणं व्यासः ३८ । २।३।३।६। अत्रापि व्यासस्य वर्गः १४४४ । ५ । २ । ५ । ४ । भनवाग्निनिघ्ने १९२७ । पञ्चसहस्रभक्ते इत्यादि रीत्या क्षेत्रफलम् ११५२ । २ । २ । ६ । २ । एतद्वृत्तस्य फलम् अस्यार्द्धं वृत्तार्द्धक्षेत्रफलम् ५७६ । १।१।। १ अत्रापि ध्वजायसिद्धिः। अथ त्र्यस्रकुण्डमाह "वज्राग्रं पुरतो निधाय च पुनः श्रोणीचतुर्थांशकचिह्नेषु त्रिषु सूत्रदानतः इदं स्यात्त्र्यस्रं कटोज्झितम्। विश्वांशैः स्वजिनांशकेन सहिते क्षेत्रे जिनांशे कृते व्यासार्द्धेन मितेन मण्डलमिदं स्याद्वृत्तसंज्ञं शुभम्" अत्र पूर्वोक्तं कुण्डं व्याख्यायते क्षेत्रस्य तृतीयांशमग्रतो निधाय ततः श्रोणीचतुर्थांशं निधाय दक्षिणत उत्तरतश्च दत्त्वा त्रिचिह्नेषु सूत्रदानात् कटरहितं त्र्यस्रं जायते इति तृतीयांशोऽष्टाङ्गुलानि मध्यसूत्रे योजितानि जातोऽयं पश्चिमभुज उभतश्चतुर्थांशः षडङ्गुलानि योजितानि जातानि भू २६ अत्र लम्बाभावात् भूमेरर्द्धं कृतम् १८ इदं लम्बेनानेन निघ्नजातं अत्र क्षेत्रफलम् ५७६ समभुजे क्षेत्रफलस्य विध्रतीति कटोज्झितमित्युक्तम्

किञ्चिन्न्यूनत्वमस्य न दोषाय अत्रापि ध्वजाय एवेति। अथोत्तरार्द्धेन वृत्तमाह क्षेत्रे चतुर्विंशतिभक्ते सति त्रयोदशांशे सह चतुर्विंशत्यंशयुते मितेन व्यासार्द्धेन मण्डलं यद्वृत्तं तत् वृत्तसंज्ञं कुण्डं सुन्दरं स्यात्। अथ क्षेत्रफलानयनम् अत्र त्रयोदशानां चतुर्विंशांशोऽङ्गुलाद्य ०४ । २ । ५ । २ । अनेन युतास्त्रयोदश १२ । ४।२ । ५ । २ । इदं व्यासार्द्धमेतद्द्विगुणं व्यासः २७ । ० । ५ । २ । ४ अत्र व्यासस्य वर्गोऽस्मिन् ७२९ । ० ।२। १। २ भनवाग्निनिघ्ने पञ्चसहस्रभक्ते इत्यादिना क्षेत्रफलम् ५७६ ।०।६।०। अत्रापि ध्वजाय एवेति। अथ षडस्रमाह "भक्ते क्षेत्रे जिनांशैर्धृतिमितलवकैः स्वाब्धिसंख्यांशयुक्तैर्व्यासार्द्धं मण्डले तन्मितधृतगुणके कर्कटे सेन्दुदिक्कः। षट्चिह्नेषु प्रदद्यादृसमितगुणकानेकमेकन्तु हित्वा नाशे सन्ध्यंशदोषामपि च धृतिकृते नेत्ररम्यं षडस्रम्"। क्षेत्रे चतुर्विंशतिधा विभक्ते सति अष्टादशांशैः स्वद्वासप्ततमांशयुक्तैस्तावता व्यासार्द्धेन वृत्ते कृते सति तेनैव व्यासार्द्धेन मिते गुणके सूत्रे सति कर्कटे वा उत्तरदिक्तो धृते सति परावर्त्तनेन षट्चिह्नानि भवन्ति तेषु षट्सु चिह्नेषु षट् सूत्राणि एकान्तरेण परस्परलग्नानि दद्यात् तत्र सन्धौ ये अङ्गदोषाः षड्भुजास्तेषां नाशे धृतिकृते मण्डलस्य विनाशे षडस्रं रमणीयञ्जायत इति व्याख्या अस्मिन् षडस्रे व्यास २६ । ४ । ० अत्रोत्तराग्रं त्रिकोणमेकं भवत् तद्भुजमानं त्रिघ्नत्र्यङ्गाग्निनभचन्द्रैर्वृत्तव्यासे समाहते। खखखाभ्राङ्क१२००००संभक्ते लभ्यन्ते क्रमशो भुजा" इति त्र्यस्राणां भुजानां मान २१ । ४।३।० उत्तराग्रात् पूर्वापरभुजमध्यं यावन्नीयमानं सूत्रं, व्यासचतुर्थांशोव्यासत्रय २७।६।० भुजाः, एव भू लम्बाभावक्रूरयर्द्धं १५।६।३।४ लम्बेन निघ्नमित्यादिना जात क्षेत्रफलं ४२२।५।२ अथास्य महतस्त्रिभुजस्य त्रिष्वपि भुजेषु त्रीणि त्र्यस्राणि समान्येव लग्नानि भवन्ति तत्रैकस्य फलमानीय त्रिगुणं कृत्वा पूर्व्वफले योजितं सत् पूर्णं क्षेत्रफलं स्यात्। तत्र दक्षिणकोणाग्रात् पूर्वापरभुजमध्यं नीयमानं सूत्रं लम्बः ८।१।० अयं व्यासचतुर्थांश भुजस्य योभूमिः १०।४।२।२ सर्वत्र त्र्यस्र एव भुजसम्पातात् अत्र लम्बाभावाद्भूमेरर्द्धं ५।२।१।१। इदं लम्बेन गुणित क्षेत्रफलं ४८।०।४।२।१। जात इदं त्रिगुणं त्र्यस्राणामपि फलं १४४।१।४।६ ।२। इदं पूर्वक्षेत्रफलेऽस्मिन् ४२२।५।२ योजितं ५७६।७।१।३।६। इदमकिञ्चिदधिकैकयवाधिकं

तस्यास्तां पद्मनालाकारत्वात्तालोक्तिः। अन्तर्मध्ये अवटोगर्त्तः स्रुचि घृतधारणार्थं यद्वत्तेन रुचिरा सुन्दरा सा अश्वत्थपत्राकृतिः स्यादिति व्याख्या। वायवीये "मेखला मध्यतः कुर्यात् पश्चिमे दक्षिणेऽपि वा। शोभनां मध्यतः किञ्चिन्निम्नामुन्मीलितां शनैरिति" योनिमिति शेषः। त्रैलोक्यसारे "दीर्घा सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा। कुम्भद्वयार्द्धसंयुक्ता साश्वत्थदलवन्मता। अङ्गुष्ठमेखलायुक्ता मध्ये वाज्यधृतिस्तथेति" पञ्चरात्रे "अर्काङ्गुलोच्छ्रिता योनिं विदध्यात्तावदायताम्" तावद्दीर्घाम् एकाङ्गुलोच्छ्रिता इत्यस्य विवरणम् अङ्गुष्ठमेखलायुक्तेत्यत्र अङ्गुलद्वयमुच्छ्राय कुत्रचिदुक्तं अङ्गुलं परिधिरिति द्वादशाङ्गुलोच्छ्रायः अयं न प्रायोबहुसंमतः अतोऽत्रदुक्त एकाङ्गुलोच्छ्रायपक्षो बहुसंमतः कार्य्यः। शारदायाम् "मूलादारभ्य नालं स्याद्योन्या मध्ये सरन्ध्रकमिति" द्वादशाङ्गुलमेखलापक्षे योनिलक्षणमाह "अथार्काङ्गुलपक्षे तु मेखलानान्दशाङ्गुलैः। विस्तृता तिथिभिर्दीर्घाङ्गुलिभिर्योनिरिष्यते" मेखलानां दशाङ्गुलैर्विस्तृता तिथ्यङ्गुलैर्दीर्घा योनिः स्यादिति व्याख्या। प्रयोगसारे "स्थितां प्रतीच्यामायामे सम्यक् पञ्चदशाङ्गुलाम्। विपञ्चाङ्गुलविस्तारां षट् चतुर्थाङ्गुलाः क्रमात्। त्रयोदशाङ्गुलोत्सेधां योनिं कुण्डस्य कारयेत्"। केचित् योनिक्षेत्रस्य दीर्घचतुरस्ररूपस्य यत्फलं तस्य मूलमानीय तावत्समचतुरस्रं संशोध्य योनिकुण्डवद्योनिं साधयेदित्याहुः"। अधिकं कुण्डार्कादौ द्रष्टव्यम्।

"रसं पिबेत् कुमारोऽयं त्वत्प्रसादात् महाबलः। बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम्। यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम्"। "एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः। एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दन" भा॰आ॰ १२८अ॰। "सानुभिर्न्निहितं कर्म्म मरुतस्य विधीयते। तस्मात् गोरजसा ध्वस्तमर्णां कुण्डे निधिस्यति" भा॰ आनु॰ १०१अ॰। कण्ड्यते कुलमनेन कुडि—दाहे करणे घञ्। अमृते भर्त्तरि ५जारजाते स्त्रियां टाप्। "परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः। तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च। दत्तानि हव्यकव्यानि नाशयेते प्रदा-

यिनाम्" मनुः। "ब्राह्मणा एव संपूज्या पुण्यस्वर्गमभीप्सता। श्राद्धकाले तु यत्नेन भोक्तव्याश्चजुगुप्सता। दुर्व्वणाः कुनखी कुष्ठी मायावी कुण्डगोलकौ। वर्ज्जनीयाः प्रयत्नेन काण्डपृष्ठांश्च देहिन" भा॰ व॰ १९९अ॰। "द्विजात् द्विजातिभार्य्यायां सवर्णायास्तत्पत्न्याः कुण्डगोलकयोः संस्कारार्हता यथाह "प्रयोगपारिजाते ब्राह्मे "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः। तस्मात् षण्डबधिरकुब्जवामनपङ्गुषु। जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु। मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये। ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्। मत्तोन्मत्तौ न संस्कार्य्याविति केचित् प्रचक्षते। कर्म्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः। तदपत्यञ्च संस्कार्य्यमपरे प्राहुरन्यथा। संस्कारमन्त्रहोमादीन् करोत्याचार्य्य एव तु। उपनेयाश्च विधिवदाचार्य्यस्य समीपतः। आनीयाग्निसमीपं वा सावित्रीं स्पृष्ट्वा वाचयेत्। कन्यास्त्रीकरणादन्यत् सर्व्वं विप्रेण कारयेत्। एवमेव द्विजैर्जातौ संस्कार्य्यौ कुण्डगोलकौ" अनयोश्च ब्राह्मणत्वेऽपि श्राद्धेऽन्नदाननिषेध इति विशेषः। अनेदं बोध्यम्। "अपुत्त्रोपहृतायां तु पिण्डदा वोढुरेव ते" इत्युक्तेः शुल्कदानं विना उपगतपरस्त्रियां जातस्य वोढुरेव पुत्त्रत्वं शुल्कदाने तु उत्पादयितुरेवेति। अतएव "यस्मै माता प्रतुलोभ रेत" इत्यादि श्रुत्या क्षेत्रिण एव पिण्डदत्वं मनुनोक्तम्। अस्य प्रत्येन सह समासे आद्युदात्तता। तेन निर्वृत्ताद्यर्थे चतुरर्थ्यां अश्मा॰ र। कुण्डर तन्निर्वृत्तादौ त्रि॰ कुडि—दाहे भावे अ। ६दाहे स्त्री।

**कुण्डक** पु॰ धृतराष्ट्रपुत्रभेदे। "कुण्डकश्चित्रसेनश्च सुवर्च्चाः कनकध्वजः" भा॰आ॰१८६अ॰, कुण्ड+स्वार्थे क। २कुण्डार्थे,

**कुण्डकीट** पु॰ कुण्डे योनिकुण्डे कीट इव विचारशून्यत्वात्। १पतितब्राह्मणपुत्रे २जारजातब्राह्मणपुत्रे ३दासीकामुके ४चार्व्वाकवचनाभिज्ञे पुरुषे च मेदि॰।

**कुण्डगोलक** न॰ कुण्डे गोलं गोलाकारं कं जलमत्र। १काञ्जिके हेमच॰। स॰द्व॰। २कुण्डगोलकयोः समाहारे च।

**कुण्डज** पु॰ कुण्डं तदाकारं गच्छति गम—बा॰ड ङिच्च। निकुम्भिकाहस्ते हेम॰ तस्य क्षतादिनाऽपिधानेन कुण्डाकारत्वात्तथात्वम्, [च शताम्रिका" भा॰ आ॰ ६७अ॰।

**कुण्डज** पु॰ धृतराष्ट्रपुत्रभेदे "कुण्डजश्चित्रकश्चैव दुःशला

**कुण्डजठर** पु॰ कुण्डमिव जठरमस्य। १कुण्डाकारोदरे २म-

स्मादनीयम्। तत्र यदग्निप्रणयनन्तत् सोमयागार्थमेव पशोरप्युपकरोति प्रसङ्गादिति पश्वर्थमित्युक्तम्। अतोऽग्निप्रणयनस्य पशो स्व·सुत्यानन्तर्यमेव कर्त्तुं युक्तम्''इ०। "अतिप्रणीतचर्याया च वैगुण्यं दर्शपूर्णमासयोः तथाग्निहोत्रस्य''सू०''एव तावदौपवसथिकस्य अग्निप्रणयनादेरग्निहोत्रादिमासेभ्य ऊर्द्ध्वमेव कर्त्तव्यता प्रतिपाद्येदानीमग्निप्रणयनस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियायां दर्शपूर्णमासयोरग्निहोत्रस्य च वैगुण्यं भवतीति प्रतिपादयति। कुत ? इति चेत्, प्रकृतौ नैयमिकेऽतिप्रणीते उत्तरवेद्यान्तयोर्योगादिदर्शनात्। अतो वैगुण्यकरत्वादग्निप्रणयनन्तावत् पुरस्तान्न कर्त्तव्यमित्यस्य विशेषोऽन्येभ्य इत्युक्तम्''इ०। "सदो हविर्धानाग्नीध्रीयाग्निषोमप्रणयनवसतीवरीयहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके''सू०। "एवं तावदौपवसथिकेषु य·, स· स्व·सुत्यानिमित्तत्वादग्निहोत्रादिमासेभ्य ऊर्ध्वं कर्त्तव्य इत्युक्तम्। अग्निप्रणयनस्य सुत्यार्थत्वात् पशोरप्युपकारकत्वाच्च पुरस्तात् क्रियायाञ्चाग्निहोत्रादीनां वैगुण्यकरत्वात्तद्वदित्युक्तम्। इदानीं येषां स्व·सुत्यावचनं नास्ति स्वत्यादिभिस्तु सुत्याङ्गभावोऽस्त्येव अङ्गभावश्च दक्षिणत्वोपकारद्वारेण, तेषां सुत्याकर्मण उद्देशादिसाधन इत्यकल्पकृपाणां सदआदीनामग्निहोत्रादिमासेभ्य पुरस्तात् करणे किञ्चिददृष्टं दृष्टं वा प्रयोजनं नास्ति। तेषां पुरस्तात् करणे प्रमाणं च नास्ति, कुत ?''इ०। "तत्कालाश्चैव तद्गुणाः'' सू०। "यस्य प्रधानस्य य· काल स एव कालस्तद्गुणानां प्रधानकाल एव ह्यङ्गानां मुख्यकाल इत्यर्थ·। तदेतदाचार्यविदां प्रसिद्धम्। अत एव प्रसिद्धवदुपदिष्टवानाचार्य· 'तत्कालाश्चैव तद्गुणा,' इति। एतदुक्तं भवति यस्मात् प्रधानकाला एव प्रधानगुणा तस्मात् सदआदीनामग्निहोत्रादिमासेभ्य· पुरस्तादक्रियैव। तत्कालाश्चैव तद्गुणा इति चशब्दोऽत्र पठित प्रधानकाले च गुणा· कर्त्तव्या इत्यर्थ। सदआदीनाम्पश्वर्थतावचनम् अभ्युपगम्य सदआदीनि पश्वर्थानि वा भवन्तु, सुत्यार्थानि वा, सर्वथा तावदग्निहोत्रादिभ्य पुरस्तात् क्रिया न स्यादित्ययमभिप्राय। अङ्गानां प्रधानकालत्वमुक्तं "तत्कालाश्चैव तद्गुणाः, इति। यानि पुनरङ्गानि प्रधानकालाद्विप्रकृष्टानि, यथा'अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति'' इति तेषां पश्वर्थता नास्ति सौमिके पदार्थैर्व्यवधानादिति। अतोऽनुयाजप्रभृतीनि कर्मान्तराणि सोमाङ्गत्वेनैव विधीयन्त इति प्राप्ते उच्यते'' वृ०।"सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयो''सू०। "प्रकृतौ सिद्धस्वभावानां पदार्थानां विकृतौ पदार्थान्तरव्यवधानमात्रेण तेषामन्यत्वं न स्यात्। अनन्यत्वे च प्राकृतोपकारत्वे नाङ्गत्वमपि स्यात्। प्राकृतानां विकृतावुपकारद्वारेण हि पदार्थानां प्राधानानामनुपकारकत्वमित्ययुक्तं यदि परं व्यवधानादन्यत्वं भवति। अतो विप्रकृष्टकाला अपि पदार्थास्तद्गुणा एव भवन्ति, तदनपगमादिति कर्मान्तरत्वपक्षे वाक्यभेदादिति प्रसज्येत। यथा पृष्ठ्याभिप्लवयोरिति व्यवधानादन्यत्वाभावे दृष्टान्त। यथा पृष्ठ्यस्याभिप्लवस्य वान्यस्य वा षडहस्य रूपविशेषस्य मध्ये यजमानमरणस्य निमित्तेन नैमित्तिकमहरन्तरमुपजायते तत्र तेन व्यवधानमस्ति, तथा पृष्ठ्यादिषडहविशेषबुद्धिर्नापैति तद्वदत्रापीति। यस्माद्व्यवधानात् पदार्थान्यत्वं नास्ति, अत एवौपवसथिकस्याग्निहोत्रादिमासेभ्य· पुरस्तात् क्रियाशङ्कानिराकरणार्थमिदं प्रकरणमारब्धम्। कानिचिदङ्गानि तत्कालानि कानिचिद्विप्रकृष्टकालानीत्येवमुभयथा व्यवहारोऽस्ति। सर्वथा तावदग्निहोत्रादिमासेभ्य· पुरस्तादौपवसथिकं न कर्त्तव्यमिति प्रकरणार्थं ''वृ०।"सगुणानां ह्येव कर्मणामुद्धार उपजनो वा''सू० "अयमप्यग्निहोत्रादिमासेभ्य· उपरिष्टादौपवसथिकक्रियाया हेतु। यस्मात् प्रधानकर्मणामुद्धारे उपजने-उत्कर्षे च सगुणानामेव सर्वत्रोद्धारादिर्दृष्ट यथा स्नानभोजनविहाराणामहरह· कार्याणां कस्यचिदुद्धारे सगुणस्यैवोद्धारो दृष्ट·,उत्कर्षे च सगुण एवोत्कृष्यते, एतेषां नित्यकार्याणामन्तराले अनन्यनैमित्तिकमुपजायमानं सगुणमेवोपजायते,एवमत्रापि यैर्येर्विधिकैरग्निहोत्रादिभिरुत्कृष्यमाणं सौत्यं कर्म आत्मनो गुणभूतेन औपवसथिकेन सहोत्कृष्यते। हि यस्मात् प्रसिद्धौ। यस्मात् सर्वत्र उद्धारोपजनोत्कर्षा सगुणानामेव दृष्टा· तस्मादत्रापि सगुणस्य सौत्यस्य उत्कर्षो युक्त इति सूत्रार्थ'' वृ०। "सुब्रह्मण्या त्वतन्त्रम्'' सू०। "प्रासङ्गिकोऽयं सुब्रह्मण्याविचार· प्रकृतावुपसत्सुत्याकालत्वात्। सुब्रह्मण्याया· अग्निहोत्रादिमासानाञ्च सुत्योपसदभावात् सुब्रह्मण्याया अभावशङ्का स्यात्, तत इदमुच्यते। सुब्रह्मण्याया अयं विशेष·। अतन्त्रं-नित्य कर्त्तव्या, अग्निहोत्रादिमासेष्वपि अप्राकृतोऽयङ्गाव इति नोत्कृष्टव्या। कस्मात् इ? कालसंयोगत्वात्। प्रकृतावुपसत्सुत्याकाला सती सुब्रह्मण्या

नक्षत्रविशेषविशिष्टाऽऽहूयते । इह पुनरप्राकृतत्वात्कालस्य तेनोपलक्षण प्रकृत्या सम्प्रज्ञाण्याया न्ययुक्तमिति चमत्-मानेनागमष्टता कालसङ्ख्याविशेषणाऽऽज्ञातव्या । सुत्याभागश्चेति कालस शयत्वादित्यस्यायमर्थ । प्रकृतौ द्वादशाहे सुयानीत्यादयःसङ्ख्याविशेषाः किमुपवदह सङ्ख्याविशेषप्रयुक्ताः आहोस्वित् क्रियाबन्त्यहानि । तत्र तदङ्ग सङ्ख्याप्रयुक्ता इत्येवङ्गालस शयत्वादित्यर्थः" सू० । "उत्सर्गमेके सुत्योपसद्गत्वात्" सू० । "सुब्रह्मण्याया उत्सर्गमेके इच्छन्ति सुत्योपसद्गत्वात् । किमिद सुत्योपसद्गत्वमिति ? सुत्यानामेवायङ्गो नोपसदा क्रमालिङ्ग बलीय इति । अतोऽसदुपसदाङ्गत्व उपसत्कालवर्त्तित्वात् उपसद्गत्वोपचारः अग्निहोत्रादिमासानामसुत्यत्वात् उपसत्कालत्वात् सुब्रह्मण्योत्सर्गमेक आहुरित्यर्थः" इ० । "क्रिया स्येव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोष "सू० । "अस्या क्रियैव निर्वीयते सोमयागसाधनस्य कारत्वात् मन्त्रस, प्रकृतौ सोमयागादूर्ध्वं यावत्सुत्याकालस्तावदाहूयते । तद्वदत्राप्याज्ञातव्या । तावत्कालस्योपवत्स्वे चैतत्मन्त्रस्यादस्या उपसत्सम्बन्ध तदभावात्तस्यास्त्यागो युक्त । अत्रायमपि विशेषोऽस्ति । औचित्यादपि न त्याज्या । आदितआरभ्य सर्वेष्वेवाह -स्वाह्वयन्ति कथमिदानीं नाह्वयन्ति । नूनमयं सोमोऽस्माभ्यन्न दास्यत इति देवतायाः शङ्का स्यात् तन्निवृत्त्यर्थमाज्ञातव्या । प्रारब्धस्य मध्ये त्यागस्य कारणाभावात् त्यागे दोष एव स्यादित्यभिप्रायः । परवदर्थविचारोऽत्र स्वपदार्थपरिज्ञानार्थ एव । अतिप्रैषः स सुत्यप्रयोक्तृ इति" इ० । "त्रिवृता मास पञ्चदशेन मासम् सप्तदशेन मासम् एकविंशेन मासम् त्रिणवेन मासम् अष्टादशत्रयस्त्रिंशाभि द्वादशाहस्य दशाहानि । महाव्रतश्चातिरात्रश्च"सू० । "अत्र पृष्ठ्यस्य पञ्चभिरहोभि पञ्च मासा कर्त्तव्याः । षडेताश्चादशाहानि दशरात्रो महाव्रतमुदयनीय । क्लृप्तोक्तसामान्यप्रायणीय "इ० । "सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति"सू० । "स्तुतिवादोऽय बहूनामत्र सम्भवाद्वार्त्तिक समासोऽनेन सूत्रकारेण न सूत्रित । स कर्त्तव्येषु परप्रत्ययादेव कर्त्तव्यः" नारायणवृत्तिः कात्या०श्रौ० २४,४,२, सूत्रादौ विशेष उक्तो यथा "कुण्डपायिनामयन पौर्णमासीदीक्षम्" सू० । कुण्डपायिनामयनमिति सत्रस्य संज्ञा तस्य पौर्णमास्या दीक्षा भवति" कर्कः । "चतुर्थ्या वाऽपरपक्षस्य"सू० । इ ग वि-कल्प फाल्गुनापरपक्षस्य वा चैत्र्या पौर्णमास्यामिति" कर्क "मास दीक्षा "सू० । "तत्र भवन्ति"कर्क । "सोमक्रयणवर्ज सुत्यास्थानेषु मासमग्निहोत्र जुह्वति" सू० । सोमोपनहन कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोम । अग्निहोत्र च सायारम्भ प्रातरपवर्गम् तत्र द्वावपि होमौ कालैक्यात्तन्त्रेणोपक्रमितव्यौ । प्रधानस्य तु भेद चतुर्गृहीतेनाग्नेयी सायमाहुति कृत्वा पुनश्चतुर्गृहीतेन सौरीमाहुति जुहोति तन्त्रेणोत्तरा जुहोति । गार्हपत्यकार्य्य तत्र प्रागभिहृतेएव न शालाद्वार्य्ये, ज्योतिष्टोमे हि तद्धुनम् न चाग्निहोत्र ज्योतिष्टोम न च तदङ्गत्वमिति आहवनीयस्वतिप्रणीत एव" कर्क "सोमयज्ञनपूर्वकम् अत्राग्निहोत्रशब्दोऽभिनवाग्निहोत्रधर्मातिदेशार्थ ततश्च तद्धर्मकं कर्मान्तर मासपूर्तिपर्यन्त प्रत्यह भवति"स०व्या० । "दर्शपूर्णमासाभ्यां मासम्" सू० । "मध्येषु "कर्क । "पक्षादौ यद्यासविस्तारविच्छिन्न" सू० । "पक्षस्यादौ प्रतिपदि यद्यावविस्तडेय सर्वस्मिन् पक्षे भवति सकले शुक्ले दर्शेष्टि, सकले कृष्णे पौर्णमासेष्टि "स०व्या० । "सारस्वते च प्रथमे" सू० । "एवमेव"कर्क "तन्त्रेण वा समस्तचोदितत्वात्" सू० । "याश्च पक्षस्यादौ तन्त्रेणैव दर्शपूर्णमासौ कर्त्तव्यौ समस्तयोर्हि चोदना "दर्शपौर्णमासाभ्या मासमिति" नह्यत्र कालभेदक तथाऽग्निहोत्रवदत्रापि तन्त्रमेव" कर्कः "न दर्शपौर्णमासस्य पक्षभेदेनानुष्ठानम् नि नहि तन्त्रेण कर्तव्यौ"कुत ? समस्तचोदितत्वात् समस्तयोरेव दर्शपौर्णमासयो प्रत्यह मास पर्यन्त विहितत्वात् सारस्वते तु पक्षभेदेनैव, तत्र तथैव विधानात्"स०व्या० । "अग्निहोत्र च"सू० । "अत्र इत्यत्र पूर्वमेवाभिहितो न्याय " कर्क तन्त्रेण न तु नित्याग्निहोत्रवत्सायम्प्रात पृथक्पृथगिति अतो द्विवेव सायम्प्रातस्तनमग्निहोत्र तन्त्रेणैव होतव्यम् एककालत्वादङ्गानि तन्त्रेण प्रधानाङ्गतयस्तु भिन्ना " स०व्या० । "पृथक्-मासाश्चातुर्मास्यपर्वभि " सू० "नीयन्ते वैश्वदेवेन मासम्" "वरुणप्रघासैर्मासम् साकमेधैर्मासम् शुनासीरीयेण मासमिति तावद्व्र० श्रुते " कर्क । "पृथक् पृथक् चत्वारो मासा नेयाः" स०व्या० । "साकमेधा दर्शपूर्णमासवत्" सू० । "तन्त्रेणोक्तो न्यायः" कर्क । "सोमा वा सामान्यात्"सू० । "एते अग्निहोत्रादयः सोमा वा भवन्ति कुत सामान्यात् सत्र हि सोमयागे गृहीयत्" स०व्या० । "न जुहोतिशब्दात्"सू० । "नैतदेवम् सोमा इति कुत ?

एतत्? जुहोतिशब्दात् "मासमग्निहोत्रं जुहोतीति" जुहोतिशब्दोऽत्र भवति न चासौ सोमयागेषु प्रसिद्धः तस्मान्न सोमा इति" संव्या०। "काममितरे" सू०। "इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः न हि तत्र जुहोतिशब्द इति नेत्युच्यते दर्शपूर्णमासादय शब्दा निरुपपदा एव दर्शपौर्णमासादीन् सोमान् प्रथाययन्ति सोमोपपदाः निरुपपदाश्चैते मास दर्शपौर्णमासाभ्यामिति तस्माद्दर्शपौर्णमासादयोऽपि न सोमा एते" संव्या०। दर्शपौर्णमासादयः कामं सोमा भवन्तु यतस्तत्र जुहोतिशब्दो नास्ति परमार्थतस्तु तेऽप्यत्र सोमा न भवन्ति यतो दर्शपूर्णमासादय शब्दा निरुपपदा अत्र श्रूयन्ते न चातुर्मास्यसोमा दर्शपूर्णमाससोमा इत्येव सोमोपपदा अतस्तेऽपि न सोमा इति सिद्धान्त। एव षण्मासाः परिपूर्णाः मासश्चात्र सर्वत्र सावनस्त्रिंशदहात्मकः अथोत्तरेषु षट्सु मासेष्वहान्याह"कर्कः। "इतिशातयतोरयनपूर्वपक्षेण षण्मासान्"सू०। "इतिशातयतोरयनस्य पूर्व्वपूर्व्वपक्षेण षण्मासान् नयेयुः। तत्र विशेषमाह" कर्क "उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम्"सू०। "उत्तमे द्वादशे मासे एतान्यहानि भवन्ति"संव्या०। "उपरिष्टादतिरात्र भवति"सू०। "अनुपहूयते यदन्यतरतोऽतिरात्रस्तेनाहीन इति"देव०"अन्त एक उदयनीयातिरात्र एव भवति न प्रायणीय इत्यर्थः"कर्कः। "उभयतो वा"सू० "अतिरात्रो भवति सत्रत्वात् अनुपहूयतिस्तु अहीनत्वेन सत्त्वीति तत्कथम्? हविर्यज्ञैर्व्यवहितत्वात्"देव० "अथवोभयतोऽतिरात्र भवति प्रायणीयश्चोदयनीयश्चात्र द्वावपि भवत इत्यर्थ"संव्या०। "हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात्"सू०हविर्यज्ञेभ्योऽवस्थितेभ्य एके प्रायणीयमतिरात्रमिच्छन्ति एव सोमानन्तर्यं भवतिए के तन्नेच्छन्ति अग्नीषोमीयोत्तरकालता हि तस्य प्रकृतौ दृष्टा इहापि तद्वदेव तस्मात् प्रागेव हविर्यज्ञेभ्यः प्रायणीय"कर्क उभयतोऽतिरात्रपक्षे प्रायणीयमतिरात्रमेके आचार्या "हविर्यज्ञेभ्योऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपर्वभ्यः परं कुर्वन्ति एव हि सर्व्वेषां सोमयागानामानन्तर्यमव्यवधानं कृत भवति इतरथा हविर्यज्ञैर्व्यवधान स्यात् एके एतन्नेच्छन्ति यत प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा इहापि च तद्वदेवानुष्ठान युक्तम् तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयो भवति। अन्येभ्य सत्रेभ्योऽत्र विशेषमाह" संव्या०"ऋतुसरुकाः कुण्डप्रतिरूपाश्चमसाः"सू०। ऋतुसरुकाः अष्टान्तकाः कुण्डप्रतिरूपाः वृत्ताकारा कर्क। "अत्र ऋतुसरुका अष्टान्ता मूलज्ञापकचिह्नदण्डरहिता कुण्डप्रतिरूपाः कुण्डाकारा वृत्ताश्च भवन्ति"संव्या०। "पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः"सू०। "अत्र कुण्डपायिनामयने वक्ष्यमाणाः पञ्चर्त्विजस्त्रीणित्रीणि कर्म्माणि कुर्वन्ति त्रयाणां त्रयाणामृत्विजां कर्माणि एकैकः करोति" संव्या०"होताध्वर्युपोत्रीये च"सू०। "चशब्दाद्धौत्रं च" कर्कः। "उद्गाता नेष्ट्राच्छावाकीये"सू०। "मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे"। "प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये"सू०। "सर्वत्र प्रथमान्तः कर्ता"संव्या० "प्रतिप्रस्थातागनीध्रौन्नेत्रे"सू०। "चकारश्च सर्वत्रानुवर्त्तते" कर्कः। "मुख्यासनेभ्योऽनुसंसर्पमितराणि" सू०। "आसनशब्दः स्थानवाची मुख्यस्थानेभ्यः अनु सृप्त्वा-सृप्त्वा परकीयाणि कर्माणि कुर्युः स्वकर्मकर्तृकस्य चरितार्थत्वात्" कर्क।

**कुण्डपायिनामयनन्याय** पु० जैमिन्युक्ते कुण्डपायिनामयननामकसत्त्रे ऽग्निहोत्रपदस्य प्रकृताग्निहोत्रात् कर्म्मान्तरत्वप्रतिपादके न्यायभेदे स च न्यायो जै०सू० दर्शितो यथा "प्रकरणान्तरे प्रयोजनान्यत्वम्"जै०सू०, "कुण्डपायिनामयने श्रूयते—सायम् अग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते" इत्येवमादि। तत्र सन्दिह्यते,—किं नियते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः? अथ किं नियताग्निहोत्रात् नियताभ्याञ्च दर्शपूर्णमासाभ्यां कर्मान्तरविधानम्?—इति। किं तावत् प्राप्तं?—नियतेषु कालविधि इति कुतः? कालविधिरूप एव शब्दो मासमिति। कथं कालविधिरूपता?। यत् अग्निहोत्रं जुहोति—इति विदित, मासमित्यविदितम्। एवं च अग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च न अर्थान्तरवृत्ती भविष्यतः तस्मात् कालविधि। ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यतां, वाक्यं हि बलवत्तरम्। एवं प्राप्ते ब्रूमः,—प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः। न,—इत्युच्यते। कथम्?। उपसद्भिश्चरित्वेति हुत्वा इदमभिधीयते, न च, उपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मात् अशक्यः तत्र मासविधिः 'अथ उच्येत,—उपसदोऽपि विधीयन्ते'—इति। तदा गुणविधानार्थेऽस्मिन् वाक्ये अनेकगुणविधानात् वाक्यं भिद्येत। अस्मिन् पक्षे पुनरतन्त्रम् अग्निहोत्रशब्दो न

कर्म विधेयमिति तेन वाक्यभेदो न भविष्यति। तस्मात् कर्मान्तरम् इति सिद्धम्" भाष्यम्।

तत्त्वबोधिन्यां विवृतमेतत् यथा

"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति दर्शपौर्णमासाभ्यां मासं यजेतेति" श्रूयते। उपसदश्च ज्योतिष्टोमयागे दीक्षादिवसादूर्द्ध्वं सोमाभिषवदिवसात् पूर्वं कर्त्तव्या होमविशेषा इति माधवाचार्य्यप्रभृतिप्राचीनमीमांसका तत्परिपाटी च(डावका) इत्यत्राह यमशिवजयपालकृताकारकमग्नीषोमीयादिपदनेकरेखाविविधिटाग्रभागमहावीराख्यपात्रविशेषः तत्संस्थानं यथा नक्तिन् पात्रे यवागूस्थितं दधि कृत्वा संदंशाकारकाष्ठद्वयेन तस्य ग्रीवां धृत्वा दधिपात्रस्थेन परावृत्य एकवारं तत्र स्थित प्रतप्तं यवागूदधि जुहोति नामावर्त्तनापरवारमिति वारद्वयहोमेनैकोपसद्भवतीति याज्ञिकप्रसिद्धिः। उपसद्भिरिति भेदे तृतीयाब्रह्मेणेत्यादिवत् तथाच उपसद्द्वयागाचरणं कर्त्तव्यं एतेन "उपसत्कथ्यते यत्र यतिकैर्मीहिभिश्चरेदिति मीमांसानभिज्ञस्य कल्पनं निरस्तं मीमांसाग्रन्थेष्वेतादृशार्थस्य केनापि तथानभिधानात्। अत "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुतिप्राप्ताग्निहोत्रमनूद्य उपसदानन्तर्यं माससाध्यत्वञ्चेति गुणद्वयं विधीयते किं वा विशिष्टकर्मान्तरमिति संशये नाद्यं कर्मान्तरविधिगौरवात् किन्तु प्रकृताग्निहोत्रे गुणद्वयविधिरेवोचितः। न च प्रकरणान्तरपठितत्वेनाग्निहोत्रपदात्तत्प्रकृतस्योपस्थितिरिति वाच्यम् अग्निहोत्रशब्दस्य तत्रैव यज्ञे नैमित्तिकत्वाभावात् प्रकरणान्तरेऽप्युपस्थितिसम्भवात् न च कथं तत्रैवाग्निहोत्रपदशक्तिः कौण्डपायिनामयनेऽपि तच्छक्तिसम्भवादिति वाच्यं "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्युक्ताग्निहोत्रस्य "यदग्नये च प्रजापतये च सायं प्रातर्जुहोतीति" श्रुत्या देवताकाङ्क्षानिरासेनाग्निहोत्रपदस्य नामधेयपरत्वेन तत्र रूढत्वात् इह तु देवताकाङ्क्षानिरासार्थम् अग्नये होत्रमिति व्युत्पत्तिकल्पनेनाग्निदेवताकत्वरूपयोगाभिहोत्रगुणयोगाद्गौणत्वस्यापि प्रामितत्वात् नामार्थकल्पने गौरवादिति प्राप्ते उच्यते प्राप्ते कर्म्मणि गुणद्वयविधाने वाक्यभेदापत्तेः तथाहि किं मास एव विधीयते उत उपसद्भिश्चरित्वेति उपसदपि, नाद्य निरग्निहोत्रे उपसदोऽप्राप्त्या तस्यापि विधातव्यत्वादित्युभयगुणविधौ वाक्यभेदापत्तेः प्रधानानुवादेन गुणद्वयविधाने प्रधानापूर्वस्य प्राप्तत्वेन गुणानां फलोपकारकाकाङ्क्षतया एकगुणविधानेनाकाङ्क्षानिवृत्तौ विध्यन्तरं प्रति आकाङ्क्षाविरहात् वाक्यान्तरकल्पनेनाग्निहोत्रं मासं कुर्य्यात् अग्निहोत्रमुपसदनन्तरं कुर्य्यादिति विधिद्वये पर्य्यवसानात् अपूर्वद्वय विधेयं स्यात् तत्र प्रत्येकगुणानुष्ठाने प्रत्येकमपूर्वमिश्रपूर्वद्वयमिलितानुष्ठाने च प्रत्येकजन्यापूर्वद्वयम् उभाभ्यां विलक्षणमपूर्वं वा जन्यत इति गौरवं विशिष्टैककर्म्मविधाने गुणानां प्रधानस्वरूपनिर्वाहकाकाङ्क्षतया गुणप्रधानजन्यमेकमेवापूर्वं विधेयं स्यादित्यपूर्वैक्यादेकविधिः। अतएवोक्तं "प्राप्ते कर्म्मणि नानेकोविधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः"। विध्यन्तरप्राप्ते प्रधाने अनेकगुणोविधातुं न शक्यते वाक्यभेदापत्तेरिति शेषः अप्राप्ते तु प्रधाने बहवोऽपि गुणा एकयत्नत एकवाक्यात् विधीयन्ते नानागुणविशिष्टैकप्रधानविधिस्थलेनापूर्वैक्यादित्यर्थः। नचैकगुणविशिष्टापरगुणोविधेय यथाग्निहोत्रमुपसदनन्तरं मासं कुर्य्यादिति न वाक्यभेद इति वाच्यम् गुणानां परस्परं विशेषणविशेष्यभावेनान्वयबोधे निराकाङ्क्षत्वात् तथाच जैमिनिसूत्रं "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्"। गुणानां विशेषणानां अङ्गानाञ्च परस्परमसम्बन्धः विशेष्यविशेषणभावेन नान्वय परार्थत्वात् द्वयोरपि विशेष्यान्वयित्वात् तथासत्येव कथ नान्वयस्तत्राह समत्वात् द्वयोरेव परसाकाङ्क्षतया तुल्यरूपत्वात् न परस्परं गुणप्रधानभाव। यत्तु परस्परवैशिष्ट्येन गुणद्वयैकविधित्वे विनिगमकाभावादुभयोरपि विशेष्यत्वेन विधेयत्वेन च विधेयत्वेन वाक्यभेद इति, तन्न विनिगमकाभावेन वाक्यस्य द्वैविध्येऽपि नापूर्वभेदकल्पना किन्तु कारणतावच्छेदकभेदेन कारणभेदमात्रम् अन्यथा द्वैतवाक्यभेदस्य विशिष्टैकप्रधानविधिपक्षेऽपि सम्भवात्। किञ्चोपसदानन्तर्य्यविशिष्टे माससाध्यत्ववैशिष्ट्य माससाध्यत्वविशिष्टे वा उपसदानन्तर्य्यवैशिष्ट्यमिति विनिगमकाभावात्। नचैवम् द्वयमिति न्यायेन विशेष्ये युगपद्विशेषणद्वयमिति वाच्यं भेदे विशिष्टवैशिष्ट्यबोधस्यौत्सर्गिकत्वात्। किञ्च विशेष्यविशेषणभावस्य द्वैविध्येऽपि विशिष्टस्यानतिरिक्ततया कारणैक्यात् कार्य्यैक्याच्च न कार्य्यकारणभावभेदोऽपि एकाङ्गापूर्वं प्रत्येव परस्परसापेक्षतया उभयोर्हेतुत्वादिति वाक्यार्थैक्यात् नोक्तभेदरूपवाक्यभेदोदोषाय "कारणतावच्छेदकगौरवम्" । विशिष्टविधिपक्षेऽपि तुल्यमित्याकरे विस्तरः"।

तथा चैतादृशतावचट्'त्रिकौण्डपायिनामयनप्रकरणपाठ एव कर्म्मान्तरत्वे प्रमाणं तथा च सिद्धान्तसूत्रम् "प्रकरणान्तरे प्रयोजनान्यत्वमिति" अतएव प्रकरणाद्वाक्यस्य बलीयस्त्वात् गत्या नित्याग्निहोत्रस्योपस्थित्या गुणविधिरित्यपि निरस्तं तस्योक्तगौरवपराकृतत्वात्। एवञ्च गौण्याग्निहोत्रपदप्रयोगस्तद्धर्म्मातिदेशार्थः अतएव "देवश्राद्धादौ श्राद्धशब्दो गौणस्तद्धर्म्मप्राप्त्यर्थः कौण्डपायिनामयने इवाग्निहोत्रशब्द इति" श्राद्धविवेक।

**कुण्डपाय्य** पु॰ कुण्डेन कुण्डाकारेण चमसेन पीयते सोमोऽत्र आधारे यत्—पा॰ युगागमश्च। कुण्डपायिनामयननामके सत्रभेदे "यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्य" ऋ॰ ८,१७,१२

**कुण्डभेदिन्** पु॰ धृतराष्ट्रपुत्रभेदे, "अनाधृष्य कुण्डभेदी विरावी दीर्घलोचनः" भा॰आ॰ ६७अ॰

**कुण्डल** पुंन॰ अर्द्ध र्चा॰। कुण्डते कुण्डयते कुडि—दाहे कुडिरक्षायां वा कर्त्तरि कर्म्मणि वा वृषा॰कलच्, कुण्डं कुण्डाकारं लाति ला—क कुण्डलदाकारोऽस्त्यस्य सिध्मादित्वाल्लच् वा। १कर्णभूषणभेदे "कनककुण्डलवान् किरिटी" विष्णुध्या॰ २वलये ३वेष्टने मेदि॰ "मण्डलानि पताकाश्च मरीचीः कुण्डलानि च" सुश्रु॰ "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगमित्यादि" आश्व॰ गृ॰ कुण्डले आबध्नीत" तत्रैव" ते च सौवर्णे एव यथाह मनुः "यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" "ताडकाचलकपालकुण्डला" रघु

**कुण्डलना** स्त्री कुण्डलं वेष्टनं करोति कुण्डल+णिच्—भावे युच्। वेष्टनकरणे (वेडा देओया) "फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता" नैष॰।

**कुण्डलिका** स्त्री मात्रावृत्तभेदे तल्लक्षणं यथा "कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र। चोलावरणचतुष्टयं प्रभवति विमलं तत्र। प्रभवति विमल तत्र पदमतिसुललितयमकम्। अष्टपदी सा भवति विमलकविकौशलगमकम्। अष्टपदी सा भवति सुरचितमनतमण्डलिका कुण्डलिनायकभणिता विबुधकर्णे कुण्डलिकेति"

**कुण्डलिन्** पुंस्त्री कुण्डल पाशाकारं वेष्टनं वा अस्त्यस्य इनि। १सर्पे स्त्रियां ङीप् २वरुणे तस्य पाशास्त्रवत्त्वात् तथात्वम्। ३मयूरे पुंस्त्री मेदि॰ ४चित्रमृगे ५वेष्टनयुक्ते त्रि॰ स्त्रियां ङीप्। सा च (जिलेपी) इतिख्याते पक्वान्नभेदे भावप्र॰ तत्पाकप्रकारो दर्शितो यथा "नूतनं घटमानीय तस्यान्तः कुशलो जनः। प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत्। द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम्। घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत्। आतपे स्थापयेत्तावद्यावद्याति तदम्लताम्। ततस्तत् क्षिपेत्पात्रे सच्छिद्रे भाजने तु तत्। परिभ्राम्य परिभ्राम्य तत् सन्तप्ते घृते क्षिपेत्। पुनः पुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम्। तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे। कर्पूरादिसुगन्धेन स्नपयित्वोद्धरेत्ततः। एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा। धातुवृद्धिकरी वृष्या रुच्या च क्षिप्रतर्पणी"।

तन्त्रसारप्रसिद्धे मूलाधारस्थिते षट्चक्रमध्यवर्त्तिन्यां देवीभेदे यथा "ध्यायेत् कुण्डलिनीं सूक्ष्मां मूलाधारनिवासिनीम्। तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम्। कोटिसौदामनीभासां स्वयम्भुलिङ्गवेष्टिनीम्। तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः। उदाहिमकरोद्द्योतां यावच्छ्वासं हृदासनः। अथेपाशुभशान्त्यर्थं समाहितमनाश्चिरम्। तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत्" इति

**कुण्डशायिन्** पु॰ धृतराष्ट्रस्यपुत्रभेदे "अपराजितः कुण्डशायी विशालाक्षो दुराधरः" भा॰ आ॰१७अ॰

**कुण्डाशिन्** पु॰ धृतराष्ट्रस्यपुत्रभेदे। "कुण्डाशी विरजाश्चैव दुःशला च शताधिका" भा॰ आ॰ ११७अ॰। "अमृते जारजः कुण्डोमृते भर्त्तरि गोलकः। यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते" देवलोक्ते २कुण्डगोलकयोरन्नभक्षके त्रि॰ स्त्रियां ङीप् "अगारदाही गरदः कुण्डाशी सोमविक्रयी" मनुः "अव्रती वृषलीभर्त्ता कुण्डाशी सोमविक्रयी" भा॰ आनु॰१४१अ॰

**कुण्डिक** पु॰ कौरवे राजभेदे। "धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः। हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चम" भा॰ आ॰ ९४" अयञ्च धृतराष्ट्र दुर्य्योधनपितृभिन्नः कुरुवंश्यः तत्रैव विस्तरः।

**कुण्डिका** स्त्री कुडि—ण्वुल्। १कमण्डलौ हेमच॰। २पिठरे (कुँडि) शब्दच॰।

**कुण्डिन्** त्रि॰ कुडि—णिनि—कुण्ड+अस्त्यर्थे इनिर्वा। १कुण्डयुक्ते स्त्रियां ङीप् "रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक्" भा॰ व॰ २७७अ॰ "दण्डी छत्री च कुण्डी च त्रिमात्रां धारयन्सदा" भा॰व॰१८अ॰ इन्दुके २शिवे पु॰ "रत्नभाण्डभेदे स्त्री "हन्ति निष्कवण-

त्वाणि कुण्डिन्यो भरिता शुभा'' भा०स०५८अ०''कुण्डि-न्य मातभेदाः ''भाण्डिन्य इति वा पाठ'' नीलकं० । कुण्डिम इति पाठस्तु मामादिकः

कुण्डिन पु० कुरवसे नृपभेदे । १कुण्डिकशब्दे उदा० २भोजदेशस्थे पुरभेदे न०''कुण्डिने पुण्डरीकाक्ष ! भोजपुत्रस्य शासनात्'' हरिवं० १०४ अ० तच्च दक्षिणदेशस्थम् । ''राजर्षेर्यौवनस्यासीद्विदर्भो नाम वै सुत । विन्ध्यस्य दक्षिणे पार्श्वे विदर्भा यो न्यवेशयत् । क्रथकौशिकसञ्ज्ञाय पुत्रास्तस्य महात्मनः । बभूवुर्वीर्यसम्पन्नाः पृथग्वंशकरा नृपाः । तस्यान्ववाये भीमस्य जज्ञिरे सुप्रायो नृप ।। क्रथस्य तु सुमान् वंशे कैशिकस्य तु भीष्मकः । हिरण्यरोमेत्याहुर्यं दाक्षिणात्येश्वरं जनाः । अगस्त्यगुप्तामाशां यः कुण्डिनस्थोऽन्वशान्नृपः'' । ''पिलासिनः कुण्डिनमण्डनायितम्'' नैष० । ''तस्माद् पावर्तत कुण्डिनेश्वर'' रघु० । ऋषिभेदे पु०। तस्य गोत्रापत्यम् गर्गा० यञ् । कौण्डिन्य तद्गोत्रापत्ये पुस्त्री ''ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रम् । बहुषु तस्य लुक् । कुण्डिनास्तद्गोत्रापत्येषु भूम्नि । ''कुण्डिनाना वासिष्ठमैत्रावरुणकौण्डिन्येति'' आश्व० श्रौ०१२, १५,२,

कुण्डीर पु कुण्ड-ईरन् । १मनुष्ये २बलवति त्रि० धरणी ।

कुण्डृणाची स्त्री कुटिलगती । ''पताति कुण्डृणाच्या'' ऋ०१।२९।६० ''कुण्डृणाच्या—वक्रया गत्या'' भा०।

कुण्डोद पु० भारतप्रसिद्धे पर्व्वतभेदे ''कुण्डोदं पर्व्वतोरस्यो बहुमूलफलोदक नैषधस्तृषितोयत्न तत्र धर्म्म च सत्यवान्'' भा०व० ८७अ० ।

कुण्डोदर पु० कुण्ड इव उदरमस्य । १नागभेदे । कर्करा-कर्करो नागौ कुण्डोदरमहोदरौ'' भा०आ० ३५अ० । २असमसोदरयुक्ते त्रि० । तत पङ्ख्ये ''उदरान्तेषु'' पा० परेषु पूर्व्वमन्तोदात्तम् ।

कुत आच्छादने चौ०प०सक०सेट् । कोतति अकोतीत् । चुकोत ।

कुतनु पु कुत्सिता तनुरस्य । १कुवेरे सिद्धा० कुवेरशब्दे विवृतिः २कुत्सितदेहान्विते त्रि० । कुगतिस० । ३कुत्सितदेहे स्त्री ।

कुतन्त्री स्त्री कुगतिस० । कुत्सितायां वीणायाम् । खेव । ३क्षुद्रदण्डे स्त्री। ''स ददर्श श्मशानस्य कुतन्त्रीं विततां हनिः'' (विश्वामित्र) भा०शा०१४१अ०''कुतन्त्री दण्डिकाम्'' नीलकण्ठ ।

कुतप पु०कुत्सितं पापं तपति कुं भूमिं तपति—तप—अच् कुतकपन् वा । १छागे २वह्नौ ३अतिथौ ४गवि ५भागिनेये ६द्विजातौ च ७दौहित्रे ८वाद्यभेदे ९नेपालकम्बले १०कुशदर्भे च न०मेदि० । पञ्चदशधा विभक्तदिनस्याष्टमे ११भागे अमर. शब्दार्थे ''मध्याह्ने खड्गपात्रञ्च तथा नेपालकम्बलम् । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टम स्मृत''इति स्मृत्युक्तेषु अष्टसु पदार्थेषु। ''कुत्सितं पापमित्याहुस्तस्य सन्तापकारिणः । अष्टावेतेयस्तस्मात् कुतपा इति विश्रुता'' इति स्मृत्युक्तेस्तेषां तथात्वम् । अह्नो-मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा । तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृत'' स्मृतिः । स च एकोद्दिष्टश्राद्धारम्भकालः ''कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्'' काल्मा० व्यासोक्तेः । ''आवर्त्तन पश्चिमदिगवस्थितच्छायायाः पूर्व्वपदिमातिकाल कुतपशेषपदख्ड इत्यर्थः'' रघु० । ''आरभ्य कुतपे श्राद्ध कुर्य्यादारौहिणं बुध । विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्'' गौतमः । ''दिवसस्याष्टमे भागे मन्दीभवति भास्करः । स कालः कुतपोज्ञेयः पितॄणां दत्तमक्षयम्'' मत्स्यपु०''त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिला'' मनूक्तौ दौहित्रतिलानां पृथङ्निर्द्देशात्तत्रकालपरता । तथाच तत्रैव मुख्यत्वम् दौहित्रादौ परिभाषिकत्वमिति विवेकः । ज्योत्स्नादि० चतुरर्थ्याम् अण् । कौतप तत्सन्निकृष्टादौ त्रि० ।

कुतस् अव्य० कस्मात् किम्+तसिल् किम कु । १कस्मादितिहेतुविषये १प्रश्ने २निन्दने च विश्व । ३आक्षेपविषये हेतौ ''नदस्मद्गृह्यहि विवेकिता कुत ?''माघ ''कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्'' गीता । ''कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत'' श्रुतिः । तत आद्ये अतिशयार्थे तरप् तमप् वा आमु०च० कुतस्तराम् कुतस्तमाम् आक्षेपविषयहेत्वतिशये अव्य० ततोभवार्थे त्यप् । कुतस्त्य कुतोभवे त्रि०। ''कुतस्त्य भीरु ! यत्तेभ्यो हृष्यस्त्रोऽपि चमामहे'' भट्टि ।

कुतुक न० कुत बा० उकञ् । १कौतूहले फलनिरपेक्षतया कर्त्तुमौत्सुक्ये अमरः । ''क्रमविगलितपुच्छैरभिमतमार्त्ता यमेन किं ग्रिष्यिन । कुतुकिनि । पुनर्न जाभो विपथरविपथ वन भयिता'' उद्भटः । ततो युवा० स्वार्थे अण् । कौतुक कौतूहले न० ।

कुतुप पुं न॰ कुतप्र+डुपोग्। १पञ्चदशवा विभक्तदिवसस्याष्टमांशे गव्दरता॰। कुत्सो कुतू डुपच्। (छोटकुपा) चर्म्ममये स्नेहपात्रे २स्नेहपाले पु॰ अमर॰।

कुतुम्बुरु न॰ कुगतिस॰। कुत्सिततिन्दुकीफले शब्दचि॰

कुतू स्त्री कुत—बा॰ कू। चर्म्ममये स्नेहपाले (कुपो) अमर॰,

कुतू(कू)णक पु॰ "कुतू(कू)णक क्षीरदोषाक्षिमूलामिव वर्त्मनि। जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मलं। शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षणम्। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः" इति माधवनिदानोक्ते बालानां नेत्रवर्त्मरोगभेदे (कुतया)

कुतूहल न॰कुतूं चर्म्ममय स्नेहपात्रमिव हृदयं हरति हृञ—अच्। अपूर्व्वस्तुदिदृक्षातिशयजन्ये चेष्टाभेदे फलनिरपेक्षतया चिकीर्षिते १कौतुके अमर "प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्" नैष॰। "कुतूहलाग्रादभिलोपवेशम्" भट्टि। "अस्यस्ति मे शकुन्तलादर्शनं प्रति कुतूहलम्" शकु॰ २प्रशस्ते ३अद्भुते च त्रि॰हेमच॰। "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" सा॰ द॰ उक्ते ४नायकयोर्भावभेदे न॰। तारका॰ इतच्। कुतूहलित जातकौतुके त्रि॰। स्वार्थे युवा॰ अण्। कौतूहल कौतुके न॰ अमर॰।

कुतृण न॰। कुगतिस॰। (पाना) कुम्भाग्राम् शब्दर॰।

कुतोनिमित्त त्रि॰ कुत कि निमित्त यस्य किम्+प्रथमार्थे तसिल् ब॰व्री॰। किन्निमित्ते किंहेतुके। "कुतोनिमित्त शोकस्ते" रामा॰।

कुत्र अव्य॰किम्+सप्तम्या त्रल् किम कु। कस्मिन्नित्यर्थे प्रश्नविषये आक्षेपविषये च अधिकरणे "हा सीता केन नीता मम हृदयगता केन वा कुत्र दृष्टा" महानाट॰ "कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपा" भाग॰७।६।२५। तत्रो भवार्थे त्यप्। कुत्रत्य कस्मिन्भवे त्रि॰"कस्यापि कुत्रत्य इहापि कस्मात्" भाग॰ ५।१०।२०।

कुत्रचित् अव्य॰ कुत्र+चित् दुन्ध॰। कचिदित्यर्थे असाकल्येन कस्मिन् देशे काले वेत्यर्थे। "असुरेभ्योभयं नास्ति युष्माकं कुत्रचित् क्वचित्"भा॰ व॰१४२अ॰। कुत्रचित् देशे कचित् काले इत्यर्थः। पा॰ अमरमते पदद्वयमिति भेद। "विशिष्ट कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव तु कुत्रचित्" मनु॰। चन। कुत्रचन तत्रार्थे अव्य॰।

कुत्स निन्दने चुरा॰ आत्म॰ सक॰ सेट्। कुत्सयते अचुकुत्सत कुत्सयाम् बभूव आस चक्रे। कुत्सयमानः कुत्सयित्वा सं कुत्स्य। कुत्स्यः कुत्सितः कुत्सन कुत्सा कुत्स। कुत्सना। कर्म्मणि कुत्स्यते अकुत्सि अकुत्सिषाताम्-अकुत्सयिषाताम् "यत्त्वकुत्सयमाव्यं नेन शतक्रतु" ऋ॰ १।६३।२। कुत्सायघुम्नमस्मभ्यम्" ऋ॰ ४।१६।१२ "कुत्सितानि कुत्सनैः" पा॰। कुत्सकः। "परिषितिः परीक्षिता अन्नात्तेय कुत्सक" भा॰शा॰१४०अ॰। "यदाऽश्रौषं कर्ण्णमाशाद्य सक्तं नामधीनुभीम कुत्सयित्वा वचोभि" भा॰ आ॰ अ॰ "नास्तिक्यम् वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्" मनु॰। "मैतच्छतच्छमयं त्वया वेत्तुं लक्ष्यमित्येव कुत्सयन्" भा॰आ॰ ५२८६श्लो॰। अत्र परस्मैपदमार्षम्

कुत्स प॰ कुत्सयते संसारं कुत्स—अच्। १ऋषिभेदे तस्यापत्यम् ऋष्यण्। कौत्स तदपत्ये पुंस्त्री "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघु। बहुषु तस्य "अत्रिभृगु कुत्सेति" पा॰ लुक्। कुत्साः तदपत्येषु। ल—बा॰ स प्रत्ये॰। २कुर्वति त्रि॰। "कुत्सायते रुप्यं स्वाय" ऋ॰ ७।२५।५। "कुत्सा कुर्व्वाणाः। करोते कुत्सशब्दनिष्पत्ति" भा॰। तत पचा॰चतुरर्थ्यां फक्। कौत्सायन तन्निर्देशादौ त्रि॰।

कुत्सकुशिकिका स्त्री कुत्सानां कुशिकानां च मैथुनम् "द्वन्द्वाद्वुन्वैरमैथुनयो" पा॰ मैथुने वुन्। कुत्सगोत्रजाया कुशिकगोत्राणाञ्च स्त्रीपुंसां मैथुने।

कुत्सन न॰ कुत्स—भावे ल्युट्। १निन्दने "देवतानाञ्च कुत्सनम्"मनु॰। कुत्स्यते ऽनेन करणे ल्युट्। २निन्दासाधनशब्दे उपचारात् ३तद्युक्ते त्रि॰। "कुत्सितानि कुत्सनै"पा॰। वैयाकरणखसूचि। मत्रविचारणार्थखसूचिस्येन धर्म्मेण वैयाकरणस्य निन्दनात् नाटयधर्म्मस्य कुत्सनत्वम् तद्वत्वाच्च खसूचकस्य तथात्वम्।

कुत्सला स्त्री कुत्स—कर्म्मणि बा॰ कलच् कुत्सं निन्दां लाति ला—क वा। नीलीवृक्षे शब्दच॰। तस्य क्रयविक्रययोः निन्दितत्वात् तथात्वम् नीलीशब्दे विवृति।

कुत्सा स्त्री कुत्स—भावे अ। निन्दायाम् अमर। "गुरुकुत्सामतिश्च या" भा॰अनु॰६५८८ श्लोक।

कुत्सित न॰ कुत्स—कर्म्मणि क्त। १कुष्ठनामौषधौ (कुड़) राजनि॰ २निन्दिते त्रि॰"कुत्सितानि कुत्सनैः" पा॰। भावे क्त ३निन्दायाम् न॰ [अकुन्थीत् चुकुन्थ कुन्थ्यात्

कुथ क्लेशे (कोंथपाड़ा)इदित् भ्वादि॰सक॰सेट्। कुन्थति

कुथ पूतिगन्धे दिवा॰ पर॰ अक॰प॰सेट्। कुथ्यति अकोथीत्। मणिकुथ्यति णिचि कोथयति (पोंचा) निकल्पने। तस्य

दिनं भवासरस्तु भज्ञमः” इति सिद्धान्तशिरोमणिः। “इनोदयद्वयान्तरमिति। अर्कोदययोरन्तरं यत् तदर्कसावनं दिनम्। तदेव कुदिनसंज्ञं ज्ञेयम्। अतोऽपि पूर्ववन्मासवर्षादिकल्पना। अत्रार्कग्रहणमुपलक्षणं तेनान्येषामपि ग्रहाणां तदुदयद्वयान्तरं तत्सावनमिति” प्रमि०।

तद्दिवसस्य कार्य्यविशेषे आदर्त्तव्यतामाह सू०सि०— “सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिस्तु सावनेनैव गृह्यते”। “सूतकं जन्ममरणसम्बन्धि। आदिपदग्राह्यं चिकित्सितचान्द्रायणादि तस्य परिच्छेदो निर्णयः। दिनाधिपमासेश्वरवर्षेश्वराः। तथा—समुच्चये। ग्रहाणां गतिर्मध्यमा। तुकारात् स्फुटगतेर्निरासः तस्याः प्रतिक्षण वैलक्षण्याहिनसम्बन्धस्याभावात्। एतेन स्पष्टगत्या स्पष्टग्रहस्य चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन। एवकारादन्यमाननिरासः” प्रमि०। “प्रायश्चित्तं सूतकाद्यं चिकित्सा यज्ञाद्येयं कर्म वारादिकं च। मासे त्वस्मिन् खेचराणां च चारा विज्ञातव्याः सावनात् भास्करीयात्” श्रीपतिः॥

कुवासरभूमिदिनादयोऽप्यत्र। २ज्योतिषभिन्ने दिने च

कुदृष्टि स्त्री कुत्सिता दृष्टिः ज्ञानम्। वेदबाह्यतार्किककल्पनायाम्। “या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः” मनुः।

कुदेह पु० कुत्सितो देहोऽस्य। १कुबेरे २कुत्सितदेहयुक्ते त्रि०। कुगतिस० ३कुत्सिते देहे पु०। कुदेहमानाहिधिदृष्टदृष्टे” भाग०५।१२।२।

कुद्दार पु० कुं पृथ्वीं दारयति दृ—विदारे अण् पृषो०। १कुद्दाले भूमिविदारणास्त्रे २कोविदारवृक्षे अमरटीका।

कुद्दाल पु० कुं भूमिं दलति दल—अण् उप०स०पृषो०। १कोविदारे वृक्षे अमरटी० २भूमिदारणास्त्रे (कोदाल) मेदि०। “समासाद्य बिलं तत्राप्यखनन् सागरात्मजाः। कुद्दालैर्हषुकैश्चैव समुद्रं यत्नमास्थिताः”—भा०व० १०७अ०। “कुद्दाल दात्रपिटकं प्रकोष्ठं काष्ठभाजनम्” भा०शा० २२८अ०। हस्त्यादि० बहुव्रीहौ एततपूर्व्वस्य पादस्य नान्त्यलोपः कुद्दालपाद। स्वार्थे क। कुद्दालक तत्रार्थे।

कुद्मल न० कुड्मल+पृषो०। विकाशोन्मुखे पुष्पमुकुले अमरटी०

कुद्य न कुद—क्यप्। भित्तौ अमरटीका।

कुद्र मिथ्योक्तौ इदित् चु०उभ०सक०सेट्। कुन्द्रयति अचुकुन्द्रत्। प्रमिकुन्द्रयति गोपधकरणेनैव दमिक्रौ इदित्करणं स्वरार्थम्।

कुद्रङ्क पु० कुत्सितः रङ्कश्चिङ्गमस्य पृषो०। मञ्चोपरिस्थे मण्डपे त्रिका०।

कुद्रङ्ग पु० कुत्सितो रङ्गो यत्र पृषो०। मञ्चोपरिस्थे मण्डपे हारा०

कुद्रव पु० कुं भूमिं द्रवति द्रावयति द्रु—अन्तर्भूतण्यर्थे—अच्। कोद्रवे धान्यभेदे (कोदो) भरतः। [पुंस्त्री०।

कुद्रि पु० ऋषिभेदे तस्यापत्यं शुभ्रा० ढक्। कौद्रेय तदपत्ये

कुधान्य न० कुत्सितं धान्यं कुगतिस०। कुत्सिते धान्यभेदे स च सुश्रुते गुणसहितोदर्शितो यथा “कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखकुरुविन्दगवेधुकावरुकतोयपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः”॥ “उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः। श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः। कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः। कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः। कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः। यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः। मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा। विशोषी तत्र भूयिष्ठं वरकः सउकुन्दकः। रूक्षा वेणुयवा ज्ञेया वीर्य्योष्णाः कटुपाकिनः। बद्धमूत्राः कफहराः कषाया वातकोपनाः”

कुध्र पु० कुं पृथिवीं धारयति धृ—मूलविभुजादि० क हृत०। महीध्रे पर्वते हला०।

कुनक पुंस्त्री करटे स्त्रियां जातित्वात् ङीष्।

कुनख पु० कुत्सितो नखोऽत्र। सुश्रुतोक्ते रोगभेदे (कुनि) तल्लक्षणं तत्रैवोक्तं यथा। “अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः। भवेत्तु कुनखं विद्यात् कुलीनमिति सञ्ज्ञितम्”। “कुनखे चिप्परोगे च” सुश्रु०। २ब०। कुत्सितनखयुक्ते त्रि०स्त्रियां स्वाङ्गत्वात् वा ङीष्।

कुनखिन् त्रि० कुनखो रोगोऽस्त्यस्य इनि। कुनखरोगयुक्ते स च रोगो भुक्तावशिष्टस्वर्णस्तेयरूपजन्मान्तरीय महापातकचिह्नं यथाह विष्णुः “अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी गुरुतल्पगो दुश्चर्मा”। “कुनखी श्यावदन्तश्च द्वादशरात्रं चरित्वा तद्धननं आवपेयाताम्” विष्णुः। स्त्रियां ङीप्। स च रोगः गर्भावस्थायां मातृदोषभेदाज्जायते तदुक्तं सुश्रुते “दिवास्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनात् विकृतदृष्टिः स्नानानुलेपनात् दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखा-

यस्य च मन्दो निन्दितो भवति। वैदूर्यनिभं चन्द्रसमानवर्णं कलम्बितौतृफलसदृशवर्णं निर्मलाकाशसमवर्णमतसीपुष्पनिभं वा कुन्तफलं श्रियं भर्त्तुर्ददाति, मधुकोशसमानवर्णं श्यामलोहवर्णं मक्षिकासवर्णं निन्दितं भवति। हंसशुकमयूरताम्रचूडघटनन्द्यावर्त्तकूर्मभत्स्यसरित्प्रभा अन्ये च मङ्गलशंसिनः पदार्था कुन्तव्रणेषु यदि दृश्यन्ते तदा ते धर्मकामार्थसाधका विनिर्दिष्टाः। पादुकोलूकपादपवायसश्वभ्रजम्बुकनिगडकलासादयोऽप्येव निन्दिताः पदार्था दृश्यन्ते व्रणेषु ते दृष्टाः श्रियमपहरन्ति भर्त्तुरिति व्रणलक्षणम्। छाया कथ्यते ध्वजपताकाचामरच्छत्रतोरणश्रिविकावेश्माङ्कुशवर्द्धमानभृङ्गारगजतुरङ्गाश्चास्मिन् कुन्तफले दृश्यन्ते भौतच्छायान्तरगतास्तं कुन्तमपुण्यकृतो न लभन्ते नकुलगृहकशूकरमहिषवायसोलूककलमीकादयो ये निन्दिताः यदि कुन्ते स्युः भौतव्यक्ते तदा स कुन्तः श्रियं भुज्यमानामपि विनाशयेद्यस्तादृशकुन्तं बिभृयात्। स वध वन्धसद्योलभेत तस्य महिषी वा। चूलिकयोर्व्याघ्रनखस्य शुक्लानि चूर्णानि समभागानि कारयेत्। तत् चूर्णितं कृत्वा तेन चूर्णेन फले वर्षोपघर्षितं कुन्तफलं निर्मलं भवति दुर्गन्धं न भवेत्तथा मलेन न लिप्यते। तस्य वर्मकोषसमन्वितं समाहितं कारयेन्नालिकावनिर्म्मितं सुदृढा यामेन अनुबन्धेन श्लिष्टं स्कार्दैवलचकैः सुवर्णमये रजतमये वा वर्मणि रत्नालङ्कृतैर्नलिका श्लिष्टा कर्त्तव्या। स्कन्धे दृढपरिग्रहस्य तथाचोक्तं कुन्तस्य कर्त्तव्यं नलिकासहजं वा। नलिका चात्र प्रमाणेन श्लिष्टा कार्या हरीतकीसदृशन्नालफलसमानं विल्वफलाकारं ककुभकपित्थफलसदृशं वा इत्तमष्टास्रं वा कलशामलकाकारं वा भवति सर्वोपस्कराऽन्वितं कुन्तायुधं षष्टिपलं श्रेष्ठं पञ्चाशत्पलं मध्यमं चत्वारिंशत्पलं निकृष्टमिति प्रबलरिपुविनाशकं क्रियान्वितस्य कुन्तं कारयेत्तत्र स्वप्रमाणादधिगौरवं, यो हि कायसारस्य बलमविदित्वा कुन्तमायुधमावहेत् वादिकस्तस्याजीर्णमनागतः पुरुषस्येवाति गुरुभयेन कुन्तायुधं विधीभवति। इत्यौशनसे कुन्तलक्षणम्" कुन्ताः प्रविशन्तीत्यत्र कुन्तधारिणि लक्षणेत्यालङ्कारिकाः। "शक्तिकुन्तध्वजरथावाजिवारणगोदया" सुश्रु०। "शक्तिकुन्ताद्यायुधानीति" सुश्रुत।

कुन्तल पु० कुन्तं कुत्कोटं (उकुण) लाति ला—क। १केशे "क्वापि कुन्तलसंव्यानसंयमव्यपदेशतः। बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्" सा० द०। तदाकारत्वात् २ह्रीबेरे च अमरः। कुन्तलाकारं केशाग्राकारं लाति ला— । ३यवे ४चषके पानपात्रे ५लाङ्गले च मेदि०। ६ध्रुवकभेदे "वर्णैः षोडशभिः कार्य्यः कुन्तलो लघुशेखः। शृङ्गारे च रसे प्रोक्तः आनन्दफलदायकः" इति सङ्गीतदामो०। "कामगिरिं समारभ्य द्वारकान्तं महेश्वरि। श्रीकुन्तलाभिधो देशः कथितः पूर्व्वसूरिभिः" शक्तिसङ्गमतन्त्रोक्ते ७देशभेदे पु० भूम्नि—"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुः" सा० द०। "अथापरे जनपदा दक्षिणा भरतर्षभ" इत्युपक्रमे "जिल्लिकाः कुन्तलाश्चैव सौहृदा नलकानना" भा०भी०९अ०। दक्षिणात्यजनपदभेदे। तेषां राजा अण्। कौन्तल तद्देशन्पे। बहुषु तस्य लुक्। क्वचित् एकत्वेऽपि लुक्। "आकर्षः कुन्तलश्चैव मालवश्चान्ध्रकास्तथा। द्राविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा" भा०स०१अ०। ते अभिजनोऽस्य अण्। कौन्तल पित्रादिक्रमेण तद्देशवासिनि। बहुषु तस्य लुक्।

कुन्तलवर्द्धन पु० कुन्तलान् वर्द्धयति वृध-णिच्—ल्यु। भृङ्गराजे (भीमराज) राजनि०। तत्सेवनेन हि केशवृद्धिरिति वैद्यकप्रसिद्धिः।

कुन्तलिका स्त्री कुन्तलस्येवाकारो विद्यतेऽस्याः ठन् अत इत्वम्। दध्यादिच्छेदन्यां १क्षुरिकाभेदे पालिकायाम् हारा०। २वालानामौषधौ (वाला) स्त्री सुश्रुत। यथा "कुन्तलिकाकुरण्टिकाप्रभृतानीत्युपक्रमे "स्वादुपाकरसाः शीता कफघ्नाश्चातिपित्तला। नवकाश्चिरसाह्वाः सक्षाराः वातला सराः। स्वादुतिक्ता कुन्तलिका" [राजनि०।

कुन्तलोशीर न० कुन्तल इवोशीरम्। (वाला) नामौषधौ

कुन्ताप पु०। १वैदिके ऋचां पाठप्रकारभेदे शतप्रकारः आश्व० श्रौ० ८।३।७।८।९। सू० दर्शितो यथा

"तस्मादूर्ध्वं कुन्तापम्" सू०

"तस्मात् पाकमेरूर्ध्वं कुन्तापं शंसेत्। तस्मादूर्ध्वमिति वचनात् माध्यन्दिने वृषाकपौ प्रविष्टे तदनन्तरं कुन्तापः स्यादत इति प्रवेशे तृतीयसवनेऽपि तस्य प्रवेशो नास्तीति मन्यते" नारा०वृ०। "तस्यादितश्चतुर्दशर्चयित्वाह निनर्द्यं शंसेत" सू०। "तस्य कुन्तापस्यादितश्चतुर्दश ऋचो विच्छिन्न निनर्दोऽयमपूर्व इति तस्या स्वरूपनिदर्शनमाह" वृ०। "तृतीयेषु पादेषूदात्तमनुदात्तपरं यत् प्रथमं तस्मिन्नर्दैत्" सू०

संग्राम' कुरुजाङ्गलान्" भाग० १,४,७, कुरवो जाङ्गलाश्च देशभेदा "श्रीधर" । कुरवश्च जाङ्गलश्च "विशिष्टलिङ्गो नदीदेशोऽग्रामाः" पा०सूत्रा० एकवद्भावे कुरुजाङ्गलम् । ३सत्सुरमाहारे न० [ वरकशाके राजनि० ।

कुरुट पु० कुत्सित रोटति रुट—दीप्तिप्रतिघाते क । चिता-

कुरुण्ट पु० कुत्सितं रुण्टति रुटि—स्तेये अच् । पीतझिण्टाम् पीताम्लाने मेदि० । स्वार्थे क । तत्रार्थे अमर'

कुरुण्टी स्त्री कु+रुटि—स्तेये अच् गौरा० ङीष् । १दारु पुत्तलिकायां मेदि० । २बाह्मण्या जटा०

कुरुत पु० कुर—मा०उतच् । यन्त्रनिर्मिते इक्षुदाकारे पात्रभेदे सदव पादोऽस्य इत्यत्र० नान्यलोप' । कुरुतपादइत्येव ।

कुरुतीर्थ न० भारतप्रसिद्धे तीर्थभेदे तच्च तीर्थं "यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः । सेवापलेन देवानामभिषिक्तो गुहस्तदा । तैजसस्य च पूर्वेण कुरुतीर्थं कुरूद्वह । कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते" भा० व०८३ अ० उक्तम् । [ क्रायामल्पाया नद्याम् ।

कुरुनदिका स्त्री यथाल्पिका नदी कुरुनदिकेत्युच्यते इत्यु-

कुरुपिशङ्गिला स्त्री कुरु इत्यनुकरणशब्दकरणेन मूलाद्यवयवभक्षिकायां गोधायाम् "कर्कस्ते पिशङ्गिला कर्ं कुरुपिशङ्गिला" इति प्रश्ने "अजारे पिशङ्गिला श्वावित् कुरुपिशङ्गिला" यजु० २३।५५।५६। उत्तरम् "श्वावित् गोधा कुरुपिशङ्गिला । कुरुशब्दोऽनुकरणे पिश—अवयवे इति धातोरिगुपधेति कप्रत्यय' कुरु इति शब्दानुकरणेन पिशान् मूलाद्यवयवान् गिलति । पिशङ्गिला मूलानि यतं कुर्वी स्वापयति यतश्च भक्षयतीति गोधाया स्वभाव " वेददीप' ।

कुरुम्ब न० कुर—बा० उम्बच् । (कमलालेबु) १कुम्भपालके जम्बीरभेदे शब्दच० । २द्रोणपुष्प्यां स्त्री० टाप् राजनि० गौरा० ङीष् । से इलीष्टके राजनि०। स्वार्थे क तत्रार्थे

कुरुराज् पु० कुरूणु राजते राज—क्विप् । दुर्योधने त्रिका० कुरूणा राजा टच्समा० । कुरुराजोऽप्यत्र

कुरुल पु०कुर+उलच् । ललाटस्थे चूर्णकुन्तले हेमच०

कुरुवक पु० कु+रु—क—कुत्सितं रवोभ्रमरो यत्र कप् । १रक्तझिण्टाम् अमर' २पीतझिण्ट्या हेम०

कुरुवर्ष न० कुरुसत्कं वर्षम् । जम्बुद्वीपस्थे उत्तरकुरुसत्के वर्षभेदे उत्तकुरुशब्दे १०६४पृ० विवृति'

कुरुविन्द पु० कुरून् मूत्रकारत्वेन विन्दति विद—श वा०

तम् । १छायायाम् अमर' २माषे राजनि० ३ काचलवणे ४माणिक्यरत्ने न० राजनि० । ५कुरुविन्दरत्ने ६कुशाख्ये व्रीहिभेदे मेदि० ७दर्पणे दर्हिङ्गुले च न० शब्दचि०

कुरुविल्व पु० कुरुषु विल्वइव । १पद्मरागमणौ त्रिका० संज्ञायां क । कुरुविल्वक कुलमाषे (वनकुलथि) रत्नमा०

कुरुविस्त पु० कुरुषु विख्यात विस्त । सर्णपले अमर'

कुरुवृद्ध पु० कुरूणां जनपदानां राजानः तद्राजस्य तद्धितस्य बहुषु लुक् तेषु कुरुषु वृद्ध' । भीष्मे । "तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः" गीता ।

कुरुश्रवण त्रि० कुरवः कर्मकर्तारः तेषां श्रवण' श्रोतृणां श्रोता श्रु—ल्युट् । ऋत्विजां स्तुतिश्रोतरि "कुरुश्रवणमावृणि राजानं त्रासदस्यवम् ऋ०१०,३३।४। "कुरुश्रवण ! ददतोमघानि" ऋ० १०।३३।६ । हे कुरुश्रवण । कुरव ऋत्विजः तेषां स्तुतीनां श्रोत !" भा०

कुरुटिनी स्त्री किरीटिनी+वेदे पृषो० । किरीटयुक्तायां सेनायाम् "वाहिनी विश्वरूपा कुरुटिनी ऋ० १०,१,१२

कुरूप्य न० ईषत् रूप्यं प्रशस्तेन शस्त्रत्वात् । १रङ्गनामके धातौ राजनि० को' पृथिव्याः कुस्थानात् वा आगत रूप्यम् । पृथिव्या कुस्थानाद्वा २आगते त्रि०

कुर्कुट पुं स्त्री०कुरित्यव्यक्तं शब्दं कुटति कुट—क । कुक्कुटे हारा० "श्वान' कुर्कुटचण्डाला वमसयाः प्रकीर्तिता । राजभोज्यो विशेषेण तस्मात्सम्बन्ध न सम्प्रयेत्" पद्धत० स्त्रियां जातित्वात् ङीष् [ भे वने स्त्रियां ङीष्

कुर्कुटाहि पु० कुर्कुटतुल्यमङ्गोत अहि—इन् । कुर्कुटा

कुर्कुर पुंस्त्री० कुरित्यव्यक्तं शब्दं कोरति कुर—क । कुक्कुरे रायमुकुट' "कुर्कुराविव कूजतो" अथ०७,९५,२, "उपकर्ण्णमपि प्राप्तं निःस्वं मन्यन्ति कुर्कुरम्" पञ्चत० ।

कुर्चिका स्त्री कूर्चिका पृषो० । कूर्चिकाशब्दार्थे अमरटीका

कुर्सञ्ज पु० कुलञ्जनइव गन्धमूले राजनि० ।

कु(कू)र्द क्रीडायां भा० आत्म० अक० सेट् । कु(कू)र्दते अकु(कू)र्दिष्ट चुकु(कू)र्दे । अर्धयत्पुरिभाषया न-कुरुछुरामिति निषेधाप्रसक्तावपि दीर्घमध्यान्तरपाठसामर्थ्यात् रेफे परे न दीर्घ' इति सूचितम् । तेन कुर्दमिथ्यादौ न दीर्घः । [ अमरः ।

कु(कू)र्दन न० कु(कू)र्द—भावे ल्युट् । क्रीडायां (कोदा)

कु(कू)र्पर पु०कुर—क्विप् कुः पिपर्त्ति अच् पर' कर्म० । १जानुनि, २कफोणौ च । मेदि० दीर्घमध्यपाठान्तरे त्रि०दीर्घः

कु(कू)र्पास पुं न० कूर्परे अस्यते आस्ते वा अस् घञ् कीर्या

कञ्चुलिकायां (कांचुली) स्वार्थे क । तत्रैवार्थे । “प्रस्वेदवारिसविशेषविषक्तमङ्गे कु(कू)र्पासकं स्तनतटस्तनतटस्तत्क्षिपन्ती” माघः । “मनोज्ञकु(कू)र्पासकपीडितस्तना” रत्ना० [ २कर्त्तरि त्रि० । स्त्रियां ङीप् ।

कुर्व्वत् पुंस्त्री कृ–शतृ । १चर्मकारे २भृत्ये त्रि० शब्द०

कुर्व्वद्रूप पु० कुर्वन् फलोन्मुखं रूपं यस्य । बौद्धमतसिद्धे फलजननाय योग्ये धान्यादौ बीजे । स च बौद्धमते अतिशयात्मा सहकारिभिराधीयते इति स्थितम् यथा “अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयते इत्यभ्युपगम्यते तर्हि प्राचीनभावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति” सर्व्वदर्शनसं० । क्षणिकशब्दे बौद्धशब्दे च विवृतिः ।

कुर्व्वाण त्रि० कृ–शानच् । १भृत्ये २कारके च शब्दचि० ।

कुर्व्वादि पु०अपत्ये ण्यप्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे “स च गणः कुरु गर्ग रमङ्कष अजमार रथकार वावदूक (सम्राजः क्षत्रिये) कवि विमति कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रलाजी एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शलाका मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी ( वेणा छन्दसि ) शूर्पणाय श्यावनाय श्यावरथ श्यावपुत्र सत्यङ्कार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाकम् शाकिन् शालीन कर्त्तृ हर्त्तृ इन पिण्डी ( वामरथस्य कण्वादिवत् स्वरवर्जम् ) कौरव्य

कुल बन्धे सङ्क्तौ च भ्वा०पर०अक० सेट् । कोलति अकोलीत् चकोल । कुलम् । वंशेऽस्य प्रयोग इति वदन् दुर्गादास आकुलः सङ्कुल इत्यादिप्रयोगमपश्यन् परास्त । आ+व्यग्रतायाम् चञ्चलतायाम् । आकोलति “क्रिमेतदित्याकुलमीक्षितं जनैः” माघ “उदयतहिमाकुल ओचने” भट्टिः ।

सम्+सङ्कीर्णतायाम् सङ्कुलं युद्धम् भा०द्रो०प० । “अलिकुलसंकुलकुसुमनिराकुलेत्यादि” जयदेव । “शङ्कुलाकुलेन” माघ ।

कुल न० कुल–क, कुट् शब्दे कर्म्मणि बा० लक्, कुं भूमिं लाति ला–क, कौ भूमौ लीयते “अन्येभ्योऽपि” पा०ड० यथायथम् व्युत्पत्तिः । १जनपदे देशे । मध्यमहलद्वयेन यावती भूमिः कृष्यते तावत्यां २भूमौ “दशी कुलन्तु भुञ्जीत” मनु । “अष्टागवं धर्म्महलं षड्गवं जीवितार्थिनाम् । चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनाम्” हारीतकरणात् “षड्गवं मध्यमं स्मृतमिति तदाविध- हलद्वयेन यावती भूमिः कृष्यते तावद्भूमिः कुलमित्युच्यते कुल्लू० । ३गोत्रे ४वंशे । ५सजातिगणे विप्रकुलम् पक्षिकुलम् । खगकुलाय कुलायनिलायिताम् माघ तत्र सत्कुलधर्म्माश्च “आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् । निष्ठा वृत्तिस्तपो दानं नवधा कुललक्षणम्” । अभियुक्तोक्ताः तस्य नाशकधर्म्माश्च कूर्म्म पु०१५अ०उक्ता यथा “गोभिश्च घोटकैर्विप्र ! कृष्या राजोपसेवया । कुलान्यकुलतां यान्ति यानि हीनानि वृत्ततः । कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण वै । अनृतात् पारदार्य्याच्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौतधर्म्माचरणात् क्षिप्रं नश्यति वै कुलम् । अश्रोत्रियेषु वेदानां वृषलेषु तथैव च । विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम्” ।

मनुना तु कुलनाशहेतो कारणमुक्तं यथा “शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा । जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव विनश्यन्ति समन्ततः । तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च । सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च । यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ।’ यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् । अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते । स्त्रियान्तु रोचमानायां सर्व्वं तद्रोचते कुलम् । तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते । कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया । अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् । कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः । मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः” ।

कुमारदारविवाहविषये त्याज्यकुलानि मनुनोक्तानि यथा “महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः । स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् । हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च” । ६गृहे ७देहे च न० शब्दर० त्रि० मेदि० । “जीवप्रकृतितत्त्वञ्च दिक्कालाकाशमेव च । क्षित्यप्तेजो वायवश्च कुलमित्यभिधीयते” तन्त्रोक्तेषु ८जीवादिषु, ९०कु-

शिष्यत” इति नित्यक्लिन्नाम्नायेऽपि “सर्व्वत्रावच्छिता-श्चैषा कामिनीषु विशेषतः । प्रकाशते ततस्तासामतिहन्ति न कारयेदिति” अञ्जसा तत्त्वेन योगिना हृदयाम्भोजे नृत्यन्तीत्यस्य तैरेव गुरूपदेशेन ज्ञायते इत्यर्थः । “इयञ्च तैरेव सा देवी सदा देशकदेशितैरित्युक्तेः. सर्व्वभूतानाम् आधारे मूलाधारचक्रे स्फुरन्ती अनेन स्थाननिर्द्देश विद्युदाकृतिरित्यनेन ध्यानमुक्तं यदाहुः “तडित्कोटिप्रख्या स्वरुचिजितकालानलरुचिमिति” अथ वामेन अनेकशब्दोत्पत्तिहेतुत्वेनानेकधा भवतीत्युक्तं शङ्खमध्ये य आवर्त्तः स यथा शङ्खमध्यमावृत्य तिष्ठति तद्वदियमपि देवीत्यर्थः । इदमपान्तरवाक्यं भिन्नमेव शङ्खेति कुण्डलीत्यनयोर्हि तुल्यहेतुमद्भावेन योजना । कुण्डलीभूता कुण्डलाकारतां प्राप्ता ये सर्पा तथाभूता । केचन कुण्डलीति भिन्नं पद वर्णयन्ति भूतानि सर्पाश्च ते यथा कुटिलगतयस्तद्वदियमपीत्यर्थः इति तत्र कुण्डली परदेवतेत्यनेन पुनरुक्तिः । सर्व्वदेवमयीति देवव्याप्तिः दीव्यतीति देवी तेजोरूपेत्यर्थः अनेन तेजोव्याप्तिः । सर्व्वमन्त्रमयीति मन्त्रव्याप्तिः । शिवा शिवरूपेत्यर्थः यद्वा शिवा कल्याणरूपा । साक्षात् सर्व्वतत्त्वमयीति तत्त्वव्याप्तिः । सूक्ष्मा सूक्ष्मतरा विभुरिति विरोध परिहारस्तु सूक्ष्मा स्वरूपत सूक्ष्मतरा दुर्ज्ञाना यद्वा सूक्ष्मात् त्रसरेणोरपि सूक्ष्मतरा अणुतरा अनेना स्वादिव्याप्तिर्द्दर्शिता तदुक्तं “बालाग्रस्य सहस्रधा विदलितस्यैकेन भागेन या सूक्ष्मत्वात् सदृशी त्रिलोकजननीति” विभुः इयत्तया शक्यमशक्या । त्रिधामेति सूर्य्यसोमाग्निरूपा । यद्वा त्रिधामेति स्थानत्रयं पातालभूस्वर्गरूपा अनेन स्थानव्याप्तिर्द्दर्शिता द्विचत्वारिंशदक्षरात्मा भूतलिपिमन्त्रमयी पञ्चाशद्वर्णरूपिणीति मातृकामयी” ।

तस्या ध्यानादिकमुक्तं प्रयोगसारे यथा

“मूलाधारे कुण्डलिनीं ध्यात्वा संपूजयेन्नरः । ध्यानं तस्याः प्रवक्ष्यामि येन योगी प्रजायते । प्रसुप्तभुजगाकारा स्वयम्भूलिङ्गमाश्रिताम् । विद्युत्कोटिप्रभां देवीं विचित्रवसनान्विताम् । शृङ्गारादिरसोल्लासां सर्व्वदा कारणप्रियाम् । एवं ध्यात्वा कुण्डलिनीं ततोयजेत् समाहित । मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत् । ततोवै तोषयेत्ताञ्च स्तवेनानेन साधक । “रुद्रयामले” च प्रातः समुत्थाय प्रगुरुत्तमपण्डितः । गुरूणां चरणाम्भोजं मङ्गलं शीर्षपङ्कजे । विभाव्य पुनरेवं हि श्रीपदं भावयेद्धृदि । पूजयित्वा च विविधैरुपचारैर्नमेत् स्तवैः । त्रैलोक्यं तेजसा व्याप्तां मण्डलस्था महोत्सवाम् । तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम् । सार्द्धत्रिवलयाकारां स्वयम्भूलिङ्गवेष्टिताम् । उत्थापयेन्महादेवीं महावक्त्रां मनोन्मनीम् । श्वासोच्छ्वासादुद्गमन्तीं द्वादशाङ्गुलरूपिणीम् । योगिनीं खेचरीं वायुरूपा मूलाम्बुजस्थिताम् । चतुर्व्वर्णस्वरूपां ता वकारादिसान्तकाम् । कोटिकोटिसहस्रार्कक्किरणोज्ज्वलमोहिनीम् । महासूक्ष्मपथप्रान्तरन्तरान्तरगामिनीम् । त्रैलोक्यरचिता वाक्य देवतां शब्दरूपिणीम् । महाबुद्धिप्रदा देवी सहस्रदलगामिनीम् । महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम् । कालरूपा ब्रह्मरूपा सर्व्वत्र सर्व्वचिन्मयीम् । ध्यात्वा पुन पुन शीर्षे सुधाब्धौ विनिवेशिताम् । सुधापानं कारयित्वा पुन स्थाने समानयेत् । समानयनकाले तु सुषुम्णामध्यमध्यके । अमृताभिप्लुतां कृत्वा पुन स्थानेषु पूजयेत् । ऊर्द्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत् । प्रतिप्रयाण काले तु सुधाधाराभिराप्लुताम् । कुलकुण्डलिनीं देवीं ममृतानन्दविग्रहाम् । ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्व्वसिद्धीश्वरो भवेत् । तस्मिन् स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम् । अमृतानन्दमूर्त्तिं तां पूजयित्वा शुभां सदा । मानसोच्चारबीजेन मायां वा कामबीजकम् । पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमतस्तथा । विलोमेन पुनर्जप्त्वेति”

**कुलक्क** पु० कु+लक्क—आप्तौ भावे घञ् । करताल्याम् हारा० ।

**कुलचर्य्या** स्त्री कुलस्य चर्य्येयस्याः । १भूकर्णिकायां शब्दचि० ६त० । २कुलनाशे पु० । “कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्” । “कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः” गीता ।

**कुलघ्न** त्रि० कुलं हन्ति हन—टक् । वंशघातके । “सङ्करो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः । दोषैरेतैः कुलघ्नानां वर्णसङ्कर कारकैः । उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः । उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! । नरके नियतं वासोभवतीत्यनुशुश्रुम” गीता । तत्र यथोत्तरं कार्य्यमुक्तं तत्रैव “कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः । धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत । अधर्म्माभिभवात् कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः । सङ्करोनरकायैव कुलघ्नानां कुलस्य च” इत्युत्तरं कुलघ्नपदे दर्शितम्

**कुलज** त्रि० कुले सत्कुले जायते जन–ड । १सत्कुलोद्भवे । २कुलपालिकायां स्त्री टाप् शब्दरत्ना०

**कुलञ्ज** पु० कुं पृथिवीं रञ्जयति रञ्ज–णिच् अच् रस्य लः । कुलञ्जनशब्दे राजनि०नन्द्राग०क्षु । कुलञ्जनोऽप्यत्र "कुलञ्जनः कटुस्तिक्त उष्णश्च दीपनस्तथा । शूलदोषविनाशी च" राजनि० तद्गुणा उक्ताः

**कुलटा** स्त्री० कलात् कुलान्तरं व्यभिचारार्थमटति अट–अच् शक० । व्यभिचारिण्यां स्त्रियाम् । या तु भिक्षार्थं कुलमटति सा कुलाटा इति तत्र न शक० । इति भेदः

**कुलटी** स्त्री कुत्सितं रट्यते रट–भावे घञर्थे क गौरा० ङीष् रस्य लः । मनःशिलायां रत्नमा०

**कुलतन्तु** पु० कुलस्य तन्तुरिव । कुलावलम्बने "मया च सत्यया च त्वयैन च महात्मना । समवस्थापितं भूयो युष्माकं कुलतन्तुषु" भा०आ० ११०अ०

**कुलतिथि** स्त्री द्वितीयाषष्ठीदशमीभिन्नासु समतिथिषु चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु यथोक्तं तन्त्रसा० "द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् । विषमाश्चाकुलाः सर्वाः शेषाश्च तिथयः कुलाः"

**कुलत्थ** पु०कुलं भूलग्नं सत् तिष्ठति स्था–क पृषो० । १कलायभेदे (कुलत्थकलाइ) २वनकुलत्थे स्त्री टाप् रत्नमा० । तत्पर्य्यायादि भावप्र० उक्तं

"कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ । कुलत्थः कटुकः पाके कषायो रक्तपित्तकृत् । लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् । हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् । स्वेदसंग्राहको मेदोज्वरक्रमिहरः परः ।" भावप्र० कुलत्थिकेति निर्द्देशात् स्त्रीत्वमपि स च उपचारात् ३तद्दुल्याञ्जने ४वनकुलत्थायां च स्त्री राजनि० "कुलाली लोचनहिता चक्षुष्या कुम्भकारिका कुलत्थिकेति" राजनि० वनकुलत्थापर्य्याये उक्ते । स्वार्थे क । तत्रैवार्थे राजनि० कुलत्थे भावप्र० मसूरायां कन् । कुलत्थाञ्जनाकारप्रस्तरभेदे अमर ।

**कुलत्थाञ्जन** न० कुलत्थया कृतमञ्जनम् । अञ्जनभेदे "मलापहारि चक्षुष्यं कषायं कटुकं हिमम् । विषविस्फोटकगण्डूनां नाशकं व्रणदोषहृत्" राजनि० तद्गुणा उक्ताः

**कुलदीप** पु० कुले कुलाचारे विहितोदीपः तन्त्रसारोक्ते कुलाचाराङ्गे १दीपभेदे "अर्केन्दुमितवाट्यालकं निर्म्मितं वर्त्तिकम् । प्रदीपं तत्र संस्थाप्य चक्रेऽत्र मपूजयेत् । हृते तस्मिन् कुलदीपे विघ्नैश्च परिभूयते । तदवशक्षमनन्येष मिश्रयेत् कुलदीपकम्" कुलं दीपयति अच् उप०स० । २कुलप्रकाशके कुलश्रेष्ठे त्रि०

**कुलदेवता** स्त्री० कुले पूज्या देवता । १कुलक्रमेणोपास्य देवतायाम् गौर्य्यादिषु षोडशसु मातृषु मध्ये २मातृभेदे च । ताश्च स्वह्यपरिशिष्टे उक्ता यथा "गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह । आदौ विनायकः पूज्यो अन्ते च कुलदेवता"

**कुलदेवी** स्त्री कुलैः कुलाचारैरुपास्या देवी । १तन्त्रोक्ते देवीभेदे कुलदेवताश्च तन्त्रसा० उक्ता यथा

"त्रिपुरा त्रिपुरेशी च सुन्दरी पुरसुन्दरी । श्रीमालिनी च सिद्धाख्या महात्रिपुरसुन्दरी । प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा । सम्प्रदायाकुला कौला रहस्यातिरहस्यगा । परम्पररहस्या च तथा कामेश्वरी शुभा । भगमाली नित्यक्लिन्ना भैरवी वह्निसुन्दरी । महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी । नित्या नीलपताका च विजया सर्वमङ्गला । ज्वालांशुमालिनी चित्रा वशिनी शुभगाकुला । पूर्वाख्या च तथा वरदा कामेशी मोहिनी तथा । विमला वरदा देवी जयिनी कुलभैरवी । सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी । सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्द्दिनी । स्वप्रावती शूलिनी च मातङ्गी सुरसुन्दरी । महाकाली महोग्रा च चित्ररूपा महोदरी । प्राणविद्या तथैकाक्षी चैकपादा महारूपा । वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी । त्रिखण्डा त्रिशिरा गौरी विन्ध्याचलनिवासिनी । क्षोभिणी मोदिनी भद्रा ललिता कुलकर्मिका । सर्वसम्पत्करी तारा भवानी विश्वहारिणी । कुलेश्वरी महाविद्या कथिता तव भैरव ।" । कुलैः कुलक्रमैरुपास्या देवी २वंशपरम्परया उपास्ये देवीभेदे च

**कुलद्रुम** पु० "श्लेष्मान्तक करञ्जश्च बिल्वाश्वत्थकदम्बकाः । निम्बो वटोडुम्बरौ च धात्री चिञ्चा दश स्मृताः" इत्युक्तेषु श्लेष्मान्तकादिषु दशसु [ शब्दार्थचि० धृत तिथा०

**कुलधारक** पु०कुलं धारयति स्थिरीकरोति धृ–णिच्–ण्वुल् ।

**कुलधुर्य्य** त्रि० कुलेषु धुर्य्यः अग्र्यः । कुलश्रेष्ठे

**कुलनक्षत्र** न० "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि चाकुलानि वै" तन्त्रसा० उक्तेषु साभिजित्काष्टाविंशतिनक्षत्रमध्ये आर्द्राभिजिन्मूलवर्ज्जितेषु नक्षत्रेषु तत्फलमुक्तं तत्रैव "तिथिवारे च

नकुले अकुले स्थायिनोभयम् । कुलाख्ये जयिनो नित्यम् साम्यश्चैव कुलाकुले"

**कुलनायिका** स्त्री॰तन्त्रोक्ते कुलेः सेव्ये नायिकाभेदे। शक्तिसाधनतन्त्रे १पटले तद्भेदादिकमुक्तं यथा "नटी कापालिकी वेश्या रजकी नापिताङ्गना । ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका । मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः । विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः । रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी । पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवा" । अत्र विशेषयति निरुत्तरतन्त्रे १४पटले । "नटी कापालिकी वेश्या रजकी नापिताङ्गना । योगिनी श्वपची शुण्डी भूमीन्द्रतनया तथा। गोपिनी माल्यकारस्य कन्या कार्यविभेदतः । चतुर्वर्णोद्भवा रम्या कापाली सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य वेशाचरणमिच्छति । चतुर्वर्णोद्भवा रम्या सा वेश्या परिकीर्त्तिता । पूजाद्रव्यं समालोक्य रजोऽवस्थां प्रकाशयेत् । सर्ववर्णोद्भवा रम्या रजकी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य कुलजा वीरमाश्रयेत् । सत्यज्य पशुभर्त्तारं कर्म चाण्डालिनी स्मृता । विपरीतरता पत्यौ पात्रं या परिपृच्छति । सर्ववर्णोद्भवा रम्या सा शौण्डी परिकीर्त्तिता । सर्वदा यन्त्रसंस्कारो यस्याश्च परिजायते । भूमीन्द्रजा तु रम्याऽसौ सर्ववर्णोद्भवा प्रिये ! । आत्मानं गोपयेद्या च सर्वदा पशुसङ्कटे । सर्ववर्णोद्भवा रम्या गोपिनी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य या माला परिकीर्त्तयेत् । सर्ववर्णोद्भवा रम्या मालिनी सा प्रकीर्त्तिता"। वेश्याया विशेषस्तु तत्रैवोक्तः । "गुप्तवेश्या महावेश्या कुलवेश्या महोदया । राजवेश्या देववेश्या ब्रह्मवेश्या च सप्तधा। कुलजा गुप्तवेश्या स्यात् निर्लज्जा मदनातुरा । पशुभर्त्राश्रिता लोके गुप्तवेश्या प्रकीर्त्तिता । कुलजा कुलवेश्या स्यात् महावेश्या प्रकीर्त्तिता । भगलिङ्गकलामिश्र चुम्बयेच्च पुनः पुनः । एवंविधा कुलीना चेत् ब्रह्मवेश्या प्रकीर्त्तिता । दिव्यशक्तिर्वीरशक्तिस्तासां सङ्गे प्रकीर्त्तिता । चतुर्वर्णोद्भवानाञ्च सङ्गिता परिभाषिता । वेशमायद्भ्रमते यस्मात् तस्माद्वेश्या प्रकीर्त्तिता। सर्वसङ्करतो जाता सर्ववेश्या प्रकीर्त्तिता" । कुलकामिन्यादयोऽप्यत्र

**कुलनाश** पु॰ ६त॰ । १कुलध्वंसे तत्कारणं कुलशब्दे उक्तम् तदभावकारणञ्च "यावद्वेदधर्म्मो सुर्योयत् साम्ब ...दर्शनम्। यावत् साम्बुचि ...तावन्न कुलनाशनम् । कुलं भूलग्नं नाश्नाति न+अश+अच् सुप् सुपेति समासः । २उष्ट्रे पुंस्त्री॰ हेमच॰ तस्योन्नतकन्धरतया उन्नतप्रदेशस्थकण्टकादेर्भक्षणाद्भूलग्नादेरभक्षणेन तथात्वम् स्त्रियां जातित्वात् ङीप् ।

**कुलनाशन** न॰ कुलं नाशयत्यनेन नश-णिच्-करणे ल्युट् । वंशध्वंससाधने । "मुसलं कुलनाशनम् । यथा च मुसलेन वृष्णिप्रभृतिकुलनाशनं तथा भा॰मौ॰१अ॰उक्तं यथा "विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनम् । सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् । ते तान् शाम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा । अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः । इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यति । इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः । प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप । । वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् । वासुदेवस्य दायाद शाम्बोऽयं जनयिष्यति । येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः । उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्द्दनौ । समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः । जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति । इत्यब्रुवन्त ततो राजन् । प्रलब्धास्तैर्दुरात्मभिः । मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् । तयोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः । अथाब्रवीत्तदा वृष्णीन् श्रुत्वैव मधुसूदनः । अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् । एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा । कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः । श्वोभूतेऽथ ततः शाम्बो मुसलं तदसूत वै । येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः । वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् । असूत शापजं घोरं तच्च राज्ञे न्यवेदयन् । विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् । तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप ।"

चूर्णीकृतस्य तस्य समुद्रे एरकाभावमुक्त्वा एरकाभूतेन मुसलेन ३अ॰ परस्परनाशोवर्णितः यथा "ते तु पानमदाविष्टाश्चोदिताः कालधर्मणा । युयुधानप्रधानाश्च ह्यष्टैर्भोजैस्तदा । हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः । तदनन्तरमागच्छन्मोक्षयिष्यन् शिनेः सुतम् । स भोजैः सह संयुक्तः सात्यकिप्रमुखैः सह । व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ । बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः । हतं दृष्ट्वा तु शैनेयं पुत्रञ्च यदुनन्दन । एरकाणान्तदा मुष्टिं

कोपाज्जग्राह केशव । तदभून्मुसलं घोरं वज्रकल्पम-योमयम् । जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् । ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा । जघ्नुरन्यो-न्यमाक्रन्दे मुसलैः कालचोदिताः । यस्तेषामेरका कश्चि-ज्जग्राह कुपितो नृप ! । वज्रभूतेव सा राजन्नदृश्यत तदा विभो । तृणञ्च मुसलीभूतमपि तत्र व्यदृश्यत । ब्रह्मदण्ड-कृतं सर्वमिति तद्विद्धि पार्थिव ! । आविध्याविध्य ते रा-जन्! प्रक्षिपन्ति स्म यत्तृणम् । तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् । अवधीत् पितरं पुत्रः पिता पुत्रश्च भारत ! । मत्ता परिपतन्ति स्म योधयन्तः परस्परम् । पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः । नासीत् पलायने बुद्धि-र्वध्यमानस्य कस्यचित् । तत्रापश्यन्महाबाहुर्जानन् का-लस्य पर्य्ययम् । मुसलं समवष्टभ्य तस्थौ स मधुसूदनः । साम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च माधवम् । प्रद्युम्नञ्चा-निरुद्धञ्च ततश्चुक्रोध माधवः । गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वित । स निःशेषं तदा चक्रे शार्ङ्गचक्रगदा-धरः । तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जय । दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् । भगवन्निहताः सर्वे त्वया भूयिष्ठशो नरा । रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ।" भावे ल्युट् । २वंशनाशने च ।

**कुलन्धर** पु० कुलं वंशं धारयति धृ—वा० खच् मुम् च । यशु-धरे "युधिष्ठिरोलब्धराज्योदृष्ट्वा पौत्रं कुलन्धरम्" भा० १,१२,१४,

**कुलपति** पु० "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः" पुराणोक्त-लक्षणे १मुनिभेदे । "लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये । शौनकस्य कुलपतेर्द्वादश-वार्षिके सत्रे" भा०आ०१अ०१श्लो० । "ततोऽब्रवीत् कुल-पतिं पादौ सङ्गृह्य भारत ।" भा०आनु०६अ०२२०। २वंश-श्रेष्ठे च कुलनायकादयोऽप्यत्र । अश्वपत्या० अपत्यादिषु प्रागदीव्यतीयेषु अर्थेषु अण् । कौलपत तदपत्याद्यर्थेषु ।

**कुलपत्र(क)** पु० कुलं भूमिलग्नं पत्रमस्य । दमनकवृक्षे राजनि० । वा कप् । तत्रार्थे । भावप्र० कुलपुत्रक इति क्वचित्पाठे दृष्टो० ।

**कुलपर्व्वत** "पु० माहेन्द्रोमलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्व्वताः" विष्णुपु० उक्ते-षु१जम्बुद्वीपस्थवर्षसीमाकारकेषु माहेन्द्रादिषु सप्तसु व-र्षाचलेषु पर्वतेषु । एतेषां यथा वर्षमर्य्यादाकारित्वं तथा कुलाद्रिशब्दे ६८४पृ०शि० शि० वाक्ये गोक्तम् । प्लक्षादि-द्वीपेषु कुलाचलाश्च विष्णुपु० दर्शिता यथा तत्र २प्लक्षद्वीपे "मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः । सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम । गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमना शैलो वैभ्राजश्चैव सप्तमः" शाल्मले । ३"वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चान-घ ! । तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः । रत्नाभि-व्यञ्जकास्तेषु तथा सप्तैव निम्नगा । कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः । द्रोणोयत्र महौषध्यः स चतुर्थो महीधरः । कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा । ककुद्मान् पर्वतवरः" । ४कुशद्वीपे "विद्रुमाहेमशैलश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव सप्तमो मन्दराचलः । वर्षाचलास्तु सप्तैव तत्र द्वीपे महात्मने" । ५क्रौञ्चद्वीपे "तत्रापि देवगन्धर्वसेविताः सुमनोहराः । वर्षाचला महा-बुद्धे । तेषां नामानि मे शृणु । क्रौञ्चश्च वामनश्चैव तृ-तीयश्चान्धकारकः । चतुर्थो रत्नशैलश्च स्वाहिनी हय-सन्निभः । दिवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान् । ६शाकद्वीपे । "तत्रापि पर्वताः सप्त वर्षविच्छेदकारकाः । पूर्व्वस्तत्रोदयगिरिर्जलाधारस्तथाऽपरः । तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विज ! । आम्बिकेयस्तथा रम्यः के-शरी पर्वतोत्तमः" । तत्तद्द्वीपस्थेषु उक्तेष्वपि सप्तसु वर्षा-चलेषु ७पुष्करद्वीपे तु एक एव मानसोत्तराख्यः । यथोक्तं भा० ५,२०,२१, तद्द्वीपमध्ये एकः एवार्वा-चीनवर्षयोर्मर्य्यादाकारकोऽयुतयोजनोच्छ्रायायामः" । विष्णु पु०। भागवतयोस्तेषां नामभेदः कल्पभेदादविरुद्ध । कुलगिरिकुलाचलपर्वताचलादयोऽप्यत्र । "माहेन्द्रशुक्तिम-लयर्क्षकपारियात्राः । सह्यः सविन्ध्य इह सप्त कुलाच-लाख्याः" शि०शि० इह जम्बुद्वीपे ।

**कुलपालक** त्रि० कुलं पालयति पालि—ण्वुल् (कमला-नेबु) १कुरुम्बे पु०शब्दच० २वंशपालके त्रि०स्त्रियां टाप् अतइत्त्वम् । सा च कुलस्त्रियाञ्च [स्त्रियां वा ङीप् ।

**कुलपालि** स्त्री कुलं पालयति पालि—इन् । कुलपाल्यां

**कुलपुत्र** पु० कुलरक्षकः पुत्रः । वंशधरे पुत्रे तत्र भावे कर्म्मणि च मनोज्ञा० वुञ् । कौलपुत्रक तद्भावे तत्-कर्म्मणि च न०

**कुलप्रसूत** त्रि० कुले सत्कुले प्रसूतः । सत्कुलजाते

**कुलवधू** स्त्री कुले गेहे एव स्थिता वधूः । स्वकुलमात्रस्थिता-या योषिति । "मृते मृतां प्रमक्षुवधूः कापि काची

समाप्ते" उद्भट कुलयोषिदादयोऽप्यत्र" असंस्कृतप्रमीतानां त्यागिना कुलयोषिताम्" मनुः

**कुलभृत्या** स्त्री कुलैः वंशभवैः भृत्या भरणम् भृ—भावे क्यप् ६त०। गर्भिण्या दोहदादिदानरूपायां परिचर्य्यायाम् जटा०। कुलस्य भृत्या। २वंशभरणे च।

**कुलम्पुन** न०कुलं पुनाति पू—बा०खश् मुम् च। भारतोक्ते तीर्थभेदे "कुलम्पुने नरः स्नात्वा पुनाति स्वकुलानि च भा०व० ८३ अ०

**कुलम्भर(ल)** पु० कौ भूमौ रम्भे सन्धिकरणादिव्यापारे लीयते आसक्तः ली—बा० ड लस्य रः अन्तस्थस्य तु वा रः। चौरे हारा०। [ देशादौ।

**कुलर** त्रि० कुल+अश्मादि० चतुरर्थ्यां र। कुलसन्निकृष्टे

**कुलवत्** त्रि० कुलं प्रशस्तकुलमस्त्यस्य बहा० वा मतुप् मस्य वः। प्रशस्तकुलजे स्त्रियां ङीप्। सा च कुलस्त्रियां गृहमात्रावस्थितायां स्त्रियाम्।

**कुलवर्णा** स्त्री० कुले वैद्यकुले वर्णो गुणोत्कीर्त्तनं यस्याः वर्ण—भावे घञ् ६त०। रक्तत्रिवृति (लालतेओडि) राजनि०।

**कुलवार** पु० "रविश्चन्द्रो गुरुः सौरिश्चत्वारश्चाकुला इमे। "भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः" तन्त्रसा० उक्तयो कुजशुक्रवारयोः।

**कुलविद्या** स्त्री कुलक्रमागता विद्या। १वंशक्रमागतविद्यायाम्। कुलैः स्वकुलैः शिक्षणीया विद्या। "२आन्वीक्षिकीत्रयीप्रभृतिविद्यायाम् "तस्मादौ कुलविद्यानामर्थमर्थविदां वरः" रघु [ चौरस्वामो कुलपुरोहितादयोऽप्यत्र

**कुलविप्र** पु० कुलक्रमागतः विप्रः। वंशक्रमागते पुरोहिते

**कुलव्रत** न० कुले चर्य्यं व्रतम्। कुलक्रमेण कर्त्तव्ये व्रते "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" रघुः।

**कुलश्रेष्ठिन्** त्रि० कुलेषु श्रेष्ठी। शिल्पकुलप्रधाने अमरः

**कुलसंख्या** स्त्री कुले संख्या कीर्त्तिः। वंशमध्ये गणनायाम् वंशश्रेष्ठतायाम् "मन्त्रतस्तु समृद्धानि कुलान्यल्पधनानि च। कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः" मनुः

**कुलसत्र** न० कुलैः कुलजैरनुष्ठेयं सत्रम्। पित्रादिक्रमेणानुष्ठेये सहस्रवर्षसाध्ये काण्वाजिनिमतसिद्धे सत्रभेदे तच्च कात्या०श्रौ० १,६,२२, दर्शितं यथा "कुलसत्रमिति काण्वाजिनिः" सू०। "काण्वाजिनि मुनिरित्याह एष कथयति यद् कुलसत्रमेतत् सहस्रसंवत्सरं भवति कुलस्य पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादिरूपस्य वंशस्यैतत्भवति न त्वेकस्य कस्यचित् असम्भवात्। मनुष्याधिकारं चैतत् प्रारब्धं चावश्यं समापनीयं नचैकः शक्नोति समापयितुमिति यथा शक्यते तथा समापनीयमिति गम्यमाने ये बहवस्ते शक्नुवन्ति तेन तत्कुलीनाः क्रमेण कैश्चिदारब्धं कैश्चिन्मध्येऽनुष्ठितं कैश्चित् समापयिष्यन्तीत्येवं कुलसत्रं काण्वाजिनिमन्यते" कर्कः वर्षशब्दस्य दिनपरत्व कल्पनेन कात्यायनेनेद दूषितम्।

**कुलसम्भव:** कुलं सम्भवोऽस्य। वीज्ये कुलजाते अमरः।

**कुलसाधक** त्रि० कुलेन कुलाचारेण साधकः। तन्त्रोक्ते कुलाचारेण साधकभेदेषु तेच तन्त्रसारे दर्शिता यथा "उपासकान्महादेव! शृणु चैकमनाः स्वयम्। मनुश्चन्द्रः कुबेरश्च मन्मथस्तदनन्तरम्। लोपामुद्रामुनिर्नन्दी शक्रः स्कन्दः शिवस्तथा। क्रोधभट्टो रुरुश्चैव पञ्चमश्च प्रकीर्त्तितः। दुर्वासा व्याससूर्य्यौ च वशिष्ठश्च पराशरः। कौर्व्वौवह्निर्यमश्चैव निरृतीवरुणस्तथा। वायुर्विष्णुः स्वयम्भूश्च भैरवो दानवस्तथा। अनिरुद्धो भरद्वाजो दक्षिणामूर्त्तिरेव च। गणपः कुलपाश्चैव लक्ष्मीर्गङ्गा सरस्वती। रात्रीदेवः प्रमत्तश्च उन्मत्तः कुलभैरवः। क्षेत्रपालो हनूमांश्च दक्षो गरुड एव च। काश्यपः कौशकुन्तौ च जमदग्निर्भृगुस्तथा। बृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः। अर्जुनो भीमसेनश्च द्रोणाचार्य्यो वृषाकपिः। दुर्य्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा। सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा। पुष्पदन्तो महावृक्षो वाण कालश्च मन्दरः। कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा। नारदश्च महावीराः कामतो वीरसाधकाः। महाविद्याप्रसादेन स्वस्वकर्म्मसमन्विताः। एतेषां वत्स! नामानि विद्याविद्योपसेविनाम्। प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतात्मवान्। पूजायां वा शुचिर्भूत्वा प्रसीदामि कुलान्वये। अशुचिर्वानिरालम्बप्रमाणम्बा च कुलान्तिके। नित्यपूजाफलं तस्य ददामि परमीप्सितम्।" कुलवीरकुलोपासकादयोऽप्यत्र

**कुलसौरभ** न०कुलं श्रेष्ठं सौरभमस्य। मरुवकवृक्षे शब्दमा०

**कुलस्त्री** स्त्री कुले गृहे स्थिता स्त्री। कुलपालिकायाम् अमरः

**कुलहुण्डक** पु० कुलाय संघाय हुण्डते हुडि—संघे ण्वुल्। आवर्त्ते हारा० कुलहुण्डकोऽप्यत्र त्रि० पृषो०।

**कुलाकुल** त्रि० तन्त्रोक्तेषु तत्तद्धकतिथिवारनक्षत्रेषु। कुलाचारशब्दे विवृतिः

**कुलाकुलचक्र** न॰ कुलञ्च अकुलं कुलाकुलम् तयोर्विचारार्थं चक्रम्। तन्त्रोक्ते प्राह्यमन्त्रस्य शुभाशुभताज्ञानार्थे चक्रभेदे तद्विवृति तन्त्रसारे "कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह"। इत्युक्रम्य निबन्धे"वाय्वग्निभूजलाकाशपञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः (यादयाः)। कादयः पञ्चशः पञ्चलसहान्ताः समीरिता"। अ आ एकचटतपयषा मारुताः। इ ई ऐ ख छ ठ थ फ रक्षा आग्नेयाः। उ ऊ ओ ग ज ड द बलला पार्थिवाः। ऋ ॠ औ घ झ ढ ध भ वसा वारुणाः। ऌ ॡ अं ङ ञ ण न मशहा नाभसाः। "साधकस्याक्षरं पूर्वं मनुमस्यापि तदक्षरम्। यद्येकभूतदैवत्यं जानीयात् सकुलं हि तत्। भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्। मारुतं पार्थिवानाञ्च शत्रुराग्नेयमम्भसाम्"। चकारादाग्नेयं पार्थिवानां शत्रुः। तथाच रुद्रयामले "पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितः। ऐन्द्रवारुणयोः शत्रुर्मारुतं स प्रकीर्त्तितः। नाभसं सर्वमित्रं स्यात् विरुद्धं नैव शीलयेत्। मित्रे सिद्धिः समाख्याता उदासीने न किञ्चन। शत्रुर्व्याधिरमित्रे च सकुले सिद्धिरुत्तमा"।

**कुलाङ्गार** न॰ कुलस्याङ्गारमिव उपमितस॰। कुलाधमे संज्ञद्रुमके "धक्ष्यति स कुलाङ्गारं चोदितो मे ततद्रुहम्" भाग॰ १। १४। २७।

**कुलाचार** पु॰ ६त॰। कुलोचिते धर्म्मे "जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्तो धर्म्मकामार्थमोक्षदः" इत्युक्तलक्षणे सर्व्वत्र ब्रह्मदृष्टिसाधके २ज्ञानभेदे तन्त्रोक्ते १आचारभेदे च तन्त्रसारे तदाचारप्रकारो दर्शितो यथा "कालीतन्त्रे "अथाचारं प्रवक्ष्यामि यत्कृतेऽमृतमश्नुते। सर्व्वभूतहिते युक्तः समयाचारपालकः। अनित्यकर्म्मसंत्यागी नित्यानुष्ठानतत्परः। मन्त्राराधनमात्रेण शिवभावेन तत्परः। परस्मान्देवतायाश्च सर्वकर्म्मनिवेदकः। अन्यमन्त्रार्च्चनरता अन्यमन्त्रप्रपूजनम्। कुलस्त्रीवीरनिन्दाञ्च तद्द्रव्यस्यापहारणम्। स्त्रीषु रोषं प्रहारञ्च वर्ज्जयेन्मतिमान् सदा। स्त्रीमयञ्च जगत् सर्वं स्वयंभूयात् तथा भवेत्। पेयञ्चव्यं तथा चोष्यं भक्ष्यं लेह्यं स्पृष्टं शुभम्। सर्व्वं च युवतीरूप भावयेन्मतिमान् सदा। कुलजां युवतीं वीक्ष्य नमस्कुर्य्यात् समाहितः। यदि भाग्यवशाद्देवि। कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्"। तासां भगादिदेवीनाम्। तास्तु "भगिनीं भगचित्ताञ्च भगास्यां भगमालिनीम्। भगदत्तां भगाङ्गाञ्च भगकर्णां भगत्वचाम्। भगनासां भगस्तनीं भगस्यां भगवर्षिणीम्। संपूज्य ताभ्योगन्धाद्यैर्मानसैर्गुरुमेव च। नमस्कृत्य पुमानेवं नमस्येति तत सुधीः। बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा। कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत्। तासां प्रहारं निन्दाञ्च कौटिल्यमप्रियन्तथा। सर्वथा न च कुर्व्वीत चान्यथा सिद्धिरोधकृत्। स्त्रियोदेवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम्। स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रिया अपि। विपरीतरता सा तु भविता हृदयोपरि। तत्स्कारचितं पुष्पं तत्स्कारचितं जलम्। तत्स्कारचित द्रव्यं देवताभ्यो निवेदयेत्। स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं महत्। जपध्याने महाशङ्कां निवेदयेत्त्वजपस्मरेत्। स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात् कुलजां शुभाम्। भक्ष्यं ताम्बूलमन्यच्च भक्ष्यद्रव्यं यथारुचि। भक्त्याप्यशेषमस्त्राणि भुक्त्वा शेषं जपञ्चरेत्"। कालीतन्त्रे "दिक्कालनियमो नात्र स्थित्यादिनियमो न च। जपे न कालनियमो नार्चादिषु बलिष्वपि। स्वेच्छानियम उक्तश्च महामन्त्रस्य साधने। महाकारस्नानदेहागारपुष्पादिवारिषु। शुद्धिं समाचरेत्तत्र निर्विकल्पं समाचरेत्"। कुलार्णवे "कुलाचारमकृत्वा भक्त्या पापविशुद्धये। याचयेदमृतं कौलं तदभावे जलं पिबेत्। कुलाचारेण यद्दत्तं कृत्वा पात्रेण भक्षितः। नमस्कृत्य च स्त्रीपादनम्रया नरकं व्रजेत्"। अन्यत्रापि "न वृथा समवेत् कालं द्यूतक्रीडादिना सुधीः। नमयेद्देवतापूजाजपयाज्ञस्तवादिना। वीराणां जपयज्ञस्तु सर्वकाले प्रशस्यते। सर्वदेशे सर्वपीठे कर्त्तव्यो नात्र संशयः"। शिवागमे "शक्तिः शिव शिवः शक्तिः शक्तिर्ब्रह्मा जनार्दनः। शक्तिरिन्द्रो रविः शक्तिः शक्तिश्चन्द्रो ग्रहा ध्रुवम्। शक्तिरूपं जगत् सर्वं योन जानाति नारकी"। वीरतन्त्रे "ज्ञानादि मानवं शौच मानवं प्रवरोत्तम। मानस पूजनं दिव्य मानसन्तर्पणादिकम्। सर्व्व एव शुभः कालो नाशुभोविद्यते क्वचित्। न विशेषो दिवा रात्रौ न सन्ध्यायान्तथा निशि। सर्वदा पूज-

"अस्यामपि विष्टुतौ बहुदोषा' सम्भवन्तीत्याह" भा० "पापवसीयसन्तु भवति" ब्रा०

"तुशब्द' फलवैलक्षण्यद्योतनार्थः। पाप' प्रसिद्ध' व-सीय' पुण्य' तदुभयमेकान्वय' भवति। इतरत् उद्य-तीयावाक्यवदत् व्याख्येयम्। अत्र' भावोऽत्र विशेषः। इत्थं विष्टुतयस्तिस्रो विहिता', तिसृष्वपि तासु फल-विशेषश्रवणान्निन्दादर्शनाच्च समानफलत्वात्सर्वा नित्या', अत्र विशेषादेश क्रियते निमित्त वा कामो वा श्रूयते ततोऽन्य नित्य'। प्रयोगे आद्याभिरेताभिरेव स्तुतिभि: स्तोमसम्पादनं कार्य्यं, तदाह सूत्रकृत्। "प्रथमाभिर्वि-ष्टुतिभिः स्तोमविधानमनादेशे ताः पथा सर्वाभिप्रा-याश्चेति"। पुनरपि यथाविष' वा विदध्यादित्यादिना सूत्रशेषेण बहवः पक्षा' सूत्रकृतोपन्यस्ता: ते तत्रैव बोद्धव्या'। नन्वेतास्वपि प्रत्येक' निन्दादर्शनात् कथमासां नित्यत्वम्। नैष दोष', उद्यत्वान्तावत् यो दोष उक्तः अवर्षुकः पर्ज्जन्यो भवतीति, स कुलायिनीपरिग्रहे परिह्रियते। यत्र हि वर्षुकः पर्ज्जन्यो भवतीत्या-म्नातम्। यत्तु कुलायिन्या दोषदर्शनं पापवसीयसन्तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण विहृत' तत्र हि पापवसीयसो विष्टतिरिति वा श्रूयते श्वश्रेव तु पापवसीयसन्तु भवति"।

"अधरोत्तरमपावगतो रुध्यतेवगच्छत्यपरतः पापीया-ञ्छ्रेयांसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रजा आददते न यथा क्षेत्र' कल्पन्ते" ब्रा०

"प्रथमाया मध्यमायाश्चान्ते प्रयोग इति यदस्ति तदे-तदधरोत्तरमनुष्ठानं यस्मिन् देशे क्रियते तत्र वा ई-श्वरा पर्ज्जन्यः इति परिवर्त्तिन्यां यदप्युक्तम' दोषदर्शनं तदुद्यत्यां परिहृत' भवति। एषा वै प्रति-ष्ठिता विष्टुतिरिति, तत्र हि वाक्यशेषः प्रजापशु-समृद्ध्या हि प्रतिष्ठितो भवतीति"।

एतत्सामयोनि' सूक्तविशेषः। तत्पाठप्रकार' साम क'ह्निताभाष्य उक्तोयथा "सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि येषा "उपास्मै गायता नर" इत्याद्यं सूक्तं "दविद्युतत्या रुचा" इति द्वितीयं "पवमानस्य ते कव" इति तृतीयम्" तत्र उद्यतीमन्त्रे ११८३पृ० दर्शितम्। एवमुद्यती विष्टुतिरुक्ता "एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती भवत "इति इत्युक्ता परिवर्त्तिन्या विष्टुतेः प्रकारमुक्त्वा कुलायिन्या' प्रकारकथनाय प्रागुक्तं ता० ब्रा० वाक्यमुदाहृत्य व्याख्या-तम्। अत्र प्रथमसूक्ते "पराचीभि' अनुक्रमेणाम्ना-ताभिः। तेन पाठक्रमएव। द्वितीये पर्य्याये मध्यमो-त्तमप्रथमाः। तृतीयेतूत्तमाद्यनामध्यमा इत्येव व्य-त्यासेन" मन्त्रा: (पूर्वोक्ता') बोध्याः

२कुलाययुक्ते त्रि० "ऊर्ध्वश्रन्तं प्रथम' सीद योनिम्। कुलायिनं घृतवन्तम् सवित्रे" ऋ० ६।१५।१६। "कुलायिन गुग्गुल्वादिसंभरणोपेतम् तथा च श्रूयते "कुलायमिव ह्येतद्यज्ञे क्रियते यत् पैतदारया' परिधयो गुग्गुलूर्णा-स्तुकासुगन्धितेजनानि" ऐत०ब्रा०" भा०।

**कुलाल** पुंस्त्री कुल—कालन्, कुलमलति अल—अण्,कुलमा-लाति आ+ला—क—वा। १कुम्भकारे, (कुमार) अमरः "कुलालसगकोऽपर' भाषा० "नमः कुलालेभ्यः कर्मारे-भ्यश्च" यजु० १६।२७। २कुक्कुभपक्षिणि मेदि० जाति-त्वात् स्त्रियां ङीप्। ततः तेन कृतमित्यर्थे संज्ञायां कुलाला० वुञ्। कौलालक तत्कृते शरावादौ त्रि०

**कुलालादि** पु० संज्ञायां तेन कृतमित्यर्थे वुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे स च गण' "कुलाल वरुड चण्डाल निषाद कर्म्मार सेना सिरिन्ध्र सैरिन्ध्र देवराज परिषत् वधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक" कौलालकं वारुडकम् इत्यादि

**कुलाली** स्त्री कुलमलति अल—अण् ङीप्। १नीलोपलभेदे, कपित्थाञ्जनप्रस्तरभेदे, अमरः २आरण्यकुलत्थिकायाम्, राजनि० ३कुम्भकारभार्य्यायाञ्च। स्वार्थे क ह्रस्व'। कुलालिकाप्यत्र हेमच०

**कुलाह** पुंस्त्री० कुलमाहन्ति आ+हन—ड। ईषत्पीतवर्णे कृष्णजानौ अश्वे हेमच० तत' संज्ञाया कन्। २कृक-लासे, (राङ्गाकुकेलाङ्गा) इति ख्याते ३शाकभेदे शब्द-माला। "आमवातरक्तवातरोगनाशी कुलाहक" राजवल्लभः [ वृक्षभेदे रत्नमाला

**कुलाहल** पु० कुलमाहलति स्पर्द्धते अच्। (कुकुरशोङ्गा)

**कुलि** पु० कुल—इन् किच्च। १हस्ते त्रिका०। २कण्टकारि काया स्त्री शब्दरत्ना० कृदिकारान्तत्वात् वा ङीप्।

**कुलिक** त्रि०कुलमधीनत्वेन प्राधान्येन वास्त्यस्य ठन्। १कुल-श्रेष्ठे मेदि०२शिल्पिकुल,प्रधाने अमर'। (कुलेखाङ्गा)इति प्रसिद्धे ३शाकभेदे पु० मेदि० महानागान्तर्गते ४नागभेदे पु०"शेष पद्मो महापद्म' कुलिकः शङ्खपालक'। वासु-किस्तक्षकश्चैव कालियोमणिभद्रक:। ऐरावतो धृतराष्ट्र,

यथाऽनलः” भा० वि० २अ० । “आर्य्यरूपसमाचारं चरन्तं कृतके पथि” भा०आनु० २६०७ श्लो०
“कच्चिच्च कृतकैर्दूतैरित्यादि” कच्चिदध्यायशब्दे दर्शितम् ।
“कृतकं कामिनि चुक्षुभे मृगाक्ष्या” माघः । २विड्लवणे न० अमरः ।

**कृतकर्म्मन्** त्रि० कृतं कर्म्म येन । १दक्षे चतुरे कार्य्यक्षमे हेम० । २कृतस्वकार्य्ये च “यावदस्तं न यात्येष कृतकर्म्मा दिवाकरः” रामा० । कर्त्तव्यताशून्ये ३परमेश्वरे पु० । “इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः” विष्णु स० “कृतमेव न कर्त्तव्यं किञ्चित् कर्म्मास्य विद्यते धर्म्मात्मकं कर्म्म कृतं वा कृतकर्म्मा” भा० । कृतकार्य्यकृतकृत्यादयोऽप्यत्र त्रि० “समूहकार्य्यआयतान् कृतकार्य्यान् विसर्ज्जयेत्” या०स्मृ० ।“यथेष्टं गम्यतां तत्र कृतकार्य्योऽसि वै त्वया” भा०आनु०१८६२श्लो० । “कृतकृत्योविधिर्मन्ये न वर्द्धयति तस्य ताम्” माघः । ५कृतकृत्यतयाऽहितकर्त्तव्यत्वात् संन्यासिनि । “ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित्” इत्युक्तरीत्या तस्य समाप्तकृत्यत्वात्तथात्वम् “कृतकृत्यस्तु सन्न्यस्य स्वात्ममात्ररतिर्भवेत्” । अकृतकृत्योहि मृत्योर्बिभेति यथाह “प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः” इति ।

**कृतकाल** त्रि० कृतः कालः समयोयेन । १कृतावधौ विष्यादौ । कर्म्म० । २कृते समये पु० “कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे” या०।कृतसमयादयोऽप्यत्र [च त्रिका०।

**कृतकोटि** पु० कृता कोटिर्येन । १काश्यपमुनौ २उपवर्षमुनौ

**कृतक्रिय** त्रि० कृता क्रिया येन । कृतनित्यादिकार्य्ये “विप्र गुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः” मनुः ।

**कृतक्षण** त्रि० कृत क्षणः समयो येन । लब्धावकाशे ।“तस्मात्त्वं मत्युपाय कृतक्षण एवास्मि श्रोतुमिच्छामि यथोपयत्नमकृतपक्षतम्” भा० आ० २अ० । कृतसमयादयोऽप्यत्र

**कृतघ्न** त्रि० कृतं हन्ति हन–टक् । कृतोपकारस्यापकारके “शरणागतदीनस्त्रीहिंसकान् सवसेन्न तु । चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्” या० स्मृ० “ब्रह्मघ्ने च कृतघ्ने च विशुद्धानपि धर्म्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्” मनुः
“कृतघ्नानाह स्कन्दपुराणम् “भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः । तस्माद्दुष्टतरोज्ञेया विद्यायै दक्षिणा न प्रयच्छति । इमान् स्त्रियश्च योदेष्टि यश्चैतान् मातरम् । कृतस्य दोषं वदति सकामाश्च करोति यः । न करोति कृतं यश्च आश्रमान् यस्तु दूषयेत् । सर्व्वास्ताननिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः” “ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः” । “तस्मात् पित्रादिगुरोः कृतस्य दुष्कर्म्म यः वदति शेषः । सकामाश्च करोति उपकर्म्माणिति शेषः” प्रा० त० रघुनन्दनः ।

**कृतघ्नोपाख्यान** न०कृतघ्नविशेषस्योपाख्यानम् । भारतशान्तिपर्व्वान्तर्गते १६८ अध्यायमारभ्य १७२ अध्यायपर्य्यन्ते ग्रन्थे गौतमकृतघ्नस्य विहृति । “कृतं कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् । अश्रद्धेयः कृतघ्नोहि कृतघ्ने नास्ति निष्कृतिः । मित्रद्रोहो न कर्त्तव्यः पुरुषेण विशेषतः । मित्रध्रुक् नरकं घोरमनन्तं प्रतिपद्यते । कृतज्ञेन सदा भाव्यं मित्रकाम्येन चैव ह । मित्राच्च लभते सर्व्वं मित्रात् पूजां लभेत च । मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते । सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः । परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः । मित्रद्रोही कुलाङ्गारः पापकर्म्मा नराधमः । एष धर्म्मभृतां श्रेष्ठ ! प्रोक्तः पापो मया तव । मित्रद्रोही कृतघ्नो वै किंभूयः श्रोतुमिच्छसि” । भा०शा०१७२अ०

**कृतच्छिद्रा** स्त्री कृतं छिद्रं यस्याम् । कोषातकीलतायाम् । राजनि० ।

**कृतज्ञ** त्रि० कृतं कृतोपकारं जानाति ज्ञा–क । १कृतोपकारज्ञातरि २तत्प्रत्युपकारके । “कृतज्ञेन सदा भाव्यम्” भा० शा० १७१ अ० । २कुक्कुरे पु० मेदि० स्त्रियां जातित्वेऽपि अयोगोपधत्वात् टाप् । कृतं कार्य्यं जगत् जानाति ज्ञा–क, कृतं कार्य्यं ज्ञः आत्मा यस्य वा ।४ परमेश्वरे पु० “महर्षिः कपिलाचार्य्यः कृतज्ञोमेदिनीपतिः” विष्णु स० “कृतज्ञतामस्य वदन्ति सम्पदः” किरा० ।

**कृतत्रा** स्त्री कृत त्रायते त्रै–क । त्रायमाणालतायाम् राजनि०

**कृतदास** पु० कर्म्म० । एतावत्कालं त्वद्दास इत्यभ्युपगमिते पञ्चदशदासान्तर्गते दासभेदे दासाश्च पञ्चदशविधाः मिता० दर्शिता यथा
“गृहजातस्तथा क्रीतोलब्धोदायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः । मोक्षितोमहतश्चर्णाद्युद्धप्राप्तः पणेजितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः । भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः” ना० ।

'गृहे दास्यां जातो गृहजात'१ क्रीतो मूल्येन२। लब्ध'३ प्रतिग्रहादिना। दायादुपागत' पित्रादिदास'४। अनाकालभृतो दुर्भिक्षे पोषदासत्वाय मरणाद्रक्षित'५। आहित' स्वामिना धनग्रहणेनाधितां नीत'६। ऋणमोचनेन दासत्वमभ्युपगत' ऋणदास:७। युद्धप्राप्त: समरे विजित्य गृहीत'८। पणेजित' यद्यस्मिन् विवादे पराजितोऽहन्तदा त्वद्दासो भवामीति परिभाष्य जित'९। तवाहमित्युपगत' तवाहन्दास इति स्वयमुपगतः१०। प्रव्रज्यावसित' प्रव्रज्यातश्च्युत ११। कृतः एतावत्कालं त्वद्दास इत्यभ्युपगमित'१२। भक्तदासः सर्वकालम्भक्तार्थमेव दासत्वमभ्युपगम्य य' प्रविष्ट:१३। वडवाहृतः वडवा गृहदासी तया कृतसम्भोगेन तासहदास्यै दासत्वेन प्रविष्ट'१४। य आत्मानं विक्रीणीते स आत्मविक्रेता''१५। इत्येवमष्टादश प्रकारा''।

कृतधी त्रि० कृता सम्पादिता धीर्येन। शास्त्राभ्याससंस्कृतान्तःकरणे, स्थिरचित्ते, ''कृतधीः किं प्रभाषेतेति'' ''कृतधीर्मुनिरुच्यते'' गीता।

कृतध्वज पु० नृपभेदे ''कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृप' धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ'' भाग० ९,१०,१९, [ स्थासनिपुणे अमर'।

कृतपुङ्ख पु० कृत' अभ्यस्त: पुङ्ख' तद्युक्तोबाणो येन। शरा-

कृतपूर्व्वी त्रि० कृतं पूर्व्वमनेन ''सपूर्व्वाच्च'' पा०इनि। कृतपूर्व्वकर्मके तद्बोधप्रकार' सरलायामस्माभिनिरूपितो यथा ''कृतपूर्वी कटं भुक्तपूर्वी ओदनमित्यादिमहाभाष्यकारप्रयोगा दृश्यन्ते तत्र च कृतं पूर्वमनेनेति विग्रहे ''सह सुपा'' इति पा०समासे पूर्व्वादिनिरितीनेरनुत्पत्तिमता ''सपूर्व्वाच्चेति'' पा० सूत्रेण इनिर्विहित तत्र यदि कृतमिति कर्म्मणि क्त' स्यात् तदा तस्य कटादिकर्मरूपविशेषणतया सापेक्षत्वेन पूर्वादिपदेन समासो न स्यात् एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् न इत्तिसम्भव'। भाष्यप्रामाण्याच्च तत्र इत्तौ सत्यामेवा रीतिराकलनीया तथाहि प्रथम कर्म्माविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये विहिते सदन्तेन पर्वस्य ''सह सुपेति'' पा०समासे कृते तत्पर्वकात् पूर्वपदादिनिमन्त्यो भवति। पश्चाच्च कर्मृकर्तक्रियाया कर्म्माकाङ्क्षायां कटादिकर्म्मणोऽन्वय: एतदेव हरिणा दर्शित यथा ''अकर्म्मकत्वे क्वचेव क्तान्ते भावाभिधायिनि। पश्चात् क्रियावता कर्त्रा योगो भवति कर्म्मणा। यथाहि गतादिस्था यथा ग्रामादिकर्म्मभि'। क्रिया सम्बध्यते तद्वत् कृतपूर्व्वादिषु स्थितेति''। गमनकर्तृवाचकगतादिमध्यपातिनी गमनक्रिया कर्तृविशेषणत्वेनोपस्थिता यथा अविग्रहा अन्वबोधा तथा कृतपूर्वकर्त्तृबोधककृतपूर्विमध्यपातिन्यपीति तदर्थ.''।

कृतप्रणाश पु० कृतयो: पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाश'। कृतघ्नानौ दोषभेदे। स च दोषविशेष' कृतप्रणाशाकृताभ्यागमौ दोषौ जीवस्यानित्यत्वे प्रसक्तौ'' शा० सू० भा० दर्शितौ [ स्त्री राजनि०

कृतफल न० कृतं फलमस्य। १कक्कोले २कोलशिम्बायां टाप्

कृतब्रह्मन् त्रि० कृत ब्रह्म स्तोत्र येन। कृतस्तोत्रे ''यत्र वदनुग्रतः कृतब्रह्मा'' ऋ० २,२५,१,

कृतम् अव्य० कृत—भा० क्त। अलमर्थे, निषेधे च।

कृतमाल पु०कृता मालास्य। १आरग्वधे, (सोन्दाल)२कर्णिकारे च अमर'। ३कर्णिकारवृक्षे४नदीभेदे स्त्री राजनि०। ५कृतमाल्ये मालाकारे त्रि०।

कृतमुख त्रि० कृतं संस्कृतं मुखं यस्य। पण्डिते अमर'

कृतरथ पु० १निमिवंश्ये नृपभेदे ''मेरो' प्रतीपकस्तस्य जात कृतरथो यत'' भाग० ९,१३,१, स्रो०। २सम्पादितरथे रथकारे त्रि०

कृतलक्षण त्रि० कृतानि लक्षणान्यस्य। १गुणैर्विख्याते अमर'। २कृतचिह्ने च ''ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्या कृतलक्षणा'' मनु।

कृतवर्म्मन् पु० कृतवीर्य्यभ्रातरि कनकस्यपात्मजे। ''कनकस्य तु दायादाश्चत्वारो लोकविश्रुता'। कृतवीर्य' कृतौजाश्च कृतवर्म्मा तथैव च। कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्य्यादथार्जुन'' हरिवं ३३अ०। २यदुवंश्ये क्षत्रियभेदे ''समीपुत्र: प्रतिक्षत्र प्रतिक्षत्रस्य चात्मज:। स्वयभोज. स्वयभोजाद् हृदिक संबभूव ह। तस्य पुत्रा बभूवुर्हि सर्वे भीमपराक्रमा'। कृतवर्म्माग्रजस्तेषा शतधन्वा तु मध्यम'' हरि०व०३८अ०''रामे भारं समासज्य युयुधाने च वीर्य्यवान्। अक्रूरे विपृथौ चापि गदे च कृतवर्म्मणि'' हरिवं०११२अ० [ त्रिया०

कृतविद्य त्रि० कृता अभ्यस्ता विद्या येन। अभ्यस्तविद्ये

कृतवीर्य्य पु० कृत वीर्य्यमनेन। १चन्द्रवंश्ये कार्त्तवीर्य्यार्जुनजनके नृपभेदे। ''कनकस्य तु दायादाश्चत्वारो लोकविश्रुता'। कृतवीर्य- कृतौजाश्च कृतवर्म्मा तथैव च। कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्य्यादथार्जुन'' हरि०

आम्लिकापानकम् । शिलायां साधु संपिष्टं शाम्यकं वस्त्रगालितम् । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् । नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ।

अथ काञ्जी । काञ्जीविधिर्वटकावसरे लिखितः । काञ्जीकं रोचनं रूक्षं पाचनं वह्निदीपनम् । शूलजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम् । न भवेत् काञ्जिकं यत्र तत्र शाण्डिः प्रदीयते ।

अथ शाण्डिः । आमनाम्लफलं पिष्टं राजीकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं शाण्डिरुच्यते । शाण्डिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधनी । मन्दमन्दन्तु पीता सा रोचनी वह्निबोधिनी ।

अथ तक्रम् । तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधि प्रायो माहिषमम्बुकेन विमले मृद्भाजने घोलयेत् । भृष्टं हिङ्गु च जीरकञ्च लवणं राजीञ्च किञ्चिन्मिताम् पिष्टा तत्र विनिक्षिपेद्भवति तत्तक्रं न कस्य प्रियम् । तक्रं रुचिकरं वह्निदीपनं पाचनं परम् । उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ।

अथ दुग्धम् । विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् । दुग्धस्यापरे गुणा उक्ता एव दुग्धवर्गे ।

अथ सक्तवः । धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः ।

तत्र यवसक्तवः । यवजाः सक्तवः शीता दीपना लघवः सराः । कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः । ते पीता बलदा वृष्या वृंहणा भेदनास्तथा । तर्पणा मधुरा रुच्याः परिणामे बलापहाः । कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः । प्रशस्ता घर्मदाहाढ्यव्यायामार्त्तशरीरिणाम् ।

चणकयवसक्तवः । निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशेन यवैः कृताः । सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ।

शालिसक्तवः । सक्तवः शालिसम्भूता वह्निदा लघवो हिमाः । मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः । न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ।

न जलान्तरितान् नापि सक्तूनद्यान्न केवलान् । पृथक् पानं पुनर्दानं आमिषं पयसा निशि । दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत् ।

अथ धाना(बहुरी) यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम् । धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः । तथा मेहकफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः ।

अथ लाजाः । येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च । भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः । लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते । स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः । छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ।

अथ पृथुकाः(चिड़ुवा) । शालयः सतुषा आर्द्रा भृष्टा अस्फुटिताश्च ते । कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि । पृथुका गुरवो वातनाशनाः श्लेष्मला अपि । सक्षीरा वृंहणा वृष्या बल्या भिन्नमलाश्च ते ।

अथ होलकः (होरहा) । अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः । होलकोऽल्पानिलो मेदःकफदोषत्रयापहः । भवेद्यो होलको यस्य स च तत्तद्गुणो भवेत् ।

अथ उम्बी । मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन सा भृष्टा बुधैरुम्बीति सा स्मृता । (उमिया) इति लोके । उम्बी कफप्रदा बल्या लघ्वी पित्तानिलापहा ।

अथ कुल्माषाः(घुघनी) अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः । कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः । कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ।

अथ पललम् (तिलकुट) पललन्तु समाख्यातं सेक्षुस्तिलपिष्टकम् । पललं मलकृद्वृष्यं वातघ्नं कफपित्तकृत् । वृंहणञ्च गुरु स्निग्धं मूत्राधिक्यनिवर्त्तकम् ।

अथ पिण्याकः (पीना) । तिलकिट्टन्तु पिण्याकस्तथा तिलखलः स्मृतः । पिण्याको लेखनो रूक्षो विष्टम्भी दृष्टिदूषणः ।

अथ (चाउर) तण्डुलो मेहजन्तुघ्नः स नवस्त्वतिदुर्जरः.” ।

अन्येऽपि कृतान्नप्रकाराः पाकशास्त्रे द्रष्टव्याः-

कृतान्नविशेषगुणाश्च सुश्रुते दर्शिता यथा -

“अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् । लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः । वातानुलोमनो हृद्यः पिप्पलीनागरायुतः । स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी । क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी । विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धनी । पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा । हृद्या सन्तर्पणी वृष्या वृंहणी बलवर्द्धनी । शाकमांसफलैर्युक्ता यवाग्वस्तास्तु दुर्जराः । सिक्थैर्विरहितो मण्डः, पेया सिक्थसमन्विता । विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा । विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः । कफपित्तकरी बल्या कृशराऽनिलनाशनी । धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः । स्विन्नः सुप्रस्रुत-

स्विन्नो विशदस्त्वोदनो लघुः । अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः । लघुं सुगन्धिं कफहा विशेषो भृष्टतण्डुलः । स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः । गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः । सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः । सिद्धं निःपीडितं शाकं हितं स्यात् स्नेहसंस्कृतम् । अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा । मांसं स्वभावतो वृष्यं स्नेहनं बलवर्द्धनम् । स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह । सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु । तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् । विद्यात् पित्तकफोद्रेकि बलमांसाग्निवर्द्धनम् । परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु । रोचनं बलमेधाग्निमांसौजःशुक्रवर्द्धनम् । तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः । परिशुष्कगुणैर्युक्तं वह्नेः पक्वमतो लघु । तदेव शूलिकाप्रोतमङ्गारे परिपाचितम् । ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः । उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् । परिशुष्कं प्रदग्धञ्च शूल्यं यच्चान्यदीदृशम् । मांसं यत्तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु । लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् । अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम् । प्रीणनः प्राणजननः श्वासकासक्षयापहः । वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः । स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् । भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् । आप्यायनः संहननः शुक्रौजोबलवर्द्धनः । सदाडिमयुतो वृष्यः संस्कृतो दोषनाशनः । यन्मांसमुद्धृतरसं न तत्पुष्टिबलावहम् । विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् । दीप्ताग्नीनां सदा पथ्यः खानिकस्तु परं गुरुः । मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् । पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् । एकध्यं पाचयेत्सम्यक् वेशवार इति स्मृतः । वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः । प्रीणनः सर्वधातूनां विशेषान्मुखशोषिणाम् । क्षुत्तृट्तापहरः श्रेष्ठः सौरावः स्वादुशीतलः । कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि । ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः । स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः । रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत् । मसूरमुद्गगोधूमकुलत्थलवणैः कृतः । कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते । मृद्वीकादाडिमैर्युक्तः स एवोक्तोऽनिलार्दिते । रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते । पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ । पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ । श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् । हन्ति मूलकयूषस्तु कफमेदोगलामयान् । कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः । तूणीप्रतूणीकासार्शोगुल्मोदावर्त्तनाशनः । दाडिमामलकैर्यूषो हृद्यः संग्रहणो लघुः । प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित् । मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः । यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः । सर्व्वधान्यकृतस्तद्वद् बृंहणः प्राणवर्द्धनः । खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ । खडः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः । दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः । तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः । खडाः खड यवाम्लश्च षाडवाः पानकानि च । एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः । अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना । विज्ञेयं लवणस्नेहकटुकैर्हि युतं कृतम् । अथ गोरसधान्याम्लफलाम्लैरन्वितञ्च यत् । यथोत्तरं लघु हितं कृताकृतं रसे । दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः । तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् । सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च । तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च । लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः । तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः । रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी । स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम् । सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः । नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते । मन्थः सद्योबलकरः पिपासाश्रमनाशनः । साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्त्तनाशनः । शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारहृत् । द्राक्षामधूकसंयुक्तः कफरोगनिबर्हणः । वर्गत्रयेणोपहितो मलदोषहरोत्तमः । गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् । तदेव खण्डमृद्वीकाशर्करासहितं पुनः । साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् । माद्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् । परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् । द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राश्च सर्व्वतः । पानकानां यथायोगं गुरुलाघवमादिशेत्" ।

२ कृतं साधितमन्नं येन । साधितान्ने पाचके त्रि० ।

कृताय पुं० कृतसंज्ञकोऽयः । द्यूतक्रीडाप्रसिद्धे चतुरङ्काङ्कित

पायकभेदे "कृताये त्रेतादयस्तेऽन्तर्भवन्ति" अयशब्दे २३५ पृ० दर्शिते आनन्दगिरिः

**कृतार्थ** त्रि० कृत अर्थः प्रयोजनं येन । कृतकार्य्ये । "श-रद्‌ कृतार्थताम्" किरा० "कृत कृतार्थोऽस्मि निवर्हितां-हसा" माघः

**कृतालय** त्रि० कृत आलयो येन । १कृतवासे "यत्र ते दयिता भार्य्या तनयाश्च कृतालयाः" रामा० । २भेके पुंस्त्री० त्रिका० । स्त्रियां योपधत्वात् टाप् । [कर्म्मयुक्ते शब्दचि०।

**कृतावदान** त्रि० कृतमवदानं ख्यातकर्म्म येन । विख्यात

**कृतावसक्थिक** त्रि० कृताऽवसक्थिका येन । वस्त्रादिना जानुजङ्घापृष्ठबन्धयुक्ते "प्रौढपादोन कुर्व्वीत स्वाध्याय-पितृतर्पणम् । आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा । कृतावसक्थिको यस्तु प्रौढपादः स उच्यते" आ०त०कात्या० "कृतावसक्थिकः कृतपृष्ठजानुजङ्घाबन्धः" आ० त० रघु०

**कृतास्त्र** त्रि० कृतः शिक्षितमस्त्रं येन । शिक्षितास्त्रे । "येषां योद्धा सव्यसाची कृतास्त्रः" भा० व० ४अ०

**कृति** स्त्री कृ—क्तिन् । १पुरुषप्रयत्ने, २कर्त्तृव्यापारे, "इथा जातिस्तदायुष्मन् । कृतिर्यात्र विद्यते" भा०व०१२४८३श्लो० ३विंशत्यक्षरपादके छन्दोभेदे "कृतिः प्रकृतिराकृतिः" वृ०र० । ४क्रियायाम् मेदि० "श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदियादियम्" नैष० ५नृपभेदे पु० "सप्ताश्वमेधा-नाहृत्य राजसूयं च पार्थिव । कृतिर्भीमाऽप्यवत् स्वर्गा-दसत्यवचनात् सकृत्" मार्क० पु० । स च जनकवंश्यः "बहुलाश्वो धृतेस्तस्य कृतिरस्य महाबलः" भाग०९।१३।१६ मैथिलवंश्यनृपोक्तौ । कृ बधे—क्तिन् । ६हिंसायां मेदि० ६विंशतिसंख्यायाम् कृतिकरः । कृत—बा० करणे इक् । ७कर्त्तर्य्यां स्त्री "कृत्तेम् खादिश कृतिश संदधे" ऋ० १।१६४।१२ "कृतिः कर्त्तरी" भा०

**कृतिकर** पु० कृतिसंख्याहस्ता विंशतिसंख्याः करा यस्य । रावणे शब्दमा० । तस्य विंशतिहस्तत्वात् तथात्वं कृति हस्तादयोऽप्यत्र पु०

**कृतिन्** त्रि० कृतमनेन कृत—इष्टा० इनि १कृतक्रिये कर्त्तरि अमरः, २पुण्यवति, शब्दमा० "कृती श्रुती वृद्धमतेषु धीमान्" भट्टिः "न खलनिर्जित्य रघुं कृती भवान्" रघु० । "तवैव नामाक्षरगतिं कृती त्वम्" "यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः" कुमा० "कान्तवक्त्रसदृ-शाकृतिं कृती" माघः "कृतिः कृतिमुदे" कृतिशब्दे नैष०

**कृतिरात** पु० नृपभेदे "बहुलाश्वो धृतेस्तस्य कृतिरातो महा-वलः" भाग० ९।१३।१७ पाठान्तरम् [व्यर्चनकृते" या०

**कृते** अव्य० कृ—क्विप् नि० एदन्तत्वम् । निमित्तार्थे "दैवाति-

**कृतेयुक** पु० पौरवे नृपभेदे । "कृतेयुस्तस्य कक्षेयुः स्थण्डि-लेयुः कृतेयुकः" भाग०९।२०३। रौद्राश्वस्य घृताच्यामप्-सर स्युत्पन्नदशपुत्रोक्तौ

**कृतोदक** त्रि० कृतमुदकमुदककार्य्यं स्नानतर्पणादि येन । कृतस्नानादौ । "एवं कृतोदकाः भार्य्याः प्रवेक्ष्यन्ति नगराक्षयम्" भा० स० ७८ अ०

**कृतौजस्** पु० १कृतवीर्य्यभ्रातरि । कृतवीर्य्यशब्दे विवृतिः । कृतमोजो येन । २कृततेजस्के कृतपराक्रमे त्रि०।

**कृत्त** त्रि० कृत+क्त । १छिन्ने, २वेष्टिते च हेम०

**कृत्ति** स्त्री कृत्यते कृत—कर्म्मणि—क्तिन् । १मृगादिचर्म्मणि कृत्तिवासाः । २त्वचि भूर्ज्जपत्रे ४कृत्तिकानक्षत्रे च मेदि० ५गृहे निरु०

**कृत्तिका** स्त्री कृन्तति उष्णत्वात् कृत—तिकन् किच्च । अश्वि-न्यादिषु तृतीये नक्षत्रे तस्याः क्षुरतुल्याकारत्वं षट्‌ता रात्मकत्वञ्च अश्लेषाशब्दे ४९७पृ० दर्शितम् अन्ये तु शकटाकारत्वमाहुः । सा च २६० अंशात्मके राशिचक्रे २६।४० अंशकलोत्तरम् १।३।२० अंशकलात्मिका मेष वृषोभयराशिघटिका । तथा च तस्याः आद्यचरणः मेष-राशिघटकः अन्यचरणत्रयं वृषराशिघटकम् । अश्वि-न्यादयश्च सप्तविंशति दक्षसुता चन्द्रपत्न्यः । तत्र भरणी कृत्तिकाद्याः २।३।६।९।१०।१२।१६।२१।२६ संख्यकाः सपत्नीं रोहिणीं प्रति चन्द्रस्यातिशयानुरागदर्शनेन चन्द्र-स्य भर्त्सनं कृतवत्यः । ततः चन्द्रेण ताः प्रति गमना-भावकृतादिशापदानं कालिकापु० २० अध्याये उक्तं तच्च कालिकापुराणशब्दे २०१४पृ० दृश्यम् । दक्षसुतानां च चेतनत्वात् कृत्तिकाभिः षड्‌भिः कार्त्तिकेयस्य पोषण कृतं कार्त्तिकेयशब्दे विवृतिः । तस्याः अग्निरधिष्ठातृ देवः सा च मिश्रगणान्तर्गता "मिश्रोऽग्निः सविशाखभ, शुभकरा सर्व्वे स्वकृत्ये गणाः" ज्यो०त० । कृत्तिकान-क्षत्रयुक्ता पौर्णमासी अण् ङीप्, कार्त्तिकी सा अस्मिन् मासे प्रज्ञरण् । कार्त्तिक कार्त्तिकायुक्ते चान्द्रे मासभेदे पु०

**कृत्तिकाञ्जि** पु० कृत्तिका शकटाकारा अञ्जिस्तिलकादि चिह्नमस्य । अश्वमेधीये शकटाकारतिलकचिह्नयुक्ते, अश्व-भेदे "तिरूप एयोऽश्व" इत्युपक्रमे "कृत्तिकाञ्जिः पुर-स्तात्" शत० ब्रा० ।१२।४ "१कृत्तिका शकटाकारा अञ्जिर्यस्य" भा०

लभ्यस्त्वेकेन जन्मना। पूर्व्वजन्मकृतं पापं तपोदानादिभिः शतैः। नश्येत्, सद्यो विनश्येत्तु कृत्तिवासेश्वरेक्षणात्। कृत्तिवासेश्वरं लिङ्गं येऽर्च्चयिष्यन्ति मानवाः। प्रविष्टास्ते शरीरे मे तेषां नास्ति पुनर्भवः। अयितुक्तो नियतात्मा जप्त्वा शतरुद्रियम्। कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः। सप्तकोटिमहारुद्रैः सुजप्तैर्यत् फलं लभेत्। तत् फलं लभ्यते काश्यां पूजनात् कृत्तिवाससः। माघकृष्णचतुर्द्दश्यामुपोष्य निशि जागरात्। कृत्तिवासेशमभ्यर्च्चेद्य स यायात् परां गतिम्। शुक्लायां पञ्चदश्यां यश्चैत्र्यां कर्त्ता महोत्सवम्। कृत्तिवासेश्वरे लिङ्गे न स गर्भं प्रवेक्ष्यति। कर्यस्मा तु देवेशस्तत्कृत्तिं परिधत्त च। गजासुरस्य महतीं प्राहणोत्तां दिगम्बरः। यत्र कृत्तीकृतो दैत्यः शूलमारोप्य भूतले। तच्छूलपाटनाज्जातं तत्र कुण्डं महत्तरम्। तस्मिन् कुण्डे नरः स्नात्वा कृत्वा च पितृतर्पणम्। कृत्तिवासेश्वरं दृष्ट्वा कृतकृत्यतरो भवेत्"॥

**कृत्नु** त्रि॰ कृ—क्तु। कारौ शिल्पिनि उणा॰ "बहुकर्म्मकरे च। "कृणुया कृत्नो। अकृतम्" ऋ॰ ६।१८।१५। "कृत्नो। बहुलकर्म्मणां कर्त्तः" भा॰

**कृत्य** न॰ कृ—क्यप् तुक् च। १कार्य्ये, व्याकरणप्रसिद्धे पाणिन्यादिपरिभाषिते २तव्यादौ तव्यत्तव्यानीयर्यत्केलिमर्क्यप्सु प्रत्यये। ३कर्त्तव्ये त्रि॰ हेमच॰ "कृतकृत्यो विधिर्मन्ये" माघ॰। ४विद्विष्टे त्रि॰। मेदि॰५धनादिभेद्ये त्रि॰ जटा॰ "कृत्याः" पा॰ "तयोरेव कृत्यक्तखलर्थाः" "कृत्यैरधिकार्थवचने" पा॰। "कृत्याः षट् ते समाख्याता क्यप्शवतौ भावकर्म्मणो। तव्यानीयावनन्तात् यत् केलिम कर्म्मकर्त्तरि" सुपद्म॰। कृत्याः इत्यधिकारे तेषां विहितत्वात् तेषां तत्संज्ञत्वम्। कृत्यप्रत्ययस्तु धातुविशेषात् कर्म्मभावादौ विहितः। कृत्यञ्च वेदादिविहितावश्यकर्त्तव्याचारविशेषः। तदधिकारेणैव कृत्यचिन्तामणि कृत्यतत्त्वकृत्यरत्नाकरादयो ग्रन्था विशेषाः प्रवृत्ताः

**कृत्यविद्** त्रि॰ कृत्यं कर्त्तव्यं वेत्ति विद—क्विप्। कार्य्यज्ञे विविधे, "कृत्यविद्भुवाचेति" रघु।

**कृत्या** स्त्री॰ कृ—क्यप् टाप्। १क्रियायां २अभिचारक्रियाजन्ये अभिचारोद्देश्यनाशके ३देवादिमूर्त्तिभेदे च सा च वैदिकाद्यभिचारक्रियाजन्या अदृष्टविशेषनिर्वर्त्त्या देवादिमूर्त्तिरूपतयोत्पद्य अभिचारोद्देश्यं पुरुषं निहत्य नश्यतीति अथर्ववेदे प्रसिद्धम्। "पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम्" भा॰शा॰३४४अ॰। कृत्याविशेषोत्पादनकथा भा॰ आनु॰ ९०अ॰ यथा

"इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह। तेषां वै प्रतिकर्त्तुञ्च सर्व्वेषामगमद्गृहम्। स गत्वा हवनीयेऽग्नौ तीव्रं नियममास्थितः। जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृप। तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयङ्करी। तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत्। सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता। वृषादर्भिं नरपतिं किङ्करोमीति साऽब्रवीत्। वृषादर्भिरुवाच। ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च। दासीभर्त्तुश्च दास्याश्च मनसा नाम धारय। ज्ञात्वा नामानि चैवैषां सर्व्वानेतान् विनाशय। विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव। सा तथेति प्रतिश्रुत्य यातुधानीस्वरूपिणी। जगाम तद्वनं यत्र विचेरुस्ते महर्षयः"। "इन्द्रेण च सा नाशितेति तत्रैवान्ते उक्तम् यथा "रक्षार्थञ्च सर्व्वेषां भयतामहमागतः। यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी। वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः॥ दुष्टा हिंसादियं पापा युष्मान् प्रत्यग्निसम्भवा"।

कृत्यानिवारणोपायमन्त्राश्च अथ॰ ५।१४।१४। उक्ता यथा "सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा। दिप्सौषधे। त्वं दिप्सन्तमव कृत्याकृतं जहि। अव जहि यातुधानानव कृत्याकृतं जहि। अथो यो अस्मान्दिप्सति तमु त्वं जह्योषधे। रिश्यस्येव परीशासं परिकृत्य परि त्वचः। कृत्यां कृत्याकृते देवा निष्कमिव प्रति मुञ्चत। पुनः कृत्यां कृत्याकृते हस्तगृह्य परा णय। समक्षमस्मा आ धेहि यथा कृत्याकृतं हनत्। कृत्याः सन्तु कृत्याकृते शपथः शपथीयते। सुखो रथ इव वर्त्ततां कृत्या कृत्याकृतं पुनः। यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने। तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या। यदि वासि देवकृता यदि वा पुरुषैः कृता। तां त्वा पुनर्णयामसीन्द्रेण सयुजा वयम्। अग्ने पृतनाषाट् पृतनाः सहस्व। पुनः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि। कृतव्यधनि। विध्य तं यश्चकार तमिज्जहि। न त्वामचक्रुषे वयं वधाय सं शिशीमहि। पुत्र इव पितरं गच्छ स्वज इवाभिष्ठितो दश। बन्धमिवावक्रामी गच्छ कृत्ये। कृत्याकृतं पुनः। उदेणीव वारण्यभिस्कन्दं मृगीव। कृत्या कर्त्तारमृच्छतु। इष्वा ऋजीयः पततु द्यावापृथिवी तं प्रति। सा तं मृग-

मज्जास्रोपद्रवयुता । छिन्ने वा शिर कपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ च यत्रेति । भवन्ति चात्र । यस्मान्मेदोऽथ मज्जा च मस्तुलुङ्गश्च यः स्रवेत् । आगन्तुस्तु व्रणः सिध्येत् सिध्येद्दोषसमाश्रयः । स मर्म्मोपहिते देशे सिरासन्ध्यस्थिवर्जिते । विकारो योऽनुवर्त्तेत तदसाध्यस्य लक्षणम् । क्रमेणोपचयं प्राप्य धातूननुगतः शनैः । न शक्यस्तूद्धर्त्तुमिह वृद्धो वृक्ष इवामयः । स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च । निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा । अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते । अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः । त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकीसमः । अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते । कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः । स्थिराश्चिपिटिकावन्तो रोहन्तीति तमादिशेत् । रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् । त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् । दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः । हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढोऽपि दीर्य्यति" ।

कृत्यादूषणी स्त्री कृत्या दूष्यतेऽनया दूषि–ल्युट् ङीप् । १ओषधिभेदे । "अथो बलासनाशनी कृत्यादूषणीश्च यास्ता इहायान्त्वोषधी "अथ०८,७,१०, "अनयाऽहमोषध्या सर्वाः कृत्या अदूदुषम्" १०,१,४, । आङ्गिरसे २जङ्गिडे ऋषिभेदे पु० । "अङ्गिरा ऋषि जङ्गिड । रक्षिताचि जङ्गिड ।" इत्युपक्रमे "अथ कृत्यास्त्रिपञ्चाशी शतं कृत्याकृतश्च ये । सर्वान् विनक्तेजसोऽरसां जङ्गिडस्करत्" इत्याद्युक्त्वा "कृत्यादूषण एवायमतो अरातिदूषण" इत्युक्तम् । अथ० १९,३४,१,

कृत्यादूषि पु० कृत्यां परकृताभिचारजां दूषयति दूषि–इन् । कृत्यानाशके जङ्गिडे मणिभेदे । "अरण्यादन्य आभृत कृत्या अन्तोरसेभ्य । कृत्यादूषिरयं मणिरथो अरातिदूषि" अथ० २,४,५,६,

कृत्रिम न० कृ–क्त्रि त्रेर्मप् च । १विड्लवणे, मेदि० २काचलवणे, ३तुरुष्कनामकगन्धद्रव्ये, ४रसाञ्जने च राजनि० । ५सिह्लके पु० मेदि० ६क्रियया निष्पन्नमात्रे त्रि० । "सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यत" "चिरू सदा कृत्रिमपत्रिपङ्क्तौ कपोतपालीषु निकेतनानाम् । मार्ज्जारमप्याश्रितनिश्चलाङ्ग यस्यां जनः कृत्रिममेव मेने" माघः । "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः" व्या०प० । द्वादशपुत्रमध्ये स्वयंकृते "सदृशं तु प्रकुर्य्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणोपेतं स विज्ञेयश्च कृत्रिमः" इति मनूक्ते ७पुत्रभेदे पु० । सदृशं सजातीयं "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" उपसंहारात् । "कृत्रिमः स्यात् स्वयं कृतः" या०" । "कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिलोभनेनैव पुत्रीकृतः मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात्" मिता० । कलौ तु "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इति आदित्यपु० दत्तौरसभिन्नानां पुत्रीकरणनिषेधात् न तस्य कर्त्तव्यता एवञ्च "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" कलिधर्म्मप्रतिपादकपराशरवचने क्षेत्रजपदस्य औरसविशेषणत्वं कृत्रिमपदपदस्य च दत्तकविशेषणत्वं कल्पनीयमिति दत्तचन्द्रिका गौडदेशीयानां तथाचारश्च । पराशरवचनस्थकृत्रिमपदं न यौगिकं किन्तु पारिभाषिकस्वयंकृतविषयमेव अन्यथा दत्तकस्य कृत्रिमत्वविशेषणं व्यर्थं स्यात् अतः आदित्यपुराणवचनस्थदत्तपदस्य कृत्रिमोपलक्षणपरता युक्तेति कलौ कृत्रिमपुत्रस्यापि ग्राह्यतेति दत्तकमीमांसादय । पाश्चात्यादिवङ्गदेशेष्वस्य प्रचारः । अनयोर्युक्तत्वायुक्तत्वसद्भावेऽपि आचारस्य बलवत्त्वादत्र वस्था । अयञ्च "औरस क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्" मनुना बन्धुदायहरत्वेनोक्तः । स्वार्थे क । तत्रार्थे । सिह्लके पु० जटाधरः, । तुरुष्कनामगन्धद्रव्ये राजनि० ।

कृत्रिमधूप पु० कर्म्म० । नानासुगन्धिद्रव्यसंयोगजाते दशाङ्गधोडशाङ्गादौ धूपे अमरः ।

कृत्रिमपुत्र पु० कर्म्म० । १कृत्रिमे पुत्रभेदे । कृत्रिमसुतादयोऽप्यत्र । स्वार्थे क । तत्रार्थे वस्त्रादिरचितपुत्तलिकायाञ्च । "सा कन्दुकैः कृत्रिमपुत्रकैश्च" कुमा०

कृत्वन् त्रि० कृ–क्वनिप् तुक् च । कर्त्तरि । "तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने" ऋ०८,२५,२४, स्त्रियां ङीप् रश्चान्तादेश । "महाभिषेकाः सहकृत्वरी क्रमम्–यशःपटं मङ्गटचातुरीतुरी" नैष० ।

कृत्वा अव्य०कृ–क्त्वो क्रियायां वा क्त्वा । १विधायेत्यर्थे "कृत्वाकाश्चे रुचिरमकृपभम्" भट्टिः । २हिंसित्वेत्यर्थे च ।

कृत्वी स्त्री व्यासपुत्रशुकदेवस्य १कन्यायाम् । "पराशरकुलोद्भूतः शुकोनाम महातपा, । भविष्यति युगे तस्मिन् (द्वापरे) महायोगी द्विजर्षभ । व्यासादरण्यां सम्भूतो

विधूमोऽग्निरिव ज्वलन्। स तस्यां पितृकन्यायां (पुलस्त्यकन्यायाम्) पीवर्य्यां जनयिष्यति। कन्यां पुत्रांश्च चतुरो योगधर्म्मान् महाबलान्। कृष्णं गौरं प्रभुं शम्भुं कृत्वीं कन्यां तथैव च। ब्रह्मदत्तस्य जननीं महिषीं त्वणुहस्य च" हरिवं॰ १८अ॰। "अणुहोनाम तस्यासीत् पुत्रः परमधार्म्मिकः। प्रादात् कन्यां शुकस्तस्मै कृत्वीं पूजितलक्षणाम्। सत्यशीलगुणोपेतां योगधर्म्मरतां सदा" हरिवं॰ २३अ॰

वेदे स्वात्मप्रादि॰ आतरेत्वम्। २कृत्ये त्वर्थे च। "अपागूहमन्ता मर्त्येभ्य कृत्वी" ऋ॰ १०।१७।२। "कृत्वी कृत्वा" भा॰ "जातवेदोऽयाहृठव्यानि सुरभीणि कृत्वी" १०।१५।१२। ३कर्म्मणि स्त्री॰ "निरु॰ "आतरस्तु व॰ कृत्व्रे मसि" ऋ॰ १।१६।१। "कृत्व्रा कर्म्मणा एर्मासि स्म" भा॰

कृत्व्र त्रि॰ कृत्वीं कर्म्म अर्हति यत्। कर्म्मार्हे कर्म्मकारके "बध्यसेऽग्ने राजी न कृत्व्र" ऋ॰ ६।२।८ "कृत्व्र हविर्षहनादीनां कर्म्मणां कर्त्ता" भा॰

कृत्स न॰ कृन्तति क्षयति वा कृत—छेदने वेष्टने वा स॰ किच्च। जले२समुदाये ३पापे पु॰ सि॰ कौ॰

कृत्स्न न॰ कृत—क्स्न। १सकले २जले ३कुक्षौ पु॰। ४अशेषे त्रि॰ मेदि॰ "तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्" गीता। कृत्स्नस्य भाव ष्यञ्। कार्त्स्न्य॰ न॰ तल्। कृत्स्नता स्त्री त्व कृत्स्नत्व। न॰ साकल्ये। "कार्त्स्न्यप्रायश्च्यो सम्पद्यमाने साति"। अकृत्स्नात् सम्पद्यते

कृदर पु॰ कृ—अरन् "कृदरादयश्च" उणा॰ नि॰। कुसूले धान्यकोष्ठे उज्ज्वल॰। २दिग्वसारे च न॰ निरु॰। ३टङ्के पु॰ निरु॰।

कृधु त्रि॰ कृत—उन् वा॰ किञ्च् हुपो॰। ह्रस्वे निरु॰। "यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत्" यजु॰२३,२८, "प्रतीत्येन कृधुना तृपास." ऋ॰४,५,१४, कृधुना ह्रस्वेन" भा॰ "मम स्वनात् कृधुकर्णो भयाते" ऋ॰१०,२७,१३ स्वार्थे क। तत्रार्थे। तत अतिशायने इष्ठन् ऋतोरः। क्रधिष्ठ। ईयसुन्। कृधीयस् अतिशयेनह्रस्वे त्रि॰ ईयसुनि स्त्रियां ङीप्। भावे इमनिच् क्रधिमन् पु॰ अण् कार्धव न॰ ह्रस्वत्वे

कृन्तत्र नप कृत—कत्रन् नुम् च। लाङ्गले सि॰कौ॰।

कृन्तन न॰ कृत—ल्युट् बा॰ नुम् च। १छेदने कर्त्तने "कृन्तनं नखकेशानां छेदनञ्च वनस्पते। मार्गशौचे न कर्त्तव्यं पठनं पाठनं तथा" नारद। कर्त्तरि ल्यु नुम् च। २छेदके त्रि॰ करणे ल्युट्। बा॰ नुम् च। ३छेदनसाधने "नातः परं कर्म्मनिबन्धकृन्तनम्" भाग॰ ६,२,४६, स्त्रियां ङीप। नखनिकृन्तनी

कृन्तविचक्षणा स्त्री कृन्त (छिन्धि) विचक्ष्व। इत्युच्यते यस्यां क्रियायां मयू॰ स॰। विचक्षणसम्बोधनकर्त्तनार्थनिर्देशक्रियायाम्।

कृप कल्पने(सम्पत्तौ)भ्वा॰आत्म॰लुङि लुटि लृटि लृङि च उभ॰ इतादि अक॰ वेट्। अस्य ऋत रकारस्थाने ल। कल्पते। अकल्पत्—अकल्पिष्ट—अकॢप्त। कल्प्तासि कल्पितासे कल्प्स्यति कल्प्स्यते-कल्पिष्यते। कल्पितव्य-कल्प्तुव्यः कल्पनम् कल्प। कॢप्त कॢप्ति। क्विप्। कल्पयति ते अचकल्पत् त-अचीकॢपत् त। कल्पित कल्पना कल्पयिता। "कृपि सम्पद्यमाने" वार्त्ति॰। एतद्योगे सम्पद्यमाने कर्त्तरि चतुर्थी। भक्तिर्ज्ञानाय कल्पते। "कल्पयित् कल्पयामास वन्यामेवास्य संविधाम्" "कॢप्तेन सोपानपथेन" रघु। "दर्भसंप्रकॢप्तम्" भट्टिः "प्रजापतिकल्पितयज्ञभागम्" कुमा॰। छेदने च सक॰ "कॢप्तकेशनखश्मश्रुः" मनु॰ "कल्पन छेदनम्" कुल्लू॰।

अनु+प्रथमविधानप्रतिनिधीकरणे सक॰ "प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते" स्मृति॰।

अव+अवधारणे "अनवकॢप्तावेव" सि॰ कौ॰।

आ+भूषणे सक॰ आकल्प भूषा

वि+ कल्पि—संशये विकल्पयति संशेते इत्यर्थः।

सम्—कल्पि इट करिष्यामीत्यध्यवसाये मानसव्यापारभेदे। "कामः संकल्पोविचिकित्सेत्यादि" श्रुतिः "मनसा संकल्पयति वाचाऽभिलपति" श्रुति। मानसकर्म्माभिलापने "संकल्पेन विना राजन्! यत्किञ्चित् कुरुते नरः" ति॰त॰।

कृप दौर्बल्ये अद॰ चुरा॰ उभ॰ अक॰ सेट्। कृपयति ते अचिकृपत्त[ल्पयति ते कल्पति अचकल्पअचीकॢपत्—त अकल्पीत्।

कृप युतौ चित्रीकरणे वा चुरा॰ पक्षे भ्वा॰ पर॰ सेट्। क-

कृप पु॰ चु॰कृप—अच्। राजर्षिभेदे "यथा रुशम श्यावक कृपमिन्द्र। प्राव." ऋ॰ ८,३,१२, "रुशम श्यावक कृप चैतन्नामकानासीन् राजर्षीन्" यथा प्राव" भा॰। कृपा अस्त्यस्य पालनसाधनत्वेन अर्श॰ अच्। शरद्वतो गौतमस्य २पुत्रे ३तत्सुतायां स्त्री ङीप्। यथा च तयोरुत्पत्तिर्नामता च तथा भा॰आ॰१३०अ॰उक्तं यथा "कृपस्यापि मम ब्रह्मन्! सम्भवं वक्तुमर्हसि। शरस्तम्बात् कथं जज्ञे कथं चाऽस्त्राण्यवाप्तवान्। वैशम्पायन

उवाच। महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः। पुत्रः किल महाराज! जातः सह शरैर्विभो!। न तस्य वेदाध्ययने तथा बुद्धिरजायत। यथाऽस्य बुद्धिरभवद्धनुर्वेदे परन्तप!। अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः। तथा स तपसोपेतः सर्व्वाण्यस्त्राण्यवाप ह। धनुर्वेदपरत्वाच्च तपसा विपुलेन च। भृशं सन्तापयामास देवराजं स गौतमः। ततो जानपदीं नाम देवकन्यां सुरेश्वरः। प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव!। सा हि गत्वाश्रमं तस्य रमणीयं शरद्वतः। धनुर्बाणधरं बाला लोभयामास गौतमम्। तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने। लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत्। धनुश्च हि शरास्तस्य कराभ्यामपतन् भुवि। वेपथुश्चापि तां दृष्ट्वा शरीरे समजायत। स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात्। अवतस्थे महाप्राज्ञो धैर्य्येण परमेण ह। यस्तस्य सहसा राजन्! विकारः समदृश्यत। तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत। धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च। स विहायाश्रमन्तञ्च ताञ्चैवाप्सरसं मुनिः। जगाम रेतस्तत्तस्य शरस्तम्बे पपात च। शरस्तम्बे च पतितं द्विधा तदभवन्नृप!। तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः। मृगयाञ्चरतो राज्ञः शान्तनोस्तु यदृच्छया। कश्चित् सेनाचरोऽरण्ये मिथुनं तदपश्यत। धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च। ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य ह। स राज्ञे दर्शयामास मिथुनं सशरं धनुः। स तदादाय मिथुनं राजा च कृपयान्वितः। आजगाम गृहानेव मम पुत्राविति ब्रुवन्। ततः संवर्द्धयामास संस्कारैश्चाप्ययोजयत्। प्रातीपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत्। गौतमोऽपि ततोऽभ्येत्य धनुर्वेदपरोऽभवत्। कृपया यन्मया बालाविमौ संवर्द्धिताविति। तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः। गोपितौ गौतमस्तत्र तपसा समविन्दत। आगत्य तस्मै गोत्रादि सर्व्वमाख्यातवांस्तदा। चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च। निखिलेनास्य तत् सर्व्वं गुह्यमाख्यातवांस्तदा। सोऽचिरेणैव कालेन परमाचार्य्यतां गतः। ततोऽधिजग्मुः सर्व्वे ते धनुर्वेदं महारथाः। धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः। वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः"।

"अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात्। तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः। शरद्वांस्तत्सुतो-यस्य सर्व्वस्यादर्शनात् किल। शरस्तम्बेऽपतद्रेतो मिथुनं तदभूत् शुभम्। तद्दृष्ट्वा कृपयाऽगृह्णाच्छान्तनुर्मृगयां चरन्। कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी" भाग० ९,२१,। स च रुद्रांशसम्भूतः यथाह "यस्तु राजन्। कृपोनाम ब्रह्मर्षिरभवत् क्षितौ। रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषम्" भा० आ० ६७अ०। स च चिरजीवी। "अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः" पुरा०। "नतो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम्। प्रह्लादञ्च हनूमन्तं विभीषणमथार्चयेत्" ति० त० गर्ग०। ४कर्म्मणि च "यमासा कृपनीडं भासा केतुम् वर्द्धयन्ति" ऋ० १०,२०,२, "कृपनीडं कर्म्मस्थानम्" भा०।

**कृपण** त्रि० कृप–क्युन् न लत्वम्। १अदातरि कदर्य्ये अमरः "कृपणेन समोदाता न कश्चिद्भुवि विद्यते। अनश्नन्नेव वित्तानि यत् परेभ्यः प्रयच्छति" व्यास। "दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति" व्यासः। २मन्दे त्रि० मेदि० "कृपणाः फलहेतवः" गीता। ३महाव्यसनप्राप्ते दीने। "महद्वा व्यसनं प्राप्तोदीनः कृपण उच्यते"। रामा०। अभूततद्भावेऽर्थेऽस्य कृतादिभिः स०। कृपणकृतः। कृपणस्य भावः ष्यञ्। कार्पण्य दीनतायां न० "कार्पण्यदोषोपहतस्वभावः" गीता। तल्। कृपणता स्त्री, त्व कृपणत्व न० तत्रार्थे। ४दैन्ये न०। "मन्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः" शान्तिश०। सुखा० वेदनायाम् क्यङ्। कृपणायते दैन्यमनुभवतीत्यर्थः। सुखा० अस्त्यर्थे इनि। कृपणिन् दैन्ययुक्ते त्रि० स्त्रियां ङीप्। ५क्रिमौ पु० मेदि०। ज्ञात-पर्य्योयस्य भेदे नि० तलोपः। ६ज्ञातपर्व पणक्रीते दासादौ "एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः" बृ०उ०। "कृपणः पणक्रीत इव दासादि"। भा०

**कृपा** स्त्री कृप–भिदा० अङ् "कृपेः संप्रसारणञ्च" गणसू० संप्र०। अनुपकेच्छाया प्रत्युपकाराकाङ्क्षया परदुःखप्रहरणेच्छायाम् अमरः "मिथुने कृपावती" कुमा०।

**कृपाण** पु० कृपां नुदति नुद–ड संज्ञायां णत्वम्। १खड्गे अमर। गौरा० ङीप्। २कर्त्तर्य्याम् स्त्री अमरः। ३छुरिकायाम् स्त्री मेदि०। स्वार्थे क। कृपाणक। खड्गे पु० टाप् अत इत्वम्। कृपाणिका छुरिकायां स्त्री हेमच०

**कृपाद्वैत** पु० बौद्धभेदे हेम०। [कृपायुक्ते अमर।

**कृपालु** त्रि० कृपां लाति ला–आदाने मित० डु। दयालौ

**कूपीट** न॰ कूप—कीटन्। १उदरे २जले च मेदि॰। ३वने ६रुन्धने च शब्दरत्ना॰। कूपीटयोनिः।

**कूपीटपाल** पु॰ कूपीटं पालयति पालि—अण् उप॰स॰। १समुद्रे। २कोणिपाते नौकाङ्गे काष्ठभेदे च मेदि॰ ३वायौ शब्दरत्ना॰ तस्य उदरजलयोः पालकत्वात् तथात्वम्।

**कूपीटयोनि** पु॰कूपीटस्य जलस्य योनिः कूपीटं काष्ठं योनिरस्य वा। वह्नौ अमरः "अग्नेरापः" इति श्रुतेस्तस्य जलहेतुत्वात् काष्ठोद्भूतत्वाच्च तथात्वम्। तत्पुरुषे स्त्री इति भेदः

**कृपीपति** पु॰ ६त॰। द्रोणाचार्य्ये शब्दमाला। तस्यास्तत्पतित्वकथा कृपशब्दे दृश्या। [ कृपीतनयादयोऽप्यत्र

**कृपीसुत** पु॰ ६त॰। भारतप्रसिद्धे अश्वत्थाम्नि त्रिका॰

**कृ(क्रि)मि** पु॰ क्रम—इन् अतइत्वम् "भ्रमेः सम्प्रसारणञ्च" उ॰ इत्यत्र सम्प्रसारणानुवृत्तौ सम्भवात्। १क्षुद्रजन्तुभेदे उज्ज्व॰। "क्षुभ्यन्ति कीटकृमयः परितस्तथैते" माघाव्यर्जनीये ककारयुक्तपाठः। २लाक्षायां ३कृमियुक्ते ४खरे गर्द्दभे च मेदि॰। ५रोगभेदे पु॰। तन्निदानादि सुश्रुते उक्तं यथा "अथातः कृमिरोगमध्यायं व्याख्यास्यामः। अजीर्णाध्यशनासात्म्यविरुद्धमलिनाशनैः। अव्यायामदिवास्वप्नगुर्व्वतिस्निग्धशीतलैः। माषपिष्टान्नविदलविसशालूकशेरुकैः। पर्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः। पललानूपपिशितपिण्याकपृथुकादिभिः। स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति। कृमीन् बहुविधाकारान् करोति विविधाश्रयान्। आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः। विंशतेः कृमिजातीनां त्रिविधः सम्भवः स्मृतः। पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम्। अजवा विजवाः किप्या चिप्या गण्डूपदास्तथा। चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः। श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च। तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि। शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसंक्षयाः। प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजे। रक्तागण्डूपदा दीर्घा गुदकण्डूनिपातिनः। शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते। दर्भपुष्पाः१ महापुष्पाः२ प्रलूनाः३ चिपिटाः४स्तथा। पिपीलिकाः५ दारुणाश्च६ कफकोपसमुद्भवाः। रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः। रूढधान्याङ्कुराकारा शुक्लास्ते तनवस्तथा। मज्जादा नेत्रलेहारः२ तालुश्रोत्रभुजः३स्तथा। शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते। केशरोमनखादाश्च४ दन्तादाः५ किक्किशाः६स्तथा। कुष्ठजाः परिसर्पाः७ च ज्ञेयाः शोणितसम्भवाः। ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा। रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते। माषपिष्टान्नलवणगुडशाकैः पुरीषजाः। मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः। विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि। ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः। भक्तद्वेषोऽतिसारश्च सञ्जातकृमिलक्षणम्। दृश्यास्त्रयोदशाद्यास्तु कृमीणां परिकीर्त्तिताः। केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्जयेत्। एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम्"। "तुदन्त्यामत्वचं दंशा मशकामत्कुणादयः। रुदन्तं विगतज्ञानं क्रिमयः कृमिकं यथा" भाग॰,३,३१,२८,

स्वार्थे क तत्रार्थे "ततो भक्षयतस्तस्य फलात् कृमिरभूदणुः। ह्रस्वकस्तु स मुनिः कृमिर्भो दृश्यतामयम्"। "एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य तम्। कृमिकं प्राहसत् सर्वं कुर्व्वन् मर्षचेतनः" भा॰ आ॰ ४३अ॰।

**कृमिकण्टक** न॰ कृमौ कृमिरोगे कण्टकमिव तन्नाशकत्वात्। १विडङ्गे २चित्राङ्गे (चिता) ३उडुम्बरे च मेदि॰ तेषां तन्नाशकत्वात् तथात्वम्।

**कृमिकर** पु॰ कृमिं करोति कृ—ताच्छील्यादौ ट च। कीटभेदे "कोणागारी कृ(क्रि)मिकरोयश्च मण्डलपुच्छकः" सुश्रु॰ प्राणनाशनकीटोक्तौ

**कृमिकर्ण(क)** पु॰ कृमियुक्तः कर्णोऽत्र वा कप्। सुश्रुतोक्ते कर्णरोगभेदे। "यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः। तदञ्जनत्वात् श्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णकस्तु सः"। "कृमिकर्णप्रतीकारे विरेर्भिर्द्दिविधस्तथा"। "कृमिकर्णकनाशार्थं कृमिघ्नं योजयेद्विधिम्" इति च सुश्रु॰।

**कृमिकोषोत्थ** न॰ कृमेः कोषादुत्तिष्ठति उद्+स्था—क ५त॰। कौषेये (रेशमी कापड) वस्त्रे अमरः।

**कृमिग्रन्थि** पु॰ सुश्रुतोक्ते सन्धिगतरोगभेदे। तद्विवृतिर्यथा "अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। पूयालसः सोपनाहः स्रावः पर्वणिकालजी। क्रि(कृ)मिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नवेति" विभज्य क्रि(कृ)मिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः कृमयः सन्धिजाताः"। सुश्रु॰

**कृमिघ्न** पु॰ कृमिं हन्ति हन—ताच्छील्यादौ टक् "हनोरत्पूर्वस्य" पा॰नियमात् न णत्वम्। १विडङ्गे अमरः २पलाण्डौ (पेयाज) ३कोलकन्दे ४पारिभद्रे (पालिटामादार) ६भल्लातके (भेला) च राजनि॰ तेषां कृमिनाश-

त्मा तथात्वम् ७हरिद्रायां स्त्री० भावप्र० अजा० टाप्। ८विडङ्गे स्त्री० ङीप् राजनि०

**कृमिज** न० कृमिभिर्जन्यते कृमेर्जायते वा जन–ड। १अगुरुणि अमर०। २कृमिजातमात्रे त्रि० ३लाक्षायां स्त्री० राजनि०

**कृमिजग्ध** न० कृमिभिर्जग्धम्। उपचारात् तज्जाते अगुरुचन्दने राजनि०

**कृमिजलज** पु० कृमिरिव जलजः। कृमिशङ्खे राजनि०

**कृमिण** त्रि० कृमिरस्त्यस्य पामा० न णत्वम्। कृमियुक्ते

**कृमिदन्तक** पु० कृमियुक्तो दन्तोऽत्र। दन्तरोगभेदे "कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः। अनिमित्तरुजोगातात् स ज्ञेयः कृमिदन्तकः" तल्लक्षणम् "शौषिरो गजयालूकं कष्टश्च कृमिदन्तकः" क्षुद्ररोगगणनायाम् सुश्रु०

**कृमिफल** पु० कृमयः फलेऽस्य। उदुम्बरे शब्दचिन्ता०

**कृमिभोजन** पु० कृमिर्भुज्यतेऽत्र भुज–आधारे ल्युट् ६त०। नरकभेदे तामिस्रान्धतामिस्राद्युपक्रमे "अन्धकूपकृमिभोजन इत्यादिना विभज्य भाग०५।२६।२४ तत्स्वरूपमुक्तं यथा

"यस्त्विह वा असंविभज्याश्नाति यत् किञ्चनोपनमतनिर्मितपञ्चयज्ञोवायमसंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति। तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूत स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनोयावत्तदप्रत्तान्नहुतादोऽनिर्वेशमात्मानं यातयते"।

कृमिभक्षादयोऽप्यत्र विष्णु पु० तन्नामतयैव कीर्त्तनात्

**कृमिमत्** त्रि० कृमि+अस्त्यर्थे मतुप् मोपधत्वेऽपि यवादि० न मस्य वः। कृमियुक्ते स्त्रियां ङीप्।

**कृमिरिपु** ६त०। विडङ्गे शब्दरत्ना०। कृमिशत्रुप्रभृतयोऽप्यत्र

**कृमिल** त्रि० कृमिं लाति ला–क। कृमियुक्ते बहुप्रसवायां स्त्रियां स्त्री० हेमच०

**कृमिलाश्व** पु० आजमीढवंश्ये नृपभेदे "आजमीढात्तु मीलिन्यां सुशान्तिरुदपद्यत। पुरुजातिः सुशान्तेश्च वाह्याश्वः पुरुजातितः। वाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः। मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा। यवीनरश्च विक्रान्तः कृमिलाश्वश्च पञ्चमः" हरिवं० ३२अ०

**कृमिलोदर** त्रि० कृमिं लाति ला–क तादृशमुदरमस्य। कृमियुक्तोदररोगभेदयुक्ते। "भुक्त्वाऽन्यं स्वयमश्नन् जायते कृमिलोदरः" शाता०।

**कृमिवारिरुह** पु० कृमिरिव वारिरुहः। कृमिशङ्खे राजनि०

**कृमिवृक्ष** पु० कृमिप्रधानो वृक्षः। कोषाम्रे भावप्रकाशः।

**कृमिशङ्ख** पु० कृमिरिव शङ्खः। शङ्खभेदे राजनि०

**कृमिशुक्ति** स्त्री कृमिरिव शुक्तिः। जलशुक्तौ राजनि०

**कृमिशैल** पु० कृमीणां शैल इव। वल्मीके। कृमिपर्वतादयोऽप्यत्र पु० [यमसद्गे राजनि०।

**कृमीलक** पु० कृमीन् ईरयति जनयति ईर–ण्वुल् रस्य लः।

**कृमुक** पु० क्रमुक+पृषो०। गुवाकवृक्षे तस्योत्पत्तिकथा शत० ब्रा०६।६।२।११

"सा कार्मुकी स्यात्। देवाश्चासुराश्चोभये प्राजापत्या अस्पर्धन्त ते देवा अग्निमनीकं कृत्वा असुरानभ्यायं स्तस्यार्चिषः प्रगृहीतस्यासुरा अपं प्राहरंस्तदस्यां प्रत्यतिष्ठत्स क्रमुकोऽभवत्तस्मात् स स्वादुरसो हि तस्मादु लोहितो र्चिर्हि स एषोऽग्निरेव यत् क्रमुकोऽग्निमेवास्मिन्नेतत् सम्भूतिं दधाति"। क्रमुकस्येयम् अण् ङीप्। कार्मुकी क्रमुकसम्बन्धिन्यां समिधि स्त्री

**कृव** कृतौ हिंसे च इदित् स्वा० प० सक० सेट् ओ कृ इत्यादेशः। कृणोति–अकृणोत् अकृण्वीत्। इदित्त्वात् कृण्व्यते इत्यत्र न नलोपः। [(तांत) सि०कौ०।

**कृवि** पु० करोत्यनेन कृ–वि किच्च। तन्तुवयनसाधनद्रव्ये तन्त्रे

**कृश** तनूकरणे दिवा० पर०सक० सेट्। कृश्यति इरित् अकृशत् अकर्शीत्। णिचि कर्शयति ते अचीकृशत्–त अचकर्शत्–त। कर्शयाम् बभूव आस चकार चक्रे। कृशः।

**कृश** त्रि० कृश–क्त नि०। १अल्पे, २सूक्ष्मे च। "आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः" उपवासकृशं तन्तु" "क्षत्रियञ्चैव सर्पञ्च ब्राह्मणञ्च बहुश्रुतम्। नावमन्येत वै भूयः कृशानपि कदाचन" मनु "ब्राह्मणस्य हरन्नेव। कृश इत्ते कदाचन" भा० आनु० ६२अ०। सूक्ष्मे कृशोदरी। कृशस्य भावः इमनिच् क्रशिमन् तद्भावे पु०। ष्यञ् कार्श्यं न०। तल्। कृशता स्त्री, त्व कृशत्व न० तद्भावे "स्वयेव कृशता कृतः" सा० द०। अतिशयेन कृशः इष्ठन् क्रशिष्ठ ईयसुन् क्रशीयस्। अतिशयकृशे त्रि० ईयसी स्त्रियां ङीप्।

**कृशर** पु० कृशमल्पमात्रा राति रा–क। "तिलतण्डुलसम्मिश्रः कृशर परिकीर्त्तितः" स्मृत्युक्ते १पक्वान्नभेदे हेमच०। (खिचडी) ख्याते २पक्वान्नभेदे स्त्री टाप् भावप्र० कृतान्नवर्ज्जे लघ्वादि टब्दम्। कृशरश्च मनैर्धराय गृहयत्से बलिस्त्वेव देय यथाह मद्स्वरा० "ऊर्द्धमन्" स्वैर्द्यात् सोमाय घृतपायसम्। स्थावरे कुले दद्यात्

क्षीरान्नं सोमसूनवे। दध्योदनञ्च जीवस्य शुक्राय तु घृतौदनम्। शनैश्चराय कृशरमाजमांसञ्च राहवे। चित्रौदनञ्च केतुभ्य सर्वभक्ष्यैः समर्चयेत्"।

कृशला स्त्री कृश कार्श्यं लाति ला—क टाप्। केशे शब्दच०

कृशशाख पु० कृशा शाखा यस्य। १पर्पटे (पापडी) राजनि० २सूक्ष्मशाखान्विते त्रि०।

कृशाङ्गी स्त्री कृशमङ्गं यस्याः ङीष्। १प्रियङ्गुवृक्षे शब्दचन्द्रिका २सूक्ष्माङ्गयुक्ते त्रि० स्त्रियां ङीष्।

कृशानु पु० कृश—आनुक्। १वह्नौ २चित्रकवृक्षे च अमर। तस्य तन्नामकत्वात् "तस्मिन् कृशानुसाद्भूते" भट्टि। ३सोमपालके। "उतकृशानोरस्तुर्मनसाह बिभ्युषा" ऋ० ६,७७,२, "कृशानोः सोमपालस्य" "कृशानु सोमपाल सव्यस्य पदः" ऐत०ब्रा०१,२६,भा०। "कृशानुरस्ता मनसा भुरण्यन्" ऋ०४,२७,३, "कृशानुरेतन्नामकः सोमपाल" भा०। ४सव्यपार्श्वस्थरश्मिधारके च। "कृशानो! सव्यानायच्छ" ता०ब्रा० "कृशानुर्नाम सव्यपार्श्वस्थाना रश्मीना धारयितेति" भा०। तत मत्वर्थे गोपदा० टन्। कृशानुक वह्नियुक्ते त्रि० तद्गणे कृशानुस्थाने कृशाकु इति वा पाठ कृशाकोश्च वह्निरेवार्थः।

कृशानुरेतस् पु० कृशानौ पतितं रेतोऽस्य। १महादेवे अमरः। तस्य यथा वह्नौ तेजोनिषेकः तथा कालिकापु० ४७अ० उक्तं कालिकापु० शब्दे २०५५पु० तत्कथामात्र दृश्य विस्तरस्तु कालिकापुराणे दृश्यः। ६त०। २वह्नौ रोजसि न०।

कृशाश्व त्रि० कृशोऽश्वोऽस्य। १दुःस्थाश्वस्वामिनि। तृणबिन्दुवंश्ये २राजर्षिभेदे पु०। "तत् पुत्रात् संयमादासीत् कृशाश्वः सहदेवज। कृशाश्वात् सोमदत्तोऽभूत्" भाग०६,२,२२,श्लो०। ३दक्षजामातृभेदे पु० "कृशाश्वोऽर्चिषि भार्यायां धूमकेशमजीजनत्। धिषणायां वेदशिरं देवलं वयुनं मनुम्" भाग० ६,६,१८,श्लो०। रामा० तु अन्यनामिकयोर्दक्षकन्ययो तद्भार्यात्वमुक्तं यथा "सर्वास्त्राणि कृशाश्वस्य पुत्राः परमधार्म्मिकाः। कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति। तेऽपि पुत्रा कृशाश्वस्य प्रजापतिसुतासुता। नैकरूपा महावीर्य्या दीप्तिमन्तो जयावहा। जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे। अद्भुता च शस्त्राणि शतं परमभास्वरम्। पञ्चाशत सुतान् लेभे जया लब्धवरा वरान्। वधायासुरसैन्यानामप्रमेयानरूपिणः। सुप्रभाऽजनयच्चापि पुत्रान् पञ्चाशतं पुनः। संहारान्नाम दुर्धर्षान्दुराक्रामान् बलीयस। तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मज। अपूर्वाणां च जनने शक्तो भवश्च धर्म्मवित्"। "देवि एतानि सर्वस्त्राणि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात् कौशिकस्तद्विमुपसङ्क्रान्तानि तेन च ताडकावधे प्रसादीकृतान्यस्य" उत्तररामं०। "व्यश्व साश्वं कृशाश्च शशबिन्दुश्च पार्थिव" भा०स०८अ० यमसभोक्तौ "धौम्युमारिष्टाश्व" इत्युपक्रमे "सहंताश्वोनिकुम्भस्य पुत्रोरणविशारदः। अकृशाश्वकृशाश्वौ च सहताश्च तौ नृप" हरिवं० १२अ० उक्ते धुन्धुमारवंश्ये ४नृपभेदे च। ततः तेन प्रोक्तमधीयते नटसूत्रम् इनि। कृशाश्विन् तत्प्रोक्तनटसूत्राध्यायिनि ब०व०। (रुक्माणी) राजनि०।

कृषिका स्त्री कृषेव स्वार्थे क। आखुकर्णीलतायाम् (उन्दु-

कृष विलेखने आकर्षणे च तुदा० उभ० सक० अनिट्। कृषते। अकृक्षत—अक्षत। चकृषे चकृषिषे। क्रष्टा क्रर्षीष्ट क्रक्ष्यते। कर्षस्व। प्रनिकृषते।

कृष विलेखने आकर्षणे च भ्वा० पर० सक० अनिट्। कर्षति अक्राक्षीत्—अकार्क्षीत्—अकृक्षत्। चकर्ष चकर्षिथ चकृषिम। क्रष्टा कृष्यात् क्रक्ष्यति। कर्माणि कृष्यते अकर्षि अकृक्षाताम् अकृषाताम्। कृष्य कर्षणीय क्रष्टव्य। क्रष्टा कर्षक कर्षन् कृष्यमाणः। क्रक्ष्यन् क्रक्ष्यमाण। कृष्ट कृष्टि कृष्टा अनुकृष्य। कर्षः कर्षणम्।

अनु+पूर्वस्थितस्य पदादेः उत्तरवाक्ये योजनार्थं ग्रहणस्थाने अनुषङ्गे सक० अनुकर्षति। अनुकर्षशब्दे विवृतिः

अप+हीनताकरणे स्वकालात् पूर्व्वत्र काले करणे च सक० अपकर्षति अपकर्षसमियङ्गनम्। अपकृष्टः। अपकर्षशब्दे विवृतिः

अप+आ+निवर्त्तने सक०। "तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः" रघु।

अभि+आभिमुख्येन कर्षणे सक० अभिकर्षति।

अव+अधःस्थतया कर्षणे सक०। अवकर्षति

आ+स्वियान्तरतोऽनयने सक०। आकर्षति

उद्+अतिशयने प्राधान्यप्रापणे स्वकालात् उत्तरकालकरणे आकर्षणे च सक०। उत्कर्षन्ता च रशना क्रुद्धायां मयि पक्षिणे" रामा०लं० ३८,१४। उत्कर्षशब्दे विवृतिः

निस्+निर्+निस्सारणे निश्चये च सक०। निष्कर्षति "निष्कृष्य चकमे कुबेरात्" रघु। तदयं निष्कर्षः

प्र+अतिशयेन कर्षणे उत्कृष्टत्वे सक० प्रकर्षति प्रकृष्टः

प्रकर्षे· प्राधान्यभवने अक० "इदं तु मम दीनस्य मनोभूयः प्रकर्षति" रामा० सु० १,१,

सम्+ सम्यक्कर्षणे सक० सङ्कर्षणम्। [समाकर्षी।

सम्+आ+सम्यक्तया दूरपर्य्यन्तनयने सक०। समाकर्षति

कृषधातुर्न्यादिपाठात् द्विकर्म्मकः। कर्षणञ्च भूमिसंयोजनेन बलेन देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः तेनास्य द्विव्यापारबोधकतया द्विकर्म्मकत्वम्। ग्राम अजां कर्षति इत्यादौ अकथितञ्चेत्यादि पा० अजादेः कर्म्मत्वम्। अत्र प्रधाने कर्म्मण्येव वाच्ये लकारादयः। "प्रधाने नीकृष्यवहाम्" भर्तृहर्य्युक्तेः। अजा ग्रामं कृष्यते। विलेखनञ्च विदारणं तदर्थे न द्विकर्म्मकतेति भेदः

कृषक त्रि० कृष—क्वुन्। १कर्षके कृषिवले उदा०। २फाले न० मेदि०। ३वृषे पु० हेम०।

कृषर न० कृष—करन्। कृशरशब्दार्थे पृषो० कृषरोऽप्यत्र केचित्

कृषाण त्रि० कृष—शा० आनक्। कर्षके कृषिवले उदा०

कृषि स्त्री कृष—इक्। शस्योत्पादनार्थं भूमिकर्षणरूपे वैश्यवृत्तिभेदे अमरः कृषिकर्म्मप्रकारादि कृषिपराशरे दर्शितं यथा तत्रादौ कृषिप्रशंसा "चतुर्व्वेदान्तगो विप्रः शास्त्रवादी विचक्षणः। अलक्ष्म्या गृह्यते सोऽपि प्रार्थनालाघवान्वितः। एकयैव पुनः कृष्या प्रार्थको नैव जायते। कृष्यान्वितो हि लोकेऽस्मिन् भूयादेकश्च भूपतिः। सुवर्णरौप्यमाणिक्यवसनैरपि पूरिताः। तथापि प्रार्थयन्त्येव कृषकान् भक्ततृष्णया। कण्ठे कर्णे च हस्ते च सुवर्णं यदि विद्यते। उपवासस्तथापि स्यादन्नाभावेन देहिनाम्। अन्नं प्राणा बलञ्चान्नमन्नं सर्व्वार्थसाधकम्। देवासुरमनुष्याश्च सर्व्वे चान्नोपजीविनः। अन्नन्तु धान्यसम्भूतं धान्यं कृष्या विना न च। तस्मात् सर्व्वं परित्यज्य कृषिं यत्नेन कारयेत्। कृषिर्धन्या कृषिर्मेध्या जन्तूनां जीवनं कृषिः। हिंसादिदोषयुक्तोऽपि मुच्यतेऽतिथिपूजनात्। तेनार्च्चितं जगत् सर्व्वमतिथिर्येन पूजितः। अर्च्चितास्तेन देवाश्च स एव पुरुषोत्तमः"।

अथ कृषेः स्वयमवेक्षणीयतोक्तिः "फलत्यवेक्षिता स्वर्णं, दैन्यं सैवानवेक्षिता। कृषिः कृषिपुराणज्ञ इत्युवाच पराशरः"।

अथ पान्थे मुनयश्चाहुः "पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम्। गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत्। कृषिर्गावो वाणिज्या स्त्रियो राजकुलानि च। क्षणेनैतान्यसीदन्ति मुहूर्त्तमनवेक्षणात्। समर्थेन कृषिः कार्य्या लोकानां हितकाम्यया। असमर्थो हि कृषको भिक्षामटति नोचयत्। गोहितः क्षेत्रगामी च कालज्ञो बीजतत्परः। वितन्द्रः सर्व्वशस्याढ्यः कृषको नावसीदति"।

अथ वाहपोषणादिप्रकारः। "कृषिश्च तादृशी कुर्य्यात् यथा वाहान्न पीडयेत्। वाहपीडार्ज्जितं शस्यं गर्हितं सर्व्वकर्म्मसु। वाहपीडार्ज्जितं शस्यं फलितञ्च चतुर्गुणम्। वाहनिश्वासविफलः कृषको निःस्वतां व्रजेत्। गुडकैर्यवसैर्भुसैस्तथान्यैरपि पोषणैः। वाहाः कश्चिन्न सीदन्ति सायं प्रातश्च चारणात्"।

अथ गोशालाविधानम्। "गोशाला सुदृढा यस्य शुचिर्गोमयवर्जिता। तस्य वाहा विवर्द्धन्ते पोषणैरपि वर्जिताः। शकृन्मूत्रविलिप्ताङ्गा वाहा यत्र दिने दिने। निःसरन्ति गवां स्थानात् तत्र किं पोषणादिभिः। पञ्चपञ्चायता शाला गवां वृद्धिकरी मता। सिंहस्थाने कृता सैव गोनाशं कुरुते ध्रुवम्। सिंहगेहेऽर्पिता चैव गोशालां कुरुते यदि। प्रमादान्मन्दबुद्धित्वात् गवां नाशो भवेत्तदा। तण्डुलानां जलञ्चैव तप्तमण्डं झषोदकम्। कार्पासास्थितुषञ्चैव गोस्थाने गोविनाशकृत्। सम्मार्ज्जनीञ्च मुषलमुच्छिष्टं गोनिकेतने। कृत्वा गोनाशमाप्नोति तथा तत्राजबन्धने। गोमूत्रजालकेनैव तत्रावस्करमोचनम्। कुर्व्वन्ति स्त्रीसेविभ्यस्तत्र का वाहवासना। विलम्बं गोमयस्यापि रविभौमशनेर्द्दिने। न कारयेत् भ्रमेणापि गोवृद्धिं यदि वाञ्छति। वारत्रयं परित्यज्य दद्यादन्येषु गोमयम्। विलम्ब्य शनिभौमेषु गवां हानिकरः स्मृतः। लोमभूत्रपुरीषाणि पङ्कानि च रजांसि च। न पतन्ति गवां यत्र तत्र लक्ष्मीः स्थिरा भवेत्। सन्ध्याकाले च गोस्थाने दीपो यत्र न दीयते। स्थानं तत् कमलाहीनं वीक्ष्य क्रन्दन्ति गोगणाः। हलमष्टगवं धर्म्म्यं षड्गवं व्यवसायिनाम्। चतुर्गवं नृशंसानां द्विगवञ्च गवाशिनाम्। नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम्। नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्। आत्मपोषणमात्रन्तु द्विहलेन च सर्व्वदा। पितृदेवातिथीनाञ्च पुष्ट्यर्थं सोऽक्षमो भवेत्।

अथ गोपर्व्वकथनम् "गोपूजां कार्त्तिके कुर्य्यात् लगुडप्रतिपत्तिथौ। बद्ध्वा श्यामलता स्कन्धे लिप्त्वा तैलहरिद्रया। कुङ्कुमैश्चन्दनैश्चापि कृत्वा चाङ्गे विलेपनम्। ध्वजस्य लगुड हस्ते गोपालाः कृतभूषणाः। ततो वाद्यैश्च

स्यैव मण्डयित्वाऽम्बरादिभिः । भ्रामयेद्वृषं सख्यं ग्रामे गोविन्दालये । गवामङ्गे तदा दद्यात् कार्त्तिकप्रथमे दिने । तैलं हरिद्रया युक्तं मिलित्वा कुङ्कुमैः सह । तल्लोहादिक तत्र गवामङ्गे प्रदापयेत् । छेदनञ्च प्रकुर्व्वीत लाङ्गूले कर्णकर्णयोः । सर्व्वे गोजातयः तुष्टा भवन्त्येतेन तद्गृहे । नानाव्याधिविनिर्मुक्ता वर्षमेकं न संशयः" ।

अथ गवां यात्राप्रवेशकालादि । पूर्व्वात्रयं धनिष्ठा च इन्द्राग्निसौम्यवारुणाः । एते शुभप्रदा नित्यं गवां यात्राप्रवेशयोः । उत्तरात्रयरोहिण्या सिनीवाली चतुर्द्दशी । पुष्यश्रवणहस्तेषु चित्रायामष्टमीषु च । गवां यात्रां न कुर्व्वीत प्रस्थानं वा प्रवेशनम् । पशवस्तत्र नश्यन्ति ये चान्ये तृणचारिणः । अर्कार्किकुजवारेषु गवां यात्राप्रवेशयोः । गमने गोविनाशः स्यात् प्रवेशे गृहिणो वधः" ।

अथ गोमयकूटोद्धारः "माघे गोमयकूटन्तु सम्पूज्य श्रद्धयान्वितः । सारं शुभदिने प्राप्य कुद्दालैस्तोलयेत्ततः । रौद्रे संशोष्य तत् सर्व्वं कृत्वा गुण्डकरूपिणम् । फाल्गुने प्रतिकेदारे गर्त्तं कृत्वा निधापयेत् । ततो वपनकाले तु कुर्य्यात् सारविमोचनम् । विना सारेण यद्धान्यं वर्द्धते न फलत्यपि" ।

अथ हलसामग्रीकथनम् "ईषा युगो हलस्थाणुर्निर्य्योलस्तस्य पाशिका । अड्डचल्लश्च शौलश्च पच्चनी च हलाष्टकम् । पञ्चहस्ता भवेदीषा स्थाणुः पञ्चवितस्तिकः । सार्द्धहस्तस्तु निर्य्योलो युगः कर्णसमानकः । निर्य्योलपाशिका चैव अड्डचल्लस्तथैव च । द्वादशाङ्गुलमानो हि शौलोऽरत्निप्रमाणकः । सार्द्धद्वादशमुष्टिर्वा कार्य्या वा नवमुष्टिका । दृढा पच्चनिका ज्ञेया लौहाग्रा वंशसम्भवा । आबद्धो मण्डलाकारः स्तृतः पञ्चदशाङ्गुलः । योक्त्रं हस्तचतुष्कञ्च रज्जुः पञ्चकरात्मिका । पञ्चाङ्गुलाधिको हस्तो हस्तो वा फालकः स्मृतः । अर्कस्य पत्रसदृशी पाशिका च नवाङ्गुला । एकविंशतिशल्यस्तु विद्धकः परिकीर्त्तितः । नवहस्ता तु मदिका(मइ)प्रशस्ता कृषिकर्म्मसु । इयं हि हलसामग्री पराशरमुनेर्म्मता । सुदृढा कर्षकैः कार्य्या शुभदा कृषिकर्म्मणि । अदृढा युज्यमाना सा सामग्री वाहनस्य च । विघ्नं पदे पदे कुर्य्यात् कर्म्मकाले न संशयः" ।

अथ हलप्रसारणकालादि "अनिलोत्तररोहिण्यां मृगमूलपुनर्व्वसौ । पुष्याश्रवणहस्तेषु कुर्य्याद्धलप्रसारणम् । हलप्रसारणं कार्य्यं कर्षकैः शस्यवृद्धये । शुक्रेन्दुजीवयारेषु शशिजस्य विशेषतः । भौमार्कदिवसे चैव तथैव शनिवासरे । कृषिकर्म्मसमारम्भो राज्योपद्रवमादिशेत् । दशम्येकादशी चैव द्वितीया पञ्चमी तथा । त्रयोदशी तृतीया च सप्तमी च शुभावहा । शस्यघ्नः प्रतिपदि द्वादश्यां वधमन्वनम् । बहुविघ्नकरी षष्ठी कुहूः कृषकनाशिनी । हन्त्यष्टमी बलीवर्द्दान् नवमी शस्यघातिनी । चतुर्थी कीटजननी सर्व्वं हन्ति चतुर्द्दशी । वृषे मीने च कन्यायां युग्मे धनुषि वृश्चिके । एतेषु शुभलग्नेषु कुर्य्याद्धलप्रसारणम् । मेषलग्ने पशुं हन्यात् कर्कटे जलजात् भयम् । सिंहे चौरभयञ्चैव कुम्भे सर्पभयं तथा । मकरे शस्यनाशः स्यात् तुलायां प्राणसंशयः । तस्माल्लग्नं प्रयत्नेन कृष्यारम्भे विचारयेत् । शुभेऽर्क्के चन्द्रसंयुक्ते शुक्लदुग्धेन वाससा । शुक्लपुष्पैश्च गन्धैश्च पूजयित्वा यथाविधि । पृथिवीं हलसंयुक्तां पृथुञ्चैव प्रजापतिम् । अग्नेः प्रदक्षिणं कृत्वा भूरि दत्त्वा च दक्षिणाम् । फालाग्रं स्वर्णसंयुक्तं कृत्वा च मधुलेपनम् । वह्नेः क्रोडे वामपार्श्वे कुर्य्याद्धलप्रसारणम् । कर्त्तव्यो वासवो व्यासः पृथूराम पराशर । सम्पूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रसारणम् । कृष्णौ वृषौ हले स्थाप्यौ रक्तौ वा कृष्णलोहितौ । दक्षपार्श्वे तयोः स्थाप्यौ नवम्या च घृतेन च । उत्तराभिमुखो भूत्वा इन्द्रायार्घ्यं निवेदयेत् । शुक्लपुष्पसमायुक्तं दधिक्षीरसमन्वितम् । हलाष्टं कुरु देवेश । गृहाणार्घ्यं शचीपते ॥ निविष्टो विष्टरे भक्तः संस्थाप्य जानुनी क्षितौ । प्रणम्यैतावदं देव मन्त्रध्यानेन कर्षकः । वृषो महाकटिर्वर्ष्म्यव्यङ्गताङ्गूलकर्षकः । सर्व्वयुक्तस्तथा दक्ष्यं कृषकैर्हलकर्म्मणि । हलप्रसारणं कार्य्यं भीरगभिर्षकर्षकैः । विधरेखा न कर्त्तव्या यथा प्राह पराशरः । एका तिस्रस्तथा पञ्च हलरेखाः प्रकीर्त्तिताः । एका जयकरी रेखा तृतीया चार्थसिद्धिदा । पञ्चमाख्या तु या रेखा बहुशस्यप्रदायिनी । हलप्रवाहकाले तु कूर्म्मं समुत्पाटयेद्यदि । गृहिणी म्रियते तस्य तथा चाग्निभयं भवेत् । फालोत्पाटे च भङ्गे च देशत्यागो भवेद्ध्रुवम् । लाङ्गलो भिद्यते यापि प्रभुस्तस्य विनश्यति । ईषाभङ्गो भवेद्वापि कृषको लोकमाचमः । भ्रातृनाशो युगे भग्ने शौले च म्रियते वृषः । योक्त्रच्छेदे च रोगः स्यात् शस्यहानिश्च जायते । निपाते कर्षकस्यापि कष्टं स्यात् राजमन्दिरे । हलप्रवाहकाले तु गौरेकः प्रपतेद्यदि । ज्वरातिसाररोगेण घातुभो

न्याना कुर्य्यात् कट्टनरोपणे । न च सारप्रदानन्तु तत्र-मासन्तु शोधयेत्” ।

अथ धान्यनिस्तृणीकरणम् “निष्पन्नमपि यद्धान्यमकृत्वा तृणवर्जितम् । न सम्यक् फलमाप्नोति तृणक्षीणं कृषिर्भवेत् । कुलीरभाद्रयोर्म्मध्ये यद्धान्यं निस्तृणं भवेत् । तृणैरपि तु सम्पूर्णं तद्धान्यं द्विगुणं भवेत् । द्विवारमाश्विने मासि कृत्वा धान्यन्तु निस्तृणम् । अथ पाकविहीनं हि धान्यं फलति नान्यथा । तस्मात् सर्व्वप्रयत्नेन निस्तृणां कारयेत् कृषिम् । निस्तृणा हि कृषाणाना कृषि कामदुघा भवेत्” ।

अथ भाद्रे जलमोचनम् “नैरृत्यां हि धान्याना जलं भाद्रे विमोचयेत् । मूलमात्रन्तु संस्थाप्य कारयेज्जलमोचनम् । भाद्रे च जलसम्पूर्णं धान्य विविधबाधकैः । प्रपीडितं कृषाणाना न धत्ते फलमुत्तमम्” ।

अथ धान्यव्याधिखण्डनमन्त्रः “ओँ सिद्धि, गुरुपादेभ्यो नमः । स्वस्ति, हिमगिरिशिखरात् शङ्खकुन्देन्दुधवल-शिखरतटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारक-महाराजाधिराजश्रीमद्रामभद्रपादा विजयिनः समुद्र-तटावस्थितनानादेशागतवानरकोटिलक्षाग्रगण्यं खरतर-नखरातितीक्ष्णदृढमूर्द्धलाङ्गूलं लीलागमनसमुद्भूतवा-तवेगावधूतपर्व्वतशत परचक्रप्रमथनं पवनसुतं श्रीहनु-मन्तमाज्ञापयन्ति अमुकग्रामे अमुकगोत्रस्य श्रीमतोऽमुकस्य अखण्डक्षेत्रे राता भोम्रा छदा गान्धिया भोम्री गान्धी क्रोडी पाण्डरसुखी महिषासुगडी धूलिसङ्कटा मण्डूका इत्यादयः तालजङ्घाः चटकशुकमूषकमृगमहिषमूषिकव-राहपतङ्गादयः सर्व्वे शस्योपघातिनो यदि त्वदीयवचनेन न त्यजन्ति तदा तान् वज्रलाङ्गूलेन ताडयिष्यसीति । ओँ आ श्रीँ श्रीँ नमः” ।

मतान्तरे धान्यव्याधिखण्डनमन्त्रः “ओँ सिद्धि, गुरुपादेभ्यो नमः । श्रीरामचन्द्रचरणेभ्यो नमः । स्वस्ति, हिम-गिरिशिखरात् शङ्खकुन्देन्दुधवलशिलातटात् नन्दनवन-सङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्री-मद्रामभद्रपादा कुर्व्वन्ति समुद्रतटावस्थितनानादेशाग-तवानरकोटिलक्षाग्रगण्य खरतरनखरातितीक्ष्णदृढमू-र्द्धलाङ्गूल लीलागमनसमुद्भूतवातवेगावधूतपर्व्वतशतं पर-चक्रप्रमथन पवनसुत श्रीमन्तं हनुमन्तमाज्ञापयन्त्यद्य, अमुकग्रामे अमुकगोत्रस्य श्रीं अमुकस्य अखण्डक्षेत्रे भोम्रा—भोम्री--पाण्डरसुखी-गान्धी-धूलिसङ्कटादिरोग-

फलेन त्रिपुटी नाम राक्षसी सप्त पुत्रानादाय त्रिविधविघ्नं समाचरन्त्यवतिष्ठते, इद मदीयशासनमिच्छनमवगम्य तां पापराक्षसीं सपुत्रबान्धवां वज्रदण्डाधिकलाङ्गूलदण्डैः खरतरनखरैश्च विदार्य्य दक्षिणसमुद्रे नयनाम्बुधौ जगतृप्त्यै प्रक्षिपेति, यद्यत्र त्वया क्षणमपि विलम्ब्यते तर्हि त्वं केशरिणा पित्रा पवनेन मात्रा चाञ्जनया शप्तव्योऽसीत्यन्यथा नाहं प्रभुर्न त्वं भृत्य इति ओँ ग्रां ग्रीं ग्रः” ।

इमं मन्त्रं विल्वकण्टकेन शैतकीदले लिखित्वा शुक्लकेनेना-दित्यवारे क्षेत्रस्य नैरृत्यां शस्यमध्ये मञ्जरीषु बन्धयेत् । पाटान्तरञ्च लिखित्वाऽलक्तकेनैतन्मन्त्र शस्येषु बन्धयेत् । न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्” ।

अथ जलरक्षणम् । “आश्विने कार्त्तिके चैव धान्यस्य जलर-क्षणम् । न कृत येन मूर्खेण तस्य का शस्यवासना । यथा कुसार्थी कुरुते कुसस्योपरिरक्षणम् । तथा संर-क्षयेत् वारि शरत्काले समागते ।

अथ कार्त्तिकसंक्रान्त्या नलरोपणम् “घटप्रवेशसंक्रान्त्यां रोप-येत्तु नल तथा । केदारैशानकोणे च यत्न कृषकः शुचिः । गन्धैः पुष्पैश्च धूपैश्च शुक्लवस्त्रैर्विशेषतः । पूजयित्वा नल तत्र पूजयेद्धान्यदक्षकान् । दधिभक्तञ्च नैवेद्य पायसञ्च विशेषतः । ततो दद्यात् प्रयत्नेन ताला-दिफलमेव च” । तत्र मन्त्र । “बालकास्तरुणा वृद्धाः सन्ति ये धान्यरक्षकाः । ज्येष्ठाश्चापि कनिष्ठा वा वनदा निर्गदाश्च ये । आज्ञया भीमसेनस्य रामस्य च पृथोपरि । ताडिता नलदण्डेन सर्व्वे सु समपुष्पिता । समपुष्पत्वमासाद्य फलन्त्वाशु च निर्भरम् । सुस्था भवन्तु कृषका धनधान्यसमन्विताः । रोपयित्वा नल क्षेत्रे म-न्त्रेणानेन च क्रमात् । धान्यवृद्धिं परां प्राप्य नन्दन्ति कृषका जना । नलन्तु घटसंक्रान्त्यां क्षेत्रे नारोपयन्ति ये । विफला बन्ध्यपुष्पाश्च तेषां स्युर्धान्यजातयः” ।

अथ मार्गे मुष्टिग्रहणम् । “ततो मार्गे तु सम्प्राप्ते केदारे शुभवासरे । धान्यस्य लवन कुर्य्यात् सार्द्धमुष्टिद्वयं शुचिः । गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैर्धान्यरक्षकान् । पूजयित्वा यथा-न्यायमीशाने लवन चरेत् । ततस्तन्मस्तके कृत्वा सम्यक् शीर्षकान्वितम् । न स्पृशन् कमपि क्वापि व्रजेन्मौनेन मन्दिरम् । सप्तपद्यां तत पादं दत्त्वा सुस्थनिकेतने । प्रविशन् स्थापयेत्तत्तु पुष्पगन्धादिपूजितम् । न मुष्टिग्र-हणं कुर्य्यात् कदाचिद्घटपौषयोः । अथो मुष्टिग्रहो

मार्गे धनधान्यफलप्रदः। सार्द्धं कुडवद्वयं मार्गे योऽक्षिप्त्वा लवनञ्चरेत्। पदे पदे विफलता तस्य धान्यं कुतो गृहे। रौद्रे सर्पे तथा सौम्ये पुष्ये चैवानिलोत्तरे। धान्यच्छेदं प्रशंसन्ति मूलश्रवणयोरपि। व्यतीपाते च भद्रायां रिक्तायां वैधृतौ तथा। भौमार्किबुधवारेषु मुष्टिसंग्रहणं त्यजेत्"।

अथ मार्गे मेधिरोपणम् "कृत्वा तु खलकं मार्गे सम्यं गोमयलेपितम्। रोपणीया प्रयत्नेन तत्र मेधिः शुभेऽहनि। स्तोनाम्ना लपके कार्य्या मेधिर्वृश्चिकभास्करे। मेधेर्गुणेन लपकः शस्यवृद्धिमवाप्नुयात्। न्यग्रोधः सप्तपर्णी या गाम्भारी शाल्मलिस्तथा। औदुम्बरो विशेषेण अन्येषां क्षीरपादपः। वटादीनामभावे तु कार्य्या स्त्रीनामधारिका। वैजयन्तीयुता मेधिर्निम्बसर्षपरक्षिता। धान्यकेशरसंयुक्ता तृणमर्कटकान्विता। अर्च्चिता गन्धपुष्पाभ्यां मेधिः शस्यसुखप्रदा। पौषे मेधिर्न चारोप्या क्रूराहे श्रवणे तथा। शस्यवृद्धिकरी मार्गे पौषे शस्यक्षयङ्करी। कपित्थबिल्वशाखाना तथाराम्रा तथैव च। मेधिः कार्य्या नरैर्नैव यदीच्छेदात्मनः शुभम्"।

अथ पौषे पुष्पयात्राकथनम् "कक्षस्थिते ततो धान्ये पौषे मासि शुभे दिने। पुष्पयात्रां जनाः कुर्युरन्योन्यं प्रेमहर्षिणः। परमान्नं तत्रैव व्यञ्जनैर्नानासंभवैः। निरामिषैस्तथा दिव्यैरिक्षुसारोपसंयुतैः। दधिभिश्च तथा दुग्धैराज्यपायसमिश्रितैः। नानाफलैश्च मूलैश्च मिष्टपिष्टकविस्तरैः। एभिः सुढौकितं कृत्वा तदन्नं कटकोदरे। भोजयेयुर्जनाः सर्वे यथावृद्धपुरःसराः। आचम्य च ततस्तत्र चन्दनैश्च ततु सर्वैः। अन्योन्यं लेपनं कुर्य्युः कौषेः पक्वैः सुगन्धिभिः। कर्पूरवासितं दिव्यं ताम्बूलं गन्धधूपितम्। भक्षयेयुः प्रपूर्य्यास्यं परिधाय नवाम्बरम्। पुष्पैराभरणं कृत्वा नमस्कृत्य शचीपतिम्। गीतैर्वाद्यैश्च नृत्यैश्च कुर्य्युस्तत्र महोत्सवम्। ततस्तु हर्षिताः सर्वे प्रणम्य लोकचतुष्टयम्। कृताञ्जलिपुटकं कृत्वा पश्येयुर्वीक्ष्य भास्करम्। क्षेत्रे चास्य गृहे धान्ये तव देव प्रसादतः। पुष्पन्तु निर्मिता सर्वे शस्यानि शुभकारका। मनसा कर्मणा वाचा ये चास्माकं विरोधिनः। ते सर्वे प्रशमं यान्तु पुष्पयात्राप्रभावतः। धान्यवृद्धिर्यशोवृद्धिः प्रवृद्धिः पुत्रदारयोः। राजसम्मानवृद्धिश्च गवां वृद्धिस्तथैव च। सम्पत्प्रावनवृद्धिश्च सम्पत्तिवृद्धिरर्चितम्। अथाकमस्तु सततं यावत् पूर्णो न वत्सरः। ततः प्रमुदिताः सर्वे व्रजेयुः स्वनिकेतनम्। न भोजनं पुनः कुर्य्युस्तस्मिन्नहनि मानवाः। हिताय सर्वलोकानां पुष्पयात्रा मनोहरा। पुरा पराशरेणैव कृता सर्वार्थसाधिनी। तस्मादियं प्रयत्नेन पुष्पयात्रा विधानतः। सर्वविघ्नप्रशान्त्यर्थं कार्य्या शस्यस्य वृद्धये। पुष्पयात्रां न कुर्वन्ति ये जना धनगर्विताः। न विघ्नोपशमस्तेषां कुतस्तद्वत्सरे सुखम्। पौषे मासि ततः कुर्य्याद्धान्यच्छेदं विचक्षणः। मर्द्दयित्वा यथायोगमाढकेन प्रमापयेत्। सुप्रमाप्य च तद्धान्यं यथालाभं प्रवन्ध्येत्। प्रमादेनापि पौषे तु व्ययं तस्य न कारयेत्। मापनं सर्वशस्यानां वामावर्त्तेन कीर्त्तितम्। धान्यानां दक्षिणावर्त्तं मापनं क्षयकारकम्। वामावर्त्तेन सुस्पष्टं धान्यवृद्धिकरं परम्"।

आढकलक्षणम् "द्वादशाङ्गुलकैर्मानैराढकः परिकीर्त्तितः। स चातकाम्रपुन्नागकाष्ठकाण्डकसत्तमम्। कपित्थपर्कटीनिम्बजनितं दैन्यवर्द्धनम्"।

अथ धान्यस्थापनम्। "हस्ते स्वातौ च पुष्यायां रेवत्याञ्च प्रजापतौ। यमसूलोत्तरे सौम्ये मघायाञ्च पुनर्वसौ। जीवे सोमे भृगोर्वारे निधने क्रूरवर्जिते। मीनलग्ने शुभे चक्रे धान्यस्थापनमुत्तमम्"।

कृषिकर्त्तव्यतायां विशेषो वृहत्पराशरेण दर्शितो यथा "अतःपरं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं शक्त्या चातुर्वर्ण्याक्रमागतम्। सुमार्गं सम्प्रवक्ष्यामि पाराशरमचोदितम्। षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत्। क्षुधार्त्तं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम्। वृषयुक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्। स्थिराङ्गं नीरुजं दृप्तं धान्यं षण्डविवर्जितम्। अष्टं सततमागमनड्वाहं तु वाहयेत्। वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत्। कृषकेन कृषिं कार्य्या सर्वथा धेनुसञ्चयम्। बन्धनं पालनं रक्षा द्विज कुर्य्याद्गृहे गवाम्। यस्माच्च यत्नतो रक्ष्या वर्द्धन्ते ते यथाक्रमम्। न दूरे तास्तु मोक्तव्याश्चरणाय कदाचन। दूरे गावश्चरन्त्यो वै न भवन्ति शुभावहाः। प्रातरेव हि दोग्धव्या दुग्धाः सायं तथा स्वकी। दोग्धुर्विपर्य्यये नैव वर्द्धन्ते ताः कदाचन। अन्नादेयत्तृणं भुक्त्वा स्रवन्त्यनुदिनं पयः। तदिन्द्रदेवतादीनां पूज्या गावः कथञ्चन। यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः। पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु। या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः। सर्वदेवमयी गौस्तु तुष्येत्तद्भक्तितो हरिः।

र्भां शमिच्छन् हितमात्मनश्च । गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः । याम्यामुखा नैव तु उत्तरादिङ्मुखास्तकास्ते खलु बन्धनीयाः । शालाप्रवेशे वृषगोपमूर्त्ता राजापि यत्नाद्धयकुञ्जराणाम् । होमञ्च सप्तार्चिषि शास्त्रयुक्तं कुर्य्याद्विधिज्ञो द्विजपूजनञ्च ।

लाङ्गल तत् प्रवक्ष्यामि यत्काष्ठं दृढमानतः । हलीषाया-स्तथा मानं प्रतोदस्य युगस्य च । चत्वारिंशत्तथाचाष्टा-वङ्गुलानि कुटः (हलं) स्मृतः । अथ पञ्चाङ्गुलैर्भाव्यो हलीषावेधतश्च यः । षोडशैव तु तस्याथ षड्विंशति-रथोपरि । वेधस्तथा च कर्त्तव्यः प्रमाणेन षडङ्गुलं । अष्टाङ्गुलहरस्तस्य वेधादूर्द्धं प्रकल्पयेत् । ग्रीवा दशा-ङ्गुला चोर्द्धं हस्तपादो तत स्मृत । अङ्गुलैश्चाष्ट-भिस्तत् स्याद्दैर्घं स्यात् प्रतिहारक । तस्यावस्ता-द्यश्चत्वारि स वेधश्चतुरङ्गुलः । प्रतिहारी शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् । पञ्चाङ्गुलपरस्तस्याः सी-रस्येति विभाजनम् । पृष्ठत्व शिरसोधार्य्यं हस्ततल-प्रमाणकम् । अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता । अन्यद्वाऽपि प्रतीहारी षड्विंशदङ्गुला भवेत् । सुतीक्ष्णा लोहफाल्यस्य उक्ता दामादिदारकत् । न सीर क्षीरवृक्षस्य न बिल्वपिचुमर्दयोः । इत्यादीनां हि कुर्वाणो न नन्दति चिरं गृही । प्राञ्जला सप्तहस्ता तु हलीषा विदुषा मता । तस्याः(ईषायाः)वेधः सवर्णाया कार्य्यो नव-वितस्तिभिः । अप्रायाप्रयोर्न तत्कुर्य्यात् कीर्त्तिन्नौ तौ प्रकी-र्त्तितौ । प्रमादतस्तु तां कुर्वन् सशस्यो नश्यते गृही । नीचोच्चत्वप्रमाणेन तज्ज्ञास्तां प्रवदन्ति हि । चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत् । मेषशृङ्गा कद-म्बस्य शालधवद्रुमस्य च । सस्या (साऽपि)वेधाद्वहिः कार्य्या दशाङ्गुलप्रमाणिका । तन्माने च प्रवाली च तदन्तरदशा-ङ्गुलम् । प्रतोदविषमस्यान्ध वैणवश्च चतुःकर । तदग्रे तु प्रकर्त्तव्या यवाकारा तु लोहयत् । हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः । कुर्य्यादनडुहा दैन्या-द्दैन्यात्तरकं व्रजेत् । यथाऽभीष्टं यथाशोभं वाहकस्य प्रमाणतः । भूमेश्च कर्षणायालं तज्ज्ञाः सर्वं वदन्ति हि । योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा । श्रवणालसयुक्ते पुण्येऽह्नि तद्विधीयते । यत्र दिने तु बुध्येत तत्र कार्यं विजानता । यत्र सत्यं हितं चापि पुण्यं वा मर्मास स्मरेत् । तत्र विद्वान् द्विजश्रेष्ठ पुण्येऽह्नि तद्विधीयते । माङ्गल्याद्य द्विजः कृत्वा यथो-क्तविधिना गृही । द्रव्यकालानुसारेण कुर्वतो धर्म्म-तः कृषिम् । प्रोक्षयन् मण्डलं पुष्पधूपदीपैः समर्चयेत् । इन्द्राय च तथाऽश्विभ्यां मरुद्भ्यश्च तथा द्विज । कुर्य्या-द्बलिहृतिं विद्वान् पदकश्चायाय च । तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम् । नमः स्वाहेति मन्त्रेण सर्वाच्छन्नात्मन शुभम् । दधिगन्धाक्षतैः पुष्पैः शमीपत्रै-स्तिलैस्तथा । दद्याद्बलिं वृषाणाञ्च तथान्यप्राशनं ततः । सघृतं सीरफालाग्रे हेम्ना वा राजतेन वा । प्रलिप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम् । अग्न्युत्तरेण मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम् । पुष्पं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति । सीतायाः स्थापनं कुर्य्यात् पाराशरमृषिं स्मरन् । सीतां युञ्जत इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत् । दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदे । सीता पूज्या वशी भक्तैरन्नपस्त्वैर्विधायके । सप्त धा-न्यानि चादाय प्रोक्ष्य पूर्वामुखो हली । तानि दत्त्वो-क्षणे क्षेत्रे किरन् भूमौ कृषेद्द्विज । न यवैर्न तिलैर्हीनं द्विजः कुर्य्याच्च कर्षणम् । तद्विहीनन्तु कुर्वाणं न प्रशंसन्ति देवताः । तिलमात्रच्युतं तोयं दक्षिणस्याम्पतेद्दिशि । तेन तृप्यन्ति पितरो याव-च्च तिलविक्रयः । विक्रीणीते तिलान् यस्तु तर्पये-न्नर्षिदेवताः । विमुच्य पितरस्तन्तु प्रयान्तीव तिलैः सह । कपालकं यवस्तस्मात्पत्रेभ्यो भूतले पतत् । पयो-दधिघृताद्यैस्तु तर्पयेत् सर्वदेवता । देवपर्जन्यभू-सीरयोगात् कृषिः प्रजायते । व्यापारात् पुरुषस्यापि तस्मात्लोद्यतो भवेत् । शालीन् सशणकार्पास वार्त्ता-कुप्रभृतीनि च । यावन्त्यन्ये सर्वबीजानि सर्वदा न सी-दति । चन्द्रक्षये प्रतिपदि यो युनक्ति वृषान् क्वचित् । तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम् । चन्द्रक्षये द्विजो विद्वान् यो भुङ्क्ते तु पराशनम् । भोक्तुर्मासा-र्जितं पुण्यं भवेदन्नभस्य तत् । चन्द्रार्कयोस्तु संयोगे कुर्य्याद्यः स्त्रीनिषेवणम् । सरेतोभोजिनस्तस्य षण्मासं पितरोऽहिताः । चन्द्रक्षये च यः कुर्य्यान्नरस्तर्पनिकृन्त-नम् । तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः । मनस्तिगते सोमे योऽध्यान्नं ब्रजेचर । प्रभ्रष्टद्विज-कर्म्माणं तं त्यजन्त्यमरादयः । मासाक्षीन्दुप्रणाशे यो रसकस्याग्नमति च्छिपेत् । पिबन्ति पितरस्तस्य मास य-स्तजलन्तु तत् । सोमक्षये द्विजो याति यत्कालस्तु हुता-शनम् । तदेव पितृयापाग्निदग्धो नरकमाविशेत् ।

अष्टमी कामभोगेन, षष्ठी तैलोपभोगतः। कुशस्तु दन्तकाष्ठेन छिनत्त्यासप्तम कुलम्। चन्द्रप्रतीतौ पुरुषस्तु दैवादद्यादगत्या यदि दन्तकाष्ठम्। नराधिराजैः सचितस्तु तेन घातः कृतः स्यात्त्रिदशदेवतानाम्। तत्राभ्यञ्ज विधानानि गाथश्चैव ह्यपास्तथा। परपाय विसृज्यन्ते आगतान्निशि भोजयेत्। य उत्पाद्येह शस्यानि सर्वाणि तृणधारिणि। जगत्सर्वं हुत येन तु पूज्यन्ते किन्न ते द्दपा। येनैकेन प्रदत्तेन दत्त गोदशकं भवेत्। यद्रूपेण स्थितो धर्म्मः पूज्यन्ते किन्न ते द्दपा। पाल्या हि यत्नतस्ते वै वाहनीया यथाविधि। स याति नरकं घोरं यो वाहयत्यपालयन्। नाधिकाङ्गो न हीनाङ्ग दुर्ब्बलाङ्गो न दूषित। वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात्। वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नर। पाल्या वै यत्नत सर्व्वे पालयन् शुभमाप्नुयात्। अन्नार्थमेनाननुत्पाद्य ससर्ज परमेश्वर। अन्नेनाप्यायते सर्व्वं त्रैलोक्यं सचराचरम्। अग्निर्ज्वलति चान्नार्थं याति चान्नाय मारुत। स्वप्नाति चाम्भसा सूर्य्यो रसानन्नाय रश्मिभिः। अन्नं प्राणो बल चान्न मन्नाज्जीवितमुच्यते। अन्नं सर्व्वस्य चाधार सर्व्वं मन्ने प्रतिष्ठितम्। सुरादीनां हि सर्व्वेषामन्नं बीज परं स्थितम्। तस्मादन्नात्परं तत्त्व न भूतं न भविष्यति। द्यौः पुमान्, धरणी नारी, अम्भोबीजन्दिवश्च्युतम्। द्युधात्रीतोयसंयोगादन्नादीनां हि सम्भवः। आपोमूलं हि सर्व्वस्य सर्व्वमप्सु प्रतिष्ठितम्। अतोऽन्यतरसा ह्याप आप शुक्रं बलं महः। सर्व्वस्य बीजभावो वै सर्व्व मद्भिः समावृतम्। सद्य आप्यायना ह्याप आपो ज्येष्ठतरा स्मृतः। किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः। न जीवन्ति विना तास्तु तस्मादापोऽन्यतमतरम्। दत्तानि चाद्भिरेतस्मा कि न दत्त क्षितौ भवेत्। तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह। अतोऽन्यमन्नार्थभावेन कर्त्तव्य कर्षणं द्विज। यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्। सीते! सौम्ये! कुमारि! त्व देवि! देवार्चिते! श्रिये! मनुकृता हि यथा सिद्धा यथा मे सिद्धिदा भव। मरुत्सूनोर्विना नाम्ना सीतायाः स्थापन विना। विनाभ्युक्षणरक्षार्थं सर्वं हरति राक्षस। वापने लवने क्षेत्रे खले गन्त्रीप्रवाहणे। एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने। देववायतनोद्यानविपातस्थानगोव्रजान्। सीमाश्मशानभूमिञ्च पथच्छायाक्षितिं तथा। भूमिं निधातयूपाञ्च श्वयनस्थानमेव च। अन्यामपि क्षितिं प्राज्ञा न कर्षेत् कृषिकृत् धराम्। नोषरां वाहयेद्भूमिं वर्च्चासृक्कर्करीवृताम्। वाहयन्नश्मसत्त्वञ्च न नदीपुलिनं तथा। यद्यसौ वाहयेल्लोभात् देवाद्यापि हि मानव। क्षीयते सोऽचिरात्पापात् सपुत्रपशुबान्धव। नरकं घोरतामिस्रं पापीयान् याति चैनसा। परकीयां योऽपहृत्य कृषिकृद्वाहयेद्धराम्। स भूमिस्थेन पापेन घ्नन्नन्तनरकं व्रजेत्। न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा। वाहयेन्न पथि क्षेत्रं वाहयन्दुःखभाग् भवेत्। क्षेत्रे क्षेत्रं दृतिं कुर्य्यात् यामद्रो नावलोकयेत्। न लङ्घयेत्पशुर्यो या नाशीयाद्याञ्च शूकर। बन्धञ्च यत्नतः कार्य्यो मृगयूथासनाय च। श्चलाद्युपद्रव राजतस्करादिसम्भवम्। सरक्षेत्रं सर्वतो यत्नाद्भयात् स्वच्छात्मसौ करात्। क्षणिकन्मानवस्त्वेव मत्वा धर्म्मं कृषेर्ध्रुवम्। अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्। निम्ना हि वाहयेद्भूमिं यत्र तिष्ठति जलम्। वाहयेत् जलाभ्यर्णे पुटे ससेकसम्भवे। शारदसस्यकं स्थाने कलम्ब वापयेद्बली। अर्थातकाल कार्पास तदन्यत्र तु हैमनम्। यस्तत्सधीप्रकालीयमप्सु स्निग्धेषु तद्विद। केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः। इन्ताकशाकमूलानि कन्दानि च जलान्तिके। दृष्टिवित्तान्तपानीयक्षेत्रेषु च यवादिकान्। गोधूमांश्च मसूरांश्च खल्लान् खलु क्षुल्लयका। समस्निग्धेषु चोप्यानि भूमीजीवान् विजानता। तिला सन्नविधायोप्या अतसीशणमेव च। स्वदम्बुज जगत्सर्वं वापयेत्कृषिसत्तरः। सपश्चेश्वरत सर्वान् गोष्ठपादीन् स्वयङ्कृषी। चिन्तयेत्सर्वमात्मान स्वयमेव कृषि व्रजेत्। प्रथम कृषिवाणिज्यं द्वितीयं योनिपोषणम्। तृतीय विक्रय प्रोक्तंचतुर्थं राजसेवनम्। नर्म्मविनिलयने यस्ता मूर्युर्टौप मर्गीषु। तस्मा सोरविदारेण किन्न पाप क्षितेर्भवेत्। तृणकच्छेदमात्रेण मोच्यते घयमायुष। असङ्ग्रकन्दनिर्यासाटसङ्ग्रात्मभेदवम्। यतुरोचनात् कीटवध स्तथा रद्धर्पणादपि। अह कुक्कुटिकानाञ्च नटंस कृषिजीविनाम्। वत्सकानाञ्च यत्पाप यत्पापं मृगयोरपि। कदर्य्याणाञ्च तत्पाप तत्पाप कृषिजीविनाम्। पर्णानाञ्च स्टहस्यामा कृष्टिवत्युपजीविनाम्। तदैनसो विशुद्ध्यर्थं प्राक् सत्यसत्तोपत। द्वादशी नवमी यदि

सप्तमः पञ्चमोऽपि वा । धान्यभागं प्रदातव्यो देहिनः क्षेत्रिणा ध्रुवम् । अस्मर्थो द्यूतभूमौ च विट्पतिं क्षेत्रभुग्भवेत् । एकैकांशापकर्म्म स्याद्यावद्दशमसप्तमौ । ग्रामेशस्य न्टपस्यापि वर्णिभिः कृषिजीविभिः । स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ । व्यूढौ त्व श्वश्र्वमातायां देयो ऽंशः स्याच्चतुर्दश । एकैकांशाप कर्म्म स्यात् यावद्दशमसप्तमौ । ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम् । न किञ्चित् कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यत । ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुस्तसृजदादितः । तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि । पशुपाल्याभनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः । द्विजदास्याय पद्भ्यां शूद्रमकल्पयत् । यत्किञ्चिज्जगतोऽस्य भूगेहाश्च गजादिकम् । स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् । ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । न तयोरन्तरं किञ्चित्प्रजा धर्म्मेण रक्षयेत् । तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्म्मतः कृषिम् । ग्रामेशस्य न्टपस्यापि किञ्चिन्मात्रमसौ बलिम् । अथान्यत्सम्प्रवक्ष्यामि कृषिकर्म्मद्धिकारणम् । संयुक्तं कर्षकोयेन स्वर्गलोकमवाप्नुयात् । सर्वसत्त्वोपकाराय सर्वत्र कृषिकृन्नरः । कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् । सर्वस्य स्थितिकारुण्यात्स देवपितृभिः पुनः । मनुष्याणान्तु पोषाय कृषिं कुर्य्यात् कृषीवलः । वयांसि चान्यसत्त्वानि क्षुत्तृष्णातो विमोचयन् । विमुक्तः सर्व्वपापेभ्यः स्वर्लोकमवाप्नुयात् । चतुर्दिक्षु खले कुर्य्यात्प्राच्यामतिघनावृतिम् । सैकद्वारपिधानञ्च विदध्याच्चैव सर्वतः । खरोष्ट्राजोरणादींस्तु विशतस्तु निवारयेत् । शूकरान् श्वसृगालादिकाकोलूककपोतकान् । नित्यञ्च प्रोक्षणं कुर्य्यात् दानीयाभ्युक्षणाम्बुभिः । रक्षां च भस्मना कुर्य्याज्जलधाराभिरक्षणम् । नित्यञ्चाग्न्यर्च्चनेनैतां परायरक्तिं स्मरन् । प्रेतभूतादिनामानि न वदेच्च तद्गतः । सूतिकाम्लेच्छमत्तांश्च कर्त्तव्यं परिरक्षणम् । हरन्त्यरक्षितं यस्मात् रक्षांसि सर्व्वमेव हि । प्रथमोदिनपूर्वाह्णो नापराह्णे न सन्ध्ययोः । धान्योन्मानं सदा कुर्य्यात्सीतापूजनपूर्व्वकम् । यक्षेश खलभिक्षाभिः खलेरोहिरक्षणम् हि । भक्त्या सर्व्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् । खलयज्ञः पक्षिणा वै ब्रह्मणा निर्म्मिता पुरा । भागधेयमथो कृत्वा तां गृह्णन्तीह मात्रिकाम् । यतस्त्वाद्यो देवाः पितरः सोमपादयः । सनकादिमनुष्याश्च ये-

चान्ये दक्षिणाधनाः । तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली । विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च । पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् । अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः । दीनानामप्यनाथानां कुष्ठिनां कृशरीरिणाम् । क्लीबान्धबधिरादीनां सर्व्वेषामपि दीयते । वर्णानां पतितानाञ्च वृद्धगभूतानि तर्पयेत् । चाण्डालानां श्वपाकानां प्रीत्यात्प्युच्चावचा ददत् । ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः । स्तोकशः सीरिभिः सर्व्वे वर्णिभिर्गृहमेधिभिः । दत्त्वा त्वन्टतया वाचा क्रमेणाथ विसर्जयेत् । तत्कृत्वा स्वगृहं गच्छेत्कुर्याद्भमभ्युदयं चरेत् । शरद्वसन्तवसन्तनवान्नैः श्राद्धमाचरेत् । नाकृत्वा तत्तदश्नीयादश्नंस्तदघमश्नुते । कृष्या तूत्पाद्य धान्यानि खलयज्ञं समाप्य च । सर्व्वसत्त्वहितोद्युक्त इहामुत्र सुखी भवेत् । कृषेरन्योक्त धर्म्मं न लभेत् कृषितोऽन्यतः । न सुखं कृषितोऽन्यत्र यदि धर्म्मेण कर्षति । अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते । अनातिथ्यञ्च दुःखित्वं दुर्म्मनो न कदाचन । निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् । अस्थानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् । वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये । लाभस्यांशप्रदानञ्च सर्व्वेषां शुद्धिकृद्भवेत् । प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम् । कृषितो विंशतिञ्चैव ददतो नास्ति पातकम् । राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम् । त्रयस्त्रिंशञ्च विप्राणां कृषिकर्म्मी न लिप्यते । कृष्या समुत्पाद्य यवादिकानि धान्यानि भूयांसि, मखं विधाय । शक्तो गृहस्थोऽपि परापरेण तस्यामयः कश्चिदपादि दोषः । देवा मनुष्याः पितरश्च सर्व्वे साध्याश्च यक्षाश्च सकिन्नराश्च । गावो द्विजेन्द्राः सह सर्व्वसत्त्वैः कृषौ न तृप्तानि ममाग्रदुरेति । यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापैर्न स भूमवैश्च । सीरेण नस्यापि विदारितापि स्याद्भूतधात्री वरदानदात्री । षट् कर्म्माणि कृषिं ये तु कुर्य्युर्धर्म्मविधिं द्विजाः । ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः । षट्कर्म्मभिः कृषिः प्रोक्तो द्विजानां गृहमेधिनाम्" ।

कृषिकार्य्यारम्भमुहूर्त्तादि ज्यो० चि० पी०धा० दर्शितं यथा "मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनार्कं शनिं पापैर्हीन मलैर्विधौ जलगृहे शुक्रे विधौ मांसके । लग्ने देवगुरौ हलप्रवहणं शस्तं न सिंहे घटे कर्क्याजैणघटे तमौ धय-

करं रिक्तासु पञ्चानयो। एतेषु श्रुतिशतभिषगादितिविशाखोडूनि भौमं विना बीजोप्तिर्गदिता शुभा त्वशुभतोऽष्टाभ्रीन्दुरामेन्द्रव'। रामेन्द्वग्नियुगान्यसङ्गभकरागत्युप्तौ फलेऽर्कोज्झिताङ्गाद्रामाष्टनवाष्टभानि मुनिभिःप्रोक्तान्यसन्ति च" मू०

"मूलविशाखामघाभिः चरध्रुवमृदुक्षिप्रैश्च एकोनविंशतिनक्षत्रैर्हलप्रवहणं हलप्रवृत्तिं कुर्यात् यदाह नारदः "मृदुध्रुवक्षिप्रचरविशाखापित्र्यभेषु च। हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः"। विशेषमाह श्रीपतिः "मृदुध्रुवक्षिप्रचरेषु मूले मघाविशाखाभिहितेषु भेषु। हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वित सौरभेयैः"। नीरोगाः पीडारहिताः मुष्कः वृषणास्तैरन्विताः ये सौरभेयाः वृषास्तैर्विदध्यादित्यर्थः। उक्तञ्चैतत् वृषाणां वृषणास्तु फलरूपा अतस्तादृशैर्वृषैः कृतं कर्षणं सफलं स्यात् चूर्णितवृषणैर्वृषैः कृतं कर्षणं निष्फलमेव भवति। तथाऽर्कं सूर्यवारं शनिवारं विना त्वन्यान्यवारेषु चन्द्रमङ्गलबुधवृहस्पतिशुक्रवारेषु हलप्रवहणं शुभम्। उक्तञ्च व्यवहारतत्त्वे "पूर्वाद्वीशयमाग्निभेऽर्कयमयोरिक्तासु नेष्टा कृषिरिति"। अथ सामान्यतो लग्नशुद्धिः तत्र पापग्रहैर्निर्बलैर्निर्बलैरुपलक्षिते लग्ने विधौ चन्द्रे शुक्रे मांसले बलिनि पुष्टे उदित इत्यर्थः। तत्र विधौ चन्द्रे जलस्थे जलराशिस्थे सति देवगुरौ लग्नस्थे च सति हलप्रवहणं शुभम्। उक्तञ्च रत्नमालायाम् "शक्तियाबलिनि सितेऽथ शीतगौ दुर्बलैरसितभौमभास्करैः। आश्रिते शशिनि वारिभोदये लग्नवर्त्तिनि गुरौ कृषिक्रिया"। कश्यपोऽपि "गुरौ लग्नगते शुक्रे बलिन्यापोदये विधौ। शस्ता कृषिक्रिया तत्र दुर्बले क्रूरखेचरे"। अथ विशेषतो लग्नशुद्धिः तत्र सिंहे घटे कुम्भे कर्के अजे मेषे एषु मकरे घटे तुलायाम् एषु लग्नेषु कृषिकर्म न शस्तं यतस्तत्क्षयकरं पीडाकरं तथा रिक्तासु चतुर्थीनवमीचतुर्दशीषु षष्ठ्याञ्च क्षयकर तथाशब्दोऽलङ्कारसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तं कृषिकार्य्यं। उक्तञ्च ज्योतिःसारसागरे "मेषलग्ने पशून् हन्ति कर्कटे जलजं भयम्। सिंहे सस्यभयं प्रोक्तं तुलायां फलसञ्चय। मकरे सस्यनाशः स्यात्कुम्भे चौरभयं तथा। हन्त्यष्टमी बलीवर्दान् नवमी सस्यघातिनी। षष्ठी च कीटजननी पशून् हन्ति चतुर्दशी'। चतुर्थ्यांम-

चौरं फलं ध्येयम्। अथ बीजोप्तिमुहूर्त्तफणिचक्रहलचक्राणि शार्दूलविक्रीडितेनाह एतेष्विति। श्रुतिः श्रवणः वारुणं शततारका अदितिः पुनर्वसुः विशाखा प्रसिद्धा एतैरुडुभिर्नक्षत्रैर्विनैतेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषु पञ्चदशनक्षत्रेषु बीजोप्तिर्बीजवपनं शुभम्। उक्तं च रत्नमालायाम् "हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधामृगरेवतीषु। स्वातीधनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफला प्रदिष्टा"। वशिष्ठेनाप्येतान्येव नक्षत्राण्युक्तानि "धातृद्वये कौष्णपैत्रपुष्ये हस्तत्रये त्र्युत्तरमैत्रभेषु। पौष्णे धनिष्ठास्वथ वाश्विनीषु बीजोप्तिरुत्कृष्टफलप्रदा स्यादिति"। कौष्णपो मूलम्। नारदेनाप्युक्तानि "मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु। समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा"। कश्यपेनापि वसुवायुभनैर्ऋत्यक्षिप्रध्रुवमृदूडुषु। सौता च त्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा"। अत्र यद्यपि नोक्ता अत्र भौमोऽङ्गलवारो निषिद्धः अर्थात् सूर्यचन्द्रबुधगुरुशुक्रशनीनां वारेषु बीजोप्तिः शुभा। नेष्टा कृषिरित्यतो नकारोऽत्रानुवर्त्तते तेन बीजोप्तिर्नेष्टेत्यर्थः। अत्र कालविशेषनिषेधो राजमार्त्तण्डे "रवौ रौद्रादिपादस्थे भूमेः संजायते रजः। तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेदिति"। अथ बीजोप्तौ फणिचक्रमुच्यते। अशुभतो न विद्यन्ते शाव किरणायस्यासावगुः यस्य स्वरूपाभाव। तस्य कुतस्तरा किरणा तादृशोऽगूराहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः राहुभिस्थितनक्षत्रादष्टौ भानि असन्त्यसमीचीनानि, ततस्त्रीणि शुभानि, तत एकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि। एवं बीजोप्तौ सप्तविंशति नक्षत्राणां शुभाशुभत्वमुक्तम् उक्तञ्च नारदेन "भवेद्भत्रयं मूर्ध्नि धान्यनाशाय राहुभात्। गले त्रयं कज्जलाय हृदये द्वादशोदरे। निस्तण्डुलत्वं लाङ्गूले भचतुष्टयमीरितम्। नाभौ बहिःपञ्चके स्याद्बीजोप्तावपि चिन्तये इति"। राहुर्यस्मिन्नृक्षेऽस्ति तदाद्यनक्षत्रत्रयं मूर्ध्निमस्तके स्थाप्यं धान्यनाशकरं भवति। ततस्त्रयं गले स्थाप्यं कज्जलाय श्यामिकासम्पादकं स्यात्। ततो द्वादशभानि बहिर्नक्षत्ररहितानि उदरे स्थाप्यानि तानि धान्यवृद्धये स्युः ततो नक्षत्रचतुष्टयं पुच्छे निस्तण्डुलत्वकरं स्यात् ततोऽवशिष्टं बहिर्नक्षत्रपञ्चकं धान्यनाशकरं स्यात्। रत्न-

मालायामपि “मूर्ध्नि त्रीणि गले त्रयञ्च जठरे विष्णानि च द्वादश स्यात्पुच्छे च चतुष्टयं बहिरतोभाना स्थितं पञ्चकम्। ह्येवं कज्जलमन्नवृद्धिरधिका निस्तण्डुलत्वं क्रमात् स्यादीतिभयं भयञ्च फणिभाद्बीजोप्तिकाले स्फुटम्”। अत्र केचित्। फणिभात् सूर्यनक्षत्रादिति व्याचख्युस्तत्र युक्तिः “सूर्यभाद्उरगःस्याप्यः” इति स्वरोदयवाक्यैकवाक्यत्वात्, तन्न नारदवाक्ये साक्षाद्राहुभादित्युक्तत्वात् “राहोर्धिष्ण्यात्समारभ्य धिष्ण्यत्रयस्य निष्फलमिति” कश्यपोक्तेश्च। “सूर्यभादुरगः स्याप्यः” इति तु स्वरोदयवचनं वीजरोपणविषयम्। तत्र लग्नशुद्धिमाह वशिष्ठः “भवरिपुसहजे पापैः स्वकोणकेन्द्रस्थितैश्च शुभैः। कथितेषु च धिष्ण्येष्वपि शुभलग्ने वीजवापनं कार्यमिति” अथ हलप्रवहणे चक्रमुच्यते हलेदिति हले हलचक्रेऽर्कोज्झितात् सूर्यभुक्तान्नक्षत्रात्क्रमेण त्रीणि नक्षत्राणि असन्ति अशुभफलानि। ततोऽष्ट भानि सन्ति शुभफलदानि ततो नव भान्यसन्ति ततोऽष्टौ भानि सन्ति यथा सूर्य आर्द्रायां भुक्तभं मृगः तत आरभ्य त्रीणि मृगार्द्रापुनर्वसुभान्यशुभानि। ततः पुष्याश्लेषामघापूर्वफाल्गुनीहस्तचित्रास्वातीनक्षत्राणि शुभानि। ततो विशाखानुराधाज्येष्ठामूलपूर्वाषाढोत्तराषाढाभिजिच्छ्रवणधनिष्ठानक्षत्राणि अशुभानि। ततः शततारकापूर्वभाद्रपदोत्तरभाद्रपदारेवत्यश्विनीभरणीकृत्तिकारोहिणीनक्षत्राणि शुभानि। एवमष्टाविंशतिर्भानि भवन्ति यदाह वशिष्ठः “अर्कगतागतसस्थभत्रितयं नेष्टमुभयतस्त्विष्टम्। षोडश धिष्ण्यं नवकं शिष्टमनिष्टं च लाङ्गले चक्रे” इति। अर्केण गतं भुक्तम् आगतं भोग्यं संस्थमाक्रान्तम् एतद्भत्रितयं नेष्टं तत उभयतः षोडशधिष्ण्यं इष्टं यथा सूर्यभुक्तभात् प्राक्तनान्यष्टौ शुभानि सूर्यभोग्यभादग्रेतनानि शुभानि स्युरित्यर्थः। शिष्टमवशिष्टं मध्यगतनक्षत्रनवकमनिष्टम् एवं मिलित्वाष्टाविंशतिर्भानि। नारदोऽपि “हलादौ वपनाशाय भत्रयं सूर्यभुक्तभात्। अग्रे भत्रयं लक्ष्मीं सौख्यं पार्श्वस्थपञ्चकम्। शूलत्रयेऽपि नवकं मरणायान्यपञ्चकम्। श्रियै पुच्छे त्रयं श्रेष्ठं स्याच्चक्रे लाङ्गले शुभम्” इति। अस्यार्थः हलप्रवहणसमये सूर्यभुक्तनक्षत्रान्नक्षत्रत्रय वपनाशाय स्यात्। तदग्रे नक्षत्रयं लक्ष्म्यै स्यात् तदग्रे पार्श्वनक्षत्रपञ्चकं सौख्याय स्यात् तदग्रे शूलत्रयगतं नक्षत्रनवकं मरणाय स्यात् तदग्रेऽन्यत् पार्श्वस्थपञ्चकं श्रियै स्यात् तदग्रे पुच्छगतं नक्षत्रत्रयं श्रेष्ठं शुभफलमिति। अनेनापि प्रकारेण मृगादीनि तान्येवाशुभाशुभानि सम्भवन्ति। तत्र हलचक्राकृतिर्लिख्यते तत्र कश्यपः “त्रिष्वष्टसु नवस्वेषु सप्तस्वर्कविमुक्तभात्। हानिर्वृद्धिः कर्तृमृत्युर्लक्ष्मीश्चैव यथाक्रममिति, हलनक्षत्रोक्तानन्तरमुक्तवान् अस्यायमर्थः अर्कविमुक्तभात्त्रिषु भेषु हानि ततोऽष्टसु भेषु वृद्धिः ततो नवसु भेषु कर्त्तुर्नाशः, ततः सप्तसु भेषु लक्ष्मीप्राप्तिरिति यथाक्रमं फलं ज्ञेयम्। अत्र सप्तविंशतिनक्षत्रोक्तेरभिजिद्गणना नास्ति। नन्वत्र पञ्चनक्षत्रत्यागे कोहेतुरित्यत आह तदन्तरगत इति तच्छब्देन हलोर्ध्वदण्डमूलोर्द्ध्वदण्डावुच्येते तयोरन्तरगते मध्ये विद्यमाने पञ्चकपञ्चके श्रियै स्याप्ये नक्षत्रपञ्चकमिति यावत् तस्मान्यद्भत्रितयं हलदण्डोर्ध्वभागे शुभफलदं लेख्यम्” पी०धा०

अत्र विशेषः ज्यो० त० तत्र

कूर्मचक्रशब्दे दर्शितात् ज्यो०त० वाक्यात् परम्परयो यथा “कूर्माङ्गस्थदेशानाह। “मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः। पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः। मरुनैमिषविन्ध्यार्द्रिपाण्ड्रघोषाः कयामुनाः। काश्ययोध्या प्रयागश्च गयावैदेहकादयः। प्राच्यां मागधशोणौ च वारेन्द्रगौडराढकाः। वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः। आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः॥ कलिङ्गोड्रान्ध्रकिष्किन्धाविदर्भशबरादयः। दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूकका। चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः। कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः। नैरृते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः। जवनः पह्लवः सिन्धुः पारसिकादयो मताः। पश्चिमे हैहयास्ताद्रिम्लेच्छवासशकादयः। वायव्ये गुर्जराटश्च नाटजालन्धरादयः। उत्तरे चीननेपालहूनकैकेयमन्द्राः। गान्धारहिमवत्क्रौञ्चगन्धमादनमालवाः। कैलासमद्रकाश्मीरम्लेच्छदेशाः खशादयः। ईशाने स्वर्णभौमश्च गङ्गाद्वारश्च टङ्कनः। काश्मीरमद्रपुरककिराताद्दरदादयः”। देवलः। “सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गोड्रान् गत्वा संस्कारमर्हति” तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिताक्षरा। व्यासः “उपरा बहुला भूमिः पन्थानस्तस्कराहृताः। सर्वे वाणिजिकाश्चैव भविष्यन्ति कलौ युगे। मसानिष्फलफला तरुणा वृद्धिशालिनः। भविष्यत्यफलोदर्यः क्रोधश्च सफलोद्गमाम्। पुरषाश्च षडस्त्रीकाः

न्नद्युगान्तस्य लक्षणम्"। तत्र ग्रामादिषु स्वनामफलम्। ज्योतिषे "अवर्गेऽष्टाविषु के च, षट् चे, केदा, टवर्गके। पस ते सप्त, मे पर्गे, ये द्वय, शे च वञ्चय। इत्यमष्टसु वर्गेषु या संख्या कथिता क्रमात्। नाम्नि वर्णात् स्वराङ्कैश्च प्रत्येकं ता प्रकल्पयेत्। एकीकृत्याष्टभिर्भक्ते शेषमङ्कोऽध्वजादय। ध्वजो धूम्रश्च सिंहः श्वा वृषभोरासभो गज। ध्वाङ्क्षश्च क्रमतो ज्ञेय फलं तत्र वदक्रमात्। ध्वाङ्क्षश्वधूम्नरासभगज सिंहोध्वज. खरः। अन्योन्यवैरा एते ज्ञातव्या स्वरपारगैः। प्रश्नो योधे पुरे देशे मित्रनारीगृहेषु च। बलात् प्राबोभवेल्लाभो न लाभो-बलवर्ज्जितात्। अ गरुड क मार्जारश्च सिंहः ट शुनीसुत.। त भुजङ्ग प आखुः स्यात् य वर्गे भ, श मेषक। नामादिवर्णतो या अष्टौ वर्गाः क्रमादमी। स्ववर्गपञ्चमो य. प्रोक्तस्तस्मात्तस्य भवेत् जय। ग्रामवर्गस्य ये भक्षास्त्यज्यास्तद्ग्रामवासिन। एव दुर्गे रणे सख्या न कर्त्तव्या गडाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशा क्रमात्। स्ववर्गात् पञ्चमे स्थाने वासिरुभङ्गश्च जायते"। व्यासः "धनिनः श्रोत्रियोराजा नदी वैद्यश्च पञ्चम। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्"। मत्स्यपुराणे "फालकृष्टे तथा देशे सर्व्वबीजानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठा मध्या कनिष्ठा भूर्वर्ज्जनीयेतरा मता"।

अथ लाङ्गलचक्रं स्वरोदये "लाङ्गलं दण्डिकायूपयोक्तृद्वयसमन्वितम्। दण्डिकादित्रिखेऋक्षानि दिनेशाक्रान्तभादित। दण्डिकाद्वययूपानां द्विद्विस्थाने त्रिक त्रिकम्। योक्तृयोश्च त्रिकञ्चैव मध्ये पञ्चापके द्वयम्। दण्डस्थे च गवा हानिर्यूपस्थे स्वामिनोभयम्। लक्ष्मीर्लाङ्गलयोक्त्रादौ चेत्रारम्भदिनर्क्षके"।

अथ बीजोप्तिचक्रम्। "सूर्य्यभादुरगं स्थाप्यस्त्रिनाद्येकान्तरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे। पुच्छे चतुर्वह्निः पञ्च दिनभाद्य फल वदेत्। वदने चोषक विद्यात् गलकेऽङ्गारकस्तथा। उदरे धान्यवृद्धि स्यात् पुच्छे धान्यक्षयो भवेत्। ईतिरोगभय राज्ये चक्रे बीजोप्तसम्भवे"। सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात् त्रिनाद्येकान्तरक्रमादिति यद्यश्विन्या रविस्तदा तामारभ्य गणयेत्। त्रिनाडीषु अश्विनीभरणीकृत्तिका दत्त्वा रोहिणी वह्नि कार्य्या मृगार्द्रापुनर्व्वसुभानि त्रिनाडीषु दत्त्वा पुष्योवह्निः कार्य्या. एवं-क्रमेणान्या बोध्या। चोषकं शस्यशून्यताम्। ईतयः। "अतिवृष्टिरनावृष्टिः शलभा मूषिका खगा। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः" बीजोप्ति सम्भवः कारणमस्येति व्युत्पत्तिबाधित्वात् बीजरोपणविषयमिति बो॰वा॰ स्थितम्।

"वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम्। विलिख्य विन्यसेऋक्षानि वृषनामर्क्षपूर्व्वकम्। मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विक द्विकम्। त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम्। कृषिप्रवापबीजोप्तिप्रारम्भादिदिनर्क्षकम्। यदङ्गेषु स्थितं तस्मादेतत् सर्व्वं शुभाशुभम्। आस्ये हानिः दृशं नेत्रे कर्णे शिखाटनं तथा। शीर्षे मृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभं पुच्छे श्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं वृषचक्रफलं बुधैः"।

दीपिकायाम् "पूर्व्वात्रिवारुणकचित्रविशाखभेषु विक्राष्टमीविगतचन्द्रतिथिं विहाय। द्व्यङ्गाजगोझषधरोदये विज्ञजार्किवारे शस्तेऽशुभयोगकरणेषु कृषिप्रवाह। कृषिप्रवाहवहीअयनस्य विधिः कृत। चिन्तायाश्च शुभे केन्द्रे स्थिरलग्नतुलोदये"। भीमपराक्रमे "वामे सर्पं बलीवर्द्दं दक्षिणे रोहित न्यसेत्। उत्तराभिमुखोभूत्वा कर्षकः कृषिमारभेत्। कृषे तु योजिते यत्र मूत्रं पाय करोति गौः। तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम्"। कृत्यचिन्तामणौ बलभद्रः "दुःखदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। अरोग्यदा तृतीया च चतुर्थी कीटसङ्कटा। पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्थानदा भोग्या घ्नन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूमिदा सदा। एकादशी तथा कुर्य्याद्धन धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्व्वसिद्धा त्रयोदशी। चतुर्द्दशी पति घ्नन्ति पञ्च दशश्चैव निष्फला। अमावास्याष्टमीं षष्ठीं रिक्तां च परिवर्जयेत्। शौरिभौमदिने चैव कृष्यारम्भं न कारयेत्। प्राजेशविष्णुतिष्येषु पितृकरोत्तरेषु च। अश्विनीवातपौष्णेषु मूलादित्येन्दुभे तथा। वारे भानुजशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनकुम्भे च कृष्यारम्भ शुभ विदुः। ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालश्च पूजयेत्। शालद्वारोऽश्वसधरत्यग्भिश्च पूजितं हलम्। दध्याज्यमधुभिः श्रेष्ठं कालपञ्च प्रलेपितम्। कर्ष प्रावर्त्तयेत् प्राग्रोन्नतनेन हृ-

वेन च । हस्ताश्विनितिष्यचन्द्रेषु ब्रह्मेन्द्रविष्णुवारुणे । वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च । वारे जीवज्ञशुक्रे च सोमे दिनकरे तथा । युग्मे कुम्भतिगोमीने शस्तं स्याद्बीजवापनम् । राजमार्त्तण्डे "प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनीपौष्णानुप्रमरोचयः शतभिषास्वातिर्विशाखा तथा । जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति सवने शस्ते तिथौ रोपणे" । देवलः "गुरुसोमसूर्य्यशुक्राश्चेम्याः शस्यतृकराः शुभाः । बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः । हन्ति मेषः पशून् सर्व्वान् स्वभावेनाथ वृश्चिकः । कर्कटे न भवेत् सौख्यं तुलायां न प्ररोहति । केशरी शस्यघाती स्यात् पार्थिवोपद्रवं धनुः । मकरे चैव कुम्भे च भयमेव विनिर्द्दिशेत् । गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत् । प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा । स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः । पृथ्वीञ्च वहसंयुक्ता पूजयित्वा प्रजापतिम् । अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा । कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा । मुखपार्श्वे तयोर्लिप्यात् फालाग्रं कनकैः स्पृशेत् । उत्तराभिमुखोभूत्वा क्षीरेणार्घ्यं प्रदापयेत् । ततः शुभकरः श्रीमान् कृषिकर्म्म समाचरेत् । वर्जयेद्भग्नशृङ्गञ्च क्षुरभग्नञ्च वर्जयेत् । विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा । हलप्रवाहणं कार्य्यं नीरुग्भिः कृषिकर्म्मके । हलादिभिर्दृढैः क्षेमं कुदृढैर्न शुभं वदेत् । वृषभार्यदि सुक्षन्ति तस्य विघ्नप्रदा भवेत्" । कृषिरिति शेषः । "तस्मात् सर्व्वप्रयत्नेन निर्व्विघ्नं कारयेत् सदा । एका जयकरी रेखा तृतीया चार्थदायिका । पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा । अतऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततोभवेत् । सपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम् । हेमनिष्टं फालाग्रं छिन्नरेखा न कारयेत् । कर्त्तव्या वसवसेन्द्र पृथुरामः सचन्द्रमाः । पराशरोवलभद्रः सर्व्वविघ्नप्रशान्तये । हले प्रवाहप्रमाणे तु कूर्म्म उत्पद्यते यदि । गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं भवेत् । लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति । ईषाभङ्गोयदा कर्त्तुः सप्रयोजीवितस्य च । शतमायोयुगाभङ्गे समीने म्रियते सुतः" । समीने योक्त्रबन्धनकाष्ठद्वये । "योक्त्रच्छेदे तु व्याधिः स्यात् शस्यहानिश्च जायते । हले प्रवाहप्रमाणे तु गौरेकः प्रपतेद्यदि । प्रपतेन्मुक्तमात्रस्तु बन्धनं स प्रपद्यते । ज्वरातिसाररोगेण कृषिभङ्गं विनिर्द्दिशेत् । प्रवाहमुक्तमात्रस्तु ततोगौः प्रपतेद् यदि । वृषाशीटेन नष्टे तु तदा शस्यं चतुर्गुणम् । हेमशारिविलिप्तस्य बीजस्योच्चयतः शुचिः । इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्योन्यमोत्साह कर्षकोहृष्टमानसः । प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत् । त्वं वै वसुन्धरे सीते ! बहुपुष्पफलप्रदे ! । नमस्ते मे शुभं नित्यं कृषिं मेधाशुभे ! कुरु । रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु । कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च स्वाहा" । कृत्यरत्नाकरे ब्रह्मपुराणम् "चैत्रे च कृष्णपक्षस्या काश्मीरा च रजस्वला । नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियम् । अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम् । पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च" । काश्मीरा पृथ्वी । "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहेगृहे । सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च । अनन्तरं द्विजैः स्नाप्य सर्व्वौषधियुतैर्जलैः । गन्धैर्धौतैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा । स्नापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत् । तन्निवेदितशिष्टन्तु प्राशितव्यं गृहे गृहे । अतःपरं स्नाता गर्भं गृह्णाति ऋतुमेदिनी" । तथा "ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभी गृहे । इन्द्रः प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः । बलदेवो हलं भूमिर्वृषभो रामलक्ष्मणौ । रघोघ्नौ जानकी सीता युगं गगनमेव च" सीता लाङ्गलपद्धतिः । युगं युगकाष्ठम् । "एते द्वात्रिंशतिः प्रोक्ता प्रजानां पतयः शुभाः । गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे । अर्घ्यैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक्पृथक् । हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः" । तथा । "दत्त्वा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह" । बीजवपनं प्राजापत्यतीर्थेन यथाह हारीतः "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति । होमतर्पणे लाजहोमसनकादितर्पणे । राजमार्त्तण्डे पराशरः "नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम् । नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्" । "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ । अत परं कृषिवपनं न जातु श्रावणे शुभम्" । ज्योतिषे "पूर्व्वभाद्रपदा मूलं रोहिणी उत्तरफल्गुनी । विशाखा शतभिषा वा धा-

न्यानां रोपणे वरा। सदोत्ता रजनी नीली पुत्र-वित्तैर्वियुज्यते। स्वयं जाते पुनस्ते द्वे पालयन्नैव दुष्यति। आरामे गृहमध्ये वा मोहात् सर्पपमावपन्। पराभवं रिपोर्याति सप्तधनधनक्षयम्। निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र सर्वं निघ्नन्ति मङ्गलम्"। निशा हरिद्रा। कोविदारः कोरकाञ्चनः। "हेमाम्भसा ह्रस्वबीजं स्नातोमन्त्रेण रोपयेत्। वसुधेति सुशीतेति पुण्यदेति धरेति च। नमस्ते शुभगे! नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागबकुलाम्रप्रियङ्गवः। माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीणि च केशराणि। तालाष्टकं श्रीफलसप्तकञ्च पञ्चाम्ररोपी नरकं न पश्येत्"। दानरत्नाकरे देवीपुराणम् "ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः। तेऽप्यवीच्यादिनरके पच्यन्ते ब्रह्मणो दिनम्। मृतास्ते जीव्यमानास्तु ब्रह्मघ्नाः कीर्त्तिता भुवि। तस्मिन् देशे भयं नित्यं राजानोऽल्पचिरायुषः। न च नन्दत्ययं लोको यत्र श्रीफलभेदिनः। श्रीतरुर्बिल्वः। "लिखित्वा लक्तकेनापि मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्। "सिद्धिं मचलतरङ्गतरलितमृदुतरसमीरपवनोद्देशे श्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटे नानाशतसहस्रवानराणां मध्ये खरनखरपक्षार्द्धलाङ्गूल पवनसुत वायुवेगं परचक्रप्रमथनं श्रीमद्धनूमन्तमाज्ञापयन्ति अमुकस्य ग्रामखण्डक्षेत्रे याताभोम्भोगाम्भोरतीपारखरमुण्डीमूलीश्टङ्गारतल्पाकृपराङ्गताफडिङ्गलावानरागरुड्डामडुकमहिषादिरोगम् खण्डयत क्षणमपि विलम्बं मा चरत यदि विलम्बं कारयत तदा युष्मान् शतखण्डं कारयामीति। भ्रां भ्रीं भ्रौं श्रीरामाय नमः"। इति शस्येषु बन्धयेत्" "कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः" शु०त०पु०। वा ङीप् कृषीत्यप्यत्र। स्वार्थे क कृषिकाप्यत्र स्त्री। आधारे क्ति। भुवि २। "कृषिर्भूवाचकः शब्दः" भा०। कृष्णशब्दे दृश्यम्

**कृषिक** पु० कृष–किकन्। फाले अम० कर्षके त्रि०।

**कृषिजीविन्** त्रि० कृष्या जीवति जीव–णिनि। स्वयमस्वयं वा कृतया कृषिकृत्या जीविनि स्त्रियां ङीप्।

**कृषिपराशर** पु० कृषिकर्त्तव्यताविधायकपराशरमतानुसारिनिबन्धभेदे।

**कृषीवल** त्रि० कृषिरस्त्यस्य इत्यर्थे न वलच् दीर्घः। कर्षके कृषिजीविनि। "कश्चित्तुष्टाः कृषीवलाः" भा० स०५ अ०

**कृष्कार** पु० अव्युत्पन्नं प्रातिपदिकम्। शिवे त्रिकाण्डशेषः

**कृष्ट** त्रि० कृष–कर्म्मणि क्त। १कृतकर्षणे क्षेत्रादौ "कृष्टजानामोषधीनां जातानां च स्वयं वने" मनुः कृष्टपच्यः भावे क्त। २कर्षणे न० "न प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्" या०। तत इटा० भावे इमनिच् अतोर। क्रष्टिमन् कृष्टत्वे कर्षणे पु०

**कृष्टपच्य** त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच–कर्म्मकर्त्तरि क्यप्। कृष्टक्षेत्रे–स्वयमेव पच्यमाने धान्यादौ "न कृष्टपच्यमश्नीयादकृष्टञ्चाप्यकालतः" भाग० ७।१२।१७। वानप्रस्थधर्म्मोक्तौ। शुद्धकर्म्मणि तु यदेव "कृष्टपाक्य इति" सि० कौ०

**कृष्टि** पु० कृष–कर्त्तरि क्तिच् भावे क्तिन् वा। १पण्डिते अमरः २जनमात्रे निरु० "मानुषीणामेकं कृष्टीनामभवत् सहाया" ऋ० ६।१८।२ "विश्वानमन्त कृष्टय" ऋ० ८।६।४। "कृष्टयः प्रजाः" भा० "कृष्टीनां विचर्षणिः" ऋ० ६।४५।१६ ३कर्षणे स्त्री० त्रिका० ४आकर्षणे च।

**कृष्टोप्त** त्रि० कृष्टे क्षेत्रे उप्त। कृतकर्षणक्षेत्रे–कृतवपने ओषध्यादौ "वन्या ग्राम्याश्च ह तथा कृष्टोप्ताः पर्वताश्रयाः। अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः" भा० आ० ९८अ०।

**कृष्ण** पु० कृष–नक्। भगवतोऽवतारभेदे वासुदेवे १देवकीनन्दने। "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्युक्ते २परब्रह्मणि, ३वेदव्यासे, ४अर्ज्जुने मध्यमपाण्डवे च। कृष्णवर्णत्वात् ५कोकिले, विश्व० ६काके, मेदि० ७करमर्द्दके (करमचा) ७द्रुमे, शब्दर० ८नीले, वर्णे ९तद्वति त्रि० अमरः १०कालागुरुणि राजनि०। ११अशुभकर्म्मणि च न० कृष्णकर्मा अमरः १२द्रौपद्यां, १३नीलीवृक्षे, १४पिप्पल्यां, १५द्राक्षायां, स्त्री मेदि० १६नीलपुनर्नवायाम्, १७कृष्णजीरके, १८गाम्भार्य्यां १९कटुकायाम्, २०सारिवाभेदे २१राजसर्षपे, राजनि० २२पर्पट्याम्, भावप्र०। २३काकोल्या, २४सोमराज्याञ्च स्त्री टाप्, जटा० कृष्णवर्णत्वाच्च तासां तथात्वम् २५वनभेदे न० कृष्णवनशब्दे विवृतिः॥ २६नीलाञ्जने, २७लौहे, २८मरिचे च पु० जटाधरः। तत्र भगवदवतारविशेषः "अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जाते कृष्णोऽसौ देव-

कौस्तुभः" ब्रह्मपु० । वसुदेवदेवक्यौ च कश्यपादिती । तौ च वरुणस्य गोहरणात् ब्रह्मणः शापेन गोपालत्वमापतुः । यथाह हरिवं० ५६अ०

"इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत ! । गवां कारणतत्त्वज्ञः कश्यपे शापमुत्सृजम् । येनांशेन हृता गावः कश्यपेन महात्मना । स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति । या च सा सुरभिर्नाम अदितिश्च सुरारणी । उभे ते तस्य वै भार्य्ये सह तेनैव यास्यतः । ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते । तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले । गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः । तत्रासौ गोष्वभिरतः कंसस्य करदायकः । तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा । देवकी रोहिणी चैव वसुदेवस्य धीमतः । तत्रावतर लोकानां भवाय मधुसूदन ! । जयाशीर्वचनैस्त्वेते वर्द्धयन्ति दिवौकसः । आत्मानमात्मना हि त्वमवतार्य्य महीतले । देवकीं रोहिणीञ्चैव गर्भाभ्यां परितोषय । तत्र त्वं शिशुरेवादौ गोपालकृतलक्षणः । वर्द्धयस्व महाबाहो ! पुरा त्रैविक्रमे यथा ॥ छादयित्वात्मनात्मानं मायया गोपरूपया । गोपकन्यासहस्राणि रमयंश्चर मेदिनीम् । गावश्च ते रक्षिता विष्णो ! वनानि परिधावतः । वनमालापरिक्षिप्तं धन्या द्रक्ष्यन्ति ते वपुः । विष्णौ ! पद्मपलाशाक्ष ! गोपालवसतिङ्गते । बाले त्वयि महाबाहो ! लोको बालत्वमेष्यति । त्वद्भक्ताः पुण्डरीकाक्ष ! तव चित्तवशानुगाः । गोषु गोपा भविष्यन्ति सहायाः सततन्तव । वने चारयतो गास्तु गोष्ठेषु परिधावतः । मज्जतो यमुनायान्तु रतिमाप्स्यन्ति ते भृशम् । जीवितं वसुदेवस्य भविष्यति सुजीवितम् । यस्त्वया तात इत्युक्तः स पुत्र इति वक्ष्यति । अथ वा कस्य पुत्रत्वं गच्छेथाः कश्यपादृते । का वा धारयितुं शक्ता विष्णो ! त्वामदितिं विना । योगेनात्मसमुत्थेन गच्छ त्वं विजयाय वै" इति विष्णुं प्रति ब्रह्मोक्तिः । ताभ्यां तस्योत्पत्तिकथा च तत्र ६०अ० यथा

"षड्वै सप्त ते गर्भाः कंसेन विनिपातिताः । तन्तु गर्भं प्रयत्नेन ररक्षुस्तस्य रक्षिणः । स तत्र गर्भवसतौ वसत्यात्मेच्छया हरिः । यशोदाऽपि गर्भं तदहरेव तु । विष्णोः शरीरजां निद्रां विष्णोर्निर्द्देशकारिणीम् । गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा । यामेव रजनीं विष्णुर्जज्ञे वृष्णिकुले प्रभुः । तामेव रजनीं कन्यां यशोदाऽपि व्यजायत । नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा । तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा । देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम् । मुहूर्त्तेऽभिजिते प्राप्ते सार्द्धरात्रे विभूषिते । सागराः समकम्पन्त चेलुश्च धरणीधराः । जज्वलुश्चाग्नयः शान्ता जायमाने जनार्द्दने । शिवाः संप्रववुर्वाताः प्रशान्तमभवद्रजः । ज्योतींषि व्यत्यकाशन्त जायमाने जनार्द्दने । अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्व्वरी । मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः । अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः । जायते भगवांस्तत्र नयनैर्मोहयन् जगत्" । ततोऽनतिदूरे

"वसुदेवस्तु तं रात्रौ जातं पुत्रमधोक्षजम् । श्रीवत्सलक्षणं दृष्ट्वा युतं दिव्यैश्च लक्षणैः । उवाच वसुदेवस्तं रूपं संहर वै प्रभो ! । भीतोऽहं देव ! कंसस्य तस्मादेवं वदाम्यहम् । मम पुत्रा हतास्तेन तव ज्येष्ठाऽम्बुजेक्षण ! । वैशम्पायन उवाच । वसुदेववचः श्रुत्वा रूपं संहरदच्युतः । अनुज्ञाप्य पितृत्वेन नन्दगोपगृहं नय । वसुदेवस्तु संगृह्य दारकं क्षिप्रमेव च । यशोदाया गृहं रात्रौ विवेश सुतवत्सलः । यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकम् । गृहीत्वा दारिकां ताञ्च देवकीशयने न्यसत् । परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः । वसुदेवः कृतार्थो वै निर्जगाम निवेशनात्" ।

यथा रूपेण तस्याविर्भावस्तथा रूपं भाग०१०स्क०३अ० दर्शितम्

"देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः । तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् । महार्हवैदूर्य्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत । स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा । कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्" । इत्याविर्भावं वर्णयित्वा

"जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ! । समुद्विजे भवद्धेतोः कंसादहमधीरधीः । उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् । विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् । बिभर्त्ति, सोऽयं मम गर्भगोऽभू

दृष्टो न्वलोकस्य विडम्बनं तत्" । इत्थं देवक्याः प्रार्थने ता सान्त्वयित्वा, तस्य प्राकृतरूपधारणं तत्रैवोक्तं यथा "इत्युक्त्वा तां हरिस्तूष्णीं भगवानात्ममायया । पित्रोः संपश्यतोरेव बभूव प्राकृतः शिशुः ।"एवञ्च चतुर्भुजरूपेणोत्पन्नावपि प्राकृतरूपत्वोक्त्या तदादनन्तरं द्विभुजत्वमिति, वैष्णवा मन्यन्ते । गीतायान्तु "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो । भव विश्वमूर्त्ते-!" इति भारतयुद्धकाले तस्य चतुर्भुजत्वकीर्त्तनात्, चतुर्भुजत्वमेवासीत् शङ्खचक्राद्यायुधशून्यत्वेन प्राकृतत्वमिति तु युक्ताश्चत्पश्यामः । तस्येदानीं जन्मसमयोनिरूप्यते प्रायुक्तब्रह्मपु० कलौ जातत्वाभिधानात् कलियुगएवास्य प्रादुर्भाव । यदि च एकैकमन्वन्तरे बहवः कलयः सम्भवन्ति तथापि वर्त्तमानवैवस्वतमन्वन्तरे ष्टाविंशतिमे महायुगे यः कलिस्तत्रैवाभिभूतः। तत्रापि ज्योतिर्निबन्धे "उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं हृषोलाभगो जीवः सिंहतुलाङ्गिषु क्रमवशात् पूषोशनोराहवः । नैशोथः समयोऽष्टमी बुधदिनं ब्राह्मर्क्षमत्र क्षणे श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परं ब्रह्म तत्" इत्याद्या विशेषराशिग्रहस्थानकाले तस्याविर्भावोक्तेः तादृशसमयस्य च कलेः ६४७वर्षेषु गतेषु सम्भवः कलौ ततः पूर्वं तादृशसमयासम्भवात्। राजतरङ्गिण्यां च "शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणाम भवन् कुरुपाण्डवाः" इत्यनेन कलेः ६५३ वर्षेषु गतेषु तत्समकालीनयोः कुरुपाण्डवयोरुत्पत्त्युक्त्या एतस्यापि तत्कालोत्पत्तिकत्वम् ।

तदवतारचरितं च हरिवं० ४२अ० वर्णितं यथा

"अपरः केशवस्यायं प्रादुर्भावो महात्मनः । विख्यातो माथुरे कल्पे सर्व्वलोकहिताय वै । यत्र शाल्वञ्च मैन्दञ्च कंसं द्विविदमेव च। अरिष्टं वृषभं केशिं पूतना दैत्यदारिकाम् । नागं कुवलयापीडं चानूरं मुष्टिकं तथा। दैत्यान्मानुषदेहस्थान् सूदयामास वीर्य्यवान् । छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्म्मणः । नरकश्च हतः सङ्ख्ये यवनश्च महाबलः । हृतानि च महीपानां सर्वरत्नानि तेजसा । दुराचाराश्च निहताः पार्थिवा ये महीतले" ।

तस्य च कृष्णनामता गर्गेण तथा नामकरणात् यथाह भाग०१०।८।१३ "आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लोरक्तस्तथापीत इदानीं कृष्णतां गतः" इति

अपीतः श्याम इत्यर्थः भाग० ११अ० युगावतारे द्वापरे श्याममूर्त्तित्वोक्तेः यथा "कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः । कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू । त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः । हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः । द्वापरे भगवान् श्यामः पीतवासा निजायुधः । श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः । नानातन्त्रविधानेन कलावपि यथा शृणु । कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदं । यज्ञैः संकीर्त्तनप्रायैर्यजन्तीह सुमेधसः" । अस्य तन्नामनिर्वचनं च भा० उ० ६६अ०

"कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णोभवति सात्वत"

कल्पभेदेऽपि वैवस्वतमनोरष्टाविंशतिमे युगे युगे तस्याविर्भावः अतएव छा०उ० कल्पभेदादिप्रायेणैव "तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इत्युक्तम् । वस्तुतस्तस्य भगवदवतारात् भिन्नत्वमेव तस्य घोराङ्गिरसशिष्यत्वोक्तेः परमेश्वरस्य तथात्वासम्भवात् । अतस्तन्नाम्नि २८अपर०ष्ट्रेव कृष्णशब्दस्य वृत्ति । "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते । भस्मीभवन्ति राजेन्द्र! महापातककोटयः" पुरा०। अर्ज्जुनस्य तन्नामनिर्वचनं भा० वि०४४अ० । "कृष्ण इत्येव दशमं नाम चक्रे पिता मम । कृष्णावदातस्य सतः प्रियत्वात् बालकस्य" च । व्यासस्य कार्ष्णत्वात्तथात्वम् "योव्यस्य वेदांश्चतुरस्तपसा भगवानृषिः । लोके व्यासत्वमापदे कार्ष्ण्यात् कृष्णत्वमेव च" भा० आ०१०५अ० । कृष्णस्येदम् अण् कार्ष्णं तत्सम्बन्धिनि त्रि० "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा०आ०१अ०उक्तेः । अपत्ये तु इञ् । कार्ष्णि तदपत्ये पुंस्त्री । चन्द्रप्रकाशकरप्रथमादिपञ्चदशकलाक्रियारूपे प्रतिपदादिदर्शान्तात्मकपक्षदर्शितश्यामले २०कालभेदे पुं मासि "चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" ति०त०पद्मपु० । इन्दुकलाक्षयप्रकारः इन्दुशब्दे ६११पृ० उक्तः । तदुपलक्षिते ३१पितृयाने "शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः" गीता । पितृयाने च यथा कृष्णपक्षसम्बन्धस्तथा आतिवाहिकशब्दे ६५१पृ० दर्शितम् । "धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" गीता । कृष्णपक्षाभिमानिनि पितृयानस्थे कर्म्मिणामातिवाहके ईश्वरनियोजिते ३२देवभेदे आतिवाहिकशब्द

विवृतिः। ३३द्यूताद्युपार्जिते धने न० कृष्णधनशब्दे अर्थशब्दे च विवृतिः। कृष्णस्य भावः ष्यञ्। कार्ष्ण्य तद्भावे न० "कार्ष्ण्यात् कृष्णत्वमेव च" भा०आ० १०५अ०। इमनिच्। कृष्णिमन् तद्भावे पु० "कृष्णिमानं दधानेन"। तल्, कृष्णता स्त्री, त्व कृष्णत्व, न०, कृष्णशब्दे। "कृष्णाऽपि शुद्धेरधिकं विधातृभिः" माघः। "अभिवृष्य मरुत्सस्यान् कृष्णमेघस्तिरोदधे" रघुः। ३४नेत्रगतेऽशभेदे अक्षिशब्दे विवृतिः। ३५कृष्णसारमृगे पुंस्त्री० "एषः कृष्णः स कीर्त्तितः" छन्दो०प०। कृष्णाजिनम्

कृष्णक पु० कृष्णप्रकारः स्थूला० कन्। १कृष्णसर्पे अनुकम्पितं कृष्णाजिनम् कन् अजिनान्तत्वादुत्तरपदलोपः। अनुकम्पिते २कृष्णाजिने न०

कृष्णकन्द न० कृष्णः कन्दोऽस्य। रक्तोत्पले त्रिका०

कृष्णकर्कटक पुंस्त्री नित्यकर्म०। कर्कटभेदे सुश्रुतः। "कूर्म्मकुम्भीरकर्कटकृष्णकर्कटशिशुमारप्रभृतयः पादिनः" सुश्रुते पादिजलचरोक्तौ

कृष्णकर्म्मन् न० कर्म्म०। १हिंसादिनिषिद्धकर्म्मणि। य०व०। २तद्युक्ते पापाचारिणि त्रि० अमरः। ३व्रणस्य कृष्णतासम्पादके क्रियाभेदे स च सुश्रुतेन दर्शितो यथा "अथ व्रणस्योपक्रमाः भवन्तीत्युपक्रमे "दारुणकर्म्मकारककर्म्मणिकर्म्म कृष्णकर्म्म पाण्डुकर्म्म" इत्याद्युक्त्वा। "दुष्टत्वात् शुक्लाना कृष्णकर्म्म हितं पुनः इति" तस्योपयोगो दर्शितः। कृष्णेऽर्पितं कृष्णार्पितं कर्म्म०। ४परमेश्वरार्पिते कर्म्मणि न०।व०प०। ४तद्युक्ते त्रि० स्त्रियां वा ङीप्।

कृष्णकलि पु० कृष्ण इव चूडाला कलिः कलिकाऽस्य। स्वनामख्याते पुष्पप्रधाने वृक्षे। स्त्रियां जातित्वात् ङीप्।

कृष्णकाक पुंस्त्री नित्यकर्म०। (दाँडकाक) काकभेदे हारा०

कृष्णकापोती स्त्री ओषधिभेदे सुश्रु०। "अथौषधीर्व्याख्यास्यामः" इत्युपक्रमे "श्वेतकापोती कृष्णकापोती" इत्यादिना विभज्य तदुपयोगप्रकारोदर्शितो यथा। "गोनसजगरीकृष्णकापोतीनां सनखसहि खण्डयित्वा क्षीरेण विपाच्याभिषुत्य" इत्याद्युक्तं सुश्रु० तस्या लक्षणमोषधिशब्दे १५६३पृ० उक्तम्।

कृष्णकाय पुंस्त्री कृष्णःकायोऽस्य महिषे शब्दचि०। जातित्वेऽपि योपधत्वात् स्त्रियां न ङीप् किन्तु टाप्।

कृष्णकाष्ठ न० कृष्णं काष्ठमस्य। कालागुरुणि राजनि०

कृष्णकोहल पु० कृष्णकर्म्म कृष्णकर्म्मेव; तच्च वितर्कं वाति वा—क। द्यूतकारिणि त्रिका०।

कृष्णगङ्गा स्त्री नित्य०। कृष्णवेण्यायां नदीभेदे राजनि०।

कृष्णगतरोग पु० नेत्रावयवभेदकृष्णगतरोगभेदे। तद्विधानादि सुश्रुते उक्तं यथा।

"अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। यत्सव्रणं शुक्रमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव। चत्वार एतेऽभिहिताः विकाराः कृष्णाश्रया संग्रहतः पुरस्तात्। निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै। स्रावं स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्रमुदाहरन्ति। दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि। अवेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव। सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रु शुक्रम्। विहायसीवाच्छघनानुकारि तदव्रणं साध्यतमं वदन्ति। गम्भीरजातं बहलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम्। विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासक्तमदृष्टिकृच्च। द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम्। उष्णाश्रुपातः पिडका च कृष्णे यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम्। तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम्। संक्षाद्यते श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलन्तु। अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः। विदार्य्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत्"।

कृष्णगति पु० कृष्णा गतिर्गतिस्थानमस्य। कृष्णवर्त्मनि वह्नौ तस्य गमनस्थानस्य तद्धत्या कृष्णतापादकत्वात् तथात्वम्। "ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा" भा० आनु० ८५अ०।

कृष्णगन्ध पु०कृष्णा उग्रो गन्धोऽस्य। शोभाञ्जनवृक्षे राजनि०

कृष्णगर्भ पु० कृष्णवर्णोगर्भोऽस्य। कट्फले राजनि०।

कृष्णगिरि पु० नित्यकर्म०। नीलगिरौ

कृष्णगोधा कृष्णः गोधेव। कीटभेदे। "कृष्णोरुकः कृष्णगोधा यश्च काषायवासिकः" सुश्रु० कीटशब्दे विवृतिः।

कृष्णग्रीव त्रि० कृष्णा ग्रीवा यस्य। कृष्णवर्णगलेऽजादौ "कृष्णग्रीव आग्नेयः" यजु० २४,२, "कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः" इत्यादि अश्वमेधीयपशुविशेषोक्तौ "श्वेतलोहितपर्य्यन्तः कृष्णग्रीवस्तडिद्द्युतः। त्रिदशपरिभोभात् सन्ध्याराममिवाम्बुदः" हरि० १३५अ०। २नीलकण्ठे महादेवे पु०।

कृष्णचञ्चुक पु० कृष्णा चञ्चुरस्य कप्। चणके राजनि०।

र्म्मसमानन्तरं सम्पद्यते बन्धशून्यतया कैवल्यभाजनतारूपेण सम्पद्यते । अस्य—उत्पन्नविवेकज्ञानस्य तावदेव चिरं कैवल्यप्राप्तौ विलम्बः, यावत् विमोक्ष्ये प्रारब्धकर्म्मभिरिति शेषः विमोक्ष्ये ततोमुक्तिं प्राप्स्यतीत्यर्थः । अथ प्रारब्धकर्म्मभोगानन्तरं सम्पत्स्ये कैवल्यरूपेण सम्पन्नो भविष्यतीत्यर्थः" ।

"प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तेः । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" सा० का० ।

"अनारब्धविपाकानां तावत्कर्म्माशयानां तत्त्वज्ञानाग्निना बीजभावोदग्धः प्रारब्धविपाकानान्तु उपभोगेन क्षये सति प्राप्ते शरीरभेदे विनाशे चरितार्थत्वात् कृतप्रयोजनत्वात् प्रधानस्य तं पुरुषं प्रति निवृत्तावैकान्तिकमवश्यम्भावि आत्यन्तिकमविनाशीत्युभयं कैवल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः" त० कौ० विवृतञ्चैतदस्माभिः

"ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन ।" इति "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" शास्त्रयोः आरब्धानारब्धकर्म्मविषयकत्वेन सामञ्जस्यं व्यवस्थापितमित्याशयेनाह तत्त्वज्ञानाग्निनेत्यादि" ।

पातञ्जले कैवल्यपादे कैवल्यकारणमुक्त्वा तत्स्वरूपमुक्तं यथा "विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः" सू० । "यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्म्माभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद्येषां पूर्व्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति तत्रात्मभावभावना कोऽहमासं, कथमहमासं, किं स्विदिदं मे, कथं स्विदिदं, के भविष्यामः, कथं वा भविष्याम, इति' सा तु विशेषदर्शिनो निवर्त्तते कुतः चित्तस्यैव विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्म्मैरपरामृष्ट इति ततोऽस्यात्मभावभावना कुशलस्य निवर्त्तते इति" भाष्यम् ।

"तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्" सू० । "तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति" भाष्यम् । "प्रसंख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः" सू० । "यदायं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदस्ततोऽपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्व्वथा विवेकख्यातिरेव भवतीति संस्काबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्ममेघो नाम समाधिर्भवति" भा० । "ततः क्लेशकर्म्मनिवृत्तिः" सू० । "तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति कस्मात् ? यस्माद्विपर्य्ययो भवस्य कारणं न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते" भा० । "तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्" सू० "सर्व्वैः क्लेशकर्म्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति तमसाभिभूतमावृतज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं भवति तत्र यदा सर्व्वैरावरणमलैरपगतमलं भवति तदा भवत्यस्यानन्त्यं ज्ञानस्यानन्त्याज्ज्ञेयमल्पं सम्पद्यते यथाकाशे खद्योतः, यत्रेदमुक्तम् "अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् । अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयदिति" भा० ।

"ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्" सू० । "तस्य धर्म्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते" भा०

"गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत्स्वरूपमवधार्य्यते" भा० "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" सू० । कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्यकारणात्मनां गुणानां तत् कैवल्यं स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति" भा० ।

"कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावतरणसङ्गतिमाह गुणाधिकारेति पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । कृत कार्य्यीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयः तेषां कार्य्यकारणात्मनां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते मनोऽस्मितायाम् अस्मिता लिङ्गे, लिङ्गमलिङ्गे 'इति योऽयं गुणानां कार्य्यकारणात्मकानां प्रतिसर्गः तत् कैवल्यं, यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह । स्वरूपेति । अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तेः नासौ मोक्ष इत्यत आह पुनरिति बोध इतिशब्दः शास्त्रपरिसमाप्तौ" पा० विवरणम् ।

वेदान्तिमते अविद्याकल्पितदेहादिप्रपञ्चनिवृत्तौ स्वाद्वितीयब्रह्मभावापत्तिरूपे कैवल्ये च । तच्च कैवल्यं द्विविधं जीवन्मुक्तिर्विदेहकैवल्यञ्च । तत्र जीवन्मुक्तिलक्षणम् विस्तरेण जीवन्मुक्तशब्दे वक्ष्यते दिङ्मात्र मत्राभिधीयते तत्र विवेकचूडामणौ जीवन्मुक्तलक्षणमुक्तं यथा

"विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः । अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः । प्राचीनवासनावेगादसौ संसरतीति चेत् । न सदेकत्वविज्ञानान्मन्दीभवति वासना । अत्यन्तकामुकस्यापि वृत्तिः कुण्ठति मातरि । तथैव ब्रह्मणि ज्ञाते पूर्णानन्दे मनीषिणः । निदिध्यासनशीलस्य बाह्यप्रत्यय ईष्यते । ब्रवीति श्रुतिरेतस्य प्रारब्धफलदर्शनात् । सुखाद्यनुभवो यावत्तावत् प्रारब्धमिष्यते । फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्रचित् ? । अहं ब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम् । सञ्चितं विलयं याति प्रबोधात् स्वप्नकर्मवत् । यत् कृतं स्वप्नवेलायां पुण्यं वा पापमुल्वणम् । सुप्तोत्थितस्य किं तत् स्यात् ? स्वर्गाय नरकाय वा । स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा । न श्लिष्यति च यत्किञ्चित् कदाचिद्भाविकर्मभिः । न नभो घटयोगेन सुरागन्धेन लिप्यते । तथात्मोपाधियोगेन तद्धर्मैर्नैव लिप्यते । ज्ञानोदयात् पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति । अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् । व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ । न तिष्ठति छिनत्त्येव लक्ष्यं वेगेन निर्भरम् । प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः सम्यग्ज्ञानहुताशनेन विलयः प्राक्सञ्चितागामिनाम् । ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये सर्वदा संस्थितास्तेषां तत्त्रितयं न हि क्वचिदपि ब्रह्मैव ते निर्गुणम् । उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः । प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसम्बन्धकथेव जाग्रतः । न हि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्यपि च प्रपञ्चे । करोत्यहन्तां ममतामिदन्तां किन्तु स्वयं तिष्ठति जागरेण । न तस्य मिथ्यार्थसमर्थनेच्छा न संग्रहस्तज्जगतोऽपि दृष्टः । तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम् । तद्वत् परे ब्रह्मणि वर्त्तमानः सदात्मना तिष्ठति नान्यदीक्षते । स्मृतिर्यथा स्वप्नविलोकितार्थे तथा विदः प्राशनमोचनादौ । कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम् । नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः । अजो नित्यः शाश्वत इति ब्रूते श्रुतिरमोघवाक् । तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना । प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः । देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः । शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि । अध्यस्तस्य कुतः सत्त्वम् ? असत्यस्य कुतो जनिः ? । अजातस्य कुतो नाशः ? प्रारब्धमसतः कुतः ? । ज्ञानेनाज्ञानकार्य्यस्य समूलस्य लयो यदि । तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् । समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः । न तु देहादिसत्यत्वबोधनाय विपश्चिताम् । परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् । एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन । सद्घनं चिद्घनं नित्यमानन्दघनमक्रियम् । एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन । प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् । एकमेवाद्वयमित्यादि । अहेयमनुपादेयमनादेयमनाश्रयम् । एकमेवाद्वयमित्यादि । निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरञ्जनम् । एकमेवाद्वयमित्यादि । अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् । एकमेवाद्वयमित्यादि । सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् । एकमेवाद्वयमित्यादि । निरस्तरागा निरपास्तभोगाः शान्ताः सुदान्ता यतयो महान्तः । विज्ञाय तत्त्वं परमं तदन्ते प्राप्ताः परां निर्वृतिमात्मयोगात् । भवानपीदं परतत्त्वमात्मनः स्वरूपमानन्दघनं विचार्य्य । विधूय मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः । समाधिना साधुविनिश्चलात्मना पश्यात्मतत्त्वं स्फुटबोधचक्षुषा । निःसंशयं सम्यगवेक्षितश्चेच्छ्रुतः पदार्थो न पुनर्विकल्प्यते । स्वस्याविद्याबन्धसम्बन्धमोक्षात् सत्यज्ञानानन्दरूपात्मलब्धौ । शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चान्तःसिद्धा स्वानुभूतिः प्रमाणम् । बन्धो मोक्षश्च तृप्तिश्च चिन्तारोग्यक्षुदादयः । स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम् । तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा । प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया । स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् । संसिद्धः सन्मुखं तिष्ठेत् निर्विकल्पात्मनात्मनि । वेदान्तसिद्धान्तनिरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च । अखण्डरूपस्थितिरेव मोक्षो ब्रह्माद्वितीये श्रुतयः प्रमाणम्" ।

तदीयध्यानाकारोऽपि तत्र दर्शितो यथा

"अकर्त्ताहमभोक्ताहमविकारोऽहमक्रियः । शुद्धबोध-

स्वरूपोऽहं केवलोऽहं सदाशिवः । द्रष्टुः श्रोतुर्वक्तुः कर्त्तुर्भोक्तुर्विभिन्नएवाहम् । नित्यनिरन्तरनिष्क्रियो निःसीमाऽसङ्गपूर्णबोधात्मा । नाहमिदं नाहमदोऽप्युभयोरवभासकं परं शुद्धम् । बाह्याभ्यन्तरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम् । निरुपममनादितत्त्वं त्वमहमिदमदइति कल्पनादूरम् । नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमेवाहम् । नारायणोऽहं नरकान्तकोऽहं पुरान्तकोऽहं पुरुषोऽहमीशः । अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहञ्च निर्ममः । सर्व्वेषु भूतेष्वहमेव संस्थितो ज्ञानात्मनान्तर्बहिराश्रयः सन् । भोक्ता च भोग्यं स्वयमेव सर्व्वं यद्यत् पृथक् दृष्टमिदन्तया पुरा । मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः । उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् । स्थूलादिभावा मयि कल्पिता भ्रमादारोपितानुस्फुरणेन लोकैः । काले यथा कल्पकवत्सरायनर्त्त्वादयो निष्कलनिर्व्विकल्पे । आरोपितं नाश्रयदूषकं भवेत् कदापि मूढैरतिदोषदूषितैः । नार्द्रीकरोत्यूषरभूमिभागं मरीचिकावारिमहाप्रवाहः । आकाशवत् कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम् । आहार्य्यवन्नित्यविनिश्चलोऽहमम्भोधिवत् पारविवर्जितोऽहम् । न मे देहेन सम्बन्धो मेघेनेव विहायसः । अतः कुतो मे तद्धर्म्मा जाग्रत्स्वप्नसुषुप्तयः । उपाधिरायाति स एव गच्छति स एव कर्म्माणि करोति भुङ्क्ते । स एव जीर्य्यन् म्रियते सदाहं कुलाद्रिवन्निश्चल एव संस्थितः । न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य निरंशकस्य । एकात्मको यो निबिडो निरन्तरो व्योमेव पूर्णः स कथं नु चेष्टते ? । पुण्यानि पापानि निरिन्द्रियस्य निश्चेतसो निर्व्विकृतेर्निराकृतेः । कुतोममाखण्डसुखानुभूतेः ? ब्रूते ह्यनन्वागतमित्यपि श्रुतिः । छायया स्पृष्टमुष्णं वा शीतं वा सुष्ठु दुष्टु वा । न स्पृशत्येव यत् किञ्चित् पुरुषं तद्विलक्षणम् । न साक्षिणं साक्ष्यधर्म्माः संस्पृशन्ति विलक्षणम् । अविकारमुदासीनं गृहधर्म्माः प्रदीपवत् । रवेर्यथा कर्म्मणि साक्षिभावो वह्नेर्यथा दाहनियामकत्वम् । रज्जोर्यथारोपितवस्तुसङ्गस्तथैव कूटस्थचिदात्मनो मे । कर्त्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि नाहम् । द्रष्टापि वा दर्शयितापि नाहं सोऽहं, स्वयंज्योतिरनीदृगात्मा । चलत्युपाधौ प्रतिबिम्बलौल्यमौपाधिकं मूढधियो नयन्ति । स्वबिम्बभूतं रविवद्विनिष्क्रियं कर्त्तास्मि भोक्तास्मि हतोऽस्मि हन्त ! । जले वापि स्थले वापि लुठत्वेष जडात्मकः । नाहं विलिप्ये तद्धर्म्मैर्घटधर्म्मैर्नभो यथा । कर्त्तृत्वभोक्तृत्वखलत्वमत्तताजडत्वबद्धत्वविमुक्ततादयः । बुद्धेर्विकल्पा न तु सन्ति वस्तुतः स्वस्मिन् परे ब्रह्मणि केवलेऽद्वये । सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि । किं मे ऽसङ्गचितेस्तैर्न ह्यम्बुदडम्बरोऽम्बरं स्पृशति । अव्यक्तादिस्थूलपर्य्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम् । व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि । सर्व्वाधारं सर्व्ववस्तुप्रकाशं सर्व्वाकारं सर्व्वगं सर्व्वशून्यम् । नित्यं शुद्धं निश्चलं निर्व्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि । यन्निरस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् । सत्यज्ञानानन्तमानन्दरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि । निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्व्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः । सर्व्वात्मकोऽहं सर्व्वोऽहं सर्व्वातीतोऽहमद्वयः । केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरम् । स्वाराज्यसाम्राज्यविभूतिरेषा भवत्कृपाश्रीमहिमप्रसादात् । प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेऽस्तु पुनर्नमोऽस्तु”।

पुनस्तल्लक्षणं तत्रैवोक्तं यथा

“क्षुधां देहव्यथां त्यक्त्वा बालः क्रीड़ति वस्तुनि । तथैव विद्वान् रमते निर्म्ममो निरहं सुखी । चिन्ताशून्यमदैन्यभैक्ष्यमशनं, पानं सरिद्वारिषु, स्वातन्त्र्येण निरङ्कुशा स्थितिरभी र्निद्रा श्मशाने वने । वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्या मही सञ्चारो निगमान्तवीथिषु विदां क्रीड़ा परे ब्रह्मणि । विमानमालम्ब्य शरीरमेतद् भुनक्त्यशेषान् विषयानुपस्थितान् । परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः । दिगम्बरो वापि च साम्बरो वा त्वगम्बरो वापि चिदम्बरस्थः । उन्मत्तवद् वापि च बालवद् वा पिशाचवद् वापि चरत्यवन्याम् । कामान्निष्कामरूपी संचरत्येकचरो मुनिः । स्वात्मनैव सदा तुष्टः स्वयं सर्व्वात्मना स्थितः । क्वचिन्मूढो विद्वान् क्वचिदपि महाराजविभवः क्वचिद्भ्रान्तः सौम्यः क्वचिदजगराचारकलितः । क्वचित् पात्रीभूतः क्वचिदवमतः क्वाप्यविदितश्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः । निर्द्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः । नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः । अपि कुर्व्वन्नकुर्व्वाणश्चाभोक्ता फलभोग्यपि । शरीर्य्य-

कैशोरमा पञ्चदशात् यौवनं तु ततः परमिति" श्रीधरदर्शिते एकादशावधिपञ्चदशपर्य्यन्तवयसि "सन्तवयसि कैशोरे भज्ञानुपचकारकम्" भाग०३।२८।१८ स्वार्थे क। तत्रार्थे "कैशोरकं मानयन् वै सह ताभिर्मुमोद ह" हरिव० ७७ [ठक्। किशोर्य्या अपत्ये

**कैशोरिकेय** पुस्त्री०किशोरी+स्वार्थे क ततः शुभ्रा० अपत्ये

**कोक** पुस्त्री कुक—आदाने अच्। १चक्रवाके "हंसारवैः कोकरवैश्च" भा० आनु० २६अ० "विरहविधुरकोकद्वन्द्वशोक विभिन्दन्" उद्भटः। २वृके "वने यूथपरिभ्रष्टा मृगी कोकै (वृकै) रिवार्द्दिता" रामा०। ३भेके च स्त्रियां ङीप्। ४ज्येष्ठग्रामे (टिकटिकी) ५खर्ज्जूरीवृक्षे च पु० मेदि० ६विष्णौ पु० त्रिका०

**कोकड** पुंस्त्री कोकं वृकं लाति ला—क लस्य डः। विशेषयमृगभेदे चमरमृगे राजनि० स्त्रियां ङीष्।

**कोकदेव** पुंस्त्री कोक इव दीव्यति दिव—अच्। कपोते राजनि०

**कोकनद** न० कोकान् चक्रवाकान् नदति नादयति अन्तर्भूतण्यर्थे नद—अच्। १रक्तकुमुदे, २रक्तपद्मे च। "व्याकोशकोकनदतां दधते नलिन्यः" माघः। "सरस कोकनदभ्रमादिव" नैष०

**कोकनदच्छवि** पु० कोकनदस्य छविरिव छविर्दीप्तिर्यस्य। १रक्तवर्णे २तद्वति त्रि० अमरः। [स्त्रर्य्ये शब्दच०।

**कोकबन्धु** पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव।

**कोकरक** पु० ब०व० देशभेदे। "वका कोकरका प्रोष्ठा समवेगवशास्तथा" भा० भी० ९ देशकथने।

**कोकवाच** पुंस्त्री कोकस्य वाचेव वाचा वाक् रवो यस्य। विशेषयमृगभेदे राजनि०

**कोकाख** पु० कोकस्येवाख्या यस्य। मत्स्यनिरुपभेदे राजनि०

**कोकामुख** न० भारतप्रसिद्धे तीर्थभेदे "कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः। जातिस्मरत्वमाप्नोति दृष्टमेतत् पुरातनैः" भा० व०८४अ० "कोकामुखे विगाह्याथ" भा० आनु०। २५अ०

**कोकाह** पु० कोकमिवाहन्ति आ+हन—ड। श्वेताश्वे हेमच०

**कोकिल** पुंस्त्री कुक—इलच्। स्वनामख्याते पक्षिणि अमरः। "पुंस्कोकिलो यन्मधुरं चुकूज" कुमा० स्त्रियाम् जातित्वेऽपि—अजा० टाप्। "कोकिलाकलरवो वने वने मूनमत्र निगडो भविष्यति" उद्भटः। "अयमुदेति कोकिल" शि० को० "रतिदूतिपदेषु कोकिलाम्" कुमा० 'कोकिलामञ्जुवादिनीम्" रघु०। अङ्गारे पु० त्रिका०

संज्ञायां कन्। "नयदशभिर्नजौ भजजला गुरु नर्द्दकम्। मुनिगुहकार्णवैः कृतयति वद कोकिलकम्' वृ० र० उक्ते २छन्दोभेदे न०।

**कोकिलनयन** पु० कोकिलस्य नयनमिव रक्तं पुष्पमस्य। अतिरक्तपुष्पे (तालमाखना) (कुलेखाडा) वृक्षभेदे रमानाथः [(तालमाखना) वृक्षभेदे अमरः

**कोकिलाक्ष** पु० कोकिलस्याक्षीव रक्तं पुष्पमस्य शब्दमा०।

**कोकिलावास** पु० ६त०। आम्रवृक्षे राजनि०

**कोकिलासन** न० रुद्रयामलोक्ते आसनभेदे तल्लक्षणम् यथा "अथान्यदासनं वक्ष्ये येन सिद्धो भवेन्नरः। निरुन्ध्याद्वायुसञ्चारं कोकिलाख्यासनेन च। ऊर्द्ध्वं हस्तद्वयं कृत्वा तदग्रे पादयोः सुधीः। महाकुम्भद्वयं साध्य। शनैः शनैः प्रकाशयेत्। पद्मासनं समाकृत्य कुर्परोपरि संस्थितः'

**कोकिलेक्षु** पु० कोकिल इव कृष्ण इक्षुः। (कालला) इक्षुभेदे। राजनि०

**कोकिलेष्टा** स्त्री ६त०। महाजम्बूवृक्षे राजनि०

**कोकिलोत्सव** पु० कोकिलानामुत्सवोऽत्र। आम्रवृक्षे राजनि० [(देशान्) भाग० ५।६।८

**कोङ्क** पु० ब०व०। देशभेदे। "चक्रमाण कोङ्कवेङ्कटकान्"

**कोङ्कण** पु० ब०व०। देशभेदे स च देशः वृ० सं० कूर्मविभागे दक्षिणस्यामुक्तः "शिविकफणिकारकोङ्कणाभीराः"। "अथापरे जनपदा दक्षिणा भरतर्षभ। कौकुट्टकास्तथा चोलाः कोङ्कणा मलयामराः" भा० भी० ९अ०। कचिदेकत्वम् "नाथं वर्ज्यं कोङ्कणे मागधे च" मु० चि० "मालवे गौडदेशे च सिन्धुदेशे च कोङ्कणे। व्रत चूडाविवाहेषु वर्ज्यं येन्मकरे गुरौ" पी० धा०। तेषां राजा अण्। कौङ्कण तद्देशनृपे बहुषु तस्य लुक्। तत्रार्थे स्वार्थे क "कुन्तलान् तथा वङ्गान् शाल्वान् कोङ्कणकांस्तथा (विजित्य) हरिव० १४अ०

**कोङ्कणासुत** पु० कोङ्कणदेशोद्भवा अच् तस्य सुतः कोङ्कणा रेणुका ६त०। परशुरामे शब्दमा०

**कोच** त्रि० कुच—ज्वला० कर्त्तरि ण। १सङ्कोचके, । भावे घञ्। २सङ्कोचे "एकैकस्य तत्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्वयुते भवन्ति' सुश्रु० म्लेच्छे०पु० उक्ते ३जातिभेदे (कोंच) "तीवरस्यैव स एव मांसच्छेदिसङ्कर। कोचजातिरिति इति तल्लोक्तेः। स्त्रियां ङीष्। ४तत्प्रधाने देशे पु०। सोऽभिजनोऽस्य अण्। कौच तद्देशवासिनि बहुषु तस्य अणो लुक्।

कोजागर पु० कोजागर्त्ति इति लक्ष्म्याउक्तिरत्न काले प्रयो०। आश्विनपौर्णमासप्राम्। तत्कृत्यव्यवस्थादि ति० त० कल्पतरौ ब्रह्मपुराणम् "आश्वयुज्या पौर्णमास्या निरुम्भायालकार्णवात्। आयाति सेनया सार्द्धं क्रत्या युद्धं कृताह्वयम्। तस्मात्तत्र नरैर्मार्गा रथ्येगृह्य समीपतः। शोधितव्या प्रयत्नेन भूषितव्याश्च सर्वशः। पुष्पार्घ्यफलमलाद्यर्सर्षपप्रकरैस्तथा। वेश्मानि भूषितव्यानि मानावर्णैर्विशेषतः। सुस्नातैरनुलिप्तैश्च नरैर्भाव्य सवास्त्रैः। दिवा तत्र न भोक्तव्य मनुष्यैश्च विवेकिभिः। स्त्रीयाणर्मृद्धवृद्धैश्च भोक्तव्य पूजिते सुरे"। पूजिते सुरे पूजितसुरैरित्यर्थ। "पूज्याश्च सफलैः पुष्पैस्तथाहारोर्द्धभित्तय। हारोपान्ते सुदीप्तम् संपूज्योऽप्ययाह्वन। यथाक्तदृतोमितैस्तण्डुलैश्च कर्तापित। सपूजितव्य पूर्णेन्दुः पयसा पायसेन च। स्कन्द सभार्य्यश्च तथा नन्दीश्वरोमुनिः। गोमध्वि सुरभि पूज्या छागवह्निर्हुताशन। उरभ्रयक्षिर्वरुणोगजयक्षिर्विनायक। पूज्य सार्श्वस रेवन्तो यथाविभवविस्तरैः। तत पूज्योनिकुम्भोऽपि समांसैस्तिलतण्डुलैः। सुगन्धिभिर्हुतोमेतै क्रमराख्यैश्च भूरिभि। ब्राह्मणान् भोजयित्वा तु भोक्तव्य मांसवर्जितम्। यश्चिमार्य गतैर्नया द्यूतक्रीडा पृथग्विधा"। ततश्च हारोर्द्धभित्तिस्थव्याघ्रपूर्णेन्दुसभार्य्यरुद्रस्कन्दनन्दीश्वरमुनय सर्व्व पूज्या। हारोर्द्धभित्तिस्थत्वोऽत्र सत्ववचनात्। नन्दीश्वरोमुनिरेक। गोमता सुरभि, छागवता हुताशन मेषवता वरुण, हस्तिमता विनायक, अश्ववता रेवन्त सर्व्वैरप निकुम्भ पूज्य, मध्यार्थेन भिरुपुराणम्। "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्य्या लोकविभूतये। कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम्। सुगन्धिर्निशि सद्वेशो अक्षैर्जागरणं चरेत्"। तथा "निशीथे वरदा लक्ष्मी कोजागर्त्तीति भाषिणी। तस्मै वित्त प्रयच्छामि अक्षैः क्रीडां करोति यः। नारिकेलैश्चिपिटकैः पितृन् देवान् समर्च्चयेत्। बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनोभवेत्"। अत्र निशीति निशीथ इति चाभिधानात् चालिकाद्यमिदम्। ततश्च "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। प्रदोषोऽस्तमयादूर्द्ध घटिकाद्वयमिष्यते" इति वत्सवचनात् तद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम् उभयव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्ति परदिने प्रदोषव्याप्तिस्तदा परेद्युस्तत्कृत्यम्। प्रधानप्रदोषकालव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्ति परदिने न प्रदोषव्याप्तिस्तदा सुतरां पूर्व्वेद्युस्तत्कृत्यम् "यस्य तिथय प्राप्य कर्म्मानुष्ठानतोदिया। नक्तादिव्रतयोगे तु रात्रियोगोविशिष्यते" इति वचनात्"। "नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि। तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले" कृत्यकौमुदी। तत्र च अक्षक्रीडा कार्य्या। अक्षक्रीडाविशेषश्च चतुरङ्गशब्दे वक्ष्यते। "या तु कोजागरे याते" ति० त० राजमार्त्तण्ड।

कोट पु० कुट—घञ्। १कौटिल्ये। अधारे घञ्। दुर्गे(गड) मेदि०। तत चतुरर्थ्याम् अश्मा० र कोटर कोटरमुक्तप्रदेशादौ त्रि० [विहति स्त्रियां ङीप्।

कोटक पु०स्त्री कुट—ण्वुल्। जातिभेदे ब्रह्मवै० जातिशब्दे

कोटचक्र न० कोटस्य दुर्गस्य शुभाशुभज्ञापनार्थे अर्थविध चक्रभेदे चक्रशब्दे विवृति। "कोटचक्रमहविर्धं चतुरस्रादिभेदत" इति नरपतिजयचर्य्या

कोटर पुन० कोट कौटिल्य राति रा-क। वृक्षस्थादिस्थगह्वरे। "चलतृषखाधरमिव कोटर' तव" माघ। "महाहुहुरारविटपद्रुन्द्रियाद्दुरकोटर" भा० आश्व० ४७अ० र दुर्गसन्निकृष्टदेशादौ त्रि० व्युत्पत्ति कोटशब्दे दृश्या। कोटर दुर्गसन्निकृष्ट वनम् तथाभूतशाखा वा वनम् कोटरा० पूर्व्वपददीर्घ णत्वञ्च। कोटरावणम् वनभेदे न०।

कोटरादि पु० वनशब्दे परे पूर्व्वस्वरदीर्घनिमित्ते पा०ग० सूत्रोक्ते शब्दगणे स च गण। "कोटर मिश्रक सिध्रक पुरग शारिक"।

कोटरी स्त्री कोटं कौटिल्य रीयति री—गमे गतौ च क्विप् १नग्नायां स्त्रियां २दुर्गायाञ्च अमरटीका।

कोटवी स्त्री कोट कौटिल्य दुर्गं वा वाति वा—गतौ कि सने क गौरा०ङीप्। १दुर्गायाम् धरणि। २नग्नायां स्त्रियां अमरटीका।

कोटि स्त्री कुट—इन्। १धनुषोऽग्रभागे अमर २वस्तुमात्रस्याग्रभागे, ३अत्रनायां कोणे ४उत्कर्षे ५शतलक्षमितसंख्यायां, ६तत्तुल्ये च मेदि०। ७स्पृक्कायाम् (पिडिङ्गशाक) अमर ८पक्षान्तरसाधने,वादे निर्णयार्थ कृते ९पूर्व्वपक्षे, वा ङीप् कोटीत्यपत्र। "भद्रन्योन्याश्रय कर्षेन वीरम्" भा० आ० १३०। "तेन

भूमिनिहितैककोटि तत्" (कार्म्मुकम्) रघु०। "आवर्जितजटामौलिविलम्बिशशिकोटयः" कुमा०। "शृङ्गिस्तनत्तुङ्गनदीधौतकोटिमिनम्" माघ "विप्रतिपत्तिवाक्यजन्यकोट्युपस्थिति" सशयहेतुकौ गदाधर। "दृष्टाद्दोर्व्व व्यासतत्स्पर्शिन्या दिशीतरोबाहुः। त्र्यस्रे चतुरस्रे या सा कोटि कीर्त्तिता तज्ज्ञै" १०लीलावत्युक्ते त्रिकोणादिक्षेत्रावयवरेखाभेदे स्त्री "तथायते तद्भुजकोटि घात" लीला० "त्रिभिर्भं पद तानि चत्वारि चक्रे क्रमात् स्यादयुग्युग्मसञ्ज्ञा च तेषाम्। अयुग्मे पदे यातम् एष्यन्तु युग्मे भुजोभाङ्कहीनं त्रिभ कोटिरुक्ता" सि० शि० उक्ते राशिचक्रस्य ११ज्योत्याश्रे १२तत्रोक्ते छायानिरूपणार्थं कल्प्यमानक्षेत्रावयवरेखाभेदे यथा "दिक्तुल्यसम्पातगतस्य शङ्कोश्छायाग्रपूर्व्वापरसूत्रमध्यम्। दोर्दोः प्रभावर्गवियोगमूल कोटिर्नरात् प्रागपरा तत स्यात्" सि० शि०" "दिक्सम्पातस्थस्य शङ्कोर्भाग्र यत्र पतति तस्य पूर्व्वापरसूत्रस्य च यदन्तरं स दोरित्युच्यते दोश्छाययोर्वर्गान्तरपद पूर्व्वापरा कोटिरिति" प्रमि० १३चन्द्रस्य शृङ्गोन्नतिज्ञानार्थं तत्रैव दर्शिते क्षेत्रावयवभेदे च यथा "योऽभो नरो दिनकृत स विधोरुदग्यशङ्कन्वितो मम मता खलु सैव कोटि" सि० शि०

"यो रवेरध.शङ्कुरसौ विधोरूर्ध्वशङ्कुना युत सैव कोटिर्मम मता अत्रोपपत्ति। दृग्गार्कोन्द्वोर्याम्योत्तरभावेन यदन्तर स भुज। ऊर्ध्वाधरभावेन यदन्तर सा कोटि। सा चैवं भवति। उदयेऽस्ते वा यदि शृङ्गोन्नतिस्तदा रविशङ्कोरभावाच्छशिशङ्कुरेव कोटि। यदा निशि रवेरध शङ्कुस्तदा स शङ्कुर्विधोरुदयशङ्कुना युतो यावांस्तावत् तयोर्यत्स्थयोरूर्ध्वाधरमन्तर सैव कोटिरुचिता। यतो द्रष्टा पुरुषेणात्मनोऽधस्थानवशेन शशिन शृङ्गमु न्नतमवलोक्यते। अत स्वस्थानवशात्सूत्रादूर्ध्वरूपगया कोट्या भवितव्यम्। भुजकोटिकर्णसत त्र्यस्र दृष्टेरग्रत आदर्शवत् संस्थ यथा भवति तथा कल्प्यम्" प्रमि० तत्रैवोक्ते १४उदयास्तसूत्रकल्पितक्षेत्रावयवभेदे यथा "सूत्राद्दिनाग्रान्तरतं ध्रुवं च याम्यां गत हि द्युनिशं कुजोर्ध्वे। अधश्च सौम्या निशि सौम्यमग्रात् सद्युक्तियुक्तं स्फुटज निरुक्तम्। सौम्याधकाधात्तन्तर हि याम्यं याम्याधकाधात् गुरवेव याम्यम्। तदन्तरैवं समदृक्तवेदेयस्याङ्गनीर्ण भुवि बाहुबाहु। दृग्ज्यां स्तुतिचाप तयोस्तु कोटिं पूर्वापरां वर्गवियोगमूलम्" सि० शि०

"क्षितिजस्याहोरात्रवृत्तसम्पातयोर्बद्ध सूत्रमुदयास्तसूत्रम्। ग्रहस्थानात्तत्र्य शङ्कु। तस्य तलमुदयास्तसूत्राद्दक्षिणतो भवति। यत क्षितिजादुपरि दक्षिणतोऽहोरात्रवृत्त गतम्। अधस्तूत्तरतो गतम्। अतो निरक्षुत्तर न्टतलम्। अथ भुज उच्यते। उत्तरगोलेऽग्रोत्तरा न्तत यास्यमतस्तनोनाग्रा बाहुर्भवति। बाहुर्नाम शङ्कुप्राच्यपरसूत्रयोरन्तरम्। यदाऽग्रा शङ्कुतलादूना तदा तयोरन्तरं दक्षिण शङ्कुतल बाहुः स्यात्। एव समवृत्तप्रवेशादुपरि दक्षिणगोले त्वग्रा याम्या शङ्कुतल च याम्यं तयोर्योगे कृते बाहुः स्यात्। रविसमसूत्रयोरन्तरांशाना ज्या बाहुः। तत्र या दृग्ज्या स कर्ण। तयोर्वर्गान्तरपदं पूर्व्वापरा कोटि" प्रमि०

"शत शतसहस्राणां कोटिमाहुर्मनीषिण" रामा०। तत्र सङ्ख्यायाम् "योनिकोटिसहस्रेषु सृति चासाद्दराप्नुयात्" मनु०। "कोटिकोटिगुणितं दिवि दायि" नैष०। सङ्ख्यान्विते "कोटीश्चतस्रोदश चाहरेति" रघु०। ततो वारे सत्वसुच्। कोटिकृत्वस् कोटिवारार्थे अव्य०। कारकार्थवृत्तेस्तत.वीप्सायां शस्। कोटिशस् वीप्सान्वितकारकस्थे तदर्थे अव्य० कोटिशोददाति। [गोपकीटे जटाधर।

**कोटिक** पु० कोट्या बहुधा कायति प्रकाशते कै—क। इन्द्र-

**कोटिकास्य** पु० कोटिकस्येवास्यमस्य। शिविवंश्ये सुरथपुत्रे नृपभेदे "अहन्तु राज्ञ: सुरथस्य पुत्र यं कोटिकास्येति विदुर्मनुष्या" भा० व० २६४अ०। द्रौपदीं प्रति तदुक्तिः

**कोटिजित्** पु० कोटिं कविकोटिं, पक्षे कोटिमित द्रव्यं वा जितवान् जि-भूते क्विप्। रघुवंशादिकाव्यकारे कालिदासे त्रिका०।

**कोटिज्या** स्त्री ज्यो० सि० उक्ते ग्रहस्फुटतासाधनाङ्गे चापावयवभेदे तदानयनं यथा

"गताङ्गज्या विषमे गम्यात् कोटि पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गताद्भवेत्" सू० सि०। "विषमे पदे गताद्भुजज्या पदादितो यद्गत राशित्रिभागात्मकमाग्भात तस्मादयथ भुजज्या स्यात्। गम्याद्गतोन त्रिभ गृहात् पदान्तावधिकमेष्यम्। तस्मात् कोटिः कोटिज्या स्यात्। युग्मे सत्ते तु कारात् पदे एष्याद्भुजज्या. गतात् कोटिज्या स्यात् तकारो विशेषद्योतक। एकदादेशेऽङ्गरीत्या द्वय साधितमित्यर्थ। अत्रोपपत्ति विषमपदे ग्रहोदोर्ज्याधरेखान्तरानुसारेण फलसुपपद्यते ततो दत्ताधरादन्तरसंज्ञा भूरूपा तदर्द्धचापं तदन्तराग्र

भो०। मैव याम समाधत्ते कुमारपरिरक्षणात्"। १८५ अ० बाणमातरि भाग० १०।६।२६ "तन्माता कोट्टवी नाम नग्ना मुक्तशिरोरुहा। पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया" उभयत्र नग्नत्वमुक्तकेशत्वविशेषण तत्काले तथाभूतत्वप्रापणाय कृतस्तयोस्तदा नग्नत्वमुक्तकेशयुक्तत्वात्तथात्वम्

**कोट्टवीपुर** न० ६त०। बाणासुरपुरे तन्मातुस्तत्र प्रधानत्वात् तयैव बाणासुरस्य रक्षणात् तत्पुरस्य तन्नामत्वम्।

**कोट्टार** पु० कुट्ट—आरक् पृषो०। १कूपेऽनागरे २पुष्करिण्याः पाटके च। (पाड) मेदि०

**कोठ** पु० कुठि—अच् नि० नलोप। मण्डलाकारे कुष्ठरोगे। तल्लक्षणमुक्तं निदाने "असम्यग्वमनो दीर्णपित्तश्लेष्मान्ननिग्रहैः मण्डलानि" सकण्डूनि रागवन्ति बहूनि च। उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते" इति माधवकरः। रक्षितेन चान्यथोक्तम् "वरटीदष्टसंकाशः कण्डूमान् लोहितोऽसकर्फपित्ततः। क्षणिकोत्पादविनाशी कोठ इति निगद्यते तज्ज्ञैः" "उद्वर्त्तयन्तु विज्ञेयं कण्डूकोठानिलापहम्" "कण्डू कोठ निलस्तम्भमलरोगापहश्च स" "उद्वर्त्तन्त्वियं क्रिया कण्डूकोठविनाशनम्" इतिच सुश्रुत।

**कोठर** पु० कुठि—अर पृषो०। अङ्कोटवृक्षे राजनि०

**कोठरपुष्पी** स्त्री कोठरस्य पुष्पमिव पुष्पमस्या ङीप्। वृद्धदारके राजनि०

**कोण** पु० कुण—करणे घञ् कर्त्तरि अच् वा। येन चतुरान्तिमा काष्ठेन वीणाद्यवाद्यन्ते तस्मिन् वादनसाधने १काष्ठभेदे २अस्त्री, अमरः। ३गृहादीनामेकदेशे, ४अस्त्राख्यमध्यभागे, ५लगुडे, मेदि० ६मङ्गलग्रहे हेम० ७शनिग्रहे त्रिका०। द्वयोर्दिशोर्मध्यभागे ८विदिशि राजनि० "कनककोणैरभिहन्यमानाः" काद० "भेरीमृदङ्गवीणानां कोणसङ्घट्टितं पुनः" रामा० "स्वत्कृष्टाङ्गेन तेन घातारः स्वर्णपूरिताः। कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि" कथास०। "सुवर्णकोणाभिहतः प्राणदद्दुयसदुन्दुभिः" रामा० "विन्दुत्रिकोणवसुकोणदशारयुग्मम्" तन्त्रसा०। समकोण विषमकोणस्य स्थलम्

**कोणकुण** पु० कोणे मस्तकैकदेशे कुणति शब्दायति कुण—क। मत्कुणे (उकुण) हेमच०

**कोणाघात** पु० "ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते कोणाघात स उच्यते" इति भरतोक्ते वाद्यभेदे ६त०। काष्ठेन वीणादेस्ताडने च। "कोणाघातेषु गर्ज्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः" वेणी० [अमरः

**कोणि** त्रि० कुण—इन्। आदानशक्तिहीनहस्तयुक्ते (कोण)

**कोथ** पु० कुथ—पातित्ये वञ्। १नेत्ररोगभेदे (कें धो)। कर्त्तरि अच्। २गलिते त्रि० मेदि० "मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृत यदावगाढपुरीषोन्मिश्रमपानेनाधःप्रेरितमसम्यग्गागत गुदं क्षिणोति तत्र क्षतनिमित्त कोथ उपजायते" इति सुश्रुतोक्ते गुह्यक्षयकारके ३भगन्दररोगोपद्रवभेदे। भावे घञ्। ४गलने "तस्मिन् क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलसिक्तायां क्रमयो जायन्ते" सुश्रुत० "तत्र क्वथितमतृस्यकोटदद्रु रेमूत्रपुरीषकोथ जाता" सुश्रु० "कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्" (जलम्) सुश्रु० "गोधाजातुकोथजा मन्दाः मध्याः काश्चित्कोद्भवा" सुश्रु०

**कोदण्ड** न० कु—शब्दे विच् कौ शब्दितो दण्डोऽस्य। १धनुषि, "विस्फुर्ज्जत्कोदण्ड कोदण्डः" भाग० ३।२१।५१ तत्तुल्यत्वात् २भ्रूलतायां, ३देशभेदे च। अमर ४धनूराशौ च।

**कोदार** पु० ईषदुदारः कोः कादेशः। धान्यभेदे "न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्" कात्या० १,६,८, स्तूत्र भाष्ये कर्कधृतवाक्यम्

**कोद्रव** पु० कु—विच् कौ सन् द्रवति द्रु—अच् कर्म्म०। (कोदो) धान्यभेदे अमर "कोद्रवोवातलो ग्राही हिम पित्तकफापह" भावप्र० तद्गुणाउक्ताः। "अयज्ञिया वै कोद्रवाः" श्रुतिः। "अतोऽन्यदपि संग्राह्यं यद्यच्च धान्यमात्रकम्। न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्" कात्या०श्रौ०१,६,८,सू०भा० कर्कधृतवाक्यम्। तस्य वैश्वदेवे अग्राह्यता "पचनाग्नि समुज्ज्वाल्य वैश्वदेवं समाचरेत्। मिश्राधान् कोद्रवान् माषान् कलायांश्चणकांस्त्यजेत्" काशी० ३५ अ०। तस्याश्राद्धीयता भा० अनु० ४२६१ श्लोके उक्ता यथा "अश्राद्धीयानि धान्यानि कोद्रवाः पुलकास्तथा"

**कोनालक** पुंस्त्री कोणे जलोने अलति अन्यथावर्त्तते अल—ण्वुल्। संवर्त्तादिषु सवे प्लवपुष्कवेत्येतदेरे जलचरपक्षिभेदे सुश्रुतोक्तप्लवपक्षे कोनालक पठित्वा "प्लवाः संघचारिणः" सुश्रु०। इन् कोनालि अप्यत्र। "बलाकोकोनालिप्रभृतीन् सेवेत" सुश्रु० स्त्रियां ङीप्।

**कोन्वपिर** पु० बाभ्रव्यगामेन भृगुत्वगाङ्गक्षत्रियभेदे भा० अनु० ३५ अ०

"सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे। विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर!। मेकला द्रविडा लाटा पौण्ड्राः कोन्वशिरास्तथा। शौण्डिका दरदा दार्व्वाश्चोलाः शबरबर्ब्बराः। किराता यवनाश्चैव तास्ताः क्षत्रियजातयः। वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात्"।

**कोप** पु॰ कुप—भावे घञ्। १क्रोधे कामानाप्तिजे चित्तवृत्तिभेदे अमरः। "क्रुध्द्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा॰ वधाद्यनुकूलश्चित्तवृत्तिभेदः कोपः। अमर्षवन्दे दिदृति। "पादेन प्रहरन् कोपात्" मनुः। "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि। प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना" सा॰ द॰ उक्ते शृङ्गाररसाङ्गे २प्रणयकोपे च

"अपकारिणि चेत् कोपः कोपे कोपः कथं नहि। धर्म्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि" नीतिसा॰। "रिपौ मन्यौ स्वदेहे च समैकात्म्य प्रपश्यत। विवेकिन् कृत कोपः स्वदेहावयवेष्विवेति" ३धातुवैषम्यकारिदोषाणां विकारभेदे सुश्रु॰ "तत्र एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः" शारीराणां विकाराणामेष वर्गश्चतुर्विधः। चये कोपे शमे चैव हेतुरुक्तश्चिकित्सने" सुश्रु॰ "स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः" सुश्रु॰

**कोपक्रम** न॰ उपक्रम्यते कर्म्मणि घञ् ६त॰ उपक्रमान्तत्वात् क्लीवता। कस्य ब्रह्मण उपक्रमे—उपक्रम्यमाणे १ब्रह्मणा आदौ कृत्वा उपक्रम्यमाणाया जगत सृष्टौ अमर। कोपक्रमप्यत्र व॰। ६त॰। २कोपस्य क्रमे पु॰

**कोपन** त्रि॰ कुप—ताच्छील्ये युच्। कोपशीले जटाध॰"चण्डस्त्वत्यन्तकोपनः" अमर। "आसीद्विभाण्डकीन महर्षिः कोपनो भृशम्" भा॰आ॰२९अ॰। "तपस्वी कोपनो भृशम्" भा॰व॰११॰अ॰ "पादायत कोपनयाऽवधूत"कुमा॰ २असुरभेदे पु॰"शरभः शलभश्चैव कुपनः कोपन क्रथ" हरि॰ ४२अ॰ कुप—णिच्—भावे ल्युट्। ३कोपनिष्पादने ४दोषविकारकारकव्यापारभेदे न॰ "स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्" भा॰ आश्व॰ १७अ॰। "समोक्त धाम्नर्दोषाः कुपिताः कोपमागताः" सुश्रु॰ कुप—णिच् कर्त्तरि ल्यु। ५दोषप्रकोपके त्रि॰ "कोपनं कफवातानाः दुर्न्नाम्ना चाविनाशनि" सुश्रुतः

**कोपनक** पु॰ कोपनः कोपशील इव कायति कै—क। १चोरकाख्यगन्धद्रव्ये राजनि॰ स्वार्थे क। २कोपने त्रि॰

**कोपनीय** त्रि॰ कुप—कर्म्मणि अनीयर्। दे षविषये "ते च मन्त्रादयउपस्थिता परस्परेणाभिहन्यमानास्तदुपायाश्चाणिमादय स्वरूपेणैव कोपनीया भवन्तीति" सा॰त॰ कौ॰

**कोपयिष्णु** त्रि॰ कुप—णिच् ता॰ इष्णुच्। परस्य कोपकारके "वैरायैव तदा व्यक्त चलियान् कोपयिष्णुभि भा॰ आ॰ १७६अ॰

**कोपलता** स्त्री कोपहेतुर्लता। कर्णस्फोटलतायां राजनि॰

**कोपिन्** पु स्त्री॰ अयथा कुप्यति णिनि। १जलपारावते २अयथाकोपशालिनि त्रि॰ राजनि॰ स्त्रियां ङीप्। कोपयति णिजन्तात् णिनि। ३कोपसम्पादके त्रि॰ "सिद्धार्थक शोणितपित्तकोपी" सुश्रुत स्त्रियां ङीप्।

**कोमल** न॰ कु—कलच् मुट् च नि॰ गुण। १जले। २मृदौ, अकठिने, च त्रि॰ मेदि॰ ३क्षीरिकायां स्त्री॰ टाप् शब्दच॰। ४मनोहरे त्रि॰ शब्दर॰। "निशा च शय्या च शशाङ्ककोमला" नैष॰। शशस्याङ्कवत् मृदुला शय्या। शशाङ्केन मनोहरा निशा च इत्यर्थः। "अनन्तपुतः कोमलरत्नराशीन्" माघ।

**कोमलक** त्रि॰ स्वार्थे क। १कोमलशब्दार्थे। संज्ञायां क। २मृणाले शब्दच॰।

**कोमलवल्कली** स्त्री कोमलं वल्कलं यस्याः। नवबीजभायां (नोयाड) शब्दचिन्ता॰।

**कोमलासन** न॰ आसनशब्ददर्शितमृगादिचर्म निर्म्मिते आसनभेदे "इदानीं शृणु देवेश। रहस्यं कोमलासनम्। योगसिद्धिप्रदातारं चित्ते चमासनं तु तत्" रुद्रया॰।

**कोमासिका** स्त्री ईषदुन्नेय मातचीति इव भासे भास—ण्वुल् टाप् अतइत्त्वम्। आशिकायाम् (फलेर कालि) हारावली।

**कोम्य** त्रि॰ कम—कर्म्मणि यत् पृषो॰। काम्ये। "उदौ नः सन्तु कोम्याः" ऋ॰ १।१७१।२। "कोम्या दास्यामि" भा॰

**कोयष्टि** पु॰ कं जलं यष्टिरिवास्य पृषो॰ अत ओत्वम्। जलकुक्कुभे पक्षिणि। "प्लुदान् जालपादांश्च कोयष्टिनखविष्किरान्" । मनुः संज्ञायां कन् कोयष्टिक (टिटिर) टिट्टिभपक्षिणि "कपोतपारावतभृङ्गराजपरभृतेत्यादि प्रतुदपक्षिवर्गे कोयष्टिकश्चा "कषाया मधुराक्षाराः कटुकारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चस" इत्यते वर्ग्यगुणा उक्ता।

**कोर** पु० कुर–संस्याने अच् लस्य र । १सस्थानवति कोरकाकारे सुश्रुतोक्ते देहस्थसन्धिभेदे यथा "त एते सन्धयोऽष्टविधा । कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः" । "नामभिरेवाकृतयः व्याख्याताः" । कुल–घञ् । २सस्थाने पु०

**कोरक** पु न० कुल सस्थाने ण्वुल् लस्य र । कलिकायाम् । "कलिका कोरकः पुमानित्यमरोक्तेः प्रायिकाभिप्राया"कोरक कुड्मलेऽपि स्यात् कक्कोलकमृणालयोः" विश्वोक्तेः, तेन "सहपङ्कहरत्, विचकार कोरकाणि" माघे क्लीव प्रयोग "कोरकोऽस्त्री कुड्मले स्यात्", मेदि० । २कक्कोले ३मृणाले च विश्व । ४चोरनामगन्धद्रव्ये जटाध० । तत तारका० सजातेऽर्थे इतच् । कोरकित जातमुकुले त्रि०

**कोरङ्गी** स्त्री० कुर–अङ्गच् गौरा० ङीष् । १सूक्ष्मैलायाम् (छोटएलाइच्) अमर० २पिप्पल्यां राजनि०

**कोरदूष** पु० कोर संस्थान दूषयति दूषे ण्यन्तात् अण् उप० स० । (कोँदो) ख्याते व्रीहिभेदे अमर । "निशाषष्टिकयवगोधूमकोरदूषेत्यादि" सुश्रु० "श्यामाककोरदूषाश्च तक्र पिण्याकसक्तुभिः" सुश्रु० । ण्वुल् । कोरदूषकोऽप्यत्र र्थे । "इंडगोभर्यिता लोको युगान्ते पर्युपस्थिते । यस्त्राणां प्रवरा मायो धान्यानां कोरदूषकः" भा०व०१९०अ०

**कोल** पु० कुल–संस्याने अच् । १शूकरे २प्लवे(भेला) अमर ३क्रोडे ४शनिग्रहे ५चित्रके (चिता) ६श्रङ्गपालौ ७आलिङ्गने मेदि० ८देशभेदे पु०ब०व० शब्दरत्ना०९।अस्त्रभेदे पु० धर० "नेटात् धीवरकन्याजाते १०जातिभेदे ब्रह्मवै० पु० । ११नृपभेदे "कदथामादथाक्रीडश्चत्वारस्तस्य चात्मजाः । पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिव । तेषां जनपदाः स्फीताः पाण्ड्याः कोलाः सकेरलाः" हरिवं०३२अ० । १२मरिचे न० राजनि० १३चव्ये(चइ)वैद्य० । १४तोलकपरिमाणे वैद्यकम् । १५कर्कन्धूवृक्षे स्त्री० गौरा० ङीष् । तस्याः फलम् अण् तस्य लुक् ।१६बदरीफले न० । कर्कन्धूशब्दे विवृति "बदरीबदराकारोद्यच्च सूक्ष्मफलोभवेत् । कटव्यामेव सा घोण्टा कोलवोरटेति चोच्यते" स्मृति "हस्तिकोलिर्गोपघोण्टा घोण्टा च बदरीच्छदा । स्वगालकोलि कर्कन्धूः" रत्नकोष "आद्यकोलदलितमकायमै" । "य कोलता वक्षवसाद्य विभ्रन्"माघ । कोलकश्च सुश्रुते धन्वन्तरौ उक्तः । तत्र वाक्य २२३९० दृश्यम्

**कोलक** पु० कुल–ण्वुल् । १अङ्कोठवृक्षे, राजनि० २वङ्गचोरकशे जटाधरः (कांकला)च ३गन्धद्रव्यभेदे, ४मरिचे, ५कक्कोले च न० अमर० ।

**कोलकन्द** पु० कोलद्रव कन्दोऽस्य । महाकन्दभेदे राजनि० "कोलकन्दः कटूष्णश्च क्रिमिशोषविनाशनः । वमिच्छर्दिप्रशमनः विषदोषानिलापहः" राजनि०

**कोलकर्कटिका** स्त्री० कोलद्रव कर्कटिका । मधुखर्ज्जूरिकायां राजनि०

**कोलघोण्टा** स्त्री । बदरीभेदे स्मृति । [द्रव्ये अमर० ।

**कोलदल** न० कोल बदरीफलमिव दलमस्य । नखीनामगन्ध-

**कोलगिरि** पु० दक्षिणदिक्स्थे पर्वतभेदे "कृतच्च कोलगिरिश्चैव सुरभीपट्टनं तथा" भा० स० ३०अ० सहदेवदक्षिणदिग्विजये । कोलाचलादयोऽप्यत्र । कोलाचलमङ्गिनायेति तस्य विशेषण तत्पर्वतस्थितत्वात् [शब्दे द्रष्टा०

**कोलनासिका** स्त्री० कोलस्य शूकरस्य नासिकेव । रङ्कणी-

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कपक्षिणि द्रष्टा० । [ राजनि०

**कोलमूल** न० कोल बदरीफलमिव मूलमस्य । पिप्पलीमूले

**कोलम्बक** पु० कुल–अम्बच् कोलम्बमध्यः संज्ञायां कन् । तन्त्रीभिन्ने अलाबूप्रभृतिसमुदाये वीणायाः अवयवे भरत

**कोलवल्ली** स्त्री० कोलोपराङ्ग इव वल्ली तल्लोमतुल्यसूक्ष्मावयवत्वात् । गजपिप्पल्याम् राजनि० । २शूकरपादिकायां राजनि०

**कोलशिम्बि** स्त्री कोलपादाकारा शिम्बिरस्याः । (आलकशीति) ख्यातायां शूकरपादिकायां लतायाम् । वा ङीप् । "कोलशिम्बी समीरघ्नी गुरुष्णा कफशातहृत् । शुक्राग्निसादकृद्रूक्षा रुचिकृत् बहुविड् गुरु" इति भावप्र०

**कोला** स्त्री कुल–ज्वला० ण टाप् ।१पिप्पल्याम्,२चव्ये(चइ) मेदि०३कोलिवृक्षे शब्दरत्ना० । ४कोलापुरे च

**कोलाञ्च** पु० ब० व० । देशभेदे शब्दरत्ना०

**कोलापुर** न० दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्याः स्थाने पुरभेदे

**कोलाविध्वंसिन्** त्रि०कोला पुरभेदे विध्वंसितं वसु येन तस्य विशब्देन धातोरन्यार्थपरत्वम् । पर्वतवासिनि म्लेच्छभेदे "एव पालयतस्तस्य म्लेच्छा पर्वतवासिनः । कोलाविध्वंसिनः प्राप्ताः" इति देवीभागवतम् । "कोलाविध्वंसिनस्तथेति" देवीमाहा० । कोलाशब्द कोलाहलवाचकस्तथा च कोलाहलेनेव राज्यविध्वंसं ये कुर्वन्ति । २तेषु च ।

**कोलाहल** पु० कुल–घञ् तमाहलति अच् । बहुविधे दूरगामिन्यव्यक्ते शब्दे अमर "शीघ्र भेरीनिनादेन स्फुटकोलाहलेन वै" रामा०

कोलि स्त्री कुल–इन्। वदर्य्याम् पक्षे वा ङीप् अमरः

कोलिसर्प पु० सगरेण स्वे च्छता मापिते क्षत्रियभेदे । उदा० केरलशब्दे हरिवं० वाक्यप्रक्रम् "कोलिसर्पामाहिषका- स्तास्ता: क्षत्रियजातयः । इक्ष्वस्त परिगता ब्राह्मणाना- मदर्शनात्" भा०आनु०३३अ० [राजा अण् कौलूत तद्भूमे

को(कौ)लूत पु० कुलूतशब्दार्थे ह० स० पाठान्तरम् । तस्य

कोल्या स्त्री कोलमर्हति यत् । पिप्पल्यां रत्नमा०

कोल्ल पु० भारतवर्षस्थे पर्वतभेदे "भारतेऽप्यस्मिन् वर्षे सरि- च्छैलाः सन्ति बहवः" इत्युपक्रमे "ऋषभ कूटक कोल्ल सह्यागिरि" इत्यादि भाग० ५।१६।१० उक्तम् । स च गिरि ह०स०कूर्मविभागे "अथ दक्षिणेन लङ्का" इत्युक्रमे "कर्णाटकमहाटविचित्रकूटनासिककोल्लगिरिचोला" इति दक्षिणस्यामुक्त । कोल्लमित्यादियोऽप्यत्र । तत्र भव तस्य राजा वा वा० ठक् । कौल्लगिरेय तत्रभवे तद्भूमे च । "अर्च्चित ययौ भूयो दक्षिण सलिलार्णवम् । तत्रापि द्राविडैरान्ध्रै रौद्रै र्माहिषकैरपि । तथा कौल्लगिरेयैश्च यु- द्धमासीत् किरीटिनः" भा० आश्व० ८३अ० ।

कोविद पु० कुङ् शब्दे–विच् कौः वेदस्त वेत्ति विद–क । १पण्डिते २विदुषि अमरः "समीक्ष्यकारिण प्राज्ञ धर्म्म कामार्थकोविदम्" मनुः । "आत्मनैव गुणदोषकोविदः" । "श्रौतमार्गसुखगामकोविदैरिति च" माघः ।

कोविदार पु० कु भूमिं विदृणाति–वि+दृ–अण् पृषो० । १रक्तकाञ्चनारे (रक्तकाञ्चन) । अमर । "कोविदार कलिकाऽतिकोमला रक्तबिन्दुतिलतैरुपाचिता । स्निग्ध- वासकसुवासवासिता वेशवारजुलितातिशोभदा" पाक- शास्त्रम् । काञ्चनारशब्दे गुणाद्युक्तम् । "कपोल कोवि- दारस्य तालकन्दस्तथा विषम्" । श्राद्धेदेयकथने वायुपु० । "श्वेतकाञ्चनसदृश कोविदार" इति श्राद्धविवेक । २पा- रिजाते च । हरिवं० १२६अ० तदुत्पत्तिर्दर्शिता यथा "कोऽप्ययं दारयित्वाऽसुरजानन्तोयतोऽजना । कोवि- दार इति ख्यातस्तस्य स महातरुः । मन्दार कोवि- दारश्च पारिजातश्च नामभिः । स इत्थो ज्ञायते दिव्यो यस्यैतत् कुसुमोत्तमम्" पारिजातहरणे । "पारि- जातान कोविदारान् देवदारुद्रुमाम्तथा" भा०व० १५५अ० । अत्र पारिजातशब्देनैव निर्द्दिष्टत्वात् रक्तकाञ्चनपरता स्वार्थे क । रक्तकाञ्चनशब्दे "अमन्दे पिचुमर्द्दे च मन्दारे कोविदारके" काशी० ।

कोश(ष) पुन० अङ्गादि कुश(ष)–आधारादौ घञ् कर्त्तरि अच् वा । १अण्डे शब्दर० । ३सतादलतवी- २हेमरूप्ययोः अमरः । ४कुट्मले मुकुले ५खड्गपिधाने । (खाप) ५समूहे ६दिव्यभेदे अमरः । मुई‌‌ष्यमध्यस्तु अभिधानवचने ७शब्दपर्य्यायसाधकग्रन्थे मेदि० ८धना- गारे ९पानपात्रे चषके १०शिम्बायां हेमच० । पनसादिमध्यस्थे (कोया) ख्याते ११पदार्थे भर० । गन्धान्तरपूर्व्वस्तु गोलकाकारे १२पदार्थे यथा "नेल- कोष" क्षीरस्वामी । तत्र खड्गपिधाने "सैवोपकोषे निहितो क्रमेणचिन्तत्रसकर्म्मकान्" । "पुत्रसचितकोशस्य" तस्य हेममये कोषे सुतप्ते पावकप्रभे" भा०वि० ४२अ० । बहुश प्रयोग । धनागारे "नि शेषविश्राणितकोषजातम्" मुकुले "मामभिमोदृ यत्र यिभिन्नकोषैः" "भिन्नाद्रिगैरिक- तटा इव दन्तकोशा" रघु० ।१३समाद्यावरणे "कोशवदाय- रकत्वात् "शरीरकोशादाचस्या: पार्श्यामि स्रुताम्बिका । कौशिकीति समाख्याता तलोकेषु गीयते" देवीमा० । १४पिधानमात्रे "सुजातयो पङ्कजकोशयोः श्रियम्" रघु । "कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्" सुश्रु० "योवा अथ द्वीप कुवलयकमलकोशाभ्यन्तरकोश" भाग० ५।१६।६। कोश(ष)पानदिव्यञ्च वीरमि० दर्शितोयथा "अथ कोश(ष)विधि । तत्र "अत प्रवक्ष्यामि कोश(ष)स्य विधिमुत्तमम् । शास्त्रविद्भिर्यथा प्रोक्त सर्वकाला- विरोधिनम् । पूर्वाह्ने सोपवासस्य स्नातस्यार्द्रपटस्य च । सशद्धस्याऽव्यसनिनः कोशपान विधीयते । इत्यत: शहूमानस्य देवब्राह्मणसन्निधाविति" । यगड्ढस प्रयत्नेन दिव्यकरणेऽभिष्टग्राद्युक्तस्य कोशपानम् । उग्रदेवता- स्नानोदकमान देवतास्नानोदकम् प्रसृतिवय पाययितव्यः विष्णु "उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात्प्रसृ- तित्रयं पिबेदिदमया न कृतमिति व्याहरन् देवताभिमुख " इति । यामवल्क्यार्ऽपि "देवानुग्रान् समभ्यर्च्य तत्स्ना- नोदकमाहरेत् । संस्नाप्य पाययेत्तस्माज्जलात्तु प्रसृतित्रय- मिति" । उग्रान्देवान्दुर्गादित्यादीन् । तेषामन्यतम देव माड्विवाकः सोपवासो गन्धपुष्पादिभि सम्पूज्य स्नापयि- त्वा तत्स्नानोदकं दिव्यदेयचयेदित्यर्थः । मीता च तत्र विधाय धर्म्मावाहनादि शोध्यशिरसि पत्रारोपणान्त सर्व- दिव्यसाधारणविधि विधाय देवतायतनसन्नौने मण्डलञ्च विधाय तत्र शोध्य प्राड्मुख स्थापयित्वा तमसत्ये नैतद्दि- व्यकरणे ऽभिष्ट सस्नाप्य जलविधानोक्तेन "तोय । त्वं प्राणिनं प्राणः" इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिर्दिष्टतोदकात् प्र-

प्रसृतित्रयं पाययेत् । शोध्यश्च जलविधानोक्तेन "सत्याम्बत-विभागश्च" इत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । तथा च नारदः "तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयमिति" । पितामहोऽपि "प्राङ्मुखं कारिणं कृत्वा पाययेत् प्रसृतित्रयम् । पूर्व्वोक्तेन विधानेन स्नानमार्द्राम्बरं शुचिमिति" । कारिणं दिव्यकारिणं शोध्यमिति यावत् । पूर्व्वोक्तेन तुलादिव्यसाधारणतया प्रागुक्तेनेत्यर्थः । नारदोऽपि "अर्च्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु । एनश्च स्नापयित्वा तु पाययेत् प्रसृतित्रयमिति" । एनः पापम् । तच्च तत्प्रमापाभिधानमुखेन तेनैव दर्शितम् । "स्वेच्छया यः पिबेत्कोषं कश्चिद्दूषितो नरः । न सन्देहरो लोभात् पात्री भवति दुर्म्मतिः । जानन् कामकारेण कोषम्पीत्वा विसर्ज्जयेत् । दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायते" इति । शिरस्केऽभियोगे अभियोक्तुः स्वाव्यमनिष्टमप्याह स एव "महात्कोषं हि यो दत्त्वा हितमिच्छेत चात्मनः । स विनाशो भवेत्तस्य तच्च कार्य्यं न सिध्यतीति" । एवं यस्य कस्यचिदुपदेवस्य स्नानोदकमाहृत्य कोषानुष्ठाने प्राप्ते नियमार्थमाह पितामहः "भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् । दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेदिति" । उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेऽपराधे पाययेत् । तथा च कात्यायनः "स्वल्पेऽपराधे देवानां पाययित्वाऽऽयुधोदकम् । पाथोविकारे चाशुद्धो नियम्यः शुचिरन्यथेति । पाथ्यं पायितश्च । नियम्यो दण्ड्यः । आयुधग्रहणं ताम्रादिनिर्म्मितादित्यमण्डलस्याप्युपलक्षणम् । अतएव बृहस्पतिः "यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् । प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति" । अत्र विशेषमाह पितामहः "दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम् । अन्येषामपि देवानां स्नापयेदायुधानि त्विति" । कृतकोषपानस्य किं तत्कालमेव शुद्धिर्नेत्याह कात्यायनः "अथ दैवविसम्वादस्त्रिसप्ताहात्तु दापयेत । अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव चेति" । दैवविसंवादः दैविकव्याध्युद्भवः । दैविकव्याध्यादीनपि स एव दर्शयति "ज्वरातिसारविस्फोटा गात्रास्थिपरिपीडनम् । नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते । शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति" । एतत्कालावधिं विष्णुरप्याह "यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा । रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा । तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययेत् । दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्म्मिको नृपः" इति । पितामहोऽपि "त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा । वैकृतं यस्य दृश्येत पापकृत्स तु मानवः । तस्यैकस्य न सर्व्वस्य जनस्य यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावनेति" । तद्रोगमैकतं कृतकोषपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न, किन्तु तदीयसर्व्वस्य जनस्य मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः । अतएव बृहस्पतिः "सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते । पुत्रदारधनानाञ्च स शुद्धः स्यान्न संशयः" इति । याज्ञवल्क्योऽपि "अर्व्वाक् चतुर्द्दशादह्नो यस्य नो राजदैविकम् । व्यसनञ्जायते घोरं स शुद्धः स्यान्न संशयः" इति । एतेषाञ्च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या । अवधेरूर्द्ध्वन्तु रोगाद्युद्भवेऽपि न पराजयः तथा च नारदः "ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् । नाभियोज्यस्तु विदुषा कृतकालव्यतिक्रमादिति" । अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्द्दशरात्रादूर्द्ध्वमपि वैकृतोत्पत्तौ पराजयः एवं त्रिरात्रसप्तरात्रयोः प्रागपि वैकृतोत्पत्तौ पराजय इति सिद्धम् ॥

१५ कोषशब्दार्थ्येषु वेदान्तप्रसिद्धेषु अन्नमयादिषु पञ्चसु पदार्थेषु अन्नमय प्राणमय मनोमय विज्ञानमय आनन्दमय इत्येते पञ्च पदार्था अनात्मका तेषामात्मतोविवेकार्थं वेदान्तिभिः कल्पिता । तत्र पञ्चकोषपद्धति विवेकचूडामणौ "देहोऽयमन्नभवनोऽन्नमयस्तु कोषश्चान्नेन जीवति विनश्यति तद्विहीनः । त्वक्चर्म्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः । पूर्व्वं जनेरपि मृतेरथ नायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैको जडश्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता । पाणिपादादिमान् देहो नात्मा व्यङ्गोऽपि जीवनात् । तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः । देहतद्धर्म्मतत्कर्म्मतदवस्थादिसाक्षिणः । स्वतएव स्वतःसिद्धं तद्वैलक्षण्यमात्मनः । कुल्यराशिर्म्मांसलिप्तो मलपूर्णोऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः । त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।

विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम्। देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवेऽविदुषस्त्वहंधीः। विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि। अत्रात्मबुद्धिं त्यज मूढबुद्धे। त्वङ्मांसमेदोऽस्थिपुरीषराशौ। सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं परमां भजस्व। देहेन्द्रियादावसति भ्रमोदितां विद्वानहन्तां न जहाति यावत्। तावन्न तस्यास्ति विमुक्तिवार्त्ताप्यस्त्वेष वेदान्तनयान्तदर्शी। छायाशरीरे प्रतिबिम्बगात्रे यत् स्वप्नदेहे हृदि कल्पिताङ्गे। यथात्मबुद्धिस्तव नास्ति काचित् जीवच्छरीरे च तथैव मास्तु। देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम्। यतस्ततस्त्वं जहि तां प्रयत्नात् त्यक्ते तु चित्ते न पुनर्भवाशा। कर्मेन्द्रियैः पञ्चभिरञ्चितोऽयं प्राणो भवेत् प्राणमयस्तु कोषः। येनात्मवानन्नमयोऽन्नपूर्णः प्रवर्त्ततेऽसौ सकलक्रियासु। नैवात्मापि प्राणमयो वायुविकारो गन्ता गन्ता वायुवदन्तर्बहिरेषः। यस्मात् किञ्चित् क्वापि न वेत्तीष्टमनिष्टं स्वं वान्यं वा किञ्चन नित्यं परतन्त्रः। ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात् कोषो ममाहमिति वस्तुविकल्पहेतुः। संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्वकोषमभिपूर्य्य विजृम्भते यः। पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्मनोमयाग्निर्दहति प्रपञ्चम्। न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः। तस्मिन् विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन् सकलं विजृम्भते। स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्वम्। तथैव जाग्रत्यपि नो विशेषस्तत्सर्वमेतन्मनसो विजृम्भणम्। सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित् सकलप्रसिद्धेः। अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति। वायुना नीयते मेघः पुनस्तेनैव नीयते। मनसा कल्प्यते बन्धो मोक्षस्तेनैव कल्प्यते। देहादिसर्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं पशुवद्गुणेन। वैरस्यमत्र विषवत् सुविधाय पश्चादेनं विमोचयति तन्मन एव बन्धात्। तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने। बन्धस्य हेतुर्मलिनं रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम्। विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै। भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे। मनो नाम महाव्याघ्रो विषयारण्यभूमिषु। चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः। मनः प्रसूते विषयानशेषान् स्थूलात्मना सूक्ष्मतया च भोक्तुः। शरीरवर्णाश्रमजातिभेदान् गुणक्रियाहेतुफलानि नित्यम्। असङ्गचिद्रूपममुं विमोह्य देहेन्द्रियप्राणगुणैर्निबध्य। अहंममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु। अध्यासदोषात् पुरुषस्य संसृतिरध्यासबन्धस्त्वमुनैव कल्पितः। रजस्तमोदोषवतोऽविवेकिनो जन्मादिदुःखस्य निदानमेतत्। अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः। येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम्। तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षुणा। विशुद्धे सति चैतस्मिन् मुक्तिः करफलायते। मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म। सच्छ्रद्धया यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः। मनोमयो नापि भवेत् परात्मा ह्याद्यन्तवत्त्वात् परिणामिभावात्। दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः। बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्तृलक्षणः। विज्ञानमयकोषः स्यात् पुंसः संसारकारणम्। अनुव्रजच्चित्प्रतिबिम्बशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः। ज्ञानक्रियावानहमित्यजस्रं देहेन्द्रियादिष्वभिमन्यते भृशम्। अनादिकालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा। करोति कर्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि। भुङ्क्ते विचित्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्द्ध्वमेषः। अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थासुखदुःखभोगाः। देहादिनिष्ठाश्रमधर्मकर्मगुणाभिमानः सततं ममेति। विज्ञानकोषोऽयमतिप्रकाशः प्रकृष्टसान्निध्यवशात् परात्मनः। अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमेण। योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्स्वयंज्योतिः। कूटस्थः सन्नात्मा कर्त्ता भोक्ता भवत्युपाधिस्थः। स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः। सर्वात्मकः सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव। उपाधिसम्बन्धवशात् परात्मा ह्युपाधिधर्माननुभाति तद्गुणः। अयोविकारानविकारिवह्निवत् सदैकरूपोऽपि परः स्वभावात्। शिष्य उवाच। भ्रमेणाप्यन्यथा वाऽस्तु जीवभावः परात्मनः। तदुपाधेरनादित्वान्नानादेर्नाश इष्यते। अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः। न निवर्त्तेत, तन्मोक्षः कथं ? मे श्रीगुरो ! वद।

श्रीगुरुरुवाच । सम्यक् पृष्टं त्वया विद्वन् ! सावधानेन तत् शृणु । प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना । भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थसम्बन्धो नभसो नीलतादिवत् । स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यगवोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीवभावो न सत्यो मोहापाये नास्त्यवस्तुस्वभावः । यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् । रज्ज्वां सर्पो भ्रान्तिकालीनएव भ्रान्तेर्नाशे नैव सर्पोऽपि तद्वत् । अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते । उत्पन्नायान्तु विद्यायामाविद्यकमनाद्यपि । प्रबोधे स्वप्नवत् सर्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् । अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः । यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि । जीवत्वं न ततोऽन्यस्तु स्वरूपेण विलक्षणः । सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः । विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं सम्यक् ज्ञानं श्रुतेर्मतम् । तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति । ततोविवेकः कर्त्तव्यः प्रत्यगात्मसदात्मनोः । जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् । यथा भाति, तथात्मापि दोषाभावे स्फुटप्रभः । असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत् प्रतीचः । ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः । अतोनायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः । दृश्यत्वात् व्यभिचारित्वात् नानित्योनित्य इष्यते”। आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६पृ० उक्तः। धननिचयात्मककोषस्य राज्याङ्गतामाह “स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते । सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्” मनु “स्वामी राजा अमात्योमन्त्र्यादिः । पुरं राज्ञः कृतदुर्गनिवासनगरं, राष्ट्रं देशः, कोषोवित्तनिचयः, दण्डो हस्त्यश्वरथपादातं, मित्रं त्रिविधं सप्तमाध्यायोक्तमित्येते सप्त प्रकृतयोऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते । ततः किमतआह सप्तानामिति । आसां राज्यस्य प्रकृतीनां सप्तानां क्रमिकोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याविनाशरूपं व्यसनं गरीयोजानीयात् । तथाहि मित्रव्यसनात् स्वबलव्यसनं गरीयः सम्यक्बलस्यैव मित्रानुपकारे सामर्थ्यात् । एवं बलात् कोषोगरीयान् कोषनाशे बलस्यापि नाशात् । कोषाद्राष्ट्रं गरीयः राष्ट्रनाशे सतः कोषोत्पत्तिः । एवं राष्ट्राद्दुर्गं गरीयो दुर्गादेव वयसैन्यनादिसम्पन्नाद्राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्व्वाङ्गवैकल्यात् । अमात्यादपि आत्मा सर्व्वस्यात्मार्थत्वात्” कुल्लू०

कोषसञ्चयस्यावश्यकता युक्तिकल्पतरौ दर्शिता यथा “कोषो महीपतेर्जीवो न तु प्राणाः कथञ्चन । द्रव्यं हि देहो भूपस्य न शरीरमिति स्थितिः । धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च । आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा । धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्म्मः कामश्चैव कथञ्चन । अधर्म्मान्निर्धनं कुर्य्यात्तद्धनं स्पृह्यते परैः । स्वयं पापस्य पात्रं स्यात् धिंहो हस्तिवधादिव । तादात्मिको मूलहरः कदर्य्यस्त्रिविधो ऽर्थकः । उत्पन्नार्थव्ययकरो योऽभविष्यन्नाशया । स तादात्मिक आख्यातः कल्याणी तस्य नायतिः । यः पित्राद्यर्ज्जितं वित्तमन्यायेन तु भक्षयेत् । स मूलहर आख्यातस्तदर्को ऽपि चाशुभः । स कदर्य्यस्तु भृत्यात्मपीडनैरर्थसञ्चयी । तद्धनं राजदायादतस्कराणां निधिर्भवेत् । कोषश्च राजकोषस्य स्तोकस्तोकेन वर्द्धते । अञ्जनस्य धनस्यैव स्तोकस्तोकेन क्षीयते । कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् । भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृत्तता । राष्ट्रोपायेन संरक्ष्या ग्रामे ग्रामे कृपीवलाः । तेभ्यः करमिततश्चार्था वर्षेभ्यः सर्व्वसम्पदः । शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा । तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः । एकस्यां गुणहीनायां क्षणिमन्यत्र कारयेत्” ।

तत्सञ्चयोपायाश्च भा० शा० ८८अ० दर्शिताः यथा “यदा राजावलस्थोऽपि कोषार्थे स्याम्महामते ।” इत्यादि युधिष्ठिरप्रश्ने भीष्मोक्तिः “यथादेशं यथाकालं यथाबुद्धि यथाबलम् । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः । यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत्” इत्युपक्रमे “मधुदोहमित्याद्युक्तं” तच्च करशब्दे १६८७पृ० दर्शितम् । तत्र ८०अ० इत्युक्तिः प्रामादिकी ८८अ० इत्येव साधु । ततः परं कियदन्तरे “प्रयोगं कारयेदुस्तान् यथा बलिकरास्तथा । अपिगोरक्षमाणिक्यं यथा न स्यात् किञ्चिदीदृशम् । पुरुषैः कारयेत्

माना:” भाग० ७।४।११ “कोश(ष)कृत् कोषकार” श्रीधर०

**कोश(ष)स्थ** पु० कोशे(षे)तिष्ठति स्था—क ७त० । सुश्रुतोक्ते शङ्खादिके जन्तुभेदे । “अथानूपवर्गस्तु पञ्चविधः” इत्युपक्रम्य कोशस्था इत्युद्दिश्य “शङ्ख शङ्खनख शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः पादिनश्च” इत्युक्त्वा कूर्मादींश्चोक्त्वा तन्मांसगुणा उक्ताः यथा “शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः”

**कोशा(षा)गार** न० ६त० । धनागारे (खाजनाघर) “कोशागारमायुधागारमश्वशालां हस्तिशालाश्च कुरु” भा० व० १६७ कोश(ष)टङ्कादयोऽप्यत्र न० [कच्छ] इत्युपभेदे हारा०

**कोशा(षा)ङ्ग** न० कोश(ष)इवाङ्गमस्य । शङ्खमूले इत्कटौ(श्रो०)

**कोशा(षा)तक** पु० कोश(ष)मतति अत—क्वुन् । १शठे वेदशाखाभेदे २पटोल्याम् घोषके (तरइ) (झोङा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष् । भाव० इयं राजसेव्यत्वात् महत्त्वाद्वा राजोपपदा निर्द्दिष्टा “धामार्गवः पीतपुष्पा जालिनी कृतवेधना । राजकोशातकी चेति तथोक्ता राजिमत्फला । राजकोशातकी शीता मधुरा कफवातला । पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत्” “कोशातकीफलैर्भवाऽप्यपक्वया तत्र च गुप्ताः सुष्टेन सस्वता । सम्भर्जिता सैन्धवहिङ्गुवाधिते तैलेऽतिरुच्या बहुपुष्टिदायका” तस्या फलम् अण् हरीतक्या० लुप् । तत्फले स्त्री “कोशातकीपुष्पगुच्छकान्तिभिः” म० भ०

**कोशा(षा)म्र** पु० को(षे)शे आम्र इव । १फलप्रधानवृक्षभेदे (कोशाम) “कोशाम्रः कुष्ठशोथासृक्पित्तव्रणकफापहः । तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् । पक्वं तु दीपनं रुच्यं लघूष्णं कफवातहृत्” भावप्र० । (केओड) २फलवृक्षे राजवल्लभः

**कोशि(षि)न्** त्रि० कोश(ष)+अस्त्यर्थे इनि । १कोश(ष)युक्ते आमोपपदकोषी तु सुश्रुतोक्ते कर्णवन्धनजे रोगभेदे “यस्तु आमस्तु यः कर्णं सहसैवाभिवर्द्धयेत् । आमकोषी समाख्यातः क्षिप्रमेव विपच्यते” । २आम्रवृक्षे पु० शब्दमाला ।

**कोशि(षि)ला** स्त्री कोश+अस्त्यर्थे पिच्छादित्वात् इलच् । शतपर्व्याम् राजनि०

**कोशी(षी)** स्त्री कुश—(कुष) अच् गौरा० ङीष् । १चर्म्मपादुकायाम् २धान्याद्यग्रभागे च (शुङ्गा) हेम०

**कोश्य(ष्य)** त्रि० कोशे हृदयकोशे(षे)भव यत् । हृदयकोश मांसपिण्डे “शिङ्घानि कोश्याभ्याम्” यजु० २५।८ “कोश्याभ्या हृदयस्य मांसपिण्डाभ्याम्” वेददी०

**कोष** पु० न० । कुष—पचादि० अच् । १कोशशब्दार्थे कोशशब्दे विवृतिः । २ऋषिभेदे । “अयोहृ कोषा शायदन्त शत० ब्रा० १०।५।५।८ “कोषानाम ऋषय” भा० ।

**कोषक** पु० कोष—स्वार्थे क । अण्डकोषे शब्दर०

**कोषला** स्त्री० कोष—कलच् । अयोध्यायां पुर्य्यां शब्दरत्ना०

**कोष्ठ** पु० कुष—थन् । १गृहमध्ये, २उदरमध्ये ३धान्यादिस्थापने ४कुसूले च (गुठी) ५आत्मीये त्रि० मेदि० “स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते” ६सुश्रुतोक्ते आमाग्निपक्वमूत्ररुधिरस्थाने “प्रवाहिका शिरः शूल कोष्ठशूलञ्च दारुणम्” “चले दोषे स्वदौ कोष्ठे मेघेतात्र बल न्नृणाम्” सुश्रु० “भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते” भा० आश्व० ७अ० “पतिं भार्य्योपतिष्ठेत च्छादयेत् कोष्ठगतं यथा” भा० शी० ६।१८। ५२ । प्रकृष्टधारादिचक्रचतुःपार्श्वस्थरेखाचतुष्कान्विते ७स्थानभेदे अकथहचक्रशब्दे २८२० पृ० दृश्यम् । ८पदे स्थानमात्रे “पञ्चारामं नवद्वारमेकपाल त्रिकोष्ठकम् । यत् पञ्चविषयम् क्षेत्रं पञ्चप्रकृतिरुत्तीश्वरम् । पञ्चेन्द्रियार्थारामा द्वारः प्राणा नव प्रभो । तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः । विषयास्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया” भाग० ४।२८।५१।५२,५२। कुसूले “जरत्कोष्ठाद्धीहीन्कूर्चराभिमिश्रानाहरति” कौषीत किब्रा०

**कोष्ठागार** न० कोष्ठमगारमिव । धान्यधनादेः स्थापने गृहे (कुठी) “कोष्ठागारायुधागारदेवतागारभेदकान्” मनु “कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः कुत्सहतम् । सदास्तु सन्तु सन्यस्तं धनधान्यपरोभव” भा० शा० ११८अ०

**कोष्ठागारिक** त्रि० कोष्ठागारे भव तत्र नियुक्तो वा ठन् । १कोष्ठागारभवे । “अत्यर्थं स्रवति रक्तं कोष्ठागारिकाद्वार मत्पिण्डत्वादि” सुश्रु० २कोष्ठागारे नियुक्ते च ।

**कोष्ठागारिन्** पु० कोष्ठरूपमगारमिवास्त्यस्य इनि । कीटभेदे “कोष्ठागारी क्रमिकश्च मण्डलपृष्ठक” सुश्रुते प्राणनाशककीटोक्तौ

**कोष्ण** न० ईषदुष्णम् को० कादेशः । १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः । “भुवं कोष्णेन पीनोष्मी निष्येनाऽध्यया दपि” रघु “इतेन वा शान्तिरुपैति लिङ्गा कोष्णेन यष्टीमधुकान्वितेन” “शोथं सतोदं कोष्णेन सर्पिषा परिषेचयेत्” सुश्रु०

कोसल पु० ब०व०। कुस–कलच्। देशभेदे। तेऽभिजनोऽस्य तेषां राजा वा ष्यञ्। कौसल्य पित्रादिक्रमेण तद्देशवासिनि बहुषु तस्य लुक् कोसलाः। कोशलशब्दे विवृतिः। कोसलदेशस्य द्विविधः पूर्वोत्तरभेदात् "कोसलाधिपतिं चैव तथा वेत्रातटाधिपम्। कान्तारकांश्च समरे तथा प्राक्कोसलान् नृपान्" भा० स० ३०अ० "दक्षिणाभे च पाञ्चालाः पूर्वाः कुन्तिषु कोसला" १२अ० उत्तरकोसलास्तु कोशलशब्दे दर्शिताः

कोहल पु० कौ कुलति स्पर्द्धते अच् पृषो०। १वाद्यभेदे मेदि० २मद्यभेदे च हेम० ३नाट्यशास्त्रकर्त्तृमुनिभेदे तस्यापत्यम् शिवा० अण्। कौहल तदपत्ये पुंस्त्री० डलयोरैक्यात् कोहडोऽप्यत्र

कोहनीय पु० ऋषिभेदे "उपयातायाघ्र्यमिति कोहनीयाः" गोभि० गृ०सू०। उपयातायाचार्य्यसमीपं गतायार्घ्यं देयमिति कोहनीया आचार्य्या आहुः" सं०त० रघुनन्दनः

कोहित पु०। ऋषिभेदे। ततोऽपत्ये शिवा० अण्। कौहित तदपत्ये पुंस्त्री०

कौकिली स्त्री कोकिलेन दृष्टा अण्। कोकिलदृष्टायां सौत्रामण्याम्। "द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च" कात्या० श्रौ०सू०।

कौकुट्टक पु० ब०व०। देशभेदे स च दक्षिणस्थः। "अथापरे जनपदा दक्षिणा भरतर्षभ" इत्युपक्रमे "कौकुट्टकास्तथा चोलाः कौङ्कणाः मालवानराः" भा० भी० ९अ०।

कौकुन्तक पु० ब० व०। जनपदभेदे।

कौकुर पु० ब० व०। कुकुराणां देशः अण्। १देशभेदे। "अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह" भा० सभा० ५१अ०। कुकुरा यादवभेदा एव स्वार्थे अण्। कुकुरवंश्ये २नृपभेदे। "श्रुत्वा निनदान् वार्ष्णेयान् स-भोजान्धककौकुरान्" भा० मौ० ५अ०।

कौकृत्य न० कुत्सितं कृत्यं स्वार्थे अण्। १अनुकरणे २अनुतापविषये च मेदि०।

कौक्कुटिक पु० कुक्कुटीं मायां, पादपतनदेशस्य पश्यति ठक्। १दाम्भिके, कीटादिवधभीत्या पादक्षेपस्थानमात्रदर्शिनि संन्यासिनि च मेदि०। सन्यासी हि हिंसाभयात् पादन्यासप्रदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य यातीति तथात्वम्।

कौक्कुटिकान्दल पुंस्त्री कुक्कुटस्यापत्यम् इञ् कौक्कुटि स इव कन्दल। (गेछोसाप) सर्पभेदे त्रिका० स्त्रियां ङीप्।

कौक्ष त्रि० कुक्षौ भवः अणिभिच। कुक्षिभवे खड्गादौ

कौक्षक त्रि० कुक्षौ देशभेदे भवः धूमा० वुञ्। कुक्षिदेशभवे

कौक्षेय त्रि० कुक्षौ भव "दृतिकुक्षीत्यादिना" पा० ढञ्। कुक्षौ भवे। "असिं कौक्षेयकाख्यम् चकारावनतं सुखम्" भट्टिः

कौक्षेयक पु० कुक्षौ बद्धः असिः ढकञ्। कृपाणे खड्गे "कौक्षेयकेण सविहितविषधरेणेव चन्द्रमसा" काद०। "नक्तीक्ष्णकौक्षेयक" दशकुमा०।

कौङ्क पु० कोङ्क एव स्वार्थे अण्। कोङ्कणदेशे शब्दरत्ना०

कौङ्कण पु० ब० व०। कोङ्कण+स्वार्थे अण्। १कोङ्कणदेशे "कौङ्कणाः मालवानराः" भा० भी० ९अ०। तस्य राजा अण् २तद्देशनृपे च।

कौङ्किण न० ब०व०। कोङ्कण+पृषो०। कोङ्कणदेशे शब्दर०।

कौक्ष पु० कुक्ष एव स्वार्थे अण् पृषो०। कौक्षपर्य्यन्ते त्रिका०।

कौञ्जायन्य पु० कुञ्जा० गोत्रापत्ये च्फञ् तत स्वार्थे ञ्य।

१कुञ्जर्षिगोत्रापत्ये स्त्रियान्तु न ञ्य किन्तु गोत्रप्रत्ययान्तत्वात् ङीप् कौञ्जायिनी सा च २आञ्जन्याम् जटाधर।

कौञ्जि पुंस्त्री० कुञ्जस्यर्षेरनन्तरापत्यम् अत इञ्। कुञ्जर्षेरनन्तरापत्ये स्त्रियां वा ङीप्।

कौट त्रि० कूटे वह्निगृहे भवः उत्सा० अञ्। १कुटजाते (कुरची) भावप्र० कुट्या माषभवः अण्। २स्वतन्त्रे त्रि०। कूटस्य भावः अण्। ३मिथ्याकथने ४मिथ्यासाक्ष्ये च

कौटकिक त्रि० कूटस्येव कूटकं मांसकूटं तत्पण्यमस्य ठक्। मांसविक्रेतरि शब्दरत्ना०

कौटज पु० कुटमेव कौटं तत्र जातः। कुटजवृक्षे राक्षसकुटः

कौटजभारिक त्रि० कुटजस्य भारं हरति वहत्यावहति वा वंशा० ठञ्। १कुटजभारहारिणि २तद्वाहके ३तदावहके च

कौटजिक त्रि० कुटजं भारभूतं हरति वहति आवहति वा ठञ्। भारभूतकुटजस्य १हारके २वाहके ३आवाहके च

कौटतक्ष पु० कौटः स्वतन्त्रः तक्षा टच् समा०। स्वतन्त्रे तक्षणि

कौटल्य न० कुट कमच् स्वार्थे ष्यञ्। कौटिल्यशब्दार्थे हेमच०

कौटसाक्ष्य न० कूटसाक्षिणोभावः कर्म्म वा ष्यञ्। मिथ्या-साक्ष्ये "कौटसाक्ष्यं तु कुर्वाण" मनुना सुरापानसमान-तोक्त्या तस्यातिपातकता। कौटसाक्ष्यदण्डश्च मनुना दर्शितो यथा

"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत् कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेत्। लोभान्मो-हाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बा-लभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने च, साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्या-

तुपूर्व्वशः। लोभात् सहस्रं दण्डास्तु मोहात् पूर्व्वन्तु साहसम्। भयाद्द्वे मध्यमे दण्ड्यो मैत्रात् पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिभिः। धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णान् धार्मिको नृप। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"।

**कौटि** पुंस्त्री कूटस्यापत्यम् इञ्। कूटस्य मिथ्यार्थविमोऽपत्ये स्त्रियां तु क्रौड्यादि॰ ष्यङ्। कौट्या

**कौटिक** त्रि॰ कूटेन मृगबन्धनयन्त्रेण चरति ठक्। १मांसविक्रयोपजीविनि अमरः। कूट+चतुरर्थ्यां कुमु॰ ठक्। कूटसन्निकृष्टदेशादौ त्रि॰।

**कौटिलिक** त्रि॰ कुटिलिका व्याधानां गतिभेदः कर्म्मारोपकरणभूतं लौहञ्च तया हरति मृगान् अङ्गारान् वा। "अण् कुटिलिकायाः" पा॰ अण्। १व्याधे २कर्म्मकारे च सि॰ कौ॰।

**कौटिल्य** न॰ कुटिलस्य भावः ष्यञ्। १वक्रीभावे "नित्यं कौटिल्ये गतौ" पा॰। "कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते" का॰प्र॰ तच्चोपपातकम् "कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्" या॰ स्मृते। उपपातकशब्दे विवृतिः। स्वार्थे ष्यञ्। २चाणक्यमुनौ पु॰ राजनि॰ "आकर्ण्य च प्रातस्। कौटिल्य—कुटिलमति स एष येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" मुद्राराक्षसम्

**कौटीगव्य** पुंस्त्री कुटीगोर्म्मुनिभेदस्य गोत्रापत्यम् गर्गा॰ यञ्। कुटीगोर्म्मुनेर्गोत्रापत्ये। तस्य छात्रः कण्वा॰ अण् यलोपः। कौटीगवः तच्छात्रे।

**कौटीय** त्रि॰ कूट+चतुरर्थ्यां कृशाश्वा॰ छण्। कूटसन्निकृष्टदेशादौ

**कौटीर्य्य** त्रि॰ कुटीरः केवल एव स्वार्थे ष्यञ्। केवले कुसहाये। कौटिरीर्य्यो यस्या। २दुर्गायाम् स्त्री "कौटीर्य्यां मदिरां चण्डामिलां मलयवासिनीम्" हरिवं॰ १७८अ॰

**कौटुम्ब** त्रि॰ कुटुम्बं तद्भरणं प्रयोजनमस्य अण्। कुटुम्बभरणोपयोगिद्रव्ये। आहरेदियत्तदृत्तौ "अन्यथा कौटुम्बम्" आश्व॰ गृ॰ सू॰ २,६,१०,

**कौटुम्बिक** त्रि॰ कुटुम्बे तद्भरणे प्रसृतः ठक्। कुटुम्बभरणे व्यापृते "कौटुम्बिकं क्रुध्यति वै जनाय" भाग॰ ५,५, १२,९,। कुटुम्बे भव ठक्। २कुटुम्बमध्यपातिनि। "यत्र कौटुम्बिका दारापत्यादयो नाम्ना, कर्म्मणा वृकसृगाला एव" भाग॰ ५,१४,५,

**कौट्या** स्त्री कूटस्यापत्यम् इञ् स्त्री कौटिः सैव क्रौड्या ष्यङ्। १कूटापत्यस्त्रियाम् कूट+चतुरर्थ्याम्। संकाशा॰ ण्य। २कौट्य कूटसन्निकृष्टदेशादौ त्रि॰

**कौठारिकेय** त्रि॰ स्वल्पा कुठारी कुठारिका तस्याः इदम् शुभ्रा॰ ढक्। स्वल्पकुठारसम्बन्धिनि

**कौडविक** त्रि॰ कुडवस्य वापः ठञ्। कुडववापयोग्ये क्षेत्रादौ कडवं तत्परिमितमन्नं सम्भवति पचति अवहरति वा ठक्। २स्वस्मिन् कुडवमितान्नसमावेशके कटाहादौ ३तत्पाचके सूदादौ ४तदवहारके च स्त्रियां ङीप्। कुडवः परिमाणमस्य ठञ्। ५कुडवपरिमिते। संख्यापूर्व्वकत्वे पूर्व्वपदस्य न वृद्धिः द्विकौडविकः। कर्षपूर्व्वकस्य तु वा वृद्धि आ(अ)र्द्धकौडविकः। असंज्ञायान्तु ठञोलुक्। द्विकुडवम् अर्द्धकुडवम् इत्यादि।

**कौड्येयक** त्रि॰ कुड्य—काकार्श्ये यत् संयोगादिलोपः कुड्या तत्र जातादि कत्त्र्या॰ ढकञ् "कुड्याया यलोपश्च" पा॰ ग॰ यलोपः। कार्कश्यकरणार्हायां भूमौ जातादौ

**कौणकुत्स्य** पु॰ ऋषिभेदे। "भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः" भा॰ आ॰ ८अ॰।

**कौणप** पु॰ कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य, अण् कुणपस्तद्भक्षणं शीलमस्य वा। राक्षसे अमरः "न कौणपाः शृङ्गिणो वा न देवा न च मा॰ आ॰ १७०अ॰ मानुषाः" स्त्रियां ङीष्

**कौणपदन्त** पु॰ कौणपस्य दन्ता इव दन्ता अस्य। भीष्मे त्रिका॰

**कौणपाशन** पु॰ कौणपानामशनमिवाशनमस्य। सर्पभेदे "हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः" भा॰ आ॰ ३५अ॰ नागनामोक्तौ

**कौण्डपायिन्** पु॰ ब॰व॰ कुण्डमेव कौण्डं तेन पिबन्ति सोमं पा—णिनि। सोमयागकारियजमानभेदेषु।

**कौण्डपायिन** न॰ कुण्डपायिनामिदम् अण् नि॰ प्रकृतिभावः। कुण्डपायिना (कुण्डेन सोमपायिनाम्) सम्बन्धिनि अयनरूपे सत्रभेदे कुण्डपायिनामयनशब्दे विवृतिः।

**कौण्डल** त्रि॰ कुण्डलमस्त्यस्य ज्योत्स्ना॰ अण्। कुण्डलयुक्ते त्रि॰ स्त्रियां ङीप्।

**कौण्डलिक** त्रि॰ कुण्डल+चतुरर्थ्यां कुमु॰ ठक्। कुण्डलसन्निकृष्टदेशादौ

**कौण्डाग्नक** त्रि॰ कुण्डस्येदमण् कौण्डे अग्नौ भवः वृद्धा॰ द्यग्न्युत्तरपदत्वात् वुञ्। कुण्डसम्बन्ध्यग्निभवे

**कौण्डायन** त्रि॰ कुण्डस्यादूरदेशादि पक्षा॰ चतुरर्थ्यां फक्। कुण्डसन्निकृष्टदेशादौ

**कौण्डिनेयक** त्रि॰ कुण्डिने जातादि कत्त्र्या॰ ढकञ्। कुण्डिननगरजातादौ

**कौण्डिन्य** पुंस्त्री कुण्डिनस्यर्षेर्गोत्रापत्यं गर्गा० यञ् । कुण्डिन गोत्रापत्ये । "कौण्डिन्यात् कौण्डिन्य" शत० ब्रा० १४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरकौण्डिनीपुत्रात् पाराशरकौण्डिनीपुत्रः" शत० ब्रा० १४।८।४।१०। वंशब्राह्मणे । कुण्डिनस्य युवापत्यम् गर्गा० यञि यञन्तात् फक् । कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री. "कौण्डिन्यायनाश्च कौण्डिन्यायनः" शत० ब्रा० १४।९।५।२०। कौण्डिन्यस्य छात्र कण्वा० अण् यलोपश्च । कौण्डिन कौण्डिन्यस्यच्छात्रे । बहुषु अणो लुक् कुण्डिनादेशश्च कुण्डिनाः । स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीप्यलोपौ कौण्डिनी ।

**कौण्डिल्यक** पु० १सुश्रुतोक्ते मशकस्पर्शविषे जन्तुभेदे विषमन्दे विवृतिः । २तत्रोक्ते कीटभेदे च कीटशब्दे विवृतिः

**कौण्डोपरथ** पु० । आयुधजीविसङ्घे तत स्वार्थे छ । कौण्डोपरथीय तदर्थे । "आक्रुष्टिगर्त्तशब्दास्तु कौण्डोपरथदाण्डकाः क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः" सि० कौ० । [ तस्कुतोभवे ।

**कौतस्कुत** त्रि० कुतः कुतोभवः अण् टिलोपः कस्का० । कु-

**कौतस्त** त्रि० कुतस्त्येभवः अण् नि० वेदे यलोपः । कुतस्त्यभवे । "कौतस्तावध्वर्यू परिमेजयथ अश्मेजयथ" पारा० ब्राह्म० ।

**कौतुक** न० कुतुकस्य भावः युवादि० अण् प्रज्ञा० स्वार्थे अण् वा । १कुतूहले अमरः । तच्च अद्भुतजिज्ञासातिशय । "कौतुकागारमागात्" कुमा० । २मङ्गलार्थहस्तसूत्रे शाश्वत "वैवाहिके कौतुकसंविधाने" कुमा० । ३उत्सवे ४अभिलाषे ५नर्म्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम० ।

**कौतूहल** न० कुतूहलस्य तदन्वितस्य भावः कर्म्म वा युवा० अण् प्रज्ञादि०स्वार्थे अण् वा । कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा० आ० ६२अ० । "महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथा प्रति" मार्क० ८।१।

**कौतूहल्य** न० कुतूहल+ब्राह्मणा० स्वार्थे ष्यञ् । कुतूहले

**कौतोमत** पु० कुतोमतस्यापत्यम् ऋष्यण् । ऋषिभेदे । "महद्धवाङ्कगौपत्य इति कौतोमतेन" मैत्रायणब्राह्मणम् ।

**कौत्स** पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण् । कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोऽहिष्वंरोति" आश्व० श्रौ० सू० १।२।५। "कौत्साय दत्त्वा कन्यान्तु हर्षां नाम यशस्विनीम्" भा० आर० १२७अ० । "कौत्स प्रपेदे वरतन्तुशिष्यः" रघु० । बहुषु तस्य लुक् । कुत्साः तदपत्येषु । कुत्सेन दृष्टं साम अण् । कुत्सर्षिदृष्टे विकृतिगाने गेये सामभेदे । तच्च साम देशाने १६प्र० २अर्द्धे १०साम्नम् । "कौत्सं भवति कामं भवति" श्रुतिः ।

**कौथुम** त्रि० कुथुमं वेदशाखाभेदमधीते वेद वा अण् । १कुथुमशाखाध्यायिनि तद्वेत्तरि च । तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या । यठकौथुमाः इत्यादि । "अनुवादे चरणानाम्" पा० द्वन्द्वे एकवत् प्रयोगात् कठकौथुमम् । "स्तेनोद्युवि" वार्त्ति० स्थाधातोरिणधातोश्च लुङ्प्रयोग एव तस्य तथात्व नियमितम् [ मङ्गवे०जातिशब्दे विवृतिः

**कौद्दालीक** पुंस्त्री० रजका तीयराज्जाते सङ्कीर्णवर्णभेदे

**कौद्रविक** न० कोद्रवो निमित्तमस्य ठञ् । सौवर्चललवणे, राजनि० [ धान्यभवनयोग्ये क्षेत्रे अमरः

**कौद्रवीण** न० कोद्रवस्य भवन क्षेत्रं कोद्रव+खञ् । कोद्रव

**कौद्रा(न्द्रा)यण** पुंस्त्री० कुद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञन्त कौद्रि (न्द्रि ) इञन्तत्वात् यूण्यपत्ये फक् । कुद्रि(न्द्रि) नामर्षेर्युवापत्ये तत अरीह० चतुरर्थ्यां वुञ् । कौन्द्रायणक तत्सन्निकृष्टदेशादौ त्रि०

**कौनख्य** न० कुनखिनोभावः ष्यञ् टिलोपः । कुत्सितनखरूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकचिह्नम् "सुवर्णचौरः कौनख्यम्" मनूक्तेः । [ निर्द्दशादौ

**कौन्तायनि** त्रि० कुन्ती+चतुरर्थ्यां कर्णा० फिञ् । कुन्ती-

**कौन्तिक** कुन्त प्रहरणमस्य ठञ् । कुन्तास्त्रे च युद्धकारके अमर । [ प्रधौ अमरः

**कौन्ती** स्त्री कुन्तिषु देशेषु भवा अण् ङीप् । सजगन्धिन्यो-

**कौन्तेय** पु० कुन्त्या अपत्यम् ढक् । १युधिष्ठिरादिषु त्रिषु । "कौन्तेय ! प्रतिजानीहि न मे कर्म्मफले स्पृहा" गीता २अर्ज्जुनवृक्षे राजनि० तस्य तत्सुल्यनामत्वात्तथात्वम् ।

**कौप** त्रि० कूपस्येदमण् । कूपसम्बन्धिनि जलादौ "क्षार पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" सुश्रुते तद्गुणा उक्ताः । "वसन्ते कौपं प्रास्रवणं वा पौष्मे वेवम्" सुश्रुतोक्तकाले तस्य सेव्यता । स्त्रियां ङीप् ।

**कौपीन** न० कूपे पतनमर्हति खञ् अकार्य्ये त्रि० । १अकार्य्ये २पापे, ३गुह्यप्रदेशे अमर ४चीरे त्रिका० ५मेखलाबद्धे वस्त्रखण्डे (कप्नी) मेदि० तदाचरणेन कूपे पतनात् तस्य तथात्वम् । अकार्य्य यदाच्छाद्यत्वात् ६पुरुषलिङ्गे शब्दचि०, तदावरकतया वस्त्रखण्डस्य कौपीनत्वम् । "कौपीनमपन्न खल् भाग्यवन्त" पुरा० "कौपीनाच्छादन यावत्तावदिच्छेत्,

चीवरम्" भा० आ० ६१अ० । "अमलाश्वस्य कौपीना सुहृदः सत्यजिष्णवः" भा०अनु०४६अ० । [रूपकोष० ।

**कौपोदकी** स्त्री कौमोदकी पृषो० । विष्णुगदायां हि-

**कौमार** पु० अपूर्व्वपतिकां कुमारीमुपपन्नः पतिः "कौमारापूर्व्ववचने" पा० नि० । अपूर्व्वपतिकायाः कुमार्य्याः १वोढरि । कुमारस्य भाव "प्राणभृज्जाति वयोवचनत्वात् अञ् । "जात कुं पृथिवीं पञ्चत्वं मारयेत् स कुमारकः । इति प्रधानतो विद्धि कौमारं प्रागभवावदत"" इत्युक्तायधिके "कौमारं पञ्चमावधि" इत्यन्ते २वयोवस्थाभेदे न० । "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता । "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने" मनुः । कुमार एव स्वार्थे अण् । ३कुमारे शब्दचिन्ता० । कुमारस्य सनत्कुमारस्येदम् अण् । ४सर्गभेदे पु० स च सर्गः सनत्कुमारादिसर्ज्जनपूर्व्वकत्वात् तन्नामकः । "कौमार आर्षः प्राजापत्योमानव इत्यादि सर्गनामानि" श्रीधरः । "सएव प्रथम देवः कौमारं सर्गमाश्रितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" भाग० १,३,७, "वैकारिकस्तु यः प्रोक्तः "कौमारस्तूभयात्मकः" भाग० ३,१०,२०,५, ५कुमारसम्बन्धिनि त्रि० "तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः" भा० व० ६५अ०

**कौमारायण** पुंस्त्री० कुमारस्य गोत्रापत्यं नडा० फक् । कुमारनामकर्षिगोत्रापत्ये । [कानीने

**कौमारिकेय** पुंस्त्री० कुमारिकाया अपत्यं शुभ्रा० ढक् ।

**कौमारी** स्त्री अपत्नीकं कुमारं पतिमुपपन्ना स्त्री "कौमारापूर्व्ववचने" पा०नि०ङीप् । १अगृहीतदारान्तरस्य पत्युः १भार्य्यायाम् । कुमारस्येयमण् ङीप् । २कुमारसम्बन्धिचेष्टादौ "कौमारीं दर्शयंश्चेष्टाम्" भाग०३,२,२८, कुमारस्य कार्त्तिकेयस्येयम् अण् ङीप् । ३कार्त्तिकेयशक्तौ । "कौमारी शक्तिहस्ता च मयूरवरवाहना । योद्धुमभ्याययौ क्रुद्धं रक्तबीजं महासुरम्" कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः" देवीमाहात्म्यम्

**कौमुद** पु० "कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तितः" इत्युक्तलक्षणे १कार्त्तिकमासे । "एतैरन्यैश्च राजेन्द्र पुरा मास न भक्षितम् । शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः । कौमुदं तु विशेषेण शुक्लपक्षं नराधिप ।। वर्ज्जयेत् सर्व्वमांसानि धर्म्मोह्यत्र विधीयते" म०त०भार०

**कौमुदी** स्त्री कुमुदस्येयं प्रकाशकत्वात् प्रिया अण् ङीप् । १ज्योत्स्नायाम् अमरः । "शशिना सह याति कौमुदी" "कुमा० १तद्वत्प्रकाशिकायाम् "त्वमस्य लोकस्य च नेत्रकौमुदी" कुमा० कौमुदस्येयम् अण् ङीप् । "कुशब्देन मही ज्ञेया मुद हर्षे० ततोद्वयम् । धातुज्ञैर्नियमैश्चैव तेन सा कौमुदी स्मृता" इत्युक्तायां २कार्त्तिकपौर्णमास्या "कौ मोदन्ते जनायस्यामानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तायाम् ३आश्विन पौर्णमास्याम् "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि कौमुदी सा समाख्याता कार्य्या लोकविभूतये" ति० त० लिङ्गोक्ते । ४दीपोत्सवतिथौ दीपोत्सवतिथिं प्रकृत्य भविष्योत्तरे "कौ मोदन्ते जनायस्यां तेन सा कौमुदी मता" "सखीजनोद्वीक्षणकौमुदीमुखम्" रघुः कौमुदी दीपोत्सवतिथिः" इति मल्लि०" ५उत्सवे शरदि" ६कार्त्तिकोत्सवे त्रिका० । स्वार्थे क । ह्रस्वे कौमुदिका ज्योत्स्नायाम् । संज्ञायां कन् । ७मासखीभेदे शब्दरत्ना० कुमुद+चतुरर्थ्यां कुमुदा० ठक् । कौमुदिक कुमुदसन्निकृष्टदेशादौ त्रि०

**कौमुदीचार** पुंन० कौमुद्या ज्योत्स्नाया चारः प्राशस्त्यमत्र काले । आश्विनपौर्णमास्याम् त्रिका०

**कौमुदीपति** पु० ६त० । चन्द्रे हारा० कौमुदीनाथादयोऽप्यत्र

**कौमुदीवृक्ष** पु० कौमुद्याः प्रकाशिकायाः दीपशिखाया वृक्ष इवाधारः । दीपवृक्षे (पिलसुज्) हारा०

**कौमोदकी** स्त्री कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण् । विष्णुगदायाम् अमरः "कौमोदकी मोदयति स चेतः" माघः । "देवैरनादिवीर्य्यस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमुदकीति सा" हरि० ६२अ०

**कौमोदी** स्त्री कुं मोदयति अण् कुमोदः विष्णुस्तस्येयमण् ङीप् । विष्णुगदायाम् शब्दरत्ना०

**कौम्भकारि** पुंस्त्री० कुम्भकारस्यापत्यं शिल्पित्वात् पक्षे इञ् । कुम्भकारापत्ये स्त्रियां वा ङीप् । पक्षे ञ्य । कौम्भकार्य्य तत्रार्थे ।

**कौम्भायन** त्रि० कुम्भस्य सन्निकृष्टदेशादि पक्षा० फक् । कुम्भसन्निकृष्टदेशादौ [ष्टदेशादौ

**कौम्भायनि** त्रि० कुम्भ+चतुरर्थ्यां कर्णा० फिञ् । तत्सन्निकृ-

**कौम्भेयक** त्रि० कुम्भ्यां जातादि कत्त्र्या० ढकञ् । कुम्भ्यां जातादौ [कृष्टदेशादौ

**कौम्भ्र** त्रि० कुम्भ+चतुरर्थ्यां सङ्काशा० ण्य । कुम्भसन्नि-

**कौरयाण** पु० कुरयाणस्य (शत्रुं प्रति कृतयानस्य) अयम् अण् वेदे पृषो०, शत्रुं प्रति कृतयानस्य सम्बन्धिनि तत्पुत्रादौ

"पाञ्चस्य मा कौरवाण ऋ०८।७।२।तद्ब्राह्मणे तदार्थीक्ते

कौरव पुंस्त्री० कुरोरपत्यादि उत्सा० अञ्। तद्देशस्य राजा
वा अण् तेषु भवो वा अण्। १कुरुवंश्ये "तस्यान्वयाय ग्रम
यात् यस्य नाम्ना स्म कौरवाः। कुरोस्तु प्रजापदस्तार"
हरिव० ३२अ०। २तद्देशान्तपे पु० ३कुरुसम्बन्धिनि ४तद्दे-
शभवे च त्रि०। स्त्रियां ङीप्। "दृष्ट्वा कौरवान् दृष्टा
यावाश्रवसमन्तत। शरजालेन महता मोहयन् कौरवीं
चमूम्" भा० आ० १२८अ० "धीरं चक्षुष्मतिविशुभ
कौरव तद्भजेथाः" मेघदूतम्।

कौरवक त्रि० कुरौ तद्वंशे जातादि "विभाषा कुरुयुगन्धरा-
भ्यां" पा० वा वुञ्। १कुरुवंशोद्भवे। पक्षे कच्छादित्वात् अण्। २कौर-
वकसम्बन्धिनि

कौरवायणि पुंस्त्री कुरोरपत्यम् तिका० फिञ्। कुरुवंश्ये

कौरवेय पुंस्त्री कुरोरपत्यं शुभ्रा० ढक्। कुरुवंश्ये। "ममापि
कौरवेयाणां यच्च ते चैव पुत्रक।" भा० आ० १४२अ०।
"विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत।" भा० व०
८५अ०।

कौरव्य पुंस्त्री० कुरोरपत्यम् कुर्व्वादि० ण्य। १कुरुवंश्ये।
"कौरव्याः पशव प्रियापरिभवक्लेशोपशान्तिः फलम्"
वेणीसं०। तस्यापत्य तिका० फिञ्। कौरव्यायणि
कुरुकुलोत्पन्ने ब्राह्मणादौ ऽपत्ये पुंस्त्री कुरूणां राजा
ण्य। २कौरव्य कुरुदेशराजे। स्त्रियां ङीप् कौरवी
स्त्री। ण्यान्तत्वात् युन्यपत्ये फिञो लुक्। कौरव्य
पिता पुत्रश्च सि० कौ०।

कौरुकत्य पुंस्त्री कुरुकतस्यर्षेरपत्यम् गर्गा० यञ्। कुरु-
कतस्यर्षेरपत्ये युवापत्ये फिञ्। कौरुकत्यायनि तदीय
युवापत्ये पुंस्त्री

कौरुज(ज्ञ)ङ्गल त्रि० कुरुजङ्गले जातादि अण् उत्त-
रपदस्य वा वृद्धिः। कुरुजङ्गलभवे

कौरुपाञ्चाल त्रि० कुरुपञ्चालदेशे प्रसिद्ध अण् उभयपद
वृद्धि। कुरुषु पञ्चालेषु च प्रसिद्धे। "प्रजाता कौरुपा-
ञ्चाल यशस्त्वम्बन्नम्" शत०ब्रा० १,७,२,८, कौरुपाञ्चाली
वा स्य वदा ११।४।१।२।

कौर्च्य पु० "किंशतायुर्जितमकौरवेयपावेययूककौपी-
व्या। तौषिकधाकौकेरौ छद्रोगवान्यभं वेत्सम्"
दीपिकोक्ते स्थिकराणि।

कौर्म्म न० कूर्म्ममधिकृत्य कृतो ग्रन्थो अण्, कूर्म्मस्येदम् अण्
वा। १कूर्म्मपुराणे २कूर्म्मसम्बन्धिनि त्रि०।

कौल त्रि० कुले भव शैषिक अण्। सत्कुलभवे १कुलीने
शुचि तु कौलेयक इत्येव। कुले कुलाचारे रत स वेति
वा अण्। २तन्त्रोक्तकुलाचाररते ३तदाचारवेदिनि
च। "दिव्यभावरत कौल सर्व्वत्र समदर्शन" कुला-
र्णव। "पशोर्दर्शनाद्भ्रमन्त. पशुरेव न संशय। वीरा-
द्भ्रमनन्धौरे कौलात् सद्यःशुद्धिर्भवेत्" महानीलतन्त्रम्।
कुल कुलाचारमधिकृत्य कृतो ग्रन्थ अण्। ४कुलाचार-
मर्म्मके ग्रन्थे कौलोपनिषदादौ।

कौलक त्रि० कुले भव सौवीर धूमा०वुञ्। कुलभवे सौवीरे

कौलकेय त्रि० कुले सत्कुले भव या० ढक् कुक् च। १सत्-
कुलोद्भवे। कौलटेय+पृषो०। २असतीपुत्रे पुंस्त्री शब्दरत्ना०।

कौलटिनेय पुंस्त्री भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च।
सत्या भिक्षुक्या अपत्ये अमर स्त्रियां ङीप्

कौलटेय पुंस्त्री कुलटाया सत्या असत्या वा अपत्यम् ढक्।
सत्याः असत्याश्च भिक्षुक्या अपत्ये अमर। स्त्रियां ङीप्।

कौलटेर पुंस्त्री कुलटाया असत्या अपत्यम् आचारेण क्षुद्र-
त्वात् ("क्षुद्राभ्य ") पा० ढ्रक्। बन्धक्या अपत्ये अमर।

कौलत्थ त्रि० कुलत्थेन संस्कृतम् अण्। कुलत्थसंस्कृते "पा-
ययेच्चाम्लकौलत्थसुरासौवीरकादिभि" सुश्रु०।

कौलत्थीन न० कुलत्थस्य भवन क्षेत्रम् खञ्। कुलत्थोत्प-
त्तियोग्ये क्षेत्रे

कौलपुत्रक न० कुलपुत्रस्य भाव मनोज्ञा० वुञ्। कुलपुत्रभावे

कौलव पु० बवादिषु तृतीये तिथ्यर्द्धरूपे करणभेदे।
करणशब्दे १६६० पृ० विवृति

कौलालक त्रि० कुलालेन कृतं संज्ञायां वुञ्। कुलालकृते
शरावादौ असंज्ञायान्तु अण् कौलाल तत्कृते। तस्येदमण्
कौलाल तत्सम्बन्धिनि त्रि० "रथचक्र वा कौलालचक्र
वा" शत० ब्रा० ११।८।४।१

कौलिक त्रि०कुलादागत ठक्। १कुलपरम्परागते आचा-
रादौ। कुले कुलागमे सिद्ध ठक्। तन्त्रोक्ते २कुलाचा-
रे। कौल कुलधर्मं प्रवर्त्तयति ठक्। ३कुलधर्म्मप्रवर्त्तके
शिवे। शब्दमा०। ४पाषण्डे त्रिका०। कुल तदाचार
प्रयोजनमस्य ठक् ।५कौले तन्त्रविदि "गच्छ कौलिक "श्रुतिः

कौलितर पु० कुलितरस्यापत्यम् ऋष्यण्। शम्बरासुरे "उत
दास कौलितर बृहत पर्व्वतादधि। अवाहन्निन्द्र शम्ब-
रम्" ऋ०४।३०।१४ कुलितरनाम्नोऽपत्य शम्बरमसुरम् भा०

कौलिशायनि त्रि०कुलिश+चतुरर्थ्यां कर्णा० फिञ् कुलिश
सन्निकृष्टदेशादौ

कौलिशिक त्रि० कुलिश+अङ्गुल्या० इवार्थे ठक्। कुलिशसदृशे

कौलीन त्रि० कौ पृथिव्यां लीनः ७त०अलुक् स०। १भूमिलग्ने। कुलादागत खञ्। २कुलक्रमागते "स्वत्व द्रयमर्थीश्च कौलीनं नायवर्त्तत" रामा०आ०८७अ०। ली-भावे क्त कौ लीन लयो यस्मात्, कुलीन भूमिलग्नमर्हति अण् वा। भूमिलग्नताभावने ३अपवादे "कौलीनमात्माश्रयमाचचक्षे" "कौलीनभीतेन गृहान्निरस्ता" रघु० "मा कौलीनादसितनयने! मय्यविश्वासिनी भूः" मेघ अपवादे हि भूमिलग्नद्रव लोकोभवतीति तस्य तथात्वम्। ४गुह्ये ५जन्ये (युद्धे) ६कुकार्ये ७पशुसर्पाणां युद्धे च न०मेदि० तेषां भूमिलग्नताभावनत्वात्तथात्वम्।

कौलीरा स्त्री कुलीर तस्येवाकारोऽस्त्यस्याः अच्। कर्कटश्ङ्गाम् (काँकडाशिङ्गा) राजनि०

कौलेय त्रि० कुले+भवः वा० ढक्। सत्कुलोत्पन्ने भरतः

कौलेयक पु० कुले भवः स्वा ढकञ्। १कुलागते कुक्कुरे। अमरः २सत्कुलीने मेदि०।

कौलेशभैरवी स्त्री त्रिपुराभैरवीभेदे। "सम्पत्प्रदाभैरवीवत् विद्धि कौलेशभैरवीम्। कूर्चाद्या सैव देवेशि! त्रिषु लोकेषु पार्वति!" ज्ञानार्णव। "त्रिकूटे कूर्चाद्यायेत् तदा कौलेशभैरवी भवति" तन्त्रसार

कौल्मापिक त्रि० कुल्माषे साधु ठञ्। कुल्माषसाधने

कौल्माषीण न० कुल्माषाणां भवन क्षेत्रम् खञ्। कुल्माष धान्योत्पत्तियोग्ये क्षेत्रे

कौल्य त्रि० कुले भव ष्यञ्। सत्कुलीने द्विरूपकोषः।

कौवल न० कुवलमेव प्रज्ञा०स्वार्थे ण। कोलिफले द्विरूपको०।

कौविदार्य्य त्रि० कोविदार+चतुरर्थ्यां प्रगद्या० ञ्य। कोविदारसन्निकृष्टदेशादौ।

कौवेर त्रि० कुवेरस्येदम्, कुवेरोदेवताऽस्य वा अण्। १कुवेर संबन्धिनि २तद्देवताके च "कौवेरमथ याम्यञ्च पश्चाते वरुणस्य च" देवीमा०। "यातं बभार कौवेरम्" रघु०। "कौवेरदिग्भागमपास्य मार्गम्" माघ। स्त्रियां ङीप्। "दिग्विभागे तु कौवेरी दिक् प्रियामीतिदायिनी" ति०त० पु०। "ततः प्रतस्थे कौवेरीम्" रघु। ३कुष्ठद्रव्ये (कुड़) न० शब्दरत्ना०। [रिकाया अपत्ये।

कौवेरिकेय पुंस्त्री० कुवेरिकाया अपत्यम् शुभ्रा०ढक्। कुवे-

कौश न० कुशा भूम्ना सन्त्यत्र अण्। १कान्यकुब्जदेशे हेमच०। स्वार्थेऽण्। २कुशद्वीपे "शाक ततः शाल्मलमत्र कौशम्" सि० शि०। कशयस्तं २४९पृ० विवृतिः। कुशस्येदं तद्विकारो वा अण्। ३कुशसम्बन्धिनि ४तन्मयविकारादौ। "तत्र वासाय शयने कौशे सुखसुवास ह" भा०अनु० १६अ०। स्त्रियां ङीप्। "कौश्यां वृष्यां शतसीनम्" भा० अनु० ५४अ०

कौशल न० कुशलस्य भावः युवा० अण्। दक्षतायाम् "सीमेव पद्मासनकौशलस्य" भट्टिः। "आन्वीक्षिकी कौशलानाम्" "योगः कर्मसु कौशलम्" गीता। "छायच्छायि च्छुरितं वचनानां कौशलं दृशि विकारविशेषः" माघ

कौशलिपुंस्त्री० कुशलाया अपत्यं बाह्वा० इञ्। कुशलाया अपत्ये स्त्रियां वा ङीप्। यून्यपत्ये फञ्। कौशलायनः तदीययुवापत्ये पुंस्त्री

कौशलिका स्त्री कुशलस्य प्रश्नः ठक्। १कुशलप्रश्ने। कुशलाय मङ्गलाय दीयते ठक्। २उपायने उपढौकने। त्रिका०। [ढौकने २कुशलप्रश्ने च त्रिका०।

कौशली स्त्री कुशलाय दीयते तस्य प्रश्नः वा अण्। १उप-

कौश(स)लेय स्त्री कौश(स)ल्याया अपत्यं ढक् यलोप। श्रीरामे दशरथपुत्रे

कौशल्य न० कुशलमेव ब्राह्मणा०प्यञ्। १कुशले। भावे ब्राह्म० ष्यञ्। २दक्षतायाम्। "दृष्टा कौशल्यमन्योन्यं रथेष्वेवावतस्थिरे" भा० व० २४४अ०

कौश(स)ल्या स्त्री कोश(स)लदेशे भवा ञ्य। कोश(स)लदेशभवायां श्रीराममातरि दशरथपत्नीभेदे। [द्योऽस्य।

कौश(स)ल्यातनय पु० ६त०। सीतापतौ श्रीरामे तत्सुता-

कौश(स)ल्यायनि पु०कौश(स)ल्यायाअपत्यम् फिञ्। श्रीरामे त्रिका० "श्रियामहे न गच्छाम कौश(स)ल्यायनिसन्निभम्" भट्टिः। कौश(स)ल्य पत्यापेक्षता जयमङ्गलयाक्ता।

कौशाम्ब त्रि० कुशाम्बेन निर्वृत्त अण्। १कौशाम्बराजकृते २तत्कृते पुरीभेदे स्त्री ङीप्। "कुशाम्बस्तु महातेजा कौशाम्बीमकरोत् पुरीम्" रामा०। सा च पुरी गौडदेशान्तर्गतवत्सभूमिगता। "अस्ति वत्स इति ख्यातोदेश इत्युपक्रमे" कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी" कथासरित्सागर। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो०। "निम्नकौशाम्बि" सि०कौ०

कौशाम्बेय पुंस्त्री कुशाम्बस्य गोत्रापत्यम् शुभ्रा०ढक्। कुशाम्बापत्ये

कौशिक न०कुशिकस्यापत्यं अपत्यत्र कुशेन हतः अध्या० ठञ्। कुशके तद्देशे भव अण् वा। १इन्द्रे २पेचके पुंस्त्री० उभयत्र "अगकुवन् सोढुमधीरलोचन सहस्ररश्मेरिव

अस्य दर्शनम् । प्रविशत्र हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः” माघ । इन्द्रस्य कुशिकपुत्रत्वप्राप्तिकथा “कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम् । लभेयमिति त शक्रस्त्रासादभ्येत्य जज्ञिवान् । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० १अ० । “कुशिकस्तु तपस्तेपे” इत्युपक्रम्य “सहस्रे वत्सरे पूर्णे दृष्ट्वा महाह पुरन्दरः । समर्थः पुत्रजनने स्वमेवांशमधारयत् । पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० २७अ० । कुशैर्वृतत्वाद्वा कौशिकत्वमस्य यथाह तत्रैव “जातमात्रस्तु भगवानदित्या स(शक्र)कुशैर्वृतः । तदा प्रभृति देवेश कौशिकत्वमुपागतः” हरि० २२७अ० । ३गुग्गुलौ ४व्याडव्यालग्राहिणि (सापुड़े) अमरः । ५नकुले ७कोषाध्यक्षे मेदि० । ८कोषकारे शब्दरत्ना० ९शृङ्गाररसे त्रिका० १०मज्जनि हेम० ११अश्वकर्णवृक्षे राजनि० । कुशिकस्य गोत्रापत्यम् विदा० अञ् । १२विश्वामित्रमुनौ स हि कुशिकपुत्रस्य गाधेरपत्यम् । कुशिकशब्दे तन्मूल दृश्यम् । “अपिबत्तत्र सोममिन्द्रेण सह कौशिकः” भा० आ० १७५अ० । १३परीक्षितस्य नृपभेदे । “पारीक्षितस्य द्वौ पुत्रौ” इत्युपक्रमे “प्रतिष्ठायाश्च द्वौ पुत्रौ पैप्पलादिश्च कौशिकः” हरिवं० १६१अ०। जरासन्धनृपस्य हंसनामके १४सेनापतिभेदे “स तु (जरासन्ध)सेनापती । राजा बभूव भरतर्षभ ।। कौशिकश्चित्रसेनश्च तस्मिन् युद्धे उपस्थिते । ययोस्ते नामनी राजन् हंसेति डिम्भकेति च” भा० स० २१अ०। तस्य च कौशिकवंश्यत्वात् तथात्वम् । १५असुरभेदे “खड्ग- शा- लवदनः करालः कौशिकः शरः” हरिवं० ४२अ० । कुशिकवंशोद्भवत्वात् १६नदीभेदे स्त्री तस्या उत्पत्तिकथा रामा० आ० ३४अ० “कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ! । पूर्वजा भगिनी चापि मम राघव ! सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता । सशरीरा गता स्वर्गं भर्त्तारमनुवर्त्तिनी । कौशिकी परमोदारा प्रवृत्ता च महानदी । दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम । ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्या रघुनन्दन । सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा” “तत्र मासं वसेद्धीर ! कौशिक्यां भरतर्षभ ! । अश्वमेधस्य यत् पुण्यं तन्मासेनाधिगच्छति” भा० व० ८१अ० । “कुशिकस्याश्रमं गच्छेत् सर्वपापप्रमोचनम् । कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम् । राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः” तत्रैवाध्याये । “इयञ्च नदी हिमवतो निःसृता चम्पानगरसन्निकृष्टे उत्तरपारे गङ्गायां सङ्गता । “ततो गच्छेत राजेन्द्र ! चम्पकारण्यमुत्तमम्” ततद्रुत्य क्रोडस्थास्तत्सन्निकृष्टत्वम् । १७यशोदाकन्यात्वेनोत्पन्नायां योगमायायाम् ।- कौशिकेन्द्रेण भगिनीत्वेन कल्पनेन विष्णुना तस्यास्तन्नामकरणात्तथात्वं यथोक्तम् “तत्र त्वां शतदृक् शक्रो मत्प्रदिष्टेन कर्म्मणा । अभिषेक्ष्यति दिव्येन दैवतैः सह योक्ष्यसे । तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः । कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि” हरिवं० ५८अ० योगमायां प्रति विष्णूक्तिः । “आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी” भा० हरि० ५८अ० । पार्वत्याः शरीरकोष(षा)त् निःसृते १८देवीमूर्त्तिभेदे तस्य च शुम्भनिशुम्भवधकारिणीति भेदः तन्मूलं देवीमाहात्म्यवाक्यं तत्र कोषशब्दे दर्शितं नाट्ये २०वृत्तिभेदे अलङ्कारशब्दे सात्वतादिक दृश्यम् [ तथात्वम्

**कौशिकप्रिय** पु० ६त० । श्रीरामे विश्वामित्रप्रियाचरणात्तस्य

**कौशिकफल** कौशिकं कोषस्थं फलमस्य । नारिकेले शब्दरा०

**कौशिका** स्त्री कोषस्य स्वार्थे क अतइत्वम् । पानपात्रे चषके हेम० [ यज्ञमाला १विश्वामित्रपुत्रे च

**कौशिकात्मज** पु० ६त० । १इन्द्रपुत्रे जयन्ते २अर्जुने च

**कौशिकायनि** पु० कुशिकस्यापत्यम् या० फिञ् । यजुर्वेदवंशब्राह्मणस्थे ऋषिभेदे “औपिष्टायनेः कौशिकायनि” शत० ब्रा० १४।५।५।२१

**कौशिकायुध** न० ६त० । इन्द्रधापे शब्दमा०

**कौशिकाराति** पु० ६त० । १काके राजनि० तस्य पेचकारातित्वं च तेन सह नित्यविरोधित्वात् । तत्कथा काकोलूकशब्दे दृश्या कौशिकारिरप्यतयोऽप्यत्र पु०

**कौशिकिन्** पु० ब० व० कौशिकेन प्रोक्तमधीयते णिनि । विश्वामित्रप्रोक्ताध्यायिषु

**कौशिकेष्ट** पु० कौशिक्या इव ओजोऽस्य पृषो० सलोप । कारस्कटरके (चिरोड़ा) राजनि०

कौशिज पु० ब० व० देशभेदे "पश्चात्ता कौशिजाश्चैव नैकपृष्ठाः धुरन्धराः." भा० भी० ६अ० जनपदकथने

कौशे(षे)धान्य न० कोशे(षे)भवा कौशी(षी) कर्मधा०। कोश(ष)जाते धान्ये शिम्बादौ। "सर्वमेवैतदहः कौशी(षी)धान्यं विवर्जयेत्" आश्व०श्रौ० २।१।१६

कौशे(षे)य न० कोश(ष)दुत्थितम् ढक्। क्रमिकोषादिजाते वस्त्रे अमरः "निर्नाभि कौशे(षे)यमुपात्तबाणम्" कुमा० "कौशेयं व्रजदपि गाढतामजस्रम्" माघ "लाक्षालोहितकौशे(षे)यपरिधानम्" काद० "कौशेयाविकयोरूषैः" मनुना तच्छोधनद्रव्यमुक्तम्

कौश्य त्रि० कुशस्येदम् यञ्। १कुशसम्बन्धिनि शयनार्हे "प्रास्तान्दृश्यने कौश्ये दृष्ट्वा शयमिव कुषम्" भा० अनु०७१अ०। कुशस्य गोत्रापत्यं वा यञ्। २कुशगोत्रजे ऋषिभेदे पु० "त होवाच सुश्रवाः कौश्यः" शत०ब्रा० १०।५।५।४ "कौश्य कुशगोत्रज" भा०। तेन ब्राह्मणे कौश्य इति मूर्द्धन्ययुक्तपाठस्तु प्रमादिकः।

कौशा(सा)रव पु० कुशा(षा)रोरपत्यम् ऋष्यण्। कुशा(षा)रोर्मुनेरपत्ये मैत्रेये "याबतः कृतवान् प्रश्नान् क्षत्ता कौशारवात्मनः" भाग०३।१।३।२ "कौशारवस्य मैत्रेयस्याग्रतः" श्रीधरः "ननु ते तत्त्वमराध्य ऋषिं कौशारवोऽन्तिमे" भाग० ३।४।३ बाह्वा० इञ्। कौशारविरप्यत्र "यत कौशारविस्तस्य सकाशेऽध्यात्मसम्मतः" भाग०२।१०।५२

कौषिकी स्त्री० कौषिक+ङीप्। १कौषिकशब्दार्थे मेदि०२दुर्गामूर्त्तिभेदे स्त्री "शरीरकोषाद्यत्तस्याः पार्वत्याः निःसृताम्बिका। कौशिकीति समाख्याता ततो लोकेषु गीयते" देवीमा० "कायकोषाच्च सृता या कालिकायास्तु भैरव!। सा कौषिकीति विख्याता चारुरूपा मनोहरा" कालिका० पु० ६०अ०

कौषीतक पु० कुषीतकस्यापत्यम् ऋष्यण्। कुषीतकर्षिपुत्रे बहूचां मध्ये तद्गोत्रे ऋषिभेदे कहोडे "कहोड कौषीतकमित्यादि" आश्व० ग्ट० ३।४।३।२२ ऋषितर्पणे। कुषीतकस्यापत्यम् इञ्। कौषीतकिरपि कहोडे ऋषौ "तद्धोवाच कहोड़ कौषीतकि" शत०ब्रा० २।४।२।१। तत्प्रणयनसम्बन्धित्वात् कौषीतकिब्राह्मणं कौषीतकी उपनिषच्च ऋग्वेदान्तर्गता।

कौषीतकिन् पु० ब० व०। कौषीतकेन प्रोक्तमधीयते णिनि। कौषीतकेन प्रोक्ताध्यायिषु। "सदस्य सप्तदशं कौषीतकिनः समामनन्ति" आश्व०गृ०।।२३।५।

कौ(षी)तकी कुषीतकस्यापत्यम् ऋष्यण् ङीप्। अगस्त्य पत्न्यां त्रिका०

कौषीतकेय पुंस्त्री कुषीतक+वा० अपत्ये ढक्। कुषीतकस्यापत्ये कहोडे "अथ हैनं कहोडः कौषीतकेयः पप्रच्छ" शत० ब्रा० १४।६।४।१।

कौष्ठविद्यक त्रि० कुष्ठविदि तद्विद्यायां साधु काल्या० ठक् दत्त पत्स्येन तान्ततया ठस्य कः इत्येके। कुष्ठविद्यासाधौ। दत्त पत्स्याभावमाश्रित्य तान्तत्वाभावेन कौष्ठविदिक इत्यन्ये तन्मतेनैव तथारूपं २१५४पृ० उक्तम्

कौसीद्य न०कुत्सितं सीदत्यस्मिन् सीद+वा० आधारे य स्वार्थे ष्यञ्। १आलस्ये २तन्द्रायाञ्च हेम०। कुसीदस्य भाव ष्यञ्। ३वृद्धिजीविकुसीदवृत्तौ शब्दार्थचि०

कौसुम न०कुसुमेन निर्वृत्तमण्। १पुष्पाञ्जने अमरः। तस्येदमण्। २पुष्पसम्बन्धिनि त्रि० "विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुमसामनानिलेन" माघः

कौसुम्भ पु० कुसुम्भ+स्वार्थे अण्। १अरण्यकुसुम्भे २शाकभेदे राजनि०। कुसुम्भेन रक्तम् अण्। ३कुसुम्भरागरञ्जिते वस्त्रादौ त्रि०"कौसुम्भं पृथु कुचकुम्भसङ्गि वासः" माघः। तस्येदमण्। कुसुम्भसम्बन्धिनि त्रि० "स्तनकरकरसङ्गमयत कौसुम्भरागम्" माघः। उभयतः स्त्रियां ङीप्।

कौसुरुविन्द पु० दशरात्रसाध्ययागभेदे "कौसुरुविन्दः" का-त्या०श्रौ०स०२३।५।१५ "द्वितीयो दशरात्र एततस्य" सं०व्या०।प्रायणीयप्रयोगानन्तरं कौसुरुविन्ददशरात्रस्य प्रथमे त्र्यहे च"कौसुरुविन्दः प्रथमस्त्र्यहः" काल्या० २४।३।१

कौसुरुविन्दि पु० कुसुरुविन्दस्यापत्यम् इञ्। तदपत्ये उद्दालके मुनौ "कौसुरुविन्दिरुद्दालक आरुणौ ब्रह्मचर्यमुवास" शत० ब्रा० १२।२।२।१३। [क्ले जटाध०

कौसृतिक त्रि० कुसृत्या चरति ठक्। मायाकारके याचयु-

कौस्तुभ पु० कुं भूमिं स्तुभ्नाति कुस्तुभो जलधिः तत्र भवः अण्। विष्णोर्वक्षःस्थे "कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः" इत्युक्तलक्षणे मणिभेदे। तस्य समुद्रादुत्पत्तिकथा हरिवं० २२अ०

"सुरासुरगणाः सर्वे सहिताः समवायतः। मन्दरं पुष्करं कृत्वा नेत्रं यासुकिमेव च। समाः सहस्रं मथितं तत्र भोषधिभिः सह। घोरभूतं समायोगादमृतं समपद्यत। तस्मात्तु रहराः पूर्वमाक्रान्ता क्षोभमन्युना। तदा क्षयाज्ज समुद्रेया कामतेजोबलान्विता। धन्वन्तरिस्तथा मद्यं मोहृदेवी कौस्तुभोमणिः। ययाद्धो विमलस्यापि सङ्गतस्य

दुतिभूषण । आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः । प्रायश्चित्तमहाघोरः पशुजानुर्म्महाकृतिः । उद्गात्रन्त्रो होमलिङ्गो बीजौषधिमहाफलः । वाय्वन्तरात्मा सत्रस्फिक् विकृतः सोमशोणितः । वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्म्मौष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाच्छन्दोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः । भूत्वा यज्ञवराहोऽसौ प्राविशत् प्राविशद्रसाम्" ।

"रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् । छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् । स्रुक्तुण्ड आसीत् स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे । प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् । दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः । जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते । सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः । सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः" । भाग० ३।१३अ० ।

"यज्ञात्मतां प्रपञ्चयन् स्तुवन्ति रूपमित्यादि षड्भिः । छन्दांसि गायत्र्यादीनि यज्ञाङ्गभूतछन्दआद्यनुवादेन भगवदवयवता विधीयते बर्हिः दर्भे । दीर्घभावः आर्षः । दृशि चक्षुषि चातुर्होत्रं हौत्रादिचतुष्टयं कर्म्म । स्रुक् जुहूः । तुण्डे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षणपात्रं चमसा ब्रह्मादीनां सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रं प्राश्यतेऽनेनेति ग्रसने मुखान्तर्वर्त्ति छिद्रे ग्रहाः सोमग्रहाः । चर्वणं भक्षणम् । दीक्षा दीक्षणीयेष्टिः । अनुजन्म वारं वारम् अभिव्याप्तिः । उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा । प्रायणीया दीक्षानन्तरेष्टिः उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य । प्रवर्ग्यो महावीरः सत्कृपवत् पूर्व्वं क्रियते । सभ्योऽहोमरहितोऽग्निः आवसथ्य औपासनाग्निः ततो द्वन्द्वैक्य तव क्रतुरूपस्य शीर्षकं शिरः । चितयः इष्टकाचयनानि पञ्च असवः प्राणाः । प्रातःसवनादीनि अवस्थितिराशन बाल्याद्यवस्था वा । अग्निष्टोमोऽत्यग्निष्टोमः उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त संस्थाविभेदाः सप्त त्वङ्मांसादिधातवः । सत्राणि

द्वादशाहादीनि बहुयागसमुदायरूपाणि, अङ्गसंगा-यज्ञाङ्गसंधिरूपा क्रतवस्तद्रूपत्वं इष्टिबन्धन अनुष्ठानश्च तदेव बन्धनं यस्य स" श्रीधरः । [प्राधान्यात् तथात्वम् ।

क्रतुपशु पु० क्रतोरङ्गं पशुः । अश्वे हारा० तस्य अश्वमेधे

क्रतुप्रा पु० क्रतून् कर्म्माणि प्राति प्रा-पूर्त्तौ क्विप् । कर्म्मपूरके "सहस्रकर्म्म्यवितः क्रतुप्राः" ऋ० ४।२६।२। "क्रतुप्राः कर्म्मणां पूरकः" भा० ।

क्रतुभुज् पु० क्रतुं क्रतुदेयं हविर्भुङ्क्ते भुज-क्विप् । देवे क्रतुदेयद्रव्यग्रासोद्देश्यत्वात्तेषामचेतनत्वेऽपि तद्भोगित्व बोध्यम् चेतनत्वे तु तेषां मनुष्यादीनामिव भोगो नास्ति किन्तु दृष्टिमात्रेण यथाह "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा० उ० ।

क्रतुराज् पु० क्रतुषु राजते राज-क्विप् । १अश्वमेधे यज्ञे तस्य सर्व्वयज्ञानां श्रेष्ठत्वात् तथात्वम् । "यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः" मनुः २राजसूये च शब्दचि०

क्रतुविक्रयिन् त्रि० क्रतुं तत्फलं विक्रीणाति वि+क्री-णिनि । स्वकीयक्रतुफलस्य अन्यदीयत्वस्थापनेन ततो धनग्राहके । "पशुमान्ततिनोश्चापि क्रतुविक्रयिकस्तथा" मनुः । [चापसर्प्पौ" यजु० १५।१५ ।

क्रतुस्थला स्त्री अप्सरोभेदे "पुञ्जिकस्थला च क्रतुस्थला

क्रतुस्पृश् त्रि० क्रतुमिन्द्रियं स्पृशति क्विन् । इन्द्रियस्पर्शिनि "अपश्यन् हृदिस्पृक् क्रतुस्पृक्" आश्व० श्रौ० ५।१०,५

क्रतूत्तम पु० क्रतूत्तमः । राजसूययज्ञे त्रिका० ।

क्रत्वर्थ पु० क्रतवेऽयम् अर्थेन सह नित्यस० विशेष्यलिङ्गता च, क्रतुरर्थोऽयस्य वा । क्रतूपकारके । तच्च यागादिकञ्च जै० सू० भाष्ययोर्दर्शितं यथा

"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" सू०।"तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभैः शेषविनियोगलक्षणमुक्तम् । इह इदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते, —कः क्रत्वर्थः ? कः पुरुषार्थः ? इति, यापि प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानचिन्ता, सापि क्रत्वर्थपुरुषार्थजिज्ञासैव । कथम् ?। अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः, फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः, प्रयोजकः कश्चित् पुरुषार्थो, ऽप्रयोजकः क्रत्वर्थः। तस्मात् "क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"—इति सूत्रितम् । तत्र अथातःशब्दौ प्रथमे एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति प्रकृतं शेषविनियोगलक्षणमपेक्षते । अत —इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते । क्रतवे यः, स

क्रत्वर्थः, पुरुषाय यः, स पुरुषार्थः। जिज्ञासायन्तोऽपि तत एव समधिगतः,—ज्ञातुमिच्छा जिज्ञासा—इति। तदेतत् प्रतिज्ञासूत्रम्,—'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा'—इति" (४।१।१) शवरभाष्यम्

"यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्" सू॰२।

"अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थः इति लक्षणं वाच्यं, तथा हि लघीयसी प्रतिपत्तिः, उपदेशे गरीयसी तदुच्यते,—यस्मिन् प्रीतिः पुरुषस्य, (यस्मिन्कृते पदार्थे पुरुषस्य प्रीतिर्भवति) स पुरुषार्थः पदार्थः। कुतः?। तस्य लिप्सा अर्थेन च भवति, न शास्त्रेण, क्रत्वर्थो हि शास्त्रात् अवगम्यते, न अन्यथा,अविभक्तो हि पुरुषार्थः प्रीत्या, यो यः प्रीतिसाधनं स पुरुषार्थः। पुरुषार्थे लक्षिते तद्विपरीतं क्रत्वर्थ'—इति क्रत्वर्थस्य लक्षणं सिद्धम् (१वर्णकम्)।

एवं वा सूत्रं वर्ण्यते,—दर्शपूर्णमासयोराम्नायते,—'अनतिदग्धं स्तृणाति अनतिदग्धमेवैनं प्रजया पशुभिः करोति, इति तथा आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, पल्वलात्तम् पशुकामस्य वेदिं कुर्यात्,गोदोहनेन पशुकामस्य प्रणयेत्'—इत्येवमादीनि। तत्र संशयः,—किम् एवञ्जातीयकाः क्रत्वर्थाः उत पुरुषार्थाः—इति। किं प्राप्तम्—क्रत्वर्था इति। कुतः? प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं च, तदुक्तं, (३।१।३सू॰) द्रव्यगुणसंस्कारेषु बादरिः'—इति। तस्मात् क्रत्वर्थाः—एवं प्राप्ते ब्रूमः,—यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एव इति, प्रीतिस्तेभ्यो निर्वर्त्यते,तस्मात् एते पुरुषार्थाः—इति। 'ननु प्रत्यक्ष उपकारः क्रतोर्दृश्यते—इत्युक्तम्'। उच्यते—सत्यं दृश्यते, न तु क्रतोरुपकाराय एभ्य उत्कीर्त्तितेभ्यः, फलेभ्य एते श्रूयन्ते, न च य उपकरोति स शेषः, यस्तु यदर्थः श्रूयते, स तस्य शेषः—इत्युक्त(३।१।२ सू॰)'शेषः परार्थत्वात्'—इति। (२वर्णकम्)

एष वा, द्रव्यार्जनम् उदाहरणम्, इह द्रव्यार्जने तैस्तैर्नियमैः श्रूयते, ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना। तत्र सन्देहः,—किं क्रत्वर्थो द्रव्यपरिग्रह उत पुरुषार्थ इति। किं प्राप्तम् क्रत्वर्थो नियमात्, यद्येष पुरुषार्थः स्यात्, नियमोऽनर्थको भवेत्, प्रत्यक्षेण एतत् अवगम्यते,—नियमादनियमार्जितं द्रव्यं पुरुषं प्रीणयति—इति, तस्मात् क्रत्वर्थ, कामश्रुतिनियमस्य सहैकवाक्यता दृष्टा, इतरथा, क्रतुमेवेन फलवाक्येन सहैकवाक्यतां यायात्। लिङ्गं चापि भवति,—'आग्नये कामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याहिताग्नेः सतोऽग्निर्गृहान् दहेत्, यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेत्—इत्येवमादि तद्धि द्रव्योपघाते चोद्यते यदि द्रव्यपरिग्रहः क्रत्वर्थः, तत्र एतदपि सति तस्मिन् कर्त्तव्यम्—इत्युच्यते इतरथा अकर्त्तव्यम्—इत्यनुकीर्त्यते फलं च कस्य कल्प्येत। तस्मात् नजातिश्रुतिगृहीतं द्रव्यार्जनं येन विना यागो न निर्वर्त्यते, स यागस्य श्रुत्या परिगृहीतः—इति गम्यते। तस्मात् क्रत्वर्थः—इति।

एवं प्राप्ते ब्रूमः,—पुरुषार्थः—इति। यस्मिन् कृते पदार्थे प्रीतिः पुरुषस्य भवति तस्मात् तस्य लिप्सा अर्थलक्षणा शरीरधारणार्था यस्य शरीरं म्रियते व्यक्तं तस्यास्ति द्रव्यं शरीरिणां याग श्रूयते तस्मात् विद्यमानद्रव्यस्य विनियोग उच्यते। न द्रव्यार्जनं श्रुतिगृहीतं विनापि हि द्रव्यार्जनवचनत्वेन यदस्य यागो निर्वर्त्तेत एव, तस्मात् पुरुषार्थो द्रव्यपरिग्रहः।

अपि च, यदि शास्त्रात् क्रत्वर्थं द्रव्यार्जनं, तस्मादन्यत्र विनियुज्येत तदार्जितम्, तत्र सर्वलोकपरिलोपः स्यात्। अपि च उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः, तत्र एतन्नोपपद्यते,—अपि वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वा अतिपातयेत्'—इति एतस्य च तत्प्रयोजकत्वाद्धि एतदस्य तदुपकारकं स्यात्। न च आधानवत् प्रविष्टमर्हति,तत्र हि वचनं—वसन्तेऽग्निमादधीत—इति न चैतत् अत्रम्। अथ यदुक्तं—नियमवचनम् अनर्थकं पुरुषार्थे द्रव्यपरिग्रहे सति-इति। उच्यते, नैतावता पुरुषार्थता अपवर्त्यते प्रत्यक्षा हि सा,त्वया च परोक्षया युक्त्या अपदिश्यते, न च परोक्षं प्रत्यक्षस्य बाधकं भवति, तस्मात् नियमवचनात् कामफलमदृष्टं कल्प्येत न तु दृष्टकामम् तस्मात् यत् पुरुषस्य प्रयोजनं प्रीतिः तदर्थं धनस्य अर्जनम्-इत्येवं च सति व्रीहिणा यागः कर्त्तव्यः प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा न कश्चित् विशेषः प्रीत्यर्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव, क्रत्वर्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव। तस्मात् न प्रयोगचोदनागृहीतं द्रव्यार्जनम्। अथ यदुक्तम्-क्रतुमेवेनाक्रतेन वा सहदेव तुल्यत्वे नियमस्य एकवाक्यता, क्रत्वर्थे

तु इष्टेन प्रयोगप्रचनेन-इति नैष दोषः अकामस्योऽपि इष्टेन मुनिना न फलवचनेन। 'कथं, तर्हि-नियमात् इष्टं भवति-इति गम्यते'। "यत्रैव मवदीये पक्षे। आह अकामस्य फलवत एकवाक्यभावात् फलवत उपकरोति इति गम्यते'। उच्यते अकामस्योऽपि फलवत-एवैकवाक्यभावः, एतावांस्तु विशेष-तव श्रुतं फलं मम तु इष्टम्। अथ यत् लिङ्गम् उक्तं-गृहदाहादिषु कर्म क्रियते-इति। तत्र उच्यते यद्यपि न क्रत्वर्थं द्रव्यार्जनं तथापि दाहे निमित्ते फलाय वा कर्माङ्गभावाय वा क्षामवत्यादीनां विधानम् उपपद्यत एव। तस्मात् पुरुषार्थं द्रव्यार्जनं प्रीत्या हि तदभिक्रमः" भाष्यम् तत आरभ्य क्रत्वर्थाः पदार्थास्तत्र दर्शिताः ततएवावगम्या

**क्रत्वादि** पु० पाणिन्युक्ते सोः परतः स्थितस्य आद्युदात्तानिमित्ते शब्दगणे। स च गणः "क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भग"।

**क्रत्वीश्वर** न० क्रतुना स्थापितमीश्वरलिङ्गम्। काशीस्थे क्रतुना ऋषिणा स्थापिते शिवलिङ्गभेदे "वरणायास्तटे रम्ये क्रत्वीश्वरमनुत्तमम्। वाजिमेधस्य सुफलं लभते यत्र-तिष्ठिति" काशी० ९८अ०

**क्रथ** बधे भ्वा० पर०सक० सेट् घटा०। क्रथति अक्रथीत्-अक्राथीत्। चक्राथ, णिच्-क्रथयति-ते। अचिक्रथत् त

**क्रथ** मतिकर्षे चु० उभय० सक० सेट् घटा०। क्राथयति-ते अचिक्रथत्-त। क्रथयां-बभूव आस चकार चक्रे

**क्रथन** न० क्रथ-बधे ल्युट्। १मारणे २छेदने च "राजन्योत्तसकूट क्रथनपटुरिति", प्रबोधचन्द्रोदय०। ३दानवभेदे पु०। "क्रथनश्च महावीर्यः" भा० आ० ६७अ०।

**क्रथनक** पु'स्त्री क्रथने दन्तकरणकककर्कटकच्छेदने प्रवृत्तः कन्। उष्ट्रे अमर स्त्रियां जातित्वात् ङीष्।

**क्रथकैशि(शी)क** पु०ब०व० देशभेदे "सपाण्ड्यान् क्रथकैशीकान्" भा० स० १३०अ्०। "अधीश्वरेण क्रथकैशिकानाम्" "प्राप्य जगाम क्रथकैशिकत्वम्" रघु। सुखमध्यात् संज्ञायां कन्। शिवाग्रुरुश्च न० शब्दच०।

**क्रद** रोदने वैकल्ये अक० आह्वाने सक० भ्वा० पर० इदित् सेट्। क्रन्दति अक्रन्दीत् चक्रन्द। भावे क्रन्द्यते क्रन्दितम्। अव्यक्तशब्दकरणे "अक्रन्ददग्निः स्तनयन्निव द्यौ" यजु० १२।६। अक्रन्दत् क्रन्दति विस्फूर्जति" वेददी०। "यदक्रन्दः प्रथम जायमानः" यजु० २९,१२। [याति अनु+क्रन्दनेनानुगमने सक० अनुक्रन्दति पुत्रम् क्रन्दनेनानु-

अभि+आभिमुख्येन शत्रुप्रभृतेराह्वाने सक०। "अभिक्रन्दम् द्युपायसे" ऋ० १०।२१।८। "अभिक्रन्दम् आभिमुख्येन युद्धार्थं शत्रूनाह्वान्" भा०। "आभिमुख्येन शब्दकरणे अक०। 'अभिक्रन्द स्तनय गर्भम्' ऋ० ५।८३।७। "अभिक्रन्द भूम्यभिमुखं क्रन्द शब्दाय" भा०।

आ+आह्वानपूर्वकरोदने सक०। "आक्रन्दत् भीमसेनं वै" भा० व० १५७अ०। सम्यक्क्रन्दने च "आक्रन्दिषुः सखीनन्न्"भट्टि०। "तदीयमाक्रन्दितमार्त्तसाधो "रघु०।

सम्+आ+सम्यगाह्वानपूर्वकक्रन्दने "हा तात! धर्मराजेति समाक्रन्दन्महाभवे" भा० आश्र० १०७२श्लो०

नि+यथानामशब्दोच्चारणे। "न्यक्रन्दीज्जनयन् प्रजापतो 'यथास्य शब्दस्तथा नामेरयति वाचम्" निरु० ६।४।

प्र+स्तवने "प्र यः सक्रन्दत् सविता यः" ऋ० ५।५६।१। "अक्रन् स्तौति" भा० वेदे गणव्यत्ययात् शपोलुक्।

वि+विशेषेण क्रन्दने। सम् सम्यक् क्रन्दने।

**क्रद** वैकल्ये भ्वा० आत्म० अक०सेट् घटादि०। क्रदने अक्रदिष्ट चक्रदे णिच् क्रदयति। यङ् वेदे कनिक्रद्यते यङ्लुकि कनिक्रत्ति कनिक्रदीति "उपस्थे वृषभः कनिक्रदत्" ऋ०६।७३।५। "कनिक्रदत् शब्दं कुर्वन्" भा०।

अनु+अनुगमने सक०। "समग्रेयं क्षौणीरनुचक्रदे" ऋ० ८।३।१०। "अनुचक्रदे अनुगच्छति" भा०।

**क्रन्द** निरन्तरशब्दकरणे चुरा० अक० उभ०सेट्। प्रायेणाङ्पूर्व्वः आक्रन्दयति ते आचक्रन्दत् त। आक्रन्दयाम् बभूव आस चकार चक्रे

**क्रन्दन** न० क्रदि-भावे ल्युट्। १शोकादिनाऽस्रुपातहेतुव्यापारे रोदने शब्दरत्ना० योधवीरादेः २आह्वाने च अमरः ३विडाले पुंस्त्री शब्दमा०। स्त्रियां जातित्वात् ङीप्।

**क्रन्दित** न० क्रदि-भावे क्त। रोदने अमरः। आह्वाने मेदि० योधानां चीत्कारशब्दकरणे शब्दरत्ना०।

**क्रप** कृपायाम् भ्वा० अक० आत्म० सेट् घटादि। क्रपते अक्रपिष्ट चक्रपे णिचि क्रपयति ते। "उरुक्रामुर्मवयश्चक्रपिष्ट" ऋ०७।२०।६। वेदेऽस्य क्वचित् सम्प्रसारणम्। "ततो क्रपन्त प्रीतयो देवानां नाम बिभ्रती" ऋ० ८।६६।४। "विन्दन्त ज्योतिश्चक्रपन्त धीभिः" ऋ० ४।१।१४। "मर्त्तानां चिदुर्वशीरकृपन्" ऋ० ४।२।१८। "विश्वे देवा अक्रपन्त समीच्योर्निष्पतन्त्यः" ऋ० १०।२४।५। "धर्मिं क्रपमाणमकृणुतं विपन्यं" ऋ० १।११६।१४।

**क्रम** पादविक्षेपणेन गतौ भ्वा०पर०सक० सेट्। अस बाम्ये-

तेन, न वैगुण्यम्। एवं प्रत्यक्षक्रमस्य गुणभावो यत्र, तत्र अर्थेन स प्रत्याम्नयितव्य। यथा "जाते वरं ददाति, जातमञ्जलिना गृह्णाति जातमभिघारयति"-इति अर्थात् पूर्वमभिघारितव्यम्, ततः अञ्जलिना गृहीतव्य, ततो वरो देय,-इति, तथा विमोक पूर्वमाम्नात, पश्चात्तद्योग, अर्थात् विपरीत कार्य। याज्यानुवाक्ये तु विपर्ययेण आम्नाते, विपर्ययेण कर्त्तव्ये, न अत्र पाठक्रमोऽभीयते, यतो देवतोपलक्षणार्थाऽनुवाक्या, प्रदानार्था याज्या, "अग्निहोत्रम् जुहोति"-इति पूर्वमाम्नातम्, "ओदनं पचति"-इति पश्चात्, असम्भवात् पूर्वमोदन पक्तव्य। प्रैषप्रायौ तु विपर्ययेण आम्नातौ, तौ च विपर्ययेण कर्त्तव्यौ" भाष्यम्

"अनियमोऽन्यत्र" ३ सू०

अन्यस्मिन् विषये क्रमस्य नियमो नास्ति, यथा दर्शपूर्णमासयोर्याजमानानां प्रयाजानुमन्त्रणादीनाम् नानाशाखान्तरसमाम्नातानाम् "वसन्तमृतूनाम् प्रीणामि"-इत्येवमादीनाम् 'एको मम,-इत्येवमादीनाञ्च" भा०

"क्रमेण वा नियम्यते क्रत्वेकत्वे तद्गुणत्वात्" ४ सू०

"दर्शपूर्णमासयोराम्नातम्-'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति"-इति। तत्र संशय-किम् अनियतेनैव क्रमेण एषाम् अनुष्ठानम्? उत य पाठक्रम स एव नियम्येत?-इति। किं प्राप्तम्?-नियमकारिणः शास्त्रस्याभावात् अनियम-इति। एवं प्राप्ते ब्रूमः-क्रमेण, एवं नियम्येत एकस्मिन् क्रतौ-इति। कुतः? तद्गुणत्वात्, तद्गुणत्वं हि गम्यते पदार्थानाम्, यथा, स्नायात् अनुलिम्पेत, भुञ्जीत-इति च क्रमेण अनुष्ठानम् अवगम्यते, वाक्यात् पदार्थानाम्, यथा चाहृष्टार्थेषु उपदिश्यमानेषु, कश्चित् ब्रूयात्,-'देवाय धूपो देय पुष्पाण्यवकरितव्यानि चन्दनेनानुलिप्य उपहारोऽस्मै उपहर्त्तव्य' एवं कृते देवस्तुष्यति,-इति, तमन्यः प्रतिब्रूते, नैतदेव, न प्रथमं धूपो दातव्य, प्रथमं पुष्पाणि अवकरितव्यानि-इति, एवं मन्यते-धूपदानस्य प्राथम्यम् अनेन उक्तम्-इति। तस्मात् वाचनिक एषाम् एष क्रम-इति" भा०

"अशब्द इति चेत्, स्यादर्थकृतशब्दत्वात्। ५ सू०

इति चेत्, पश्यसि, "अर्थेव गम्यमाने अशब्द एव क्रम। कथं? पदार्थपूर्वको वाक्यार्थ पदेभ्यश्च पदार्था एव अवगम्यन्ते न क्रमः। स्यात् एतदेव, यदि पदार्थानाम् समूहस्य अथवा प्रत्यायकम् अर्थस्य स्यात्, न तु समुदाय प्रत्यायक,-इत्युक्त्वा "तद्भूतानां क्रियार्थेन समाम्नायः" (१।१।२५ सू०) इत्यत्र। तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एष क्रमोऽवगम्यते। एवं चापूर्वोत्पत्तिरनुग्रहीष्यते, इतरथा सापि विप्रकृष्येत घटीयन्त्र इव। दर्शयिष्यति च,-"हृदयस्याग्रेऽवद्यति, अथ जिह्वाया, अथ वक्षस,-इति। यदि नियामक पाठक्रमे ततो न विधातव्यमेतत् नियामके हि पाठक्रमे पाठक्रमात् एव प्राप्नुयात्". भा०

"अर्थकृते वानुमान स्यात्, क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्ध, तस्मात्स्वशब्दमुच्यते" ६ सू०

"एकस्मिन् क्रतावेकत्वात् क्रतु, अनेकस्मिन् पदार्थेऽर्थकृतत्वात् क्रमस्य, तत्र एष एव क्रमो नियम्येतानुमानेन। कुत? परार्थत्वात् वेदस्य, परार्थो हि वेदो यद्यत् अनेन शक्यते कर्त्तुम्, तस्मै-तस्मै प्रयोजनाय एष समाम्नायते, शक्यते च अनेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम्। तस्मात् वेदः पदार्थास्च विधातुम् उपादेय, क्रियाकाले च प्रतिपत्तुम्, न शक्यते विशेष-विधातुमयं समाम्नायते, न प्रतिपत्तुम्-इति, अवस्यमाने विशेषे उभयार्थम् उपादीयते-इति गम्यते। प्रतिपत्तु च अनेन क्रमेण शक्यते, नान्येन, अत एव च कृत्वा पाठक्रमापचारे, विनष्ट-इत्युच्यते, इतरथा हि यत् यस्य प्रयोजन, तस्मिन् निर्वर्त्यमाने एव किं नष्टं स्यात्, अदृष्टं कल्प्येत, तच्च अन्याय्यं दृष्टे सति। तस्मात् स्वशब्द क्रम-व एव पदार्थाना वाचक शब्द स एव क्रमस्यापि" भा०

"तथा चान्यार्थदर्शनम्" ७ सू०

"एवं च अन्यार्थं दर्शयति,-'व्यत्यस्तस्तव्या उपदधाति"। "व्यत्यस्त षोडशिनं शंसति", "आश्विनो दशमो गृह्यते तं तृतीयं जुहोति"-इति, यदि अनियमेन उपधानं शंसनं च, व्यत्यस्तवचनम् अनर्थकं स्यात्, न हि कथञ्चित् अव्यत्यास-इति। तथा आश्विनस्य तृतीयस्य होमानुवादो न अवकल्पेत, यदि पाठक्रमेण नियम-इति। तथा-'अभिचरता प्रतिलोमं होतव्यम्" प्राणानेव अस्य प्रतीचः प्रतियौति"-इति कश्चित् प्रतिलोमं विदधदनुलोमं दर्शयति, तदुपपद्यते, यदि पाठक्रमेण प्रयोग, इतरथा, सर्वमनुलोमं स्यात् प्रतिलोमदर्शनं नोपपद्येत। तथा 'चतुर्थोत्तमयोः प्रतिसमानयति"-इति, उक्ते सति,

'अतिग्राह्येभ्यो-हि प्रतिसमानयति,—इति उच्यते तेन वह्निव चतुर्थतां दर्शयति, सा पाठक्रमे नियामकेऽव कल्पते" भा०

"प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्" ८सू०

"वाजपेये "सप्तदश प्राजापत्यान् पशून् आलभते"—इति श्रूयते। तेषु पशुषु चोदकप्राप्ता प्रोक्षणादयो धर्मा, तत्र प्रथमः पदार्थो यत कृतः यदारब्धव्य द्वितीयादिषु भवति संशय,— किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्य ? उत द्वितीयादिषु अनियम ?—इति। किं तावत् प्राप्तम्? नियमकारिण शास्त्रस्याभावात् अनियम -इति। एव प्राप्ते, ब्रूमः,—यतः पूर्व आरब्धः, ततएव द्वितीयादयोऽपि पदार्था आरब्धव्या —इति। कुतः एतत्?। 'तदुपक्रमात्' सर्वे हि पदार्था प्रधानकालात् न विप्रकृष्टव्या, प्रधान हि चिकीर्षित, कृत वा तेषा निमित्त, बहुवचन हि भवति"-'पदार्थैः सह प्रधान कर्त्तव्यम्'—इति। सहपदार्थसमाम्नानात्तु अवश्यम्भावी विप्रकर्षः, तथापि तु यावद्भिर्नाव्यवहित शक्यः पदार्थः कर्तुम्, तावद्भिर्व्यवधानम् अवश्य कर्त्तव्यम्। ततोऽभ्यधिकेन न व्यवधातव्यम्—इति, यदि द्वितीय पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्, तथा प्रयोगवचनं बाधेत। 'ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति'। उच्यते,—अनुमतानां व्यवायकानां त्यागेन कश्चित् अभ्यधिको गुणो भवति—इति तस्मात् यतः पूर्वपदार्थ आरब्धः तत एव उत्तर आरम्भणीय —इति" भा०

"सर्वमिति चेत्" ९सू०

"इति चेत् पश्यसि, प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रहः—इति, सर्वं तर्हि—गुणकाण्डम् एकस्मिन् अपवर्जयितव्यं, यथा सौर्यादिषु" भा०।

"नाकृतत्वात्" १०सू०।

"नैतदेवम्, सहप्रयोगे सर्वं हि न अनुष्ठितः स्यात्" भा०।

"कृत्वन्तरवदिति चेत्" । ११सू०

"अथ यदुक्त,—यथा क्रत्वन्तरेषु सौर्यादिषु—इति, तत् परिहर्त्तव्यम्" भा०

"नासमवायात्" १२सू०

"न तेषामर्थात् क्रमः प्राप्नोति, यो नियम्येत, अङ्गाश्रयो हि नियमो भवितुमर्हति, अनङ्गासमाश्रयस्य समानकृता कल्प्येत" भा०

"स्थानाच्चोत्पत्तिसंयोगात्" १३ सू०

"एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्काम, त्रयस्त्रिंशेन प्रतिष्ठाकामम्" इत्येवमादि श्रूयते। तत्र आगमेन वचनप्राप्त्यम्—इति वक्ष्यते। तत्र आगमे क्रियमाणे, किम् अनियमक्रमाः सर्वा अत्र आगमयितव्याः ? उत आम्नातक्रमेण ? इति। किं प्राप्तम् ?—अनियमेन—इति। कुतः ? अतिरात्रे त्रिवृदादिमस्तोत्रार्थेनैता प्राप्नुवन्ति, तत्र एतासां प्राप्नुवतीनाम् पाठक्रमो नास्ति—इति। एव प्राप्ते उच्यते,—यदासां सामाम्नाये स्थान, तेनैता अत्र नियम्यन्ते, या पूर्व समाम्नाताः, ताः पूर्वमेव प्रयोक्तव्याः, आनुपूर्व्यस्य हि दृष्टमेतत् प्रयोजनम्, यदुत्तरस्तु रच, तदपि चिकीर्षितमेव—इति। त्रिवृदादिषु अतिरात्रे यौगपद्येन आसां प्राप्ते पाठक्रमस्य अविषयः—इति अधिकरणान्तरम् —इति भवति मति। समाम्नायपाठक्रमादेव अत्र नियम —इति पुनरुक्ततामस्यते—इति अन्यथा वर्ण्यते" भा०

"साद्यस्क्रे श्रूयते,—सह पशूनालभते,—इति अत्र एषोऽर्थ समधिगत "—सवनीयकाले सर्वाकाम् आलभ्य —इति। अथ अत्र पाठक्रमात्, किम् अग्नीषोमीयः पूर्वम् आलब्धव्यः ? उत स्थानक्रमात् पूर्वं सवनीय इति। कुतः ?। पाठक्रमात्। एवं प्राप्ते ब्रूम,—सवनीय पूर्वं, स्थानात्, यदि पूर्वम् अग्नीषोमीयः स्यात्, सवनीय स्थान आक्रम्येत। "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय" इति। "ननु इतरथापि पाठक्रमो बाध्येत, बाध्यता, तस्य हि प्रतिषेधार्थः सहवद् समाम्नात, अप्रतिषिद्ध च आश्विनग्रहस्थानम्, तत्र बाधितव्यम्" (२वर्णकम्) भा०

"मुख्यक्रमेण वाङ्गानां तदर्थत्वात्" १४सू०

"सारस्वती भवतः एतद् वै दैव्यं मिथुनम् —इति श्रूयते। तत्र सन्देहः,—किं स्त्रीदैवत्यस्य प्रथम धर्माः ? उत पुंदैवत्यस्य ?—इति। नियमकारिण शास्त्रस्य अभावात् अनियम,—इति प्राप्ते ब्रूमः,—मुख्यक्रमेण वा नियम स्यात्—इति स्त्रीदैवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नान, "प्रणो देवी सरस्वती"-इति। तस्मात् स्त्रीदैवत्यस्य पूर्वं प्रदानेन भवितव्यम्, तस्मात् स्त्रीदैवत्यस्य पूर्वं धर्मा कार्याः, तथा हि प्रधानैकाकाङ्क्षा भवति अङ्गानाम्, इतरथा, सैः पादर्थैर्व्यवधान प्राधान्येन अङ्गानां तेभ्योऽधिकैरपि व्यवधान स्यात्"। भा०

"प्रकृतौ तु स्वशब्दत्वात् यथाक्रम प्रतीयेत" १५सू०

"दर्शपूर्णमासयोः पूर्वमौषधधर्माः समाम्नाताः, तत आज्यस्य। तत्र सन्देहः,—किम् अग्नीषोमीयधर्माणाम्, मुख्यक्रमेण पूर्वम् आज्यस्य धर्माः कर्त्तव्याः। उत यथापाठम्?-इति। मुख्यक्रमानुग्रहेण आज्यस्य पूर्वम्,-इति प्राप्ते ब्रूमः,-प्रकृतौ यथपाठं प्रतीयेत, स्वशब्दो हि तेषां पाठक्रमः, स अन्यथा क्रियमाणो बाधितः स्यात्, बहुत्वस्य पुनरुपसङ्ग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे संस्तक्यकाणे न बाधितो भविष्यति। अपि च पाठक्रमे स्वशब्दः,—"स्वाध्यायोऽध्येतव्य" मुख्यक्रमेण प्रयोगवचनैकवाक्यता सूक्ष्मा" भा॰

"मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मात् उत्पत्तिदेशः सः" १६ सू॰

"दर्शपूर्णमासयोः,आग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य। तत्र सन्देहः-कतम पाठो बलीयान्?-इति। उच्यते,-अनियमः, नियमकारिणः शास्त्रस्य अभावात्-इति।

एवं प्राप्ते ब्रूमः, मन्त्रपाठो बलीयान्। कुतः? प्रयोगरूपसामर्थ्यात्'—प्रयोगाय मन्त्रस्य रूपसामर्थ्यं, तदस्य सामर्थ्यं येन मन्त्रः प्रयुज्यते, तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति। 'ननु च ब्राह्मणपाठस्य अपि तदेव प्रयोजनम्'। उच्यते-उत्पत्तिदेशः स'-अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति" भा॰

"तद्वचनाद्विकृतौ यथाप्रधानं स्यात्" १७सू॰

"अस्ति अध्वरकल्पा नामेष्टिः,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सरस्वती आज्यभागा स्यात् बार्हस्पत्यश्चरुः'—इति। तत्र सन्देहः—किम् आग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्याः, चोदको बलवत्तरः, प्रयोगवचनात्, उत उपांशुयागविकारस्य प्रयोगवचनो बलवत्तरः, चोदकात्?—इति। किम् प्राप्तम्?—'विकृतौ' अस्यां 'यथाप्रधानं स्यात्'-'तद्वचनात्'—तेषां वाक्यवचनक्रमो विकृतौ, तेन सन्निहितानाम् उपसंहारकः प्रयोगवचनो हि प्रत्यक्षः, तद्धर्माणां च आनुमानिकः चोदकेन हि स प्राप्तः। तस्मात् प्रत्यक्षः प्रयोगवचनो बलवत्तरः, तेन चोदक आनुमानिको बाध्यते भा॰

"विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति" १८सू॰

सत्याङ्क्रम—विप्रतिपत्तौ वा यथा प्रकृतौ, तथैव विकृतौ भवितुमर्हति—इति। कुतः?। 'प्रकृत्यन्वयात्' यादृशाः प्रकृतौ धर्माः, तादृशा एव विकृतौ भवितुमर्हन्ति—इति, मुख्यक्रमेण क्रियमाणा न प्रकृतिवत् कृताः स्युः?। चोदको हि प्रयोगवचनात् बलवत्तरः, स हि उत्पादयति प्रापयति च। प्रापितान् अभिसमीक्ष्य प्रयोगवचन उपसंहरति, स प्राप्तेषु उत्पन्न प्राप्तिनिमित्तक उत्तरकाल पूर्वप्राप्तं न बाधितुमर्हति चोदकं, प्रत्यक्षोऽपि सन्, बहिरङ्गत्वात्, यथाप्राप्तानेवोपसंहरिष्यति। तस्मात् पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्य" भा॰।

एतच्च स्पष्टतया तत्त्वबोधिन्यां दर्शितं यथा

"अग्निहोत्रं जुहोति यवागूं पचतीत्यादौ अनुष्ठेयानामनुष्ठानक्रमनियमोऽस्ति नवेति। तत्र न क्रमनियमः तत्प्रापकप्रमाणाभावादिति प्राप्ते क्रमनियमप्रापकाण्याह श्रुत्यर्थपठनस्थानमुख्यप्रावर्त्तिकाः क्रमाः। १श्रुतिरानन्तर्य्यबोधकमथशब्दक्त्वाप्रत्ययादिकम्। २अर्थः प्रयोजनं,३पठनं पाठक्रमः ४स्थानं स्वस्थानस्थिति, यथा आश्विनकालस्य सामीप्यं सवनीयपशोः,। स्थानं स्तोत्रोत्पत्तिवाक्यमिति केचित्। ५मुख्यं प्रधानं कर्म। ६प्रवृत्तिः प्रवर्त्तनक्रमः। प्रावर्त्तिकेति तद्धितेन प्रवृत्तिगम्यत्वाभिधायकेन श्रुत्यादिपदानां श्रुतिगम्यत्वादिपरत्वं सूचितं तथा च श्रुत्यादीनि क्रमप्रापकाणीति। अत्र श्रुत्यादीनां क्रमप्रापकताबोधकसूत्राणि बहूनि उक्तानि तानि च ग्रन्थगौरवभयात् निरूप्यमाणसूत्रार्थविवेचनेन व्यक्तीभविष्यन्त्यतश्च न लिखितानि। तत्र श्रुतितो यथा "द्वादशाहसत्रयागे "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमिति" आनन्तर्य्यार्थकक्त्वाप्रत्ययेन क्रमो बोध्यते। यथा वा "हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः अथ वक्षसः" इति अथशब्देन। अयं च क्रमोऽन्येभ्यो बलवान् शब्दलभ्यत्वात्। एवमेषां पूर्वत उत्तरोत्तरं दुर्बलं बोध्यम्। नन्वथादिशब्दादुपस्थितस्यापि क्रमस्य धात्वर्थरूपक्रियात्वाऽभावेन कथं विधेयत्वं तदिदमुक्तं प्रापकप्रमाणाभावादिति चेदुच्यते यथा दध्ना जुहोतीत्यादौ अक्रियारूपं दधिद्रव्यं क्रियाविशेषणं सद्विधीयते दधिसाधनकं होमं कुर्य्यादिति तथा इदमनेन क्रमेण कर्त्तव्यमिति क्रियाविशेषणतया क्रमो विधीयते। तथा च सूत्रम् "श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्" आनुपूर्व्यं श्रुतिगम्यं विधिगम्यं तस्य क्रमस्य प्रधानत्वात् दध्यादिवत् क्रियाविशेषणत्वेन विधेयत्वात्। तच्च क्वचित् श्रुतशब्दादर्थादितः क्वचिच्चार्थादितोऽनुमानादिति विशेषः। इत्थञ्च श्रुतिगम्यं श्रुति

शब्दलभ्यमित्यर्थं इत्यवोध्य इति भावः। श्रुतिगम्यं श्रुतिलभ्यमानुपूर्व्यं पाठ्यमिति शेषः। “अथ अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति” इत्यादौ दीक्षैव विधीयते श्रुतितस्तद्विध्यवगमात् क्रमस्तु वाक्यार्थो न विधेय इति। तद्विध्यवगमाभावात् तदुक्तं “वाक्यार्थो विधिरन्याय्यः श्रुत्यर्थविधिसम्भवे। तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां प्राप्यते क्रमः”। उच्यते। इदमाम्नातं य एव यजमानास्त एव ऋत्विजः” इति ब्रह्मादीनां सर्वेषामृत्विजां यजमानत्वेन यजमानदीक्षाविधिप्राप्तामनूद्य अनेनाप्राप्तक्रम एव विधीयते। तदुक्तं “सर्वेषां यजमानत्वात् दीक्षाप्राप्तेरचोदनात्। क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते”।

“अर्थाच्चेति” सूत्रम्। २अर्थात् यथाग्निहोत्रं जुहोति यवागूं पचतीत्यत्र यवागूपाकस्य होमः प्रयोजनं तत्र होमानन्तरपाके सति न सम्भवति होमोऽपि च यवागूं विना न निष्पद्यत इति पाकानन्तरं होमः। अतएव गृहपत्यादिदीक्षासु पाठप्राप्तक्रमस्यैवादृतत्वात् इहापि होमपाकयोः पाठप्राप्तक्रमोऽपाद्रियत इति निरस्तं पाठक्रमग्रहणे विहितार्थानिष्पत्तेः। न च जुहोतीत्यस्य सामान्यप्राप्ताज्यादिद्रव्यकत्वमिति द्रव्यान्तरेण होमः, यवागूपाकस्य च ऋत्विग्भक्षादिरूपप्रयोजनान्तरं कल्पनीयम् अथवा यवागूमित्यस्य जुहोतीत्यनेनान्वयात् पचतीत्यस्य कर्मान्तरमध्याहार्यमिति वाच्यं तत्कल्पकाभावात् गौरवात् विलम्बोपस्थितेः। द्वितीये यवाग्वाहोमद्रव्यत्वाङ्गीकारेणार्थक्रमस्याभ्युपगमाच्च यवागूं जुहोतीत्यन्वये पाकं विना यवाग्वा असम्भवेन पाकस्यावश्यकत्वाच्च। अत एवार्थक्रमः पाठक्रमाद्बलवान् जुहोतीत्यनेनाकाङ्क्षितद्रव्यान्तरसाध्यहविरादिना होमनिर्वाहात् तत्र प्रवृत्तिः यवागूपाकस्य च प्रयोजनान्तरमप्यगत्य तदर्थं पाके प्रवृत्तिरिति तादृशावगमस्य कल्पनासापेक्षत्वेन विलम्बितत्वात् आर्थत्विवशात् यवागूमित्यनेन जुहोतीत्यस्यान्वयात् यवागूपाकस्य होमप्रयोजनकत्वात्तस्य झटित्यवगमात्। अर्थात् युक्तेरिति कश्चित् तन्न। पठनस्थानादीनामपि युक्तिलभ्यत्वेन विभागानुपपत्तेः। अत एव प्रयोजनवशात्तु नियम इति शास्त्रदीपिका। भाष्याचार्यस्तु “यवागूं पचति यवाग्वाग्निहोत्रं जुहोतीति श्रुतिमभिधाय तृतीयया यवाग्वा होमसाधनत्वमवगम्यत इत्याह।

३पठनाद्यथा “समिधो यजति तनूनपातं यजतीत्यादिषु दर्शपौर्णमासाङ्गप्रयाजादिषु क्रमपठितानां क्रमेणानुष्ठानम्। नन्वत्र गृहपत्यादिदीक्षायामिव क्रमबोधकशब्दाभावात् यवागूपाकस्येव साध्याभावाच्च कथं क्रमनियम इति चेत् न, तथैव लोकप्रतिपत्तेः। तथा च सूत्रं “क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्”। तदुक्तं “यथापाठमनुष्ठानं तथैव प्रतिपत्तितः। स्मृतिप्रयोगवेलायां वाक्यैरेव च कर्मणाम्”। आसनं स्वागतमित्यादिषु क्रमपाठस्थेषु आसनादिषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते। कथं स्थानादिक्रमतो बलवान् तदपेक्षया शीघ्रोपस्थितेः।

४स्थानाद्यथा। साद्यस्क्रनामकः कश्चिद्यागविशेषः ज्योतिष्टोमविकृतिः। तत्र श्रूयते “सह पशूनालभते” इति तत्र च प्रकृतियागज्योतिष्टोमे अग्नीषोमीयपशुरौपवसथ्ये पूर्वदिने आलभ्यते, सवनीयः पशुः सुत्यादिने प्रातःसवने आश्विनग्रहग्रहणादूर्द्ध्वमालभ्यते तथा च श्रुतिः “आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयमाग्नेयं पशुमुपाकरोतीति” अनुबन्ध्यपशुरौपवसथ्यादूर्द्ध्वमालभ्यते विकृतौ साद्यस्क्रे त्रयोऽपि पशवः सहालभ्यन्ते सहालभनमेकस्मिन् सवनीयस्थाने सुत्यादिने आलभनं तत्र च प्रकृतौ ज्योतिष्टोमे अग्नीषोमीयस्य प्रथममुपाकरणं ततो विकृतावपि अग्नीषोमीयस्य प्रथममुपाकरणमिति प्राप्ते “स्थानाच्चोत्पत्तिसंयोगात्” उत्पत्तिसंयोगात्। उत्पत्तिवाक्यात् प्राप्तात् स्थानात् उपाकरणस्थाने प्रथमं सवनीयपशोरालभनीयत्वेन सवनीयपशोः स्थानप्राप्यत्वात्। तथाचोक्तं सह पशुभिः आरम्भपरिपाट्या पशुना सह कार्य्यं” अयमाशयः सवनीयपशोः स्थानमपि यज्ञसमीपम् अन्ययोस्तु दूरतः, तत्र प्रकृतौ “आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयपशुमुपाकरोतीति” श्रूयते त्रिवृता कुशमेखलया त्रिरावृत्तया परिवीय संवेष्ट्य इत्यर्थः। अत्र प्रकृतौ तथा श्रुतेस्तदतिदेशात् विकृतावपि सवनीयपश्रूपकरणात् पूर्वमाश्विनग्रहो ग्राह्यः। ततश्च गृहीते तस्मिन् समीपे स्वस्थानस्थितस्य सवनीयपशोरेव प्रथममुपस्थितिस्तस्यैव प्रथममुपाकरणं न तु प्रकृतौ प्रथममुपाकरणमग्नीषोमीयपशोः, तस्य प्रथममनुपस्थितेः इतरयोः सहोपाकरणानुरोधात् स्वस्थानात् सवनीयपशो स्थानादितरयोरपि स्वस्थानभ्रष्टयोः. अतः

"विरोधेऽर्थस्तत्परत्वात्" ५सू० "पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रम एव बलीयान् न पाठक्रमः । कुतः ? तत्परत्वात् पाठस्यार्थपरत्वात् अर्थार्थत्वात् कार्यसिद्ध्यर्थत्वादित्यर्थः । तेन पूर्वं छेदनम् पश्चात्तया छिन्नया शाखया वत्सापाकरणमिति । अथ यत्र श्रुतेः श्रुतिपाठक्रमस्य च विरोधो भवति तद्यथा "संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति" (शत०ब्रा०१।७।३।२८) श्रुतिः कर्मणि समाप्ते प्रैषं विदधाति पाठक्रमात्तु स्विष्टकृतः पश्चात् प्राशित्रावदानात् पूर्वमिति तत्र केन क्रमेणानुष्ठानमिति? संशये सत्याह" भा० "श्रुतिः क्रमादानुमानिकत्वात्" ६सू० "क्रमादिति श्रुतिपाठक्रमाच्छ्रुतिर्बलीयसी तेन श्रुतिप्रतीतक्रमेणैव संस्थिते कर्मणि प्रैषोच्चारणम् न पाठक्रमेण । कुतः आनुमानिकत्वात् पाठक्रमस्य अर्थाच्छ्रुतेः प्रत्यक्षत्वादिति शेषम्, प्रत्यक्षा हि श्रुतिः संस्थिते यज्ञे इति । पाठक्रमे त्वनुमानम्, अतोऽनेन क्रमेण पदार्था अनुष्ठेयाः यतोऽनेनैव क्रमेण पाठ इति । दुर्बलं च प्रत्यक्षादनुमानम् । अतः श्रुतिक्रमेणानुष्ठानमिति सिद्धम् । एवम् "तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियते" (श०ब्रा०४।१।५।१६) इत्येतदप्युदाहरणम् किं श्रुतिमन्त्रपाठात्तृतीयस्थाने गृह्यते? उत श्रुतिबलाद्दशमे? इति तत्र श्रुतिबलात्तु दशमे इति सिध्यति । अथ यत्र चोदनापाठक्रमस्य मन्त्रपाठक्रमस्य च परस्परं विरोधो भवति । यथाज्याधिश्रयणे "सोऽसावाज्यमधिश्रयतीषे त्वेति" अधिश्रयणं विधाय तदनन्तरमेव "तत्पुनरुद्वासयत्यूर्जे त्वेति" (शत०ब्रा०१।२।२।६) चोदनापाठक्रमः । मन्त्रपाठे त्वाज्याधिश्रयणमन्त्रानन्तरं "घर्मोऽसि विश्वायुरित्यादिम् (यजु० १।२२) पत्नीसन्नहनमन्त्रान्तं मन्त्रगणं पठित्वा आज्योद्वासनमन्त्र "ऊर्जे त्वेति" पठितः । पूर्वाधिकरणे हि क्रमाच्छ्रुतेः प्रत्यक्षत्वाद्बलीयस्त्वमुक्तम् अत्रोभयोः प्रत्यक्षत्वात्किं चोदनापाठक्रमेणाज्योद्वासनं कर्त्तव्यमुत मन्त्रपाठक्रमेणेति संशये सत्याह" भा० "मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात्" ७सू० । "मन्त्रचोदनयोरिति मन्त्रपाठचोदनापाठयोर्विरोधे मन्त्रबलम् मन्त्रपाठ एव बलवानित्यर्थः । कुतः ? प्रयोगित्वात् मन्त्राणाम्, मन्त्रा हि कर्मकाले प्रयुज्यन्ते पठ्यन्ते न चोदनावाक्यानि अतो मन्त्रपाठः पदार्थानां सन्निकृष्टः चोदनापाठस्तु विप्रकृष्टः । तथा हि समिधो यजति" (शत०ब्रा०१।५।३।९) इत्यनेन पदार्थो विहितः सोऽनुष्ठानवेलायां येन वाक्येन विहितस्तद्वाक्यं स्मारयति तेन वाक्येन स्मृतेनानुष्ठानवेलायां स्वपदार्थं स्मारितः सन्ननुष्ठीयते, इतीतरेतराश्रयः स्यात् अर्थेन वाक्यं स्मार्यते वाक्येन चार्थ इति नैष दोषः सामान्यविशेषभेदात् सामान्येन हि दार्शिकमङ्गं कर्त्तव्यमित्यवगम्यते विशेषस्मरणार्थं विधायकं वाक्यमालोचयति तेन चालोचितेन पश्चात्तदर्थविशेषः स्मारितोऽनुष्ठीयते अनुष्ठितश्चासौ झटित्येव द्वितीयं पदार्थं न स्मारयति अर्थानां अन्यानपेक्षेण क्रमेण पौर्वापर्य्यज्ञानवक्लृप्तत्वात् किं तर्ह्यनुष्ठानोत्तरकालं योऽसौ कृतस्तमालोचयति समिद्यागोऽयं कृत इति स चालोच्यमानो येन समिधो यजतीत्यनेन (शतपथ)१।५।३।९। ब्राह्मणवाक्येन विहितस्तत्स्मारयति तच्च स्मृतं स्वादुत्तरम् "तनूनपातं यजतीत्येतत् स्मारयति कुतः ? पाठात् ततः परं हि तत्पठितमिति तद्ब्राह्मणं पुनः पदार्थं विदधाति विधिरेव तस्य कार्य्यम् न स्मृतिः अनुष्ठानवेलायां तदेव ब्राह्मणं विधिव्यापारं कृत्वा चिरनिवृत्तव्यापारं प्रयोगकालाद्बहिर्भूतं स्मारकमपेक्षितम् । अयं मन्त्रपाठाद्ब्राह्मणपाठे विप्रकर्षः । मन्त्रः पुनरन्तःक्रतु प्रयुज्यमानः परिसमाप्यमानः उत्तरं मन्त्रं पर्युपस्थापयति । स चोत्तरो मन्त्रः पर्य्युपस्थाप्य उत्तरं पदार्थं पर्य्युपस्थापयन्नेव पर्य्युपतिष्ठते । तस्मात्तत्रालोचनान्तरापेक्षाभावान्नास्ति विप्रकर्षः । एतदुक्तं भवति स्मारकक्रमेण तावदनुष्ठानक्रमः न च मन्त्रे अनन्यार्थे सति ब्राह्मणस्य स्मारकत्वम् अप्रयुज्यमानतया सामर्थ्याभावात् । न हि निर्वपामीतिवन्निर्वपेदिति पदमुच्चारितमनुष्ठानौपयिकमनुष्ठेयप्रकाशनं करोति किं तु सम्बन्धिमात्रतया प्रयोगबहिर्भूतं सत् अनेन वाक्येनेदं विहितमतः एतत्करोमीत्येवमालोचनेन स्मारकं भवति । मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति सन्निकृष्टः । विप्रकृष्टाच्च सन्निकृष्टं बलवदित्येवं प्राप्ते आह" भाष्यम् "न समत्वात्" ८सू० । "मन्त्रपाठ एव बलवान् यदुक्तं तन्न कुतः ? समत्वात् मन्त्रपाठचोदनापाठयोः । कथमनयोः समता उच्यते मन्त्रः कर्मणि करिष्यमाणस्य कर्मणः स्मरणार्थं प्रयुज्यते, चोदना तु कर्मणो विधायिका अत एव चोदनायाः प्रवृत्तिः पूर्वम् यत्र पदार्थे विहिते सति पश्चात्तत्स्मरणार्थे मन्त्रः प्रयुज्यते अतः सममेवैतदिति प्राप्ते सिद्धान्तमाह" भा० "गुणानां तु भूयस्त्वात्" ९सू० । "तुशब्दः पूर्वपक्षनिरासार्थः । नैतदुभयं समम् किन्तु मन्त्रपाठ एव बलवान् । कुतः ?

मन्त्रेषु गुणानां भूयस्त्वात् गुणानां बाहुल्यात् यतः चोदनापाठापेक्षया मन्त्रेषु बहवो गुणाविद्यन्ते। तद्यथा कर्मकाले उच्चारणे पदार्थस्मारके यतो मन्त्रा अर्थवादादिकृतव्यवधानरहिता क्रमेण पठ्यन्ते तेनोत्तरमुत्तरं पदार्थं झटिति स्मारयितुं शक्नुवन्ति नैव चोदनापाठ विधेयार्थस्तावकवाक्यसदर्भव्यवहितत्वेन मन्त्रवत्स्मारयितुमशक्तत्वात्। न च कर्मकाले तस्योच्चारण विहितं मन्त्रवत्। श्रुतिरपि मन्त्राणां गुणभूयस्त्वमाह "तस्मादेतदृषिणाभ्यनूक्तमित्यादिना(शत०ब्रा०१।७।४।४)यो हि स्वप्रतिपादितस्यार्थस्य प्रामाण्यार्थमन्यस्योक्तिं प्रदर्शयति स आत्मापेक्षया उत्कृष्टस्यैव दर्शयति न निकृष्टस्य तेन गुणभूयस्त्वं मन्त्रेषु अतो मन्त्रपाठ एव बलवानिति सिद्धम्। पदार्थानां क्रमनियमे श्रुत्यादीनि त्रीणि प्रमाणान्युक्तानि तेषां विरोधे बलाबल चोक्तम् अथेदं चिन्त्यते। यत्र बहूनि प्रधानानि सह क्रियन्ते यथा दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयैन्द्राग्नादीनि यथा चातुर्मास्यपर्वसु वा अश्वमेधेऽतिरात्रपशुयज्ञपृश्निसप्तदशप्राजापत्येषु च तत्रारादुपकारकाण्यङ्गानि सर्वेषां तन्त्रेण क्रियन्ते इति। वक्ष्यति कर्मणां युगपद्भावस्तन्त्रमित्यत्र(कात्या॰१।७।१।)तेन न तेषु कश्चिन्ता सन्निपत्योपकारकाणि तु द्रव्यसंस्काररूपाणि प्रतिप्रधानभेदेन कर्त्तव्यानि तत्र चिन्त्यते तानि किं एकैकस्य सर्वाणि कृत्वापरस्य कर्त्तव्यानि? किं वा समानं एकैकं पदार्थं सर्वेषां कर्त्तव्यं? इति। तत्रैकैक प्रधानसन्त्यवहितानि स्वाङ्गान्यपेक्षते तस्माङ्गानां प्रधानकालत्वस्य न्याय्यत्वादेकैकस्मिन् गुणकाण्डमपवृज्यात् इतरथा हि पदार्थानुसमये सति स्वप्रधानाद्विप्रकृष्येरन् यदोक्षासादन कृत्वापरस्य तदेव क्रियते तदा पूर्वस्यासादनयोर्व्यवायः स्यात् सहवचन स्वारादुपकारकसाहित्यमात्रेणाप्युपपद्यते तस्मात्काण्डानुसमय एवेति प्राप्ते आह" भा॰ 'तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात्' १॰सू॰। "तुल्यसमवाये तुल्यानां प्रधानानां सह प्रयोगे द्रव्यसंस्काररूपाणि सन्निपत्योपकारकाण्यङ्गानि सामान्यपूर्वं कर्त्तव्यानि पूर्वः पूर्वः पदार्थः सर्वेषां समानं सहैव कर्त्तव्य। तद्यथा बहुषु हविःषु प्रथमं सर्वेषां निर्वपणम् ततः सर्वेषां पात्रीस्थापनम् ततः सर्वेषां तत्र व्यभिघार ततः सर्वेषां पात्रीसूपस्तारः ततः सर्वेषामुद्वासनम् ततः सर्वेषां वेद्यामासादनम् ततः सर्वेषामासादनम् इत्येव पदार्थानुसमयः कर्त्तव्यः। यद्येकैकस्मिन् गुणकाण्डमपवृज्यते तथा सति क्रमेण प्रयोगात् प्रयोगवाक्यावगतस्य साहित्यस्य बाधः स्यात् न हि वचनेनाविशेषतः साहित्यमवगम्यमानं कात्स्न्यनिक्षेपेण प्रधानासत्तिमात्रेणारादुपकारकविषयमात्र कल्पयितुं शक्यते। तस्मात्पदार्थानुसमयः। कुतः? आनुपूर्व्ययोगात् पदार्थानां तन्मन्त्राणां च एव क्रियमाणे पदार्थानामानुपूर्व्येण अनुक्रमेण युज्यन्ते तन्मन्त्राश्च अन्यथोत्तरपदार्थकरणानन्तर पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात्। "पौर्णमास्यां पौर्णमास्या यजेत" इत्यनेन वाक्येन पौर्णमासीशब्दबोध्यानां तत्सम्बद्धानां त्रयाणां यागानां साङ्गानामेककालप्रयोगोऽवगम्यते अतो यस्मिन्नेव क्षणे एकस्याभिश्रवणं कर्तव्यमापतति तस्मिन्नेवापरस्याभिश्रवणं कर्तव्यं तदशक्यतया केवलं न क्रियते द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पुरोडाशान्तरं नाभिश्रियेत अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिपदार्थः सर्वेषां कर्त्तव्यः। एवं बहुषु प्रधानेषु सर्वत्र पदार्थानुसमय एव न्याय्यो न काण्डानुसमयो इति स्थितम्। यत्र तु प्रधानविरोधो भवति पदार्थानुसमये क्रियमाणे। तत्र काण्डानुसमय एवेति वाचनिकेन साहित्येन पदार्थानुसमये प्राप्तोऽपि प्रधानविरोधान्न कृत्य। पुरोडाशाङ्गं ह्यभिश्रयणादयः तदङ्गं च क्रमः पदार्थानुसमयरूपः तदाश्रयणे च हुतस्य कपालस्य योगात् पुरोडाशशोषप्रसङ्गः। न चाङ्गानुरोधेन प्रधानबाधो युक्तः। तेनातिबहुषु हविःष्वेकैकस्य पुरोडाशस्याभिश्रयणं प्रथनमद्भिरभिमर्शनं चेत्यन्तं काण्डानुसमयः कार्यः। यत्र तु नास्ति प्रधानबाधः द्विहविष्कचतुरादिहविःषु तत्र भवतु पदार्थानुसमयः। दाहसम्भवशङ्कायां तु उद्वासनमपि व्युत्क्रमेण कार्य्यम् यदुक्तम् पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे पूर्वस्य व्यवधानमिति तत् सहत्वविधिबलात् परिह्रियते। एवं च सति वाजपेये आग्नेयैन्द्राग्नसारस्वतीवपापृश्निसप्तदशप्राजापत्येषु द्वाविंशतिसंख्येषु प्रत्येकद्विशत्या पदार्थैः समानासमानजातीयैर्व्यवधानमिष्यते न न्यूनाधिकैः। अन्ये त्वसमानजातीयैरेव। अनेनैव मुख्यक्रमप्रवृत्तिक्रमावुक्तौ भवतः। तथाहि यत्र बहूनि प्रधानानि भवन्ति तत्र यो मुख्यानां प्रधानानां क्रमस्तेनैव क्रमेण तदङ्गानां क्रमो भवति यथा पौर्णमास्यां प्रथममाग्नेययाग ततोऽग्नीषोमीययागः अत आग्नेयस्य प्रथमं पाकः ततोऽग्नीषोमीयस्य, एवं

प्रोक्षणादावपि । अथ मुख्यक्रमः अनेन क्रमेण यद्यङ्गान्यनुष्ठीयन्ते तदाङ्गानां नियता प्रधानप्रत्यासत्तिरनुगृहीता भवति एवं ह्यङ्गप्रधानयोर्यावदनुष्ठानमेव व्यवधानं भवति इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमाङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात् ।

अथ प्रवृत्तिक्रम उच्यते यत्र बहूनि हवींषि भवन्ति समानदैवतानि यथा वाजपेये पशवः तत्र चोपाकरणादयः संनिपातिनः प्रतिपश्वावर्त्तनीयाः । तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वा परस्यापि तथैव क्रियन्त इत्येवम् । किं तर्हि ? सर्व्वेषामुपाकरणं यतः कुतश्चित् पशोरारभ्य कृत्वा ततः सर्व्वेषां नियोजनमित्युक्तम् । तत्र प्रथमे पदार्थे उपाकरणे अनियम एव यतः कुतश्चित् पशोरारभ्य कर्त्तव्यः । द्वितीयस्तु पदार्थो नियोजनरूपः किं प्रथमो यत आरब्धस्तत एवारम्भणीयः ? उत तत्राप्यनियम एवेति ? तत्र क्रमनियमकारणानां श्रुत्यर्थपाठानामभावादनियमे प्राप्ते उच्यते प्रवृत्त्यैव नियमः । प्रथमः पदार्थो येन क्रमेण कृतः स एव क्रम उत्तरेष्वपि नियोजनादिषु नियम्यते । कुतः ? पदार्थैः सह प्रधानं कर्त्तव्यमिति वचनात् सर्व्वे पदार्थाः प्रधानकालाद्विप्रकृष्टव्याः कथं ? पदार्थैः सह प्रधानस्य वचनम् यावता "दर्शपूर्णमासाभ्यां यजेत प्राजापत्यं चरन्" इत्यादिषु प्रधानमात्रं श्रूयते उच्यते, समीहितं भावयेद्यागेनेत्यसि न हि यजेतेत्यस्यार्थः । तत्र यस्यामेव वेलायां स्वर्गो भावने कर्त्तृत्वं प्रतिपद्यते तस्मिन् क्षणे करणेतिकर्त्तव्यते अपि व्याप्रियेते । अयमर्थः नात्र प्रधानं कर्त्तव्यं श्रूयते किन्तु प्रधानेन स्वर्गं कार्य्यं इति करणविभक्तिनिर्द्देशाद्यागेनेष्टं कार्य्यमस्मिन् काले कुर्य्यादिति तेन स्वकार्य्यं सेतिकर्त्तव्यताकेन कर्त्तुं शक्यते नान्यथा । तस्मात्तितयस्य फलकरणेतिकर्त्तव्यतास्य युगपद्यजेतत्वेन कर्त्तव्यतयोच्यते । ततोऽन्यथा करणेतिकर्त्तव्यताकत्वमेव न स्यात् न हि पश्चाद्भावि करणं भवति । तथा भविष्यति भाव्ये भूते च करणे व्यवधानेन दोषः न हि विनष्टं करणं भवतीति । तथा करणेतिकर्त्तव्यतयोरपि मिथो विप्रकर्षे अयमेव दोषः । न हि विनष्टमनागतं वानुग्राहकं भवति । तेन यद्यपि वस्तुस्थामेककालतैषां प्रमाणात् । ततः प्रधाने सेतिकर्त्तव्यताके एकस्मिन् क्षणे सह कर्त्तव्ये प्राप्ते सति एकः कर्त्ता बहूनि प्रधानानि इतिकर्त्तव्यतां वा असमर्थः कर्त्तुं, यौगपद्येनेत्यवश्यम्भावी क्रियाणामपि विप्रकर्षः । दूरेणापि विप्रकर्षेण सहैव पदार्थाः कृता भवन्ति । प्रयोगवचनो हि यावतः पदार्थाननुष्ठापयति तावद्भिरवर्जनीयतया यावान् कालो व्याप्यते तावानेव कालः तावति च काले सर्व्वेषां कालो विधीयते न त्वेकस्मिन् क्षणे अशक्यार्थविधिप्रसङ्गात् । तेन प्रत्यासत्तिरेतेषां साहित्यम् नैकक्षणवर्त्तित्वम् । यद्येवम् प्रयोगवचनेनैव क्रमस्य सिद्धत्वात् श्रुत्यादिभिः किं क्रियते ? अनियतक्रमेणानुष्ठानं प्राप्नोतीति क्रमनियमे तेषां व्यापारः । यस्मात् प्रयोगविधिर्नैकक्षणवर्त्तित्वं विधत्ते प्रत्यासत्तिमात्रम् । तस्मात् प्रधानं चिकीर्षितमनागतं कृतं वा तेषां प्रधानार्थानामनुष्ठापकम् । करिष्यमाणेन कृतेन वा प्रधानेन प्रत्यासत्तिमात्रमङ्गानां तत्साहित्यम् नैकक्षणवर्त्तित्वम् । तत्राग्न्यन्वाधानादीनां करिष्यमाणप्रधाननिमित्तम् स्विष्टकृदादीनां तु कृतम् । तेनैवमवश्यम्भाविनि विप्रकर्षे केचित्पदार्था अव्यवहिताः प्रधानेनापेक्ष्यन्ते केचिद् द्वाभ्यां क्षणाभ्यां व्यवहिताः केचिद्बहुभिरिति । एवं वाजपेयपशुष्वपि अन्वाधानादि प्रागुपाकरणात् साधारणं सर्व्वपशूनां सहानुभूतम् । उपाकरणादयोऽपि संनिपत्योपकारकास्तन्त्रेणाविभेदावर्त्तयितव्या अपि साहित्येनैव पशुभिरनुभवितव्याः । यदैकस्योपाकरणम् तदैवेतरेषामपि कुतः ? सहचोदितत्वात्पशूनां साङ्गानाम् । तत्रैव सहानुभवितव्ये सति यस्य पशोः प्रथममुपाकरणं क्रियते तस्य प्राकृतेन पाठेन यद्यपि द्वितीयः पदार्थो नियोजनरूपः स्थाप्यते तथापि सहवचनादेव एकविंशतिक्षणव्यवहितं द्वितीयं पदार्थमाकाङ्क्षति । द्वितीयस्तु पशुर्विंशत्योपाकरणक्षणैर्व्यवहितः एकेन प्रथमस्य पशोर्नियोजनक्षणेन च व्यवहितः स्वीयं द्वितीयं पदार्थमाकाङ्क्षति । एवं तृतीयादयोऽपि पशवः सजातीयविजातीयव्यवहितानात्मीयान् पदार्थानपेक्षन्ते । अन्त्यस्तु विजातीयैर्विंशत्या नामैकविंशतेः पशूनां नियोजनक्षणैर्व्यवहितमेव द्वितीयं पदार्थमपेक्षते । तदेवं संनिपत्योपकारकानालोच्य ईदृशी एकविंशतिक्षणव्यवधानापेक्षा प्रधानानां भवति । ततश्च यावद्भिर्व्यवहितं शक्यं पदार्थं कर्त्तुं तावद्भिर्व्यवधानमरत्नावत्र कर्त्तव्यम् अतोऽभ्यधिकैस्तु न व्यवधातव्यम् यद्येकं पदार्थमेकस्य कृत्वा द्वितीयोऽपि पदार्थस्तस्य क्रियते तत सहवचनं नोपपद्येत । एवं चैतत् तृतीयादिष्वपि पदार्थेषु योज्यम् । प्रथमपदार्थक्रम एव द्वितीयादिष्वपि समाश्रयितव्यः इतरथा केषां चन व-

अन्यव्यधिकैरपि धर्मैर्व्यवहितानि स्युः। न च तद्युक्तम्। न चैवं केषांचिद्धर्मैर्व्यवधानं गुणो भविष्यतीति वाच्यम् यथाधिकैर्व्यवधानेऽश्रुतकरणम् एवं न्यूनैरपि व्यवधानेऽश्रुतकरणमेव। तस्मादेकस्मिन् याते पशूनां साहित्यसम्पत्तये प्रयोगवचनेनाव क्रमः पदार्थानां मिथः एकविधातिप्रसव्यवधानाभावोऽपेक्षितः। स न्यूनेनाधिकेन व्यवधाने बाध्येत। अतः सर्वेषां तुल्यप्रवृत्तिसिद्धये प्रथमपदार्थक्रम एव द्वितीयादिष्वाश्रयणीय इति सिद्धम्। अङ्गानां मिथः प्रत्यासत्तिर्नियमकारणम्, मुख्यक्रमे तु अङ्गानां प्रधानप्रत्यासत्तिरिति विशेषः। मुख्यक्रमप्रवृत्तिक्रमयोर्विरोधे च मुख्यक्रमो बलीयान्। तद्यथा दर्शपूर्णमासयोः सान्नाय्यधर्मा शाखाच्छेदनादयः पूर्वं प्रवर्त्तन्ते पश्चादाग्नेयधर्माः, प्रदाने त्वाग्नेयस्य प्रथमम् पश्चात्तु सान्नाय्यस्य तत्र स्विष्टकृदवदानं प्रयाजशेषाभिघारणं प्राशित्रावदानं वेदाभासादनादिकं च किं प्रवृत्तिक्रमात् सान्नाय्यस्य पूर्वं भवति? उत मुख्यक्रमादाग्नेयस्येति? संदेहादनियमे प्राप्ते मुख्यक्रमो बलीयानित्युच्यते। अस्मिन् हि आश्रीयमाणे अल्पीयांसः प्रथमपदार्थाः प्रधानाद्विप्रकृष्यन्ते अन्ये सर्वे संनिकृष्टा भवन्ति प्रवृत्तिक्रमे तु बहूनां विप्रकर्षः। एवं तु इष्टप्रवृत्तिभ्यां बलीयसा पाठक्रमेण मुख्यक्रमो बाध्यते प्राशित्रादानादिषु पाठक्रमाभावात् प्रवृत्तिक्रमो मुख्यक्रमेण बाध्यते। अथ स्थानप्रमाणमुच्यते। साद्यस्के "सह पशूनालभेत" इति(श०२२,२,२८,) श्रूयते साहित्यं च सवनीयस्य स्थाने। तत्र किमुपाकरणादौ अनियमः? उत यथाग्नीषोमीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्येति?। तत्र नियमकारणाभावादनियमे प्राप्ते प्रकृतिवदाग्नीषोमीयस्य प्राथम्ये प्राप्ते उच्यते सवनीयस्यैव प्रथममुपाकरणम्। अग्नीषोमप्रणयनानन्तरमग्नीषोमीयस्योपस्थानम्। स तेनोपस्थितोऽपि सहालम्भवचनेन तत्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न तस्य किंचिदुपस्थापकमस्ति। सवनीयस्तु स्वस्थानादप्रचलितः सन्नाश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्। इतरयोस्तु कथं क्रमः? अनियम एव, तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टपौर्वापर्यमस्तीति बाधेऽनुपपत्तिरित्यग्नीषोमीयोपाकरणानन्तरमनुबन्ध्योपाकरणमिति। तदेवं श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिसंज्ञानि षट् प्रमाणानि क्रमनियमकारीण्युक्तानि तेषां परस्परविरोधे च पूर्वं-पूर्वं बलवत् उत्तरमुत्तरं च दुर्बलमिति। तदुक्तम् "श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिभिः। एकाख्यातगृहीतानां नियमः कर्मणां क्रमः। विरोधे पारदौर्बल्यमेतेषामपि पूर्ववदिति" भा॰ (पूर्ववत् श्रुतिलिङ्गादिवत्)

क्रमस्य विनियोगसाधनता जै॰ सू॰ भाष्ययोर्दर्शिता यथा "क्रमश्च देशसामान्यात्" ३।३।१२ सू॰

"अथ किमेतावन्त्येव विनियोगकारणानि?। न,—इत्युच्यते। किं च क्रमश्च देशसामान्यात्, क्रमवतामानुपूर्व्येणोपदिश्यमानानां यस्य पर्याये यं धर्ममामनन्ति तस्य तं प्रति आकाङ्क्षा अनुमीयते, सत्यामाकाङ्क्षायामेकवाक्यभावः, तस्मात् ततो विनियोग—इति। किमिहोदाहरणम्? किं च प्रयोजनम्?। आनुपूर्व्यवतां यागानामनुमन्त्रणेष्वाम्नातेषु उपांशुयाजस्य क्रमे "दब्धिर्नामासीति" समाम्नातः, तस्य आकाङ्क्षामुत्पाद्य तेन एकवाक्यतां यास्यति तत एव विनियोगं करिष्यति—इति, तथा च ऐन्द्राग्नं कर्म वियातसजातस्य अस्ति आश्वव्यत, तस्य याज्यानुवाक्यायुगलमप्याम्नायते ऐन्द्राग्नस्, "इन्द्राग्नी रोचमाद्दिवः प्रवर्षिभ्यः"—इत्येकम्, अपरं "इन्द्राग्नी नवतिं पुरः श्नथद्वृत्रम्"—इति। तत्र लिङ्गाद्विनियोगे सिद्धे विशेषविनियोगो भवति, पूर्वं युगलं पूर्वस्य ऐन्द्राग्नस्य, उत्तरमुत्तरस्य—इति, एतत् उदाहरणम् प्रयोजनञ्च" भा॰

क्रमप्रकरणयोरेकत्र समवाये प्रकरणं बलीयः। क्रमसमाख्ययोस्तु क्रमो बलीयान् "श्रुति-लिङ्ग वाक्य प्रकरण स्थान समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" सू॰। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या॰ कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रैर्विनियोगसाधकानां श्रुत्यादीनां लक्षणोक्त्या स्थानशब्दस्य क्रमवाचकतावगतेः। विवृतञ्चैतत् तत्त्वबोधिन्यां यथा

"योगबलं प्रसिद्धावयवशक्तिः—समाख्या यौगिकं पदम्। यथा हौत्रमाध्वर्यवमौद्गात्रमिति। दर्शपौर्णमासादिषु याज्यानुवाक्यापाठादयो धर्मा ऋग्वेदोक्ता हौत्रसंज्ञकाः, दोहननिर्वापादयो यजुर्वेदोक्ता, आध्वर्यवसंज्ञकाः, स्तोत्रपाठादयः सामवेदोक्ता औद्गात्रसंज्ञकाः पदार्था उक्ताः। तत्रास्यैते धर्मा इति नियामकाभावात् येनकेनचिद्वा सर्वैर्वा करणप्रसक्तौ होतृ-

प्रकरणात् सर्व्वयागात्मकराजसूयाङ्गमवदेवनादिकमिति । ननु सर्व्वाङ्गमभिषेचनीयाङ्गमेव वा उभयथापि राजसूये तेषां कर्त्तव्यत्वाद्विचारोऽयमनुपयुक्त इति । न च प्रत्येकराजसूये प्रत्येकयागकाले तेषामनुष्ठानार्थं विचार इति वाच्यं तथा सति प्रत्येकाङ्गत्वेन प्रत्येकजन्यकलिकापूर्व्वोपकारकतया फलशिरस्कापूर्व्वानुपकारकत्वात् राजसूयाङ्गत्वानुपपत्ते । न च कलिकापूर्व्वद्वारैव फलशिरस्कापूर्व्वोपकारकत्वमिति वाच्य तत्तदङ्गापूर्व्वाणां प्रत्येकं पटत्वस्य तेषाञ्च पटकलिकापूर्व्वं प्रतिकारणत्वस्य कल्पनाया महागौरवात् । तस्माद्राजसूयाङ्गत्वेनावदेवनादीनां सकृदनुष्ठानं तत्तदङ्गापूर्व्वद्वारा फलशिरस्कापूर्व्वोपकारकत्व लाघवादितिचेत् सत्यं अवदेवनादीनामभिषेचनीयाङ्गत्वे यत्र प्रधानतया स्वतन्त्रेणाभिषेचनीयानुष्ठानं तत्राप्यवदेवनादिकरणापत्तेर्वारणार्थं विचारारम्भात् । अतएवाकाङ्क्षाया कल्प्यत्वं स्थानमात्रे दोष इति सङ्गच्छते अन्यथा राजसूयाङ्गत्वेनाभिषेचनीयेऽपि तस्या क्रमप्राप्तत्वात् । एवञ्चाभिषेचनीयसन्निधौ पाठस्तत्काले कर्त्तव्यताज्ञापनार्थमिति ध्येयम्। स्थानसमाख्ययोर्यथा । अङ्गमन्त्रानुक्त्या "एतत् पौरोडाशिककाण्डम्" इत्युक्तं पुरोडाशमन्त्रकाण्डे च "शुन्धध्वं दैव्याय कर्म्मणे देवयज्यायै" इति मन्त्र पठित तत्र च शुन्धध्वमिति मन्त्रलिङ्गात् पात्रशोधने मन्त्रस्य विनियोग प्रतीयते स च पुरोडाशस्येदं पौरोडाशिकमिति प्रकृतिप्रत्ययार्थरूपसमाख्याबलात् पुरोडाशकाण्डोक्तानामक्लृप्त्युलयवादीनामपि तत्पुरोडाशपात्रशोधने प्रतीयते अथ च साम्नाय्यदोहसन्निधाने मन्त्र श्रूयते यथा "साम्नाय्यान् पवित्रान् गृह्णाति शुन्धध्वं दैव्याय कर्म्मणे देवयज्यायै साम्नाय्येन जुहोति" इत्यादिदध्योदनरूपसन्निधानपाठात् स्थानबलात् साम्नाय्यपात्रशोधनाङ्गत्वम् । तथाहि पौरोडाशिकमित्यत्र प्रकृत्या पुरोडाश उच्यते तद्धितेन च मन्त्रादिकलापरूपं काण्डमुच्यते तद्धितवाच्यकाण्डपदार्थमन्त्रादेः पुरोडाशसम्बन्धित्वं तु न कस्यापि पदस्यार्थ, किन्तु समभिव्याहारलभ्यम् । तदुक्तम् "नैतदेव समाख्या हि न सम्बन्धाभिधायिनी । पाक हि पचिरेवाह कर्त्तार प्रत्ययोऽप्यक । पाकयुक्तः पुमः कर्त्ता वाच्योनैकस्य कस्यचित्" । तथा च पौरडाशिकपदस्य न मन्त्रसान्निध्य विना तद्धितवाच्यकाण्डपदार्थे मन्त्रे पुरोडाशसम्बन्धित्व न लभ्यते समाख्यान्यथानुपपत्त्या पौरोडाशिकपदस्य मन्त्रसान्निध्यं कल्पनीयमन्यथा समाख्याया अकिञ्चित्करत्वम् । साम्नाय्यदोहस्यापि पुरोडाशकाण्डपातितया तत्तुल्यत्वेऽपि समाख्यासम्बन्धाद्वेति साम्नाय्येन मन्त्रस्य सान्निध्य कल्प्यमिति प्रकरणादिकल्पनाचतुष्टयमात्रव्यवहितमिति सिद्ध समाख्यातः स्थान बलवदिति । तदुक्तम् । "एकद्वित्रिचतुःपञ्चवस्त्वन्तरमकारणम् । लिङ्गादीनाञ्च वैषम्यं श्रुत्यपेक्षं विधीयते । बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानान्तु बाध्यत्वं बाधकत्वमपेक्षया" । स्थानसमाख्ययोर्विरोधे पार्थसारथिमिश्रमाधवाचार्य्यदेवनाथप्रभृतिभिरेव व्याख्यातम् ।

पौर्व्वापर्य्यरूपक्रमोद्विविधः कालिकोदैशिकश्च तत्र वैदिककर्म्मानुष्ठाने श्रुत्यादिभिः यः क्रमोनियमितः स सर्व्वोऽपि कालिकः । दैशिकस्तु "क्रमान्मेषादयः स्मृताः" एव इत्यादौ राशिचक्रपूर्व्वापरदेशस्थितत्वात्तेषां दैशिकक्रमवत्त्वम् । "इत्यानुपूर्व्व्यं च नवातिदीर्घैः" कुमा० इत्यत्रापि दैशिकक्रम । क्वचित् उपदेशक्रमेण पदार्थानां क्रमवत्त्वम् यथा "वर्णक्रमाच्चतुर्विधस्तु पञ्चककर्म्मया" या० स्मृ० । अत्र ब्राह्मणादीनां वर्णानां चतुर्णां क्रमेणोपदेशात् तत्क्रमेण ब्राह्मणादीनाम् क्रमिकत्वम् । एवं "तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च" मनुवाक्ये "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विद· क्रमात्" इत्यमरवाक्ये च उपदेशक्रमात् क्रमवत्त्वम् । गर्भाधानादीनां संस्काराणामुपदेशक्रमेणैव क्रमिकत्वम् क्वचित् पदार्थगतोत्पत्त्यादिक्रमेणापि पदार्थक्रमोऽभिधीयते इत्याद्यूह्यम् । सं एवम् सत्क्रमव्यत्यय यथाक्रमक्रमव्यत्यय इत्यादावपि तथात्वम् ।

अत्र क्रमशः "सागरः सुरगेन्द्रेण क्रमेणैकेन लङ्घितः" भा० व० ११८०श्लो० । "व्यवसित तैर्व्विमत क्रतक्रमै" नैष० । पादे "पदानि त्रीणि दैत्येन्द्र ! सम्मितानि पदा क्रम" इत्युपक्रमे "त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्य्यते" भाग० ८।१९।२१ बलिं प्रति वामनोक्तिः । "अपि क्रमैरमात्रोकान् विश्वकाय क्रमिष्यति" तत्रैव २६श्लो० बलिं प्रति शुक्रोक्ति । सामर्थ्ये "क्रमं बबन्ध क्रमित न कोऽपि" भट्टिः क्रम सामर्थ्यं बबन्ध चकार क्रमितुं क्रम यत्सामर्थ्यं तच्चकारेत्यर्थ" जयम० । सामर्थ्यहेतुव्यापारविशेष एव क्रमशब्दार्थ इति तु न्याय्यम् । अतएव "न क्रमः कश्चिदत्र आसीत्" तथा स-

स्वीकृतक्रमेण स्थातव्यम्” “तद्ग्रहणार्थं मया क्रमः स्वीकृतः” “सिंहोऽपि क्रमं कृत्वा निःसृतः” इति च पञ्चत० तत्परतैव। परिपाट्याम् “पृथक्क्रमे वक्रमनुज्झितक्रमः” रघुः “नेतृक्रमेणोपरुरोध सूर्यम्” रघुः। “नेतृक्रमेणानुपरिपाट्या” मल्लि०। आनुपूर्व्ये “क्रमाश्रितस्य तरोर्यथोपमा” रघुः “क्रमाद्बाल्यं यौवनमिव वार्द्धकम्” रघु। आनुपूर्वी च वस्तुभेदात् भिन्ना तत्र शब्दस्यानुपूर्वी अव्यवहितोत्तरोच्चार्यमाणत्वम् इतरस्य तु अव्यवहितोत्तरकालवर्त्तित्वम् यथा प्रथमं शैशवं ततो यौवनं ततो जरेति वयोविशेषाणां, विद्यानान्तु वेदपूर्व्वकत्वमितरविद्यानां तथात्वात्। एवं पदार्थगतानुपूर्व्यविशेषः यथायथमूह्यः। स च अयुगपद्भावः। “अर्थक्रियाकारित्वं च क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति” सर्व्व० स० बौ० द०। “क्रमस्नानं क्रमाभिधानव्याप्तम्” दायभागः। अनुष्ठाने। “इत्यमेस्य विततक्रमे क्रतौ” माघः “विततक्रमे विततानुष्ठाने” मल्लि०। १०विन्यासे “उत्क्रान्तवर्णक्रमधूसराणाम्” रघुः। “उत्क्रान्तवर्णक्रमाः शोभावर्णविन्यासाः” मल्लि०। ११पक्षे च न० “क्रमः शक्तौ परीपाट्यां क्रमः चरणपद्मयोरिति विश्वोक्तेः पादे क्लीबतापि।

**क्रमक** त्रि० क्रमं वेदपाठभेदमधीते वेद वा क्रमा० वुन्। १वेदपाठविशेषरूपक्रमाध्यायिनि २तद्वेत्तरि च।

**क्रमजित्** पु० नृपभेदे “अमूपराजोदुर्वि॑षः क्रमजिच्च सुदर्शनः” भा० स० ४अ०।

**क्रमज्या** स्त्री ग्रहाणां स्पष्टीकारे सू० सि० उक्ते चतुर्विंशत्यर्द्धजीवाभेदे तन्मानं तत्रोक्तं यथा

“तत्त्वाश्विनो नन्दसमुद्रवेदाश्चन्द्राश्विषट्का गगनाङ्कनागाः। सप्ताभ्ररुद्रास्तिथिविश्वतुल्या आद्यैर्निरुक्ता नखबाणचन्द्राः। नन्दाग्नीशैलभुवो दिगङ्कचन्द्रा हुताशपक्षपूर्णदस्राः। तुरङ्गषट्काक्षतयः कुरामसिद्धा शराष्टेषुयमाः क्रमेण। गजाश्विभान्यङ्कशराष्टदस्रास्तुरङ्गसप्ताग्निहिलोचनानि। अम्भोधिकुम्भत्र्यगुणास्तुरङ्गशैलेन्दुरामा रसभूतदन्ताः। कुदन्तलोका द्विरसाङ्गदेवा गोऽभ्राब्धिलोकाः कुगुणाब्धिरामाः। भुजङ्गलोकाब्धिगुणाः क्रमज्याः” सू०

“इह हि स्पष्टीकरणप्रभृति सर्वकर्मार्द्धज्याभिः प्रतिपाद्यते। यतो ग्रहपथवलये कोऽप्यवधिभूतप्रदेशोमध्यबिन्दुनोच्यते। तस्मान्मध्यसूत्रात् तिर्य्यक्स्थोग्रहो वलयेऽर्द्धज्यापे भवति। अतोऽर्द्धज्याभिः सर्वं कर्म। तत्र भगणकलाङ्कितवृत्तचतुर्थांशे द्विशान्येव चतुर्विंशतिज्यार्द्धानि भवन्ति” प्रमिताः। २४क्रमज्याङ्काश्च यथा

२२५ | ४४९ | ६७१ | ८९० | ११०५ | १३१५ | १५२० | १७१९ | १९१० | २०९३ | २२६७ | २४३१ | २५८५ | २७२८ | २८५९ | २९७७ | ३०८४ | ३१७७ | ३२५६ | ३३२१ | ३३७२ | ३४०९ | ३४३१ | ३४३८ |

तासां तथामानं समर्थितं सू० सि० रङ्गनाथाभ्यां यथा “राशिलिप्ताष्टमो भागः प्रथमं ज्यार्धमुच्यते। तत्तद्विभक्तलब्धोनमिश्रितं तद्द्वितीयकम्। आद्येनैवं क्रमात् पिण्डान् भक्त्वा लब्धोनसंयुताः। खण्डकाः स्युश्चतुर्विंशज्ज्यार्धपिण्डाः क्रमादमी” सू० सि०।

“एकराशिकलानामष्टादशशतानामष्टमोऽंशस्तत्त्वाश्विमितः २२५ प्रथममाद्यं ज्यार्धं सम्पूर्णजीवार्धपिण्डकः कथ्यते तदभिज्ञैः। ततः प्रथमज्यार्धात् तेन प्रथमज्यार्धेन भक्तात् लब्धेन हीनमन्यस्याप्रसङ्गात् प्रथमज्यार्धमनेन युक्तं तत् प्रथमज्यार्धं द्वितीयकं ज्यार्धं भवति द्विगुणप्रथमैकोनम्। तृतीयादीनामानयनार्थमुक्तप्रकारमतिदिशति आद्येनेति। प्रथमज्यार्धपिण्डेन। एवमुक्तरीत्या क्रमात् सिद्धपिण्डान् भक्त्वा लब्धैरूनमाद्यं खण्डमनेन युताः खण्डका असिद्धाव्यवहितसिद्धज्यार्धपिण्डा असिद्धपिण्डा भवन्ति। यथा प्रथमखण्डं २२५ प्रथमभक्तं फलं १ तेन हीनं खण्डं २२४ तेन युक्तं द्वितीयखण्डं ४४९। तत्र प्रथमभक्त फलम् २ अर्धाधिकावयवस्यैकाधिकत्वेन ग्रहणस्य साम्प्रदायिकत्वात्। फलैक्येन ३हीनं प्रथमम् २२२ अनेन द्वितीयखण्डो ४४९ युतस्तृतीयम् ६७१। एवमिदं प्रथमखण्डभक्तं फलम् ३अनेन पूर्वफलैक्येन ३युतं जातं सर्व्वफलैक्यम् ६ अनेन प्रथमं खण्डं हीनम् २१९ अनेन तृतीयं ६७१युतं चतुर्थम् ८९०। एवमिदं प्रथमखण्डभक्तं फलं ४ पूर्व्वसर्वैक्येन १०हीनं प्रथमखण्डरूपं २१९ ज्यान्तररूपखण्डकमनेन ४ हीनं २१५ चतुर्थं८९० युतं पञ्चमं ११०५ एवमग्रेऽपि। अधोक्तरीत्याऽसङ्ख्यखण्डानां सम्भवात् खण्डनियममाह स्युरिति। एवं चतुर्विंशतिसङ्ख्याका ज्यार्धपिण्डाः कार्या न तदधिकाः। “एकत्रिंशाच्च त्रिंशाच्च पञ्चात् पञ्चदशादपि। सप्तमाद्द्वादशात् सप्तदशाच्चार्धोत्तरं मतम्” इति ब्रह्मगुप्तोक्तस्थलेऽर्धाधिकावयवस्यैकाधिकत्वेन न ग्रहणम् इति ध्येयम्। गणितस्याविकलत्वात् सिद्धाः पिण्डाः कथं नोक्ता ? इत्यत आह क्रमादिति। अमी सिद्धाः पिण्डाः क्रमात्

**क्रमिघ्न** न० कृमिं हन्ति हन–ट १विडङ्गे रत्नमा०। २कृमिनाशकमात्रे त्रि० स्त्रियां ङीप्।

**क्रमिज** न० कृमिभ्यो जायते जन-ड १अगुरुचन्दने अमर० २लाक्षायां स्त्री रत्नमाला०

**क्रमिशत्रु** पु० कृमेः शत्रुरिव। विडङ्गे रत्नमाला

**क्रमु** पु० कृम उन्। गुवाके द्विरूपकोषः

**क्रमुक** पु० कृम–उन् संज्ञायां कन्। १पट्टिकालोध्रे २गुवाके वृक्षे ३भद्रमुस्तके च अमर० ४भद्रमुस्तके ५कार्पासिकाफले न० मेदि० अयं शालसारादिगणे सुश्रुते उक्तः "शालसाराजकर्णखदिरकदरकालस्कन्दक्रमुकेत्याद्युक्त्वा "शालसारादिरित्येष गणः कुष्ठविनाशनः। मेहपाण्डुामयहरः कफमेदोविशोषणः" सुश्रु० तद्गुणा उक्ता "व्याखादितार्द्रक्रमुकाः समुद्रात्" माघः गौरा० ङीष्। ६गुवाके स्त्री शब्दरत्नमाला

**क्रमेतर** त्रि० ५त०। क्रमात् वेदपाठप्रकारभेदात् भिन्ने। तत उक्था० तद्वेत्त्यधीते वा ठक्। क्रामेतरक तद्वेत्तरि तदध्येतरि च त्रि०

**क्रमेल** पुंस्त्री० क्रामति क्रम–विच् एलति अच् कर्म०। उष्ट्रे स्वार्थे क। तत्रार्थे। उभयत्र जातित्वात् ङीष्।

**क्रय** पु० क्री–भावे अच्। पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वापादनव्यापारे (केना)। प्रतिरूपद्रव्यदानेन तथाचरणे तु न क्रयव्यवहारः इत्यत द्रव्यपदमनुक्त्वा पणपूरणेत्युक्तम्। क्रयस्य स्वत्वहेतुत्वञ्च पूर्वस्वामिस्वत्वनाशादेव भवति सति तत्स्वत्वे सजातीयस्वत्वं प्रति सजातीयस्वत्वस्य प्रतिबन्धकत्वेन क्रेतुः स्वत्वोत्पत्त्यभावात् अतो मूल्यदानेन तत्स्वत्वापाकरणम्। तस्य च स्वत्वहेतुत्वम् "अष्ट वित्तागमा धर्म्या दायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतेः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" गोतमस्मरणाच्च। क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यं वीरमि० व्यवस्थापितं यथा

"सप्त स्थावरागमोपायान् प्रदर्श्य तत्र भुक्तेः प्रामाण्यमाह बृहस्पतिः। विद्यया क्रयबन्धेन शौर्य्यभार्य्यान्वयागतम्। सपिण्डस्याप्रजस्यार्थं स्थावरं सप्तधा मतम्। पित्र्यबन्धक्रयाधाने रिक्थशौर्य्यप्रवेदनात्। प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात्"।

विद्यया प्रतिपक्षादिकमयोसिकया, स्वत्वोपाय क्रय प्रसिद्ध। बन्धो बन्धक सोपाधिकस्वत्वहेतुर्न्यासवि आत्यन्तिकस्वत्वहेतुस्तदन्यत्वात् विवेचनीयम्। क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम्। शौर्य्यागतं युद्धार्जितम्। भार्य्यागतं विवाहकाले प्राप्तम्। अन्वयागतं पित्रादिक्रमोपात्तम्। अप्रजस्य सपिण्डस्यार्थ रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम्। पित्र्येत्यादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विनीयते। तत्र प्रवेदनं विवाहः। स एव "क्रमागतं शासनिक क्रयाधानागमान्वितं। एवं विधस्तु यो भोगः स तु सिद्धिमवाप्नुयात्। संविभागक्रयप्राप्तं पितृलब्धञ्च राजतः। स्थावरं सिद्धिमाप्नोति भुक्त्वा हानिमुपेक्षया। प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम्। तस्य तत्सिद्धिमाप्नोति हानिस्तोपेक्षया तथा। अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी। त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्"।

मूल्यं दास्यामीति नियमं कृत्वाऽपि ग्रहणादपि क्रयसिद्धिः यथाह विवादचि० कात्या० "पण्यं गृहीत्वा योमूल्यमदत्त्वैव दिशं व्रजेत्। ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्" अत्र विषये लेख्यपत्रकरणमाह बृहस्पतिः "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कार्यते यत्तु क्रयलेख्यं तदुच्यते"। तस्यानुशयकालश्च अनुशयशब्दे दर्शितः"। वैदिककर्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारः यथाह क्रत्वधिकरणे जै०सू०भा०

"स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात्" ३।८।१ सू०।

"अस्ति परिक्रयः ज्योतिष्टोमे "द्वादशशतं दर्शपूर्णमासयोः अन्वाहार्यम्"। तत्र सन्देहः-किम् अध्वर्युणा परिक्रेतव्या ऋत्विजः, उत स्वामिना ?-इति। किं प्राप्तम्?-समाख्यानात् अध्वर्युणा,-इति प्राप्ते ब्रूमः,-'स्वामिकर्म परिक्रयः' कस्मात् ? कर्मणः तदर्थत्वात्, फलकामो हि यजमानः यश्च फलकामः, तेन स्वयं कर्त्तव्यम्, स यदि परिक्रीणीते, ततः स्वयं सर्वं करोति इति गम्यते, अथ न परिक्रीणीते, न सर्वं कुर्यात्। तस्मात् स्वामी परिक्रीणीते इति" शबरभाष्यम्

"वचनादितरेषां स्यात्" २सू०

"किम् एष एवोत्सर्गः ? न-इत्युच्यते,-'वचनात् इतरेषां स्यात्'। यत्र वचनं भवति, तत्र वचनप्रामाण्यात् भवति परिक्रयः,-'य एतामिष्टकाम् उपदध्यात् स त्रीन् वरान् दद्यात्'-इति" भा०।

सोमादिद्रव्यस्य द्रव्यसाध्यतया क्रीणामि विक्रीतत्वात्

त्रि० "रुद्र। यस्ते क्रिविपर नाम" यजु० १०।२०। ४असुरभेदे "अभ्योजसा क्रिविं युधा" ऋ० २,२२,२, "क्रिविं नामासुरम्" भा०। ५पञ्चालदेशे पु० व० व०। "आमोयामोऽतिरात्रस्तेन हैतेन क्रैव्यः पञ्चालो राजा" "क्रिवय इति ह वै पुरा पञ्चालानाचक्षते" शत० ब्रा० १३, ५,४,७, [क्रिविर्दती" ऋ० १,१६६,६,

क्रिविस् त्रि० क्रिवि—इस नि०। हिंसके "यत्रा वोदिद्युद्रदति

क्री क्रये (मूल्यदानेन द्रव्यग्रहणे) क्र्या० उभ०सक०अनिट्। क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट। चिक्राय चिक्रिये क्रेतव्य क्रयणीयः क्रेय क्रय्यार्थे प्रसारिते क्रव्यः क्रायकः क्रेता क्रीणन् क्रीणानः। क्रीत क्रीत्वा विक्रीय। क्रेतुम्। कर्म्मणि क्रीयते अक्रायि आक्रायिषाताम्—अक्रेषाताम्। चिक्रियें। "कइमं दशभिर्ममेन्द्र, क्रीणाति धेनुभि" ऋ० ४, २४,१०, "शुक्रं त्वा शुक्रेण क्रीणामि" यजु० ४,२६। "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्" मनुः "कच्चित् सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्" भा०स० कच्चिदध्याय। "सोमं राजानमक्रीणंस्तस्मात् प्राच्यां दिशि क्रीयते" ऐत० १,१२, "शूद्रानीतैः क्रयक्रीतैः (जलैः) कर्म्म कुर्व्वन् पतत्यधः" स्मृति। अनुशयशब्दे उदा०।

अप+मूल्यादिदानेन वशनयने। "सा चेदस्मै न दद्यात् काममेनामपक्रीणीयात्" शत० ब्रा० १४,६,४,७, "तदा एनां स्वपत्नीं वस्त्राभरणभोग्यादिदानेन कामं यथाशक्तिवैभवमपक्रीणीयात् वश नयेत्" भा०।

अभि+अभिलक्षीकृत्य विक्रये संस्कारविशेषे च। "एकं वा एष क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय" शत० ब्रा० ३,३,२,१, "एष क्रीयमाणः क्रयेण सम्पाद्यमानः सोम एकं वै एकं खलु प्रयोजनमभिलक्ष्य विक्रीयते, अभिषवादिना स्वात्मना संस्क्रियते वा" भा०।

अव+धनादिना वशनयने। "ब्राह्मणं क्षत्रियं वा सहस्रेण शताश्वेनावक्रीय" शाङ्खा० श्रौ०सू० १५,१०,१०,

आ+ ईषत्क्रये। "भार्य्या शुल्काक्रीताम्" दशकुमा०

उप+सामीप्येन क्रये। "घटादीनुपक्रीय" हितो०।

निस्+(र्) विक्रये क्रयानुरूपमूल्यदाने च। "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते" मनुः। "निष्क्रयोविक्रय" उ०त०रघु०। "भो केशव। मदीयस्त्वमद्भिर्दत्तोऽसि मत्पया। स त्वं मामनुगच्छस्व कुरुष्व यदुमयोच्यहम्। प्रथमः कल्प इत्येवमब्रवीन् मधुसूदनः। प्रजन्तमनुवव्राज नारदश्च जनार्द्दनः। परिहासान् बहुविधान् कृत्वा मुनिवरस्ततः। तिष्ठ गच्छामीत्युक्त्वा परिहासविचक्षणः। अपनीय ततः कण्ठात् पुष्पदामैनमब्रवीत्। कपिलां गां सवत्सां मे निष्क्रयार्थं प्रयच्छ मे। तिलं कृष्णाजिनं स्वर्णं प्रयच्छ तथाकाञ्चनम्। एषोऽत्र निष्क्रयः कृष्ण। विहितो वृषकेतुना" हरि० १२५अ० २निष्कृतौ। "तपोदानोपहारेषु व्रतेषु नियमेषु च। इज्याध्ययनधर्म्मेषु योनाऽऽसक्तः स निष्क्रयः" वशिष्ठः

परि+नियतकालं भृत्या स्वीकारे अनियतकालस्वत्वोत्पादकात् क्रयात् तस्य नियतकालत्वेन न्यूनता। तद्योगे करणस्य वा सम्प्रदानसंज्ञा। "शतेन शताय वा परिक्रीतः" सि०कौ०। "सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियम्" भट्टि "भक्त्यैः सक्तिः परिक्रीता सज्जिर्विष्णोरुपाऽरिभिः" मुग्ध०। "हतेनोपस्ततं वायो परिक्रीणानमुत्थितम्" भट्टि। क्रयशब्दे २२०५ पृ० दर्शितम् जै० सूत्रवाक्यादि उदा०।

वि+मूल्यग्रहणेन स्वस्वत्वध्वंसपरस्वत्वापादकव्यापारे—"मम्ने व विक्रीणावहा इषमूर्ज्जं शतक्रतो।" यजु०३,४९, विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः" मनु अनुशयशब्दे भूरि उदा०।

सम्+सम्यक् क्रये "न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित्" भा० आ० १६०अ०।

"परिव्यवेभ्यः क्रियः" पा०

अकर्त्रभिप्रायेऽपि क्रियाफले तङ्।

क्री त्रि० क्री—क्विप्। क्रेतरि कारकोपदत्वेऽपि संयोगोपधत्वात् न यण्, किन्तु इयङ्। यवक्रियौ यवक्रिय इत्यादि।

क्रीड़ खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीडीत्। चिक्रीड क्रीडिता। क्रीडितव्य क्रीड्य क्रीडकः क्रीडिता। क्रीडः। क्रीडा। क्रीडित। क्रीडन क्रीडितुम्। क्रीडित्वा विक्रीड्य। "एष सोमो अधित्वचि गवां क्रीडत्यद्रिभिः" ऋ० ९,६६,२६, "माता च पिता च तेऽग्रे वृक्षस्य क्रीडतः" यजु० २३,२५, "चिक्रीड चैव प्रजहास चैव" भा० व० १०४२श्लो० "क्रीडारसं निर्विशतीव बाल्ये" कुमा०। आत्मनेपदार्थे प्रयोगे तङपि दृश्यते। "ब्रह्मवन्द्यरथकाद्यैर्द्रव-न्दैः पुन पुनः। क्रीडसे त्वं नरव्याघ्र। बालः क्रीडनकैरिव" भा० व० ५०४श्लो०

अन्वादुपसर्गे तत्तद्योत्यार्थविशिष्टे क्रीडने तङ् "क्रीडोऽनुसम्परिभ्यश्च" पा०एभ्यः चकारात् आङश्च तङ् "बाध्वनुक्रीडमानानि पश्य द्वन्द्वानि पक्षिणाम्" भट्टि। "आक्रीडमानोत्कटात्मा श्रीमान् वायुसुतोमयौ" भा० व०

१४६अ०। "फलान्यादत्स्व चित्राणि परिक्रीडस्व सानु पु" भट्टिः। "मरुतसमभितः परिचिक्रीड्" शत० ब्रा० २,५,२,२०, आर्षत्वाडभाव। समस्तु अकूजने अस्य क्रमङ्गाभावे एव तङ्। "समोऽकूजने" वार्त्तिकत्वात् नियमात्, "कुरः सङ्क्रीडमानय उमया सह पर्व्वते" रामा० आ० ४७,१०, तेनास्य कूजनार्थताऽपि किन्तु तत्र न तङ् "सक्रीडति चक्रम्" सि०कौ०। "तैस्तैर्वि-कारैर्बकुभिर्दैत्यानां कामरूपिणाम्। समाः सक्रीडता तेषाम्" भा० आ० २०६अ०। अत्र आर्ष तङभावः।

क्रीड पु० क्रीड–घञ्। परीहासे गन्ध्रगर्त्ताः। [त्रिका०।

क्रीडक न० क्रीड–ण्वुल्। १क्रीडाकारके। २हास्ये सेवके

क्रीडचक्र न० "इदं क्रीडचक्र सदीपे मनसर्यकारि समेतम्" छ० र० उक्ते छन्दोभेदे।

क्रीडन न० क्रीड–भावे–ल्युट्। १खेलायाम् "उदकक्रीडन नाम कारयामास भारत।" भा० आ० १२८अ०। "या नक्रीडर्मभिन्दुशेखरधनुर्भङ्गावधि" महाना०। करणे ल्युट्। २क्रीडासाधने। "यथा हिरण्याक्ष उदारवि-क्रमोमहामृधे क्रीडनवन्निराकृत" भाग० ३।१६।१४, स्वार्थे क। तत्रार्थे "क्रीडसे त्वं नरव्याघ्र। बाल क्री-डनकैरिव" भा० व० १२अ०।

क्रीडनीय त्रि० क्रीड–करणे वा० अनीयर् क्रीडनाय साधु छ वा। क्रीडासाधने। "क्रीडत क्रीडनीयानि दद्ु पक्षिगणाय च" भा०अनु०८६अ०।

क्रीडा स्त्री क्रीड–भावे अ। १परीहासे २खेलने च"क्रीडारस निर्व्विशतीव बाल्ये" कुमा०। "आत्मरतिरात्मक्रीड आत्म-मिथुन आत्मानन्दः" छा० उप०। "तोयक्रीडानिरत युवतिस्नानतिक्तैर्मरुद्भिः" मेघ०। "क्रीडायासश्रमशम-पटव" माघ। क्रीडाम्बुः, क्रीडाशैल, क्रीडोद्यानादय। क्रीडार्थ म्बुहादौ। क्रीडासचिव नर्म्मसचिवे

क्रीडाताल पु० "एकश्च नुतौथक क्रीडाताल स कथ्यते" इति संगीतदामोदरोक्ते तालभेदे।

क्रीडानारी स्त्री क्रीडाया क्रीडार्थं नारी अश्वघासादि-वत् चतुर्थ्यर्थे इत०। क्रीडार्थायां वेश्यारूपायां भार्य्याम्। "वेश्या निवेशिता वीर। हारवत्या सह-स्रश। सामान्यास्ता कुमाराणां क्रीडानार्यो महात्म-नाम्" हरि०१४७अ०। [यादचि०

क्रीडायान न० क्रीडार्थं यानम् चतुर्थ्यर्थे इत०। पुष्परथे

क्रीडारत्न न० क्रीडाया रत्नमिव। रतौ त्रिका०

क्रीडारथ पु० क्रीडाया क्रीडार्थो रथ चतुर्थ्यर्थे इत०। पुष्परथे "क्रीडारथोऽस्तु भगवन्नुत सायामिको रथ" भा० आ० ५३अ०।

क्रीडारसातल न० श्रीगदितलक्षणयुते उपरूपकभेदे यथा "प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्। प्रसिद्धनायक गर्भविमर्शाभ्यां विवर्ज्जितम्। भारती वृत्तिबहुल श्रीतिशब्देन संयुतम्। मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् यथा क्रीडारसातलम्" सा०द०

क्रीडि त्रि क्रीड–इन्। क्रीडके। "आ क्रीडयो न मातर तुदन्त" ऋ० १।६४।१४।

क्रीडिन् त्रि० क्रीड–वा०ताच्छील्ये इनि। १क्रीडाशीले २वायुभेदे पु "क्रीडिश्च मरुतान् मरुद्भ्य" यजु०२४। २६ "क्रीडी च शाकी चाज्जेषी" यजु० १७।८५, "क्रीडी सदाक्रीडाशीलोमरुत्" वेददी०।

क्रीडु त्रि० क्रीड उन्। क्रीडाकारके। "क्रीडुर्मखो न मंहयु. पवित्र सोम। गच्छसि" ऋ० ६।२०।७

क्रीत त्रि० क्री–कर्म्मणि क्त। १मूल्यदानेन स्वत्वासादीभूते क्रीते। "मूढ्याक्रीतं क्रयक्रीतं (जलैः)कर्म्म कुर्व्वन् पत-त्यध" स्मृति। २गौणपुत्रभेदे पु०। "क्रीतश्च नवम स चैव क्रीत" विष्णु स०। भावे क्त। ३क्रये न० क्रीतानुशय। पुत्रभेदास्तल्लक्षणानि च योगीश्वरेण दर्शितानि यथा "औरसो धर्मपत्नीजस्ततसमः पुत्रिकासुतः। क्षेत्रज. क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुत स्मृत। कानीन कन्यकाजातो मातामहसुतोमत। अक्षतायां क्षतायां वा जात पौनर्भव सुत। दद्यान्माता पिता वा य स पुत्रोदत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीत, कृत्रिम स्यात् स्वयंकृत। दत्तात्मा तु स्वयंदत्तो गर्भे विन्न सहोढज। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धोभवेत् सुतः"। "असदृ० वान्यवर्मिति देशभाषाविप्रकृष्टस्य प्रतिषेध एव क्रीतस्वयं-दत्तकृत्रिमेष्वपि योज्य समानन्यायत्वात्। क्रीतस्तु विक्रीत मातापितृभ्यां पूर्व्ववत् तथैक पुत्र ज्येष्ठञ्च वर्ज-यित्वा आपदि। सवर्णं इत्येव यत्तु मनुनोक्तम् "क्री-णीयाद्यस्त्वपत्यार्थ मातापित्रोर्यमन्तिकात्। स क्रीतक सुतस्तस्य सदृशोऽसदृशोपिऽर्वेसि" तद् यौ सदृशोऽसदृशो वेति व्याख्येय न जात्या "सजातीयेष्वयंप्रोक्तस्तनयेषु मया विधि" इत्युप संहारात्" मिता०। स्वार्थे क। तत्रार्थे। "कानीनश्च सहोढश्च क्रीत. पौनर्भवस्तथा।

स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः" इति मनूक्तेः तस्य पितृमातृभिन्नदायानधिकारित्वम् । दत्तकमीमांसामते "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" पराशरेण कलिधर्मप्रस्तावे चतुर्णामेव ग्राह्यतया उक्तेः दत्तकचन्द्रिकामते "दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः" इत्यादिपुराणे दत्तौरसभिन्नानां कलौ वर्ज्यत्वोक्तेश्च क्रीतपुत्रस्य न कलौ कर्त्तव्यता ।

**क्रीतानुशय** पुं० क्रीते क्रये अनुशयः । "क्रयविक्रयानुशयश्च" इति मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे अनुशयशब्दे १८६७ पृ० तद्विवृतिर्दृश्या । अधिकं वीरमित्रोदये दर्शितं यथा

"अथ क्रीतानुशयो व्यवहारपदम् । तत्स्वरूपमाह नारदः "क्रीत्वा मूल्येन यत् पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते" इति । न बहु मन्यते—समर्घमसमर्घमिति पूर्व्वं न विचार्य्य गृहीतमित्यर्थः । क्रीतं परीक्षणीयमित्याह बृहस्पतिः "परीक्षेत स्वयं क्रीतमन्येषाञ्च प्रदर्शयेत् । परीक्षितं बहुमतं गृहीता न पुनस्त्यजेदिति" । अन्येषां पण्यगुणदोषविदामिति शेषः । नारदोऽपि "क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति" । चर्म्मादीनां परीक्षा सद्यः कार्य्या तथा च व्यासः "चर्म्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च । वसुकुप्यहिरण्यानां सद्य एव परीक्षणमिति"। अत्र वसुशब्देन रूप्यं गृह्यते । कुप्यं रूप्यहेमव्यतिरिक्तं त्रपुसीसादिकम् । तथा च हेमरूप्ये प्रस्तुत्याहामरसिंहः "ताभ्यां यदन्यत्तत्कुप्यमिति" । क्रीतपण्यद्रव्यविशेषेण परीक्षणकालावधिमाह नारदः "त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु । मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् । द्विपदामर्द्धमासन्तु पुंसान्तद्द्विगुणं स्त्रियाः । दशाहं सर्व्वबीजानामेकाहं लोहवाससाम् । अतोऽर्व्वाक् पण्यदोषस्तु यदि सञ्जायते क्वचित् । विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयादिति" । त्र्यहात् क्रयदिनादारभ्येति शेषः । पञ्चाहादित्यादावप्येवमेव शेषोऽवगन्तव्यः । त्र्यहं विक्रेतुः प्रतिदेयमित्यादिविधिदर्शनात् त्र्यहाद्दोह्यमित्यादि परीक्षणं प्रीतिदोह्यादिद्रव्यविषयमिति गम्यत इति स्मृतिचन्द्रिका । दोह्यं महिष्यादिकम् वाह्यं बलीवर्दादिकम् । मुक्तामहत्त्व रत्नोपलक्षणम् । द्विपदाम्पुंसान्दासानामित्यर्थः । तद्द्विगुणं मासादित्यर्थः स्त्रियादास्या इत्यर्थः । पूर्व्वोदाहृतचर्म्मकाष्ठेत्यादिव्यासवचनेन भक्षणाद्यर्थं गृहीतानां धान्यादीनां सद्यःपरीक्षणाभिधानात् सर्व्वबीजानामित्यत्र बीजशब्दोऽत्र वपनार्थं गृहीतधान्यपरः । अन्यथा सद्यःपरीक्ष्यत्वप्रतिपादकव्यासवचनविरोधः स्यात् । अतोऽर्व्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः । कात्यायनोऽपि "भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव चेति" । भूमेर्गृहक्षेत्रादिरूपाया अनुशयः परावर्त्तनयोग्यः कालः परीक्षाकाल इति यावत् । यथोक्तपरीक्षाकालातिक्रमे दोषदर्शने न प्रतिदानमित्याह स एव "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम् । क्रीतन्तत् स्वामिने देयम्पण्यं कालेऽन्यथा न त्विति" । अविज्ञातं परीक्षाशैथिल्यात् सम्यक्तोऽपरिज्ञातम् । दुष्टं विभावितं दोषवत्तया ज्ञातमित्यर्थः । काले परीक्षाकाले । अन्यथा तत्कालात्यये दुष्टतया परिभावितमपि तत् स्वामिने न देयम् । अविज्ञातन्तु यत्क्रीतमित्यनेन यत् क्रयात् प्राक् अपरीक्ष्य क्रीतन्तत् परीक्षासमये दोषदर्शने परावर्त्तनीयम् । यत्तु परीक्ष्य गृहीतं तन्न परावर्त्तनीयमिति । दर्शितमर्थं नारदश्चाह "क्रीत्वा नानुशयं कुर्य्याद्वणिक् पण्यविचक्षणः । क्षयं वृद्धिञ्च जानीयात् पण्यानामागमन्तथा । क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति" । अनुशयं पश्चात्तापम् । पण्यानां अश्वादीनां अस्मिन्देशे मूल्यहानिरस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमञ्च क्रयात् प्रागेव जानीयादित्यर्थः । दोषदर्शनमन्तरेण परीक्षाकाल एव प्रत्यर्पणे विशेषमाह कात्यायनः "क्रीत्वा चानुशयं पश्चात् त्यजेद्दोषादृते नरः । अदुष्टमेव काले तु स मूल्याद्दशमं वहेत् । क्रीत्वा गच्छत्यनुशयं क्रयी हस्तमुपागते । षड्भागन्तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नरः" इति । अदुष्टमनभिभुक्तम् । काले परीक्षाकाले अत्र मूल्यदशमभागदानं यदुपभुज्यमानमपि न नश्यति भूम्यादिकं तद्विषयम् उपभोगविनश्वरबीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया । ननु विज्ञानतोऽप्यनुशयो न कार्य्यः "क्रीत्वा नानुशयम् कुर्य्यादिति" निषेधसद्भावादिति चेन्नास्य अपवादस्य सत्त्वात् स चापवादो दर्शितो नारदेन "क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतमिति" । मन्यत इत्यनेन वस्तुतो दोषाभाव उक्तः । द्वितीयादिदिवसे प्रत्यर्पणे विशेषमाह स एव "द्वितीयेऽह्नि ददत् क्रेता मू-

यच यातं धातुमात्रं तन्मते भावे क्रुश्यते इत्येव। एतन्मते क्रुद् इत्यत्र क्विपि नलोपाभावे न निपातकल्पना

क्रुन्थ क्लेशे श्लेषे च क्र्या० पर० अक० सेट् इदायुक्० । क्रुथ्नाति अक्रुन्थीत् चुक्रुन्थ अनुनासिकीयः

क्रुमु त्रि० क्रम—उन् संदे दृपो० । वर्त्मन् क्रमणशीले "क्रुमुर्वा वः सिन्धुर्निरीरमत्" ऋ० ५।५३।८। "क्रुमुः वर्त्मन् क्रमणशीलः" भा०

क्रुमुक पु० क्रम—उक वेदे दृपो०। शुभाके "क्रुमुकमपि कुर्यात् पश्वा वा अन्वेः प्रिया तनुः यत्क्रुमुकः" तैत्ति०५।१०।८।५

क्रुश रोदने अक० आह्वाने आक्रोशे च सक० भ्वा० प० अनिट् । क्रोशति अक्रुक्षत् । चुक्रोश क्रोक्ष्यति । क्रोष्टा क्रुष्टः क्रोशन् क्रोशः क्रोशनः क्रोष्टुः। "रसस्वरस्या क्वां सायमक्रुक्षदिति मन्यते" ऋ० १०।१४६।४ "इहहदन्ति मदिरेव मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु" ऋ१०।६४।३ "एव क्रोशति हाल्य्कृतं यिष्वी प्रतिकूजति" रामा० अयो०५३अ०। कर्मणि क्रुश्यते व्यक्रोशि "इतिक्रुशाक्रुश्यत तेन कैतकम्" नैष०

आद्यायुपसर्गात् परस्तु तत्तदृद्योत्यार्थयुक्ते रोदनादौ

अनु+दयायाम् अनुरोदने च सक० । अनुक्रोश (दया) "न तावुनक्रोशन्ति चितयोभरेषु" ऋ० ४।३८।५ "विमतक्रुश्य वैक्रव्यमतृपादयसि मेऽनघ !" भा०अनु०५अ०

आ+अभिशपने सक०। "शतं ब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति" मनुः । "प्रत्याक्रोशेदिहाक्रुष्ट" भा० अनु० ३५६२श्लो० । "आक्रुष्ट पुरुषं सर्व्वं प्रत्याक्रोशेदमन्तरम्" भा० व० १८१श्लो० । "हा प्रिये ! क्वासि नष्टाथि आक्रोशन्नपतत् क्षितौ" रामा० आ० ८६अ०

उद्+उच्चैराह्वाने सक० "उदक्रोशन् स पाण्डवान्" भा० आ० ७४८श्लो० । उच्चैरोदने च अक०

क्रुश्वन् पुंस्त्री क्रुश—क्वनिप् । शृगाले उणादि० स्त्रियां ङीप् रश्चान्तादेश क्रुश्वरी । [तामिवे २आह्वते च त्रि० ।

क्रुष्ट न०क्रुश—भावे क्त । १रोदनरवे। कर्मणि क्त । २कथितेत्त क्रुष्टवत् । क्रूडति अक्रूडीत् चुक्रोड "तस्य रेत परापतत् तदग्निर्वीनिमोपान्नद्वादयवा तदक्रूडयत् क्रूडयानं नवि अवदत् तद्दिद पद्म" श्रुतिः ।

क्रूर त्रि० कृत-रक् धातो क्रूः । १निर्दये २कठिने अमरः ३घंतके ४उष्णे च मेदि० । "तत्राभिषेकसंभारं कल्पितं क्रूरनिश्चया" रघु० । "तत्रिक्रुपाशाः सर्व्वेऽमः क्रूरे प्रतिकृतक्रियाः" कुमा०। "दक्षारी क्षुद्रदीनः क्रूराचारैरसंश्रयन्" मनुः । तस्य भावः ष्यञ् क्रौर्य्यं न०, तल् क्रूरता स्त्री, त्व क्रूरत्व न०, निर्दयत्वे हिंसने काठिन्ये उष्णत्वे च । "ओजोऽथ युग्मं विषमं समश्च क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च । चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टा." दीपिकोक्ते मेषादिषु मध्ये ५विषमराशौ पु० "क्षीणेन्द्वर्कसौरारा पापाः सौम्यास्तथा परे । पापयुक्तोबुधः पापोराहुकेतू च पापदौ" ज्योति० उक्ते ६पापग्रहभेदे च "यथा इष्टफला क्रूरास्तथा सौम्याः शुभप्रदा । क्रूरयुक्तः शुभः सौम्योऽपि च क्रूरफलप्रद" "इदन्तु सौम्यक्रूराणां फलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्य्ययात्" "ग्रहाः सौम्यास्तथा क्रूरा वक्राः शीघ्रोऽभीषमा" इति "तिथिराश्यश्रमवात्तं विद्धं क्रूरग्रहेण यत् । सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः । न नन्दति विवाहे च यात्रायां न निवर्त्तते । रोगाद्विमुच्यते रोगी वेधवेलाक्रतोद्यमः । रोगकाले भवेद्वेध क्रूरखेचरसम्भवः" "क्रूरावक्रा महाक्रूरा इति च ज्यो० त० पापग्रहार्थपरतया क्रूरशब्दप्रयोगात् । क्रूरवेधप्रकारस्तु चक्रशब्दे सर्व्वतोभद्रचक्रे वक्ष्यते । ७रक्तकरवीरे पु०८गृध्रेऽपक्षिणि ९कङ्कपक्षिणि च पुंस्त्री० राजनि० स्त्रियां जातित्वात् ङीप् । १०रक्तपुनर्नवायां स्त्री राजनि०

क्रूरकर्म्मन् त्रि० क्रूरं हिंसकं कर्म्म यस्य । १हिंसाकर्म्मकारिणि "क्रूरकर्म्मकृताश्चैव शतयोगुरतल्पगः" मनु० । २कटुतुम्बिनीवृक्षे पु० राजनि० ।

क्रूरकोष्ठ त्रि० क्रूरं कठिनं कोष्ठं यस्य । धातुवैषम्यकृते बद्धकोष्ठाशये । "क्रूरकोष्ठस्यातितीक्ष्णाग्ने रत्नमौषधमल्पगुणं वा भक्षयत् प्रायश्चितैति तत्र बहुदोषदोषा यथाकालमनिर्हृयमाणा व्याधिं बलविभ्रमञ्चापादयन्ति" सुश्रु० ।

क्रूरगन्ध पु० क्रूर उग्रोगन्धोऽस्य । १गन्धके राजनि० २तीक्ष्णगन्धमात्रे त्रि० क्रूर गन्धएकदेशोऽस्या टाप्। कन्थारीवृक्षे तीक्ष्णकण्टकायाम् राजनि० ।

क्रूरदृश् त्रि०क्रूरा दृग् यस्य, क्रूरं पश्यति दृश—क्विप् २त० ष० वा । १पिशुने खले २शनैश्चरग्रहे पु० मेदि० । ३मङ्गलग्रहे "आरोवक्र. क्रूरदृक् चावनेय" ज्यो०त० । कर्म्म०। नील० ता० उक्ते स्थानविशेषस्थितानां ग्रहाणां स्थानविशेषे ४चतुरास्यदृष्टौ रिपुदृष्टौ स्त्री। १५५पृ०आरिशब्दे विहृतिः । क्रूरस्य ग्रहविशेषस्य दृक । ५पापग्रहदृष्टौ स्त्री ।

**क्रूरधूर्त्त** पु० क्रूरः कृष्णत्वात् तद्दृशः धूर्त्तः। कृष्णधत्तूरके राजनि०

**क्रूरप्रसादन** त्रि० क्रूरमपि प्रसादयति प्र+सद+णिच्–ल्यु। भक्ते सेवके शब्दचि०। [राजनि० स्त्रियां ङीप्।

**क्रूररावित्** पु स्त्री० क्रूरशब्दं रौति रु-णिनि। द्रोणकाके

**क्रूरलोचन** पु० क्रूरं लोचनमस्य। शनिग्रहे ज्योता० तद्दृष्ट्यादिफलकत्वात् तस्य तथात्वम्। यथा च तद्दृष्ट्या घातकत्वं तथा इमाननशब्दे ८८१पृ० उक्तम्

**क्रूराकृति** त्रि० क्रूरा आकृतिर्यस्य। १कठिनमूर्त्तिके २रावणे पु० शब्दमा०। कर्म्म०। ३कठिनायां मूर्त्तौ स्त्री

**क्रेङ्कृत** न० क्रेङ्कित्यव्यक्तं शब्दं करोति णिच्–भावे क्त। क्रेङ्कित्यव्यक्तशब्दभाषणे "निरुध्यमाना चक्रेव चक्री क्रेङ्कृतभाषणी" काशीख०

**क्रेणि** त्रि० क्री–नि। क्रेतरि–शब्दक्रेणि० उज्ज्वलद०

**क्रेय** त्रि० क्री–कर्म्मणि यत्। क्रेतव्ये अमर

**क्रैडिन** त्रि० क्रीडी मरुत् देवताऽस्य अण् भेदे नि० नलोपाभाव। क्रीडिदैवत्ये साकमेधीये तृतीयाहे प्रातःसवनिके चरुद्वयपिण्डरूपे हविषि। "पिण्डाश्चेवास्य क्रैडिनं हवि पिण्डैर्हि क्रीडतीवायमेवावाङ् प्राण" शत० ११,५,२,४ "अग्रणी लिङ्गं चेति त्रीणि पिण्डानि" भा० "तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णमासं प्रातःसवनिकेषु क्रैडिनम्" आश्व० श्रौ० ८।२।१५ तद्द्रव्यमधिकृत्य इष्टिः च। क्रैडिनीया इष्टिभेदे सा च इष्टि कात्या० श्रौ० ५,७,१ सूत्रादौ दर्शिता। तस्या पद्धतिश्च संक्षेपेण कर्कभाष्ये दर्शिता यथा

"अथ क्रैडिनीया इष्टिरभिधीयते तत्र मरुद्भ्यः क्रीडिभ्य सप्तकपाल, अदित्यै चरु, इमे हविषी समानतन्त्रे भवत प्रतीच्युत्तरपश्चे क्रैडिन्यादित्ये इत्यर्थमिध्माबर्हिषी क्रैडिन्यादित्येभ्यामहं यत्ने इति। चरणे पात्रासादने सप्तकपालानि एका चरुस्थाली, दक्षिणा अन्वाहार्यं चिताप्रदानानन्तरम्, मेक्षणम् वि यातरिक्तकाणि पुरोडाशपात्रेका अन्यच्चापि प्रकृतिवत्। प्रोक्षणे मरुद्भ्यः क्रीडिभ्यो जुष्टम्, अदित्यै जुष्टम्। प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् अदित्यै त्वा जुष्टम्। नानाबीजपक्षे तद्धर्मा उक्ता एकबीजपक्षे करणाल्ने विभज्यानश्च इदं मरुतां क्रीडिनाम्, इदमदित्या। प्रायदाने मरुत क्रीडिनो मक्ष, अदिति मक्ष, कपटेन यज्ञेत्यत्र बाधने। उत्पवनप्रयाले इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि। प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि मरुत क्रीडिनो यज इदं मरुद्भ्यः क्रीडिभ्य, अदित्याअनुब्रूहि अदितिं यज इदमदित्यै, मेक्षणेन चरोरवदानम्। स्विष्टकृदादि पुरोडाशस्य प्राशित्र इडाव्यतिरिक्तं न भवति चरोस्तु सर्वं भवत्येव। व्यूहने मरुता क्रीडिनामदित्या उज्जितिम् मरुत क्रीडिनोऽदितिस्समपनुदन्तु। प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति। अन्यत्कर्मापवर्गान्त प्रकृतिवत् इति"

**क्रैव्य** पु० क्रिवीणां पञ्चालानां राजा वा० अञ्। क्रिविदेश राजभेदे क्रिविशब्दे उदा०

**क्रौञ्च** पु० क्रुञ्च–अच् वा० गुण। "कैलासे मदनावासे क्रौञ्च क्रौञ्चोऽभिधीयते" इति इन्दुमालायुक्ते क्रौञ्चपर्वते क्रौञ्चदारण कार्त्तिकेय इति रायमुकुट०

**क्रोड** पुं स्त्री० क्रुड–घनीभावे सज्ञायां घञ्। १शूकरे "क्रोडकुलदश्यमानभद्रमुस्तारसामोद" काद० "नदी सैवालदिग्धाङ्गं इरिहस्तुजटाधरम्। तस्मौ शङ्खमसैमौतं क्रोडैश्चित्रैरिवार्पितम्"भा०अनु०५०अ०। २भुजयोरन्तरे (कोल) न०स्त्री०अमर "कुपितकपिकपोलक्रोडताम्रस्तमांसि" उद्भट० ३तरुकोटरे "हा हा हन्त तथापि जन्मविटपिक्रोडे मनोधावति" उद्भट। घनीभूते ४वक्षोमध्यभागे पु० "इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्" यजु० २५,८ "क्रोडस्य घनीभूतवक्षोमध्यभागपरता वेददीपे उक्ता। क्रोडं तु वक्षोभुजान्तरे देहांशभेदे। "हृदय जिह्वा क्रोड सव्यसक्थि पूर्वनडकं पार्श्वे यकृत् वृक्कौ गुदमध्य दक्षिणा श्रोणिरिति जौहवानि" कात्या० श्रौतसू० ६,७,६ "क्रोड वक्षोभुजान्तरम्" कर्क "प्रेषमिडापात्रप्रामाशिष्य क्रोडमनक्तीनि च प्राश्नाति श्रोणिवर्जम्" कात्या० श्रौतसू० ६,८,१२,। ५अङ्कमात्रार्थे ६उत्तरस्थपाम भेदे शब्दचि० ७वाराहीकन्दे पु० राजनि० ८शनिग्रहे पु०मेदिनिः

**क्रोडकन्या** क्रोडस्य शूकरस्य कन्येव प्रियत्वात्। वाराहीकन्दे राजनि०। [ (बड़ शुलकनि) राजनि०

**क्रोडचूडा** स्त्री क्रोडे चूडा यस्याः। महाश्रावणिकायाम्

**क्रोडपत्र** न० क्रोडे उपचारात् मध्ये स्थितं पत्रम् ७त०। पत्रलेखने भ्रमात् त्रुटितग्रन्थस्य परिपूरणाय पत्रद्वयपत्रयोर्मध्ये विन्यासविशेषेण लिखित्वा स्थापिते पत्रे।

**क्रोडपर्णी** क्रोडे कण्टकमध्ये पर्णं यस्याः, गौरा० ङीष्। कण्टकारिकायाम् शब्दच०

क्रोष्टुपुच्छी स्त्री क्रोष्टोः पुच्छमिव पुच्छमस्याः ङीष्। पृश्निपर्ण्याम् (चाकुलिया) शब्दरत्ना०

क्रोष्टुफल पु० क्रोष्टोः प्रिय फलमस्य। इङ्गुदीवृक्षे राजनि०

क्रोष्टुविन्ना स्त्री क्रोष्टुना विन्ना प्राप्ता पुच्छाकारेण ३त०। पृश्निपर्ण्याम् (चाकुलिया) अमरः। (विराजकाञ्जि) वृक्षे भरतः।

क्रोष्टेष्टु पु० क्रोष्टोः प्रिय इक्षुः इगो०। श्वेतेक्षौ राजनि०

क्रोष्ट्री स्त्री क्रोष्टुजातिस्त्री क्रोष्टुस्तृज्वत् ऋदन्तत्वात् ङीप। १शृगालजातिस्त्रियाम् तद्वर्णप्रियत्वात् २श्वेतभूमिकुष्माण्डे अमरः। ३कृष्णविदार्य्यां ४लाङ्गल्याम् च मेदि०

क्रौञ्च पुंस्त्री० क्रुञ्च+स्वार्थे प्रज्ञा० अण्। (कोंचवक) बकभेदे स्त्रियाम् अणन्तत्वात् ङीप्। "निशम्य रुदतीं क्रौञ्चीम्" रामा०बा०२स०। स्त्रियां टाप् इति वदन् भरतश्चिन्त्यः। प्रज्ञादिषु क्रुञ्चशब्दस्यैव पाठात् तदप्रवृत्तेः। २हिमवत पौत्रे पर्व्वतभेदे "धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ। बिभेद स (कार्त्तिकेय) शरैः शैलं क्रौञ्चं हिमवतः सुतम्" भा० व० २२४अ०। तस्य हिमवत्पौत्रत्वेऽपि सन्तानाभिप्रायेण सुतत्वोक्तिः। तस्य हिमवत्पुत्रमैनाकपुत्रत्वं हरिवं० १८अ० उक्तं यथा "एतेषां मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतः श्रेष्ठा यस्या मैनाक उच्यते। मैनाकस्य सुतः श्रीमान् क्रौञ्चोनाम महागिरिः। पर्व्वतप्रवरः पत्नी नानारत्नसमन्वित"। ३द्वीपभेदे ४असुरभेदे। "क्रौञ्चे (द्वीपे) क्रौञ्चो हतोदैत्यः क्रौञ्चाद्रौ हेमकन्दरे। स्कन्देन युद्धा सुचिर चित्रमायी सुमायिना। स शैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्म्मणा। तेनैतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" खगेन्द्रसंहिता। क्रौञ्चदैत्यश्च मयदानवपुत्र यथाह हरि० ४७अ० "मयो दर्प्प मायावी दानवान्दिवि दानवः। स शिलाजालविततां गण्डशैलाट्टहासिनीम्। पादपोत्कटकूटाग्रां कन्दराकीर्णकाननाम् सिंहव्याघ्रगणाकीर्णां नदन्तीं दैत्ययूथपैः। ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम्। निर्म्मिता स्वेन पुत्रेण क्रौञ्चेन दिवि कामगाम्। प्रथितां पार्व्वतीं मायां ससृजे स समन्ततः"। "भ्रमुरचरितमिव भूयमाणक्रौञ्चवनिताप्रलापम्, काद० ५कुररीखगे राजनि०। ६अर्हतां ध्वजभेदे ७राक्षसभेदे च पु०हेम०। क्रौञ्चद्वीपस्थानञ्च "भूमेरर्द्धं क्षारसिन्धोरुदकस्य जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" इत्युपक्रमे जम्बुद्वीपसञ्ज्ञा। "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि०शि० उक्तम्। तद्वृत्तिः विष्णुपु० "घृतोदश्च समुद्रोवै क्रौञ्चद्वीपेन संवृतः। क्रौञ्चद्वीपो महाभाग। श्रूयताञ्चापरो महान्। कुशद्वीपस्य विस्ताराद् द्विगुणो यस्य विस्तरः। क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः। तन्नामानि च वर्षाणि तेषाञ्चक्रे महीपतिः। कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः। मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने!। तत्रापि देवगन्धर्व्वसेविताः सुमनोरमाः। वर्षाचला महाबुद्धे! तेषां नामानि मे शृणु। क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः। चतुर्थो रत्नशैलश्च स्वाहिनी हयसन्निभः। दिवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान्। दुन्दुभिश्च महाक्रौञ्चो द्विगुणास्ते परस्परम्। द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा। वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च। निवसन्ति निरातङ्काः सह देवगणैः प्रजाः। पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने!। ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चानुक्रमोदिताः। तैस्तत्र नद्यो मैत्रेय! या पीयन्ते शृणुष्व ताः। सप्त प्रधाना शतशस्तथान्याः क्षुद्रनिम्नगाः। गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा। ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः। तत्रापि वर्णैर्भगवान् पुष्कराद्यैर्जनार्द्दनः। योगी रुद्रस्वरूपस्तु इज्यते यज्ञसन्निधौ। क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च। आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः। दधिमण्डोदकश्चापि शाकद्वीपेन संवृत। क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामते!"। "तथा बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तः। इतो यथा कुशद्वीपो घृतोदेन। यस्मिन् क्रौञ्चो नाम पर्वतराजोद्वीपनामनिर्वर्त्तक आस्ते। योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनाभिषिच्यमानो भगवता वरुणेनाभिगुप्तोऽभयो बभूव। तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान् वर्षपान्निवेश्य स्वय भगवत परममङ्गलयशस आत्मभूतस्य हरेश्चरणारविन्दमुपजगाम। आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुताः। तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः। शुक्लो वर्द्धमानो भोजन उपबर्हणो नन्दो नन्दन, सर्वतोभद्र इति। अभया

कर्य्यैरपत्ये स्त्रियां ङीप्। २ऋषिभेदे पु०। "तत्क्रो द्रविणोदा ? इन्द्र इति क्रौष्टुकिः" निरुक्त० ८,२

**क्लथ** वधे वा चुरा० उभ०पक्षे भ्वा०प०सेट् घटादि०। क्लथयति ते क्लथति, अचिक्लथत् अक्लाथीत् अक्लथीत्। क्लथयाम्बभूव आस चकार चक्रे चक्लाथ। मध्ये घृतस्यावर्त्तने च। "पौष्णो विष्यन्दमाने मारुत क्लथन्" यजु० ३९,५, "क्लथन मध्ये घृतस्यावर्त्तनम्" वेददीप०

**क्लद** रोदने अक० आह्वाने सक० इदित् भ्वा० पर० सेट्। क्लन्दति अक्लन्दीत्। चक्लन्द। क्लन्द्यते

**क्लद** वैक्लव्ये दि० आत्म० अक० सेट् घटादि०। क्लद्यते अक्लदिष्ट चक्लदे। क्लदयति त अचिक्लदत् त।

**क्लद** रोदने भ्वा० उभ० इदित् अक० सेट्। क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट। चक्लन्द चक्लन्दे। क्लन्द्यते "या क्लन्दास्तमिषीचयो ऽक्षकामामनो मुहः ताभ्यो गन्धर्वपत्नीभ्योऽप्सराभ्योऽकर नमः" अथ० २,२,५

**क्लप** अव्यक्तवाक्ये चुरा० उभ० अक० सेट् चरा०। क्लपयति ते अचिक्लपत्—त। क्लपयाम्बभूव आस चकार चक्रे

**क्लम** ग्लानौ दिवा०पर०अक०सेट् शमा०। क्लाम्यति अक्लमीत् चक्लाम। उदित् क्लमित्वा—क्लान्त्वा। क्लान्त। घञि न वृद्धिः क्लमः। क्लम्यते अक्लमि। "क्लम ययौ कन्दुकलीलयाऽपि या" "अक्लाय सा नियमज क्लममुत्ससर्ज" कुमा० "न चक्लाम न विव्यथे" भट्टि "तव क्लमं साधयितुं य इच्छति" शकु०

**क्लम** ग्लानौ भ्वा० पर० अक० सेट्। क्लमति इरित् अक्लमत् अक्लमीत् चक्लाम। क्लमित्वा। क्लमितः।

**क्लम** पु० क्लम—भावे घञ् अवृद्धिः। "योऽमाय स श्रमो देहे प्रवृद्धः श्वाससङ्गतः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः"। भावप्र० उक्ते श्रमभेदे।

**क्लमथ** पु० क्लम अथच्। आयासे अमर।

**क्लमिन्** त्रि० क्लम-घिनुण् अवृद्धिः। क्लान्तियुक्ते।

**क्लव** भये दिवा० आत्म० अक० सेट् घटादि०। क्लव्यते अक्लविष्ट। चक्लवे। क्लवयति। वि वैक्लव्ये विक्लव।

**क्लान्त** त्रि० क्लम-क्त। श्रमार्त्ते। [ यक्लान्तमीम्" माघ०।

**क्लान्ति** स्त्री क्लम-क्तिन्। परिश्रमे "क्लान्तिच्छिदो वनवनस्पत-

**क्लिद** आर्द्रीभावे दिवा० पर० अक० वेट्। क्लिद्यति। इरित्। अक्लिदत्-अक्लेदीत्-अक्लैत्सीत्। चक्लेद। क्लेदः। क्लिद्यन् क्लेदी। क्लेदयति ते। अचिक्लिदत् त। "तेन क्लिद्यति मन" सुश्रु०। "दृष्ट्वेमं पुरुष हे भ्रातर यदि वा सुतम्। योनिः क्लिद्यति नारीणाम्" हितो०। "सुप्यन्ति भूमौ क्लिद्यन्ति वाम्बुना मे स्वपन्ति च" भट्टिः। "कुन्त्याः प्रस्नवसंयुक्तैः रसैः क्लिन्नमुरोऽभवत्" भा० आ० १३५। "नचैनं क्लेदयन्त्यापो न शोषयति मारुत। अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" गीता। "रक्तैरचिक्लिदद्भूमिम् सैन्यैश्चानस्तरद्भवैः" भट्टि। उपसर्गविशेषपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थविशिष्टे क्लेदे।

**क्लिद** रोदने इदित् भ्वा० उभ० अक० सेट्। क्लिन्दति ते अक्लिन्दीत् अक्लिन्दिष्ट। चिक्लिन्द चिक्लिन्दे। क्लिन्दित। परिदेवने शोके सक०आत्म०। क्लिन्दते चैत्रम्" सि०कौ०।

**क्लिन्न** त्रि० क्लिद कर्त्तरि क्त। आर्द्रे (भिजे) क्लिदधातौ उदा०

**क्लिन्नवर्त्मन्** न० "अरुज बाह्यतः शूनमन्त क्लिन्न स्रवत्यपि। कण्डूनिस्तोदभूयिष्ठ क्लिन्नवर्त्म तदुच्यते" सुश्रुतोक्ते नेत्रावयवभेदवर्त्माश्रये रोगभेदे।

**क्लिव** पु० कृप क्विप् पृषो०। लोके। "ओं क्रतो। स्मर क्लिवे स्मर क्तत स्मर" यजु० ४०,१५, "क्लिवे कृप्ताय लोकाय स्मर" माधव। "कल्पते भोगाय कृप् लोक तस्मै स्मर जगादेश आर्षः छन्दस्युभयथेति" पा० "पदान्तत्वात्" वेददी०

**क्लिश** उपतापे दिवा० आ० अक० उपतप्तीकरणे सक० सेट्। पा०। क्लिश्यते अक्लेशिष्ट। क्लिशित्वा क्लिष्ट्वा। क्लिशितः क्लिष्ट। विकल्पमते अयमुभयपदी तेन "क्लिश्यन्नपि हि मेधावी" प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोयक्ष वीति" स्वपात्मजौ चिक्लिशतुः समीतौ" भट्टिः साधुः सकर्मकत्वे "इन्द्रियैः कामवृत्तैस्तु क्लिश्यसे प्राकृतोयथा" रामा० कि० १६,२७, अकर्मकत्वे "क्लिश्यते हि जनः सर्व्व तरमाणा पुन पुन" भा० व० १३५अ०। "चिरं क्लिशित्वा मन्मथवित्" भट्टिः परस्मैपदित्वे "त्वयं परार्थे क्लिश्यन्ति साक्षिणः प्रतिभू कुलम्" मनुः। "हिमक्लिष्टप्रभावाणि ज्योतींषीव मुखानि च" कुमा०। "क्लेशः फलेन हि पुनर्नवतां विधत्ते" कुमा०।

उपसर्गपूर्व्वकस्तु तत्तदुपसर्गविशेषद्योत्यार्थोपतापे

**क्लिश** बाधने सक०क्र्या०ऊदित् वेट्। क्लिश्नाति अक्लेशीत् अक्लिक्षत् चिक्लेश। क्लिष्ट। क्लेश क्लिशित्वा क्लिष्ट्वा। क्लिशित क्लिष्ट "इत्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्" कुमा०। "अयं मा सुहृद क्षुद्र कौरवाणां यशोहर। क्लिश्नाति माहं तत् सोढु चिर शक्ष्यामि कौरव।" भा०स० ६७। "असुरक्षारकोनाम त्वया दत्तवर प्रभो।। सुराम्बर्षींश्च क्लिश्नाति कमलस्य विधीयताम्" भा० आनु० ८५अ०।

"क्लिश्नन्निवाप्य भुजमध्यमुरःस्थलेन" रघुः । अत्र मल्लि-नाथः क्लिश्नन्निति पठित्वा क्लिश्नातिरयं सकर्मकः "क्लि-श्नातिभुवनत्रयमिति दर्शनादि"त्याचख्यौ । तेन टी-कापुस्तके क्लिश्नन्निति पाठः प्रामादिक एव ।
उपसर्गविशेषात् तत्तदुपसर्गद्योत्यार्थयुक्ते बाधने ।
परि+सर्व्वतोबाधने । "परिक्लिश्यमाने" मा० ।

क्लिशित त्रि० क्लिश-क्त वा इट् । १क्लेशयुक्ते २उपतापिते च ।

क्लिष्ट त्रि० क्लिश-क्त वा इडभावः । १क्लेशयुक्ते २पीडिते च ।
३पूर्व्वापरविरुद्धार्थके वाक्ये न० अमरः

क्लिष्टा स्त्री क्लिष्टः क्लेशः अस्त्यस्याम् अच् । पातञ्जलोक्ते चित्तवृत्तिभेदे यथा
"वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" सू०
"क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः । क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः । क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति । अक्लिष्टच्छिद्रेषु क्लिष्टा इति । तथाजातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इति एवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेनावतिष्ठते प्रलयं वा गच्छतीति । ताः क्लिष्टाश्च पञ्चधा वृत्तयः" भा०
"स्यादेतत् पुरुषो हि शक्यो, उपदिश्यते । न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरनन्ताः काश्चित् परिगणयितुमसंख्याताः कथं निरोद्धव्याः इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति ताः पुनर्निरोद्धव्याः बहुत्वे सति चित्तस्य वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः । वृत्तिरूपोऽवयव्येकः । तस्य प्रमाणादयोऽवयवाः पञ्च ततस्तदवयवा पञ्चतयी । पञ्चावयवा वृत्तिर्भवति नाथ वृत्तयस्तथैतादि चित्तभेदात् बह्व्य इति बहुवचनमुपपन्नम् एतदुक्तं भवति चैत्रो वा मैत्रो वा कश्चित्सर्व्वेषामेव तेषां वृत्तयः पञ्चतय्यः न त्वाधिक्यादिति । चित्तस्येति चैकवचनं आत्माभिप्रायं चित्तानामिति तु द्रष्टव्यम् । तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति । क्लिष्टाऽक्लिष्टा इति । अक्लिष्टा उपादेया क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति । अस्य व्याख्यानम् । क्लेशहेतुका इति । क्लेशा अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां ताः तथोक्ताः । यद्वा पुरुषार्थं प्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वं न क्लेशैरेव प्रवृत्तिः क्लेशं क्लिष्टम् तदासामस्तीति क्लिष्टा इति । यत एव क्लेशोपार्जनार्थमम्बा मट्टितरत एव कर्माशयप्रचयक्षेत्रीभूता प्रमाणादिकाः । अस्य प्रतिपक्षमर्थमपवाय तत्र शङ्कोदितो वा कर्माशयप्रचितो नोति भवन्ति कर्माशयप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति अक्लिष्टा आचष्टे ख्यातिविषया इति । विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिणा तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति तेन सत्त्वपुरुषविवेकविषया यतः अतएव गुणाधिकारविरोधिन्यः कार्य्यकरणं हि गुणानामधिकारो विवेकख्यातिपर्य्यवसानश्च तावदिति चरिताधिकाराणां न गुणानामधिकारं विरुन्धन्ति इति अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः । स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्टस्य एव सर्व्वं प्राणभृतां न च क्लिष्टवृत्तिप्रवाहे अविनष्टवृत्तिक्लिष्टस्य । नचामुष्य भावेऽपि कार्य्यकारिता विरोधिमध्यपातित्वात् । तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधनाशं च वैराग्येण परेणेति मनोरथमात्रमित्यत आह । क्लिष्टप्रवाहेति । आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रान्तरे तत्र पतिता स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः । न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति । अक्लिष्टच्छिद्रेष्विति निदर्शनम् । क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टा स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह तथाजातीयका इति । अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः । तदिदं वृत्तिसंस्कार, चक्रमनिशमावर्त्तते आनिरोधसमाधेः तदेवंभूतमिति निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठते इत्याशय । प्रलयं वा गच्छतीति परमार्थतः । पिण्डीकृत्य सूत्रार्थमाह । ता इति पञ्चधेत्यर्थकथनमात्रं न तु पञ्चतय्या व्याख्यानं तयप् प्रकारेऽवयवात् । ताः "स्वसंज्ञाभिरुद्दिशति" विव०
"प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" सू०
"निर्द्दिष्टे यथावचनं विग्रहस्यार्थे द्वन्द्वसमास इतरेतरयोगः । यथा-नित्यास्वप्येतासु नानात्वं नित्यप्रविष्टकाभिरुप्लातिरविशेषेणाऽपि न दिङ्मोहावातचक्रादिविभ्रमा व्युदस्यन्ते । एवमिमानि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसङ्काशय इति व्युदस्येति तन्निरासाय वक्तव्यं पञ्चतय्य इति एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति" विव०

क्लिष्टि स्त्री क्लिश-क्तिन् । १क्लेशे २सेवायां च भरतः ।

वत् प्रवर्त्तते । कुम्भीकः स च विज्ञेय ईर्ष्यक शृणु चापरम् । दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स च विज्ञेय षण्ढक शृणु पञ्चमम् । यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते । ततः स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञित । ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि । तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता । आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रः षण्ढसंज्ञित । अनया विप्रकृत्या तु तेषां शुक्रवहाः सिरा । हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्" ।

तस्य दायानधिकारिता अनंशशब्दे १४२पृ०उक्ता । तत्रायं विशेष । "क्लीबोऽथ पतितस्तज्ज पङ्गुरुन्मत्तको जड । अन्धोऽचिकित्स्यरोगाद्याभर्त्तव्याः स्युर्निरंशका" या० व्याख्या मिता० "एतेषां विभागात् प्रागेव दोषप्राप्तावनंशत्वम्। न पुनर्विभक्तानां, विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव "विभक्तेषु सुतोजात सवर्णायां विभागभाक्" इत्यस्य समानन्यायात्। क्लीबान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव यदि त्वन्तरा तदा, तदुपगमस्यौषधादिना, तर्हि "दृश्याद्वा तद्विभाग स्यादायव्ययविशोधितादिति" रीत्या विभागार्हावेवेत्युक्तम्" । अत्र विशेष क्लीबादीनामनंशत्वात्तत्पुत्राणामप्यनंशत्वे प्राप्त इदमाह' मिता० "औरसा क्षेत्रजास्त्वेषां निर्दोषा भागहारिण" । या० "एतेषां क्लीबादीनामौरसा क्षेत्रजा वा पुत्रा निर्दोषा अपङ्गुत्ववैकल्यादिदोषरहिता भागहारिण, अंशग्राहिणो भवन्ति । तत्र क्लीबस्य क्षेत्रज पुत्र सम्भवत्यन्येषामौरसा अपि । औरसक्षेत्रजयोर्ग्रहणं इतरपुत्रव्युदासार्थम् । क्लीबादिदुहितृणां विशेषमाह मिता०"। "सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृता" । या० "एतेषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता न भवन्ति तावद्भरणीया । विवाहश्च कार्य्यश्च। क्लीबादिपत्नीनां विशेषमाह मिता०"अपुत्रायोषितश्चैषां भर्त्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च"या० । "एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचाराश्चेद्भर्त्तव्याः भरणीयाः । व्यभिचारिण्यस्तु निर्वास्याः । प्रतिकूलास्तथैव च निर्वास्या भवन्ति भरणीयास्त्वव्यभिचारिण्यश्चेत् । न पुन प्रातिकूल्यमात्रेण भरणमपि न कर्त्तव्यम्" मिता०

वीरमित्रोदये विशेष "क्लीबादीनामपि दारपरिग्रहेण पुत्रश्च उक्तो मनुना "यद्यर्थिता तु दारै स्यात् क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति" । तन्तुरपत्यम् । नच क्लीबादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम् । उपनयनानर्हतया अनुपनीतस्य शूद्रवदपतितत्वात्" ।

एतच्चिन्त्य "सुखेभंगाश्च ये केचित् क्लीबप्राया नपुंसकाः । ब्रह्मद्विट्छूद्रहता ये च ये च वै ब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः" शु० त ब्रह्मपु० क्लीबस्य पतितत्वोक्तेः । केचित्तु तत्र उत्तरार्द्धे "पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । नात्रुपातः कर्त्तव्यो नपिण्डो नोदकक्रिया" इत्युक्तेरशौचाद्यभावाङ्गमिदं पातित्यं नान्यत्र । अतएव अनधिकारिणां याज्ञवल्क्यादिभिः पतितात् पृथक् क्लीबस्य कीर्त्तनं सङ्गच्छते इत्याहुः । मनुनाऽस्यापाङ्क्तेयत्वमुक्तम् "आचारहीनं क्लीबञ्च नित्ययाचनकस्तथा" इत्युपक्रमे "एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्" इति । "अस्योत्पत्तौ कारणमुक्तं मनुना । "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा, क्षीणेऽल्पे च विपर्य्ययः" "पुंबीजे अधिकेऽयुग्मास्वपि पुत्रो जायते स्त्रीबीजेऽधिके युग्मास्वपि दुहितैव । अतोऽभ्याहारादिना निजबीजाधिक्यं भार्य्यायाश्चाहारलाघवादिना बीजाल्पत्वं सम्पाद्य युग्मास्वपि पुत्रार्थिना गन्तव्यमिति दर्शितम् स्त्रीपुंसयोस्तु बीजसाम्येऽपुमान् नपुंसकः जायते पुंस्त्रियाविति यमौ नि सारेऽल्पे चोभयोरेव बीजे गर्भस्यासम्भव" कुल्लू० ।

कर्त्तव्यकर्म्मसु० निरुद्यमाहेश्चभीरे ४विक्रमहीने अमर तस्य भाव ष्यञ् । क्लैब्य न० । तल् क्लीबता स्त्री । त्व क्लीबत्व न० तत्रार्थ "मा क्लैब्य गच्छ कौन्तेय । नैतत्त्वय्युपपद्यते" गीता । "पुनरक्लीबतया प्रकाश्यताम्" रघु । "अक्लीबतया धैर्य्येण" मल्लि० । "कोऽहि धर्म्मोऽस्ति भीष्म । ब्रह्मचर्य्यमिदं वृथा । यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशय" भा० स०४०अ० । क्लैब्यञ्च पुंस्त्वेन्द्रियोपघात अपस्मितशब्दे ४७१ पृ० उदा० । जातस्य क्लीवताकारणं च सुश्रुते दर्शितं यथा "शुक्रवहे द्वे धमन्यौ तयोर्मूल स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तयुक्तता च" । "क्लीवरूपाश्चिरीटिन" अथ० ८,६,७, क्लीबइवाचरति ड्व क्विप् वा । क्लीबायते । क्ला-

षपि आत्म०क्लीवते सुग्ध० । ४शब्दनिष्ठ धर्मभेदे तद्विवृतिः शब्दार्थरत्ने यथा

"लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मकोधर्म्म एव तद्विशेषश्च स्त्रीनपुंसकत्वादि । तथा हि सर्व्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेष इति कल्प्यते स च विशेषः शास्त्रे इत्थमभ्यधायि । विकृतसत्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्व सत्वस्याधिक्ये पुंस्त्वम्, रजआधिक्ये स्त्रीत्वमिति । एवञ्च लिङ्गस्य शब्दधर्म्मत्वेऽपि शब्देन सहार्थाभेदात्तेवात् अत एव वाचके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्व्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्येष्टत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इतिप्रागुक्तेः "शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा । नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते" इतिहर्य्युक्तेश्च शब्दानां नामार्थतायगतेः । तथा प्रातिपदिकार्थे । अभेदविवक्षाया तु श्रोत्रादिभिरेव सिद्धः सन् अर्थे प्रकारतया भासते इति तदर्थ । युक्तञ्चैतत् पुंलिङ्ग शब्द इतिव्यवहारात् "स्वमोर्नपुंसकादिति" पा०सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्म्मत्वमन्यथैनेषु लिङ्गाद्यनन्वयापत्तेः प्रवृत्तिनिमित्तकसूत्रनिर्द्देशासङ्गत्यापत्तेश्च । तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्म्मविशेषरूपभेदकसद्भावात् । उक्तञ्च भाष्ये "एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वमिति" । एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहार समानानुपूर्व्वीकत्वेनैव वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्" । "अकारादि क्षकारान्तान् क्लीवहीनान् लिखेत्ततः । कद्रूवर्णद्वय त्वङ्गद्वयं क्लीवं प्रचक्षते" अकडमचक्रे तन्त्रसारोक्ते ऋकारादिवर्णचतुष्के च

क्लु गतौ भ्वा० आ० सक० अनिट् । क्लवते अक्लोष्ट चुक्लुवे

क्लृप्त त्रि० कृप–क्त । १रचिते २कल्पिते ३विहिते ४निर्म्मिते च यन्त्र० "पतिंवरा क्लृप्तविवाहनेपा" क्लृप्तेन सोपानपथेन मञ्चम्" रघु । ५छिन्ने च "क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बर शुचिः" मनुः ।

क्लृप्तकीला स्त्री क्लृप्तं कीलमत्र । (पाट्टा) इतिख्याते । निर्द्दिष्टकरग्रहणार्थं दत्तभूमिग्रहणपत्रयोपयोगिस्वत्वज्ञापके पत्रभेदे त्रि० ।

क्लेद पु० क्लिद–भावे घञ् । १आर्द्रतायाम् । सा च जलविकारभेदः यथाह या० "रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम्" । "रसादुदकात् रसनेन्द्रियं शैत्यमङ्गानां, स्नेहं स्निग्धताम् मृदुतासहितं क्लेदमार्द्रताम्" मिता० । देहस्य क्लेदश्च श्लेष्मकार्य्यः क्लेदनशब्दे विवृतिः । "तदङ्गनक्लेदसमाकुलाक्षम्" "स तौ कुशालयोन्मृष्टगर्भक्लेदौ तदाख्यया" रघु । २पतीभावे शब्दचि० "पदस्थितस्य पद्मस्य मन्त्रू वरुणभास्करौ, पदाच्च्युतस्य तस्यैव क्लेदकशोषकरावुभौ"

क्लेदक त्रि० क्लेदयति क्लिद णिच् ण्वुल् । १क्लेदकारके देहस्थकफे क्लेदनशब्दे विवृतिः । २क्लेदकारके जलादौ त्रि० । देहस्थदशवह्निमध्ये ३वह्निभेदे अग्निशब्दे ५० पृ० पदार्थादर्शवाक्यम् दृश्यम् । जलस्य क्लेदकत्वेऽपि तत्र अग्ने साहचर्य्यादेव तथात्वम् ।

क्लेदन् पु० क्लेदयति क्लिद-णिच्–कनिन् ( चन्द्र उणा० )

क्लेदन पु० क्लेदयति क्लिद–णिच् ल्यु । क्लेदकारके देहस्थे श्लेष्मभेदे तद्विवृतिः भावप्रकाशे

"कफस्यैतानि नामानि क्लेदनश्चावलम्बनः । रसनः स्नेहनश्चापि श्लेष्मा स्थानभेदतः । अथ क्लेदनादीनां स्थानान्याह "आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु । स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात्" । दोषाणां सकलशरीरव्यापिनामपि पञ्च पञ्च स्थानानीति बाहुल्याभिप्रायेणोक्तानि । तथाच वागभट "इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् । व्यापिनामपि जानीयात् कर्म्माणि च पृथक् पृथक्" । चरकश्च "ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रया" इति । अथ तत्तत्स्थानगतस्य श्लेष्मण कर्म्माण्याह "क्लेदनः क्लेदयत्यन्नमामाशयगतोऽपरानपि । श्लेष्मस्थानान्युदककर्म्मणा" । अयमर्थः क्लेदनोऽन्नं क्लेदयति तेन सहतमन्नं भेदं प्राप्नोति । अपरानपि श्लेष्मस्थानानि हृदयादीनि मार्गेण गत्वा तत्र तत्र हृदयावलम्बनसन्धारणरसनस्नेहनसमस्तेन्द्रियतर्पणसन्धिसंश्लेषणादुदककर्म्मभिरनुगृह्णाति उपकरोति । तथा च "रसयुक्तात्मवीर्य्येण हृदयस्यावलम्बनम् । त्रिकसन्धारणं चापि विदधात्यवलम्बन" । त्रिकं शिरोबाहुद्वयसन्धि । "उभावपि तत्र सौम्यौ तिष्ठतः सात्त्विके यतः । ततो "रसाभिज्ञानीयात् रसनारसनौ समौ" । रसना रसनेन्द्रियं रसनः कण्ठस्थकफः । "स्नेहनः स्नेहदानेन खमक्षीन्द्रियतर्पणः ।

कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः । आकुलीभूता प्रवृद्धाः स्वमार्गं परित्यज्य इतस्ततो गताः । अत्र कषायशब्देन क्वाथो गृह्यते । उक्ताश्च क्वाथस्य पर्य्यायाः । "शृतं क्वाथः कषायश्च निर्य्यूहः स निगद्यते, इति । "तोयपेयादिसंस्कारे निर्द्दोषं तत्र भेषजमिति" । तत्र तरुणज्वरे भेषजम् मुख्यभेषजं क्वाथरूपं न तु कल्कमनुद्दिश्य कषायः प्रतिषिध्यत इति कल्कनं तोयपेयादावस्वाद्विकम् । ननु "स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ । ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" इति वचनात् स्वरसादयोऽपि कथं न निषिध्यन्ते । तत्राह "तत्र यस्तु कषायः स्यात्स वर्ज्यस्तरुणज्वरे" इति । चतुर्थभागावशेषकरणेनाष्टमभागशेषकरणे च कषायवर्णः कषायरसश्च स्यात् । स कषायः क्वाथः स तरुणज्वरे निषिद्धः । कषायस्य लक्षणमाह, "पादशिष्टः कषायः स्यात्" । अत षडङ्गादिस्तरुणज्वरे न निषिद्धः पाकादूर्द्ध्वपाके चोक्तलक्षणाभावेन कषायत्वाभावात् । अथ तरुणज्वरे कषायस्य दोषमाह "दोषा बद्धाः कषायेण स्तम्भितास्तरुणज्वरे । स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम्" । कषायेण स्तम्भिता प्रवृत्तये निवारिता । यत आह कषायरसगुणात् "कषायः स्तम्भनः शीतोरूक्षः पित्तकफापहः" इत्यादि । स्तभ्यन्ते आध्मानं कुर्वन्ति न विपच्यन्ते सुखेन न विपच्यन्ते दुःखं दत्त्वा विलम्बेन विपच्यन्ते इति यावत्" । [अमरः ।

**क्वाथोद्भव:** न० क्वाथादुद्भवति उद्+भू अच् । तुत्थाञ्जने

**क्विल** कम्पे अक० गतौ सक० प० सेट् कवि० । क्वेलति अक्वेलीत् ऋदित् चङि अचिक्वेलत् त ।

**क्ष** पु० क्षि-बा० ड । १संवर्त्ते २राक्षसे ३नरसिंहे ४विद्युति ५क्षेत्रे ६क्षेत्रपाले ७नाशे च मेदि० । तस्य वाचकशब्दा तन्त्रशास्त्रे वर्णाभिधाने उक्ता यथा

"क्षः क्रोधस्तुम्बुरः कालोत्तमः संवर्तकः परः । नृसिंहोविद्युता माया महातेजा युगान्तकः । परात्मा क्रोधसंहारी वर्णान्तो मेरुवाचकः । सर्वाङ्गः सागरः कामसंयोगान्तस्त्रिपूरकः । क्षेत्रपालो महाक्षोभो मातृकान्तोऽमलः क्षयः । कूटः कव्यवहानन्ता कालजिह्वा गणेश्वरः । छायापुत्रश्च संवर्तो मलयश्रीर्ललाटगः" अत्र संयोगान्त इत्युक्तेः शब्दकल्पद्रुमे क्षकारस्य वर्णान्तरत्वकल्पनम् लोकशास्त्रविरुद्धत्वादतीव प्रामादिकम् । तथाहि अस्य कषयोः संयोगजत्वेन कादित्वम् । प्रथमवर्णत्वे क्षकारमे धृत्वेद क्षिप्रमेवादिकपदं न सिद्ध्येत् कर्षयुक्ततया कुलादिषु गणप्रसक्तौ कवर्गादित्वाभावेन कृत्वा प्रसक्तेः । किञ्च संयुक्तवर्णात् पूर्व्वस्य गुरुत्वेन "निपीय यस्य क्षितिरक्षिणः कथाम्" नैषधे "लाङ्गूलविक्षेपविसर्पिशोभैः" कुमारादौ काव्ये च "गताक्षतोयातिक्षितिपतिरित्यादौ" "दक्षिणे कालिके ति" च भैरवतन्त्रोक्तकालीस्तवे च सर्वत्र तत्पूर्व्वस्य गुरुत्वे सत्येव छन्दोऽनुगुणता असंयुक्तवर्णत्वे सर्वत्र छन्दोभङ्गः स्यात् । न च तस्यासंयुक्ततया क्वचिदपि तत्पूर्व्वस्य लघुत्वं दृष्टम् । अतएव कविकल्पद्रुमे "खदाद्यन्तर्दमक्रम" इति प्रतिज्ञाय कादिष्वेव क्षकारादिधातुपाठः मेदिन्यादौ कोषेऽपि तथैव कादिषु तस्य पाठः ।

तन्त्रे तु कषयोः संयोगजत्वेऽपि मातृकावर्णानामेकपञ्चाशत्संख्यापरिपूर्त्त्यै लकारवत् पृथक् कीर्त्तनं न्यासादिकार्य्यार्थं "पञ्चाशल्लिपिभिर्माला विहिता सर्व्वकर्म्मसु । अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता । क्षार्णं मेरुमुखं तत्र कल्पयेन्मनिसत्तम । अनया सर्वमन्त्राणां जपः सर्वसमृद्धिदः" इति गौतमतन्त्रोक्तजपाक्षमालाकल्पनार्थं न वर्णान्तरत्वार्थम् । एवं सर्वसामञ्जस्ये वर्णान्तरत्वकल्पनं लोकशास्त्रविरुद्धत्वादुपेक्ष्यम् । "विशेषं कथयाम्यद्य शोण्डार्य्याः कण्ठतः स्वराः । हृदय जिह्वया मूर्द्ना हृदयं दन्तजिह्वया । मुखस्थानाद्ध्रुलोवाद्याः क्षकारः कण्ठतालुकः" इति वरदातन्त्रे १०पटले तस्य कण्ठस्थानोद्भवत्वं क्षिरि । आद्यककाराभिप्रायेण द्रष्टव्यम् । "अतएव भान्ता स्वर्यादि सा चान्ता वर्णानामनुरोधतः । पृथक् क्रमेण वक्ष्यन्ते तथाऽप्येते समन्वयात्" विश्वप्रकाशे तस्य उभयरूपतासमन्वय उक्तः । तत्समन्वयश्चोक्तरीत्या बोध्यः । एतेन वङ्गानां खतुल्यत्वेन कैवल्यानां च तस्य छकारत्वेनोच्चारणं प्रामादिकमेव ।

**क्षज** कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट् । क्षञ्जयति ते अचक्षञ्जत् त । क्षञ्जया बभूव आस चकार चक्रे ।

**क्षज** वधे भ्वा० आ० सक० सेट् घटा० । क्षजते अक्षजिष्ट । चक्षजे मित् क्षजा । क्षजयति ते अचिक्षजत् त ।

**क्षजि** गतौ दाने च भ्वा० आत्म० इदित् सक० सेट् । क्षञ्जते अक्षञ्जिष्ट चक्षञ्जे । कर्म्मणि क्षञ्ज्यते घटा० क्षञ्जयति इति अच(चा)क्षि चर्त्तिके क्षञ्ज क्षञ्जं क्षाञ्ज क्षाञ्जम् अनुपधाया अपि दीर्घः

**क्षण** वधे तना० उभ० सक० सेट् । क्षणोति क्षणुते अक्ष-

चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्वपेत् तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा। नैर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा इति एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु च"। आद्ये नावर्त्तनात् रेतो विसर्गे दिवास्वप्ने चाभ्यासे चेयम्। पशोरभावे नैर्ऋतं चरुं निर्वपेदित्यर्थः। एतच्चामावास्यायां कर्त्तव्यमित्याह बौधायनः। "अथावकीर्णी अमावास्यायां निश्यग्निमुपसमाधाय उपरिस्तीर्य दार्व्वी कौर्मिकीं परिघटीं कृत्वा द्वे आज्याहुती जुहुयात्"। अत्र च व्रतान्तरेष्वित्यभिदधता पशिनैव द्वादशाहादिकव्रतेषु गव्यार्थ चान्द्रायणादिषु च यथातिदेश तथाचैतदतिदेशमविषयत्। अतएव "कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः" इति मनुना सामान्येनावकीर्णिलक्षणमकारि अकामतो रेतसः स्रावे मनुः "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्"। ब्रह्मचारिणो गुरुदारगमने तु तद्गमनोक्तप्रायश्चित्तेनैव गुरुणा अवकीर्णिप्रायश्चित्तं कृतम्भवेत्। यथा दण्डनिपातप्रायश्चित्तेनैव गुरुणा तदान्तरीयकाघमोचनप्रायश्चित्तं सम्पद्यते"।

क्षतहर न० क्षतं हरति हृ—हेतौ ट। क्षतहरणहेतौ १अगुरुचन्दने शब्दच०। २क्षतहारकमात्रे त्रि०

क्षताशौच न० क्षतनिमित्तमशौचम्। व्रणादिक्षतकृते स्मृत्युक्ते अशौचे। "व्रणे स्रुतकी स्थायी मत्तोन्मत्तरजस्वला। कृतबन्धुरबन्धुश्च दद्यान्नृपौ स्वकालतः" प्रा०त० देवलः। अशुचित्वमप्याह तत्रैव सएव। "दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्। न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः। भवेदशौचमत्यन्तं व्रणवेधात् व्रणे कृते"। तृणवेधादित्युपलक्षणं व्रणहेतुमात्रस्य। अस्यापवादः "चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्म्मणि। महातीर्थे तु सम्प्राप्ते क्षतदोषो न विद्यते" प्रा०त० पुलस्त्यः। मृतानां पिण्डकर्म्माणि नित्यकाम्यत्वात् पितापिण्डोदकदानादौ। सम्प्राप्ते नियतवासादिना सम्यक्प्राप्ते।

क्षति स्त्री क्षण-क्तिन्। १हानौ, २अपचयेऽक्षये च। "क्रियायां न क्षतिः काचिच्च रथस्य न मातले" भा० व० १७२अ०। "द्विधा क्षतीर्श प्रथमे शिलीमुखा" किरा०

क्षतोदर क्षतजाते उदररोगभेदे उदरशब्दे ११५० पृ० विवृतिः। शल्यमित्यादि तत्रत्य सुश्रुतवाक्य भावप्र० व्याख्याय चरकमुनिसम्मतिप्रदर्शनेन विशेष उक्तो यथा "शल्य कण्टकशर्करादि। अस्थि तृणं भुक्तं यत् अन्त्रं भिनत्ति तदा अन्यथा आगतं भोजनं विना आगतं, शर्कराभिरितरथापि यदन्त्रं भिनत्ति तत्। उपलक्षणम्। जृम्भणमत्यशनं वा यदन्त्रं भिनत्ति। यतउक्तञ्चरकेण शर्कराकृणकाष्ठास्थिकण्टकैरन्नसंयुतैः। भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा। तस्मात् स्रवादन्नतः। गुदतस्तु भूयः अन्नादाम्भस्तु पूयगुदतः स्रवेदित्यर्थः। दाल्यति विदार्य्यते एव। पद्यविवरार्थत्वात्। एतत् क्षतोदरं तन्त्रान्तरे परिस्राव्युदरमादिष्टम्"

क्षत्तृ पु० स्त्री० क्षद—छेदने तृच् अनिट्। १सारथौ २द्वाःस्थे ३क्षत्रियायां शूद्रेण जाते वर्णसङ्करे पुत्रे० अमरः स्त्रियां ङीप्। ४दासीपुत्रे ५नियुक्ते ६वेधसि पु० मेदि० ७मत्स्ये शब्दच०। उपधादीर्घविधौ तृन्शब्दस्य पृथग्ग्रहणात् औणादिकतृजन्तस्य निषेधेऽपि दीर्घः क्षत्तारौ 'चरारौ ते प्रजायते। तारिक्षायता स्फातिम्" २,२४ ७ "यत् क्षत्तारं हूयत्वा" अथ० ८,६,४८, क्षापिचितस्याग्नि क्षत्ता विश्वे देवा सभासद" शत०ब्रा० १२, ५,४,६ "पिषिक्तं क्षत्तारम्" यजु० ३०,१३, । "क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च" या० उक्ते "शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः। एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ। क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि" मनूक्तेः क्षत्रियायां विप्रात् जात इति अमरमतत्वेन शब्दच० उक्तं प्रामादिकम्। "क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्रियायाञ्च शूद्रजे" इति नानार्थेऽमरोक्तेः मनुयाज्ञवल्क्यवाक्यादिषु वादाच्च "माहिष्योऽर्य्यक्षत्रिययोः क्षत्तार्य्याशूद्रयोः सुतः" इत्यमरोक्तौ अर्य्याशूद्रजातस्य क्षत्तृत्वोक्तावपि तत्र अर्य्या स्वामिनी योग्यत्वात्तत्र क्षत्रिया, तेन न पूर्व्वापरविरोध इति भानुदीक्षितव्याख्या। अतएव मेदिन्याम् "क्षत्ता शूद्रक्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्याद्विधिनियुक्तवेधसोः पुमान्"। तस्य वृत्तिमाह मनुः "क्षत्त्रुग्रपुक्कसानां तु बिलौकोवधबन्धनम्"। तत्र दासीपुत्रे "ततः प्रीतमनाः क्षत्ता (विदुर) धृतराष्ट्रं विशाम्पते!। उवाच दिष्ट्या कुरवोवर्द्धन्त इति विस्मितः। वैचित्रवीर्य्यस्तु नृपो निशम्य विदुरस्य तत्" भा०आ०२००अ०। विदुरस्य दासीपुत्रत्वं विदुरशब्दे वक्ष्यते "अतोऽपमत्त

**क्षमाभुज्** पु० क्षमां भुनक्ति भुज–पालने क्विप् । नृपे "क्षुर-वैरिवक्ष उरसि क्षमाभुजः" माघः । क । क्षमाभुजोऽप्यत्र

**क्षमावत्** त्रि० क्षमा+अस्त्यर्थे मतुप् मस्य व । क्षमायुक्ते । "एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः" गरु० पु० ११४अ० स्त्रियां ङीप्

**क्षमितृ** त्रि० क्षम–तृच् । सोढरि सहनशीले अमर

**क्षमिन्** त्रि० क्षम-ताच्छील्ये घिनुण् । क्षमाशीले "शोम क्षाम्यत यः क्षमी" माघ "अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः" विष्णुस० स्त्रियां ङीप् ।

**क्षय** पु० क्षि–क्षये क्षि–निवासगत्योर्वा भावादौ यथायथम् अच् । त्रिवर्गान्तर्गते नीतिवेदिनां राज्ञाम् १अष्टवर्गापचये । अष्टवर्गश्च । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरः करादानं सैन्यानाञ्च निवेशनम् । अष्टवर्गः स्मृतो राज्ञाम्" भरत । "क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरः । क्षयः अष्टवर्गस्यापचयः तस्यैवोपचयः वृद्धिः, स्थानं तस्य उपचयापचयहीनतया स्थितिः" २प्रलये तस्मिन् सर्वेषां क्षयात्तथात्वम् । ३अपचये सच भावविकारभेदः यास्कोक्तः यथा

"षड् भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति" । ४गृहे अमरः ५यक्ष्मरोगे यक्ष्मरोगस्य क्षयकारकत्वं यथा "क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः । राज्ञश्चन्द्रमसो यस्मादभूदेष महामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः" सुश्रु० । "रक्तपित्तात् भवेत् कासः कासात् संजायते क्षयः" वैद्यकम् "राजयक्ष्मपरिहानिमाययौ" इत्युपक्रमे "राज्ञि तत्क्षयमभूत् क्षयातुरे" रघु० । ६रोगमात्रे राजनि० । षष्टिवर्षान्तर्गते षष्टितमे ७वर्षे तल्लक्षणं ज्यो०त० भवि०पु० "मेदिनी लभते देवि ! सर्वभूतं चराचरम् । देवभक्तञ्च दुर्भिक्षं क्षये संक्षीयते प्रजा । सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा । दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ! । कौशद्रोणमयं दद्याच्च बहुमानमदातटम् । वि-

स्थायां चैत्रवापि विनश्यति न संशयः । सिंहलो मध्यदेशश्च काश्मीरस्तथैव च । क्षये क्षयन्ति सर्वाणि नान्यथा वरवर्णिनि !" ।

८ब्राह्मणोक्ते स्तोमस्य वे देवसत्रे च यथा

"रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता बृहस्पतये स्तुत" ता०ब्रा० "तैत्तिरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मिरिति मन्त्रत्वामादित्यादिदृष्टिहेतुत्वाभिधानादादित्यादिपरतया रश्म्यादिशब्दाव्याख्यया । तत्तु ब्राह्मणमुत्तरत्रोदाहरिष्यते । हे आदित्य ! त्वं रश्मिरसि रश्मियुक्तोऽसि देवा यस्मिन् क्षियन्ति निवसन्ति इति क्षोत-सवः क्षयं तस्मै क्षयाय तत्सङ्घाय तत्प्राप्त्यर्थं हे आदित्य ! त्वां करोमीति शेषः । ततः क्षयं देवसङ्घं जिन्व प्रीणय क्षयशब्दस्य देवविषयत्वं तैत्तिरीयास्तृतीयकाण्डोक्तब्राह्मणे समामनन्ति "रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवै क्षय इति" भा० । ज्योतिषोक्ते ९द्विसंक्रान्तियुक्ते शुक्लप्रतिपदाद्यमावास्यान्ते चान्द्रे मासे यथाह सि०शि०

"असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं च" ।

"यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम् । तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षयमासो ज्ञेयः । यतः संक्रान्त्युपलक्षिता मासाः । अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जातम् । स क्षयमासः कदाचित् कालान्तरे भवति । यदा भवति तदा कार्त्तिकादित्रय एव । तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽपरश्च मासत्रयान्तरितोऽन्यश्चासंक्रान्तिमासः स्यात् । अत्रोपपत्तिः । चन्द्रमासप्रमाणमेकोनत्रिंशत् सावनदिनान्येकत्रिंशत् घटिकाः पञ्चाशत् पलानि २९।३१।५० । तथार्कमासस्त्रिंशद्दिनानि षड्विंशतिर्घटिकाः सप्तदशपलानि ३०।२६।१७ । एतावद्भिर्दिवसैरविर्मध्यगत्या राशिं गच्छति । यदार्कगतिरेकषष्टिर्याता तदा सार्धैकोनत्रिंशता दिनैः २९।३० राशिं गच्छति । अत चान्द्रमासादल्पोऽर्कमासस्तदा स्यात् । एवं रविमासस्य परमाल्पता २९।२०।४० । सा चैकषष्टिगतिर्वृश्चिकादित्रयेऽर्कस्य । यदेदृशोऽल्पोऽर्कमासो यदा चन्द्रमासमध्यगतस्तदा पाती भवति तदैकस्मिन् मासे संक्रमणद्वयमुपपद्यते । अत उक्तं क्षयः कार्त्तिकादित्रय इति । पूर्व

मासित्वादंहसः पापस्य पतिरिति व्युत्पत्त्या स एवांहस्पतिस्तयापि व्यपदिश्यते । स च व्यवहारो बार्हस्पत्यज्योतिषे दृश्यते "यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा । संसर्पांहस्पती मासावधिमासश्च निन्दितः" इति तत्र क्षयमासात् पूर्वोयोऽसंक्रान्तः स संसर्पस्तस्यासंक्रान्तत्वेनेतराधिमासवत् कर्मानर्हत्वे सन् सम्यक् सर्पतीति संसर्पः । तस्य कर्मानर्हत्वमापि रेव स्मर्य्यते "सिनीवालीमतिक्रम्य यदा संक्रमते रविः । रविणा लङ्घितो मासोऽनर्हः सर्वकर्मस्विति" । तदपवादस्त्वेवं स्मर्य्यते । "मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् । प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः" इति संक्रान्तिरहितयोर्द्वयोर्मासयोर्यः पूर्वोऽसंक्रान्तः स प्राकृत शुद्धः । कर्मार्ह इत्यर्थः । अस्मिन्नेवार्थे जाबालिः "एकस्मिन्नेव वर्षे चेद्द्वौ मासावधिमासकौ । प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः" इति । अतः संसर्पस्य तस्योपपन्नम् । असंक्रान्तमासद्वयमध्यवर्त्तिनः क्षयमासस्यांहस्पतित्वनिरुक्तिः पूर्वमेव दर्शिता । तदुत्तरभाविनोऽसंक्रान्तस्य कालाधिक्यादधिमासत्वम् । त एते त्रयोऽपि ज्योतिःशास्त्रप्रसिद्धा विवाहादौ निन्दिताः । यथोक्तप्रकारेणांहस्पतिनाम्नः क्षयमासस्य द्वितीयसंक्रान्तिप्रयुक्तमासस्वभावे सति शुद्धमासवत् स्वातन्त्र्याच्च पूर्वोत्तरमासयोरप्यशुद्धावकाश" ।

मुहू० चि० पी० तादृशमासत्रयस्य माङ्गल्यकर्म्मसु वर्ज्यतोक्ता यथा

"स्नूहपवेगगोदानस्यानांसरूपहोत्सवम् । न कुर्य्यात् मलमासे तु संसर्पेऽंहस्पतौ तथा" मरीचि "यदा क्षयमासो भवति तदा पूर्व्वोत्तरावधिमासौ भवत तत्र पूर्वं संसर्पं द्वितीयोऽंहस्पति मास" यात्रादिषु वर्ज्जनीये "विगुरुदज्यसितयोर्न्यूनाधिमासे तथा" मुहू० चि० । अपचय । "सर्वं पार्थिव धनान्यपि क्षयम्" माघ" क्षयं हानिश्च वणिजा पण्यानामविजानता" या० स्मृ० गृहे "दधतोऽसुलभक्षयागमा" माघः "अवेक्ष्य निरये चैव यातनाश्च यमक्षये" मनु० । १०नाशे "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" । "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः" गीता । "अष्टकासु हरौ च गयायां च क्षयाहनि" ध० त० भवि० पु०

**क्षयङ्कर** त्रि० क्षयं करोति कृ—ख । क्षयकारके । "शत्रुपक्षक्षयङ्कर" । भा० आ० २६६० श्लो०

**क्षयज** पु० क्षयात् जायते जन—ड । कासभेदे । यथा

"विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् । घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः । कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम् । स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी । शुष्यन् विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् । तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति । वृद्धत्वमासाद्य भवत्ययोवै याप्यन्नमाङ्गभिषजस्तु कासम्" "क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणोविधि" इति च सुश्रुत । क्षयात् कासः । क्षयकासोऽप्यत्र ।

**क्षयतरु** पु० क्षयस्य क्षयहेतुस्तरुः अश्वघासादिवत् चतुर्थ्यर्थे ६त० । स्थालीवृक्षे राजनि०

**क्षयथु** पु० क्षि-अथुच् । कासरोगे हेम० ।

**क्षयनाशिनी** स्त्री क्षय रोगं नाशयति नश—णिच्—णिनि ङीप् । १जीवन्तीवृक्षे शब्दमाला । २क्षयरोगनाशके त्रि० ।

**क्षयपक्ष** पु० क्षीयते चन्द्रोऽस्मिन् क्षि आधारे अच् कर्म्म० । कृष्णपक्षे । "चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मक" ज्यो० उक्तेस्तस्य तथात्वम् । [क्षयम् ।

**क्षयमास** पु० कर्म्म० । द्विसंक्रान्ते चान्द्रे मासे क्षयशब्दे

**क्षयरोग** पु० क्षयहेतुः रोगः । यक्ष्मरोगे "क्रियाक्षयकरत्वाच्च क्षय इत्यभिधीयते" सुश्रुत स विद्यतेऽस्य इनि । तद्रोगयुक्ते त्रि० "राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः । गोभूहिरण्यमिष्टाश्वजलयस्त्रप्रदानत । घृतधेनुप्रदानेन तिलधेनुप्रदानत । इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति" शाता० ।

**क्षयवायु** पु० क्षयस्य प्रलयस्य वायुः । प्रलयवायौ "युष्मानचेतन् क्षयवायुकल्पान् इति" भट्टि

**क्षयिन्** त्रि० क्षयो राजयक्ष्माऽस्त्यस्य इनि । १राजयक्ष्मयुक्ते २चन्द्रमसि पु० चन्द्रस्य यक्ष्मरोगश्च काश्यपशापात् तत्कथा राजयक्ष्मशब्दे दृश्या । "रामदन्द्रमसोयस्मादभूदेष महामयः । तस्मात्त राजयक्ष्मेति केचिदाहुर्मनीषिणः" सुश्रु० "क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकवासि च" मनु० "श्वित्रिकुष्ठि कुले जाता क्षयिणी मनुजेश्वर ।" । भा० आनु० १०४अ० । क्षि—ताच्छील्ये इनि, ३क्षयशीले त्रि० "स तत्पक्षमध्यिव म क्षाभूत् तापित्र क्षयी" रघु०

**क्षयिष्णु** त्रि० क्षि—वा० इष्णुच् । क्षयशीले "क्लेदक्षयिष्णुवावामयमूत्रस्य" भाग० ६।१३।२४ अन्वर्थतयैवोऽत्र ।

न्तः सन्निबोध मे । तच्छ्रुत्वा नैष्ठिकीं बुद्धिं विन्देथाः कर्मनिश्चयम् । ताराक्षपाणि सर्वाणि यच्चैतच्चन्द्रमण्डलम् । यच्च विभ्राजते लोके स्वभासा सूर्यमण्डलम् । स्थानान्येतानि जानीहि जनानां पुण्यकर्मणाम् । कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः । तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः । न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियम् । इत्येता गतयः सर्वाः पृथक् ते समुदीरिताः । उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परम् । तथा तन्मे निगदतः शृणुष्वावहितो द्विज !" ।

११आत्मनि च "क्षरं त्वविद्या च अमृतं तु विद्या" श्वेताश्व० उ० । १२परमेश्वरे "सदसत्क्षरमक्षरम्" विष्णुस० । "सर्वं खल्विदं ब्रह्मेति" श्रुतेस्तस्य सर्वभूतमयत्वात्तथा त्वम् । "कार्यकारणरूपं तु नश्वरं क्षरमुच्यते" इत्युक्तयोः १३कार्यकारणयोः ।

**क्षरे(र)ज** त्रि० क्षरे जायते जन–ड वा सप्तम्या लुक् । मेघजाते

**क्षरण** न० क्षर–भावे ल्युट् । १स्रवणे २मोचने च "क्षरणात् क्षणनाद्वा क्षारः" सुश्रुत "अङ्कुलीक्षरणसन्नविसर्जकः" । कर्त्तरि ल्यु । ३क्षरणशीले त्रि० ।

**क्षरिन्** पु० क्षर–इनि । १वर्षाकाले हेमच० । २क्षरणयुक्ते त्रि० स्त्रियां ङीप् ।

**क्षल** शोधने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । क्षालयति ते क्षलति अचिक्षलत् त अक्षालीत् । क्षालयाम् बभूव आस चकार चक्रे चक्षाल । ज्वला० क्षल० क्षालः । "क्षते रजः क्षालयितुं क्षमेत कः" माघ । "क्षालितमपि हृदयं मलिनं शोकोर्मिभिः क्रियते" प्रबो० । "क्षालयन्नपि दृश्याङ्कुरिद्वीवेगो निकृन्तति" हितो० । श्वादिस्तु क्षाले क्षयने कवि० इति भेदः । प्राद्युपसर्गपूर्व्वस्तत्तदुपसर्गद्योत्यार्थयुक्तशोधने । "गात्राणि वाससी चैव प्रक्षाल्य सलिलेन वा" भा० शि० १७अ० । "सुखमप्राक्षालयेत्ततः" स्मृतिः ।

**क्षव** पु० क्षु–भावादौ अप् । १क्षुते (हाँचि) २राजिकायां (राइसर्षा) । अमरः । ३कासे शब्दरत्ना० ।

**क्षवक** पु० क्षु–करणे अप् संज्ञायां कन् । १राजिकायाम् २अपामार्गे ३भूताङ्कुशे च राजनि० । [ भावप्र० ।

**क्षवकृत्** पु० क्षवं करोति कृ–क्विप् । क्षुपभेदे (छिकनी)

**क्षवथु** पु० क्षु–अथुच् । १क्षुते (हाँचि) । २कासे च मेदि० । क्षुतशब्दे सुश्रुते उक्तं "घ्राणाश्रिते मर्मणि संप्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातः बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः" । "उद्घाततोयः क्षवथुर्निरेति" सुश्रुत । क्षुतशब्दे २१५६ पृ० दृश्य०

**क्षवपत्रा** स्त्री क्षवः क्षुतहेतु पत्रं यस्याः । द्रोणपुष्प्याम् राजनि०तत्पत्राघ्राणे हि क्षुत जायते । क्षवपत्त्रेति वा पाठः ।

**क्षविका** स्त्री क्षवः क्षुत साध्यतयाऽस्त्यस्य ठन् । इक्कतीभेदे राजनि० ।

**क्षात्त्र** न० क्षत्त्रस्य कर्म भावो वा–अण् । "शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्त्रं कर्म स्वभावजम्" गीतोक्ते १क्षत्त्रियकर्मणि । तस्येदमण् । २तत्सम्बन्धिनि त्रि० "आत्मकर्मक्षमं देहं क्षात्त्रोधर्म इवाश्रित" रघुः ।

क्षत्त्राणां समूहः अण् । ३तत्समूहे न० "शतं क्षात्त्रम् अग्रगृहीतानाम् पुत्राः" शत० ब्रा० १३,४.२,५, "चत्वारः कोणाध्यक्षाः तेषां समूहः क्षात्त्रम्" भा० ।

**क्षात्त्रि** त्रि० क्षत्त्रस्यायं जातिभिन्न इञ् । क्षत्त्रसम्बन्धिनि जातौ तु क्षत्त्रिय इत्येव ।

**क्षान्त** त्रि० क्षम–कर्त्तरि क्त । १वह्निप्रभृतीनां केनचित्पीडनेऽपि सामर्थ्ये सति तत्प्रतीकारपराङ्मुखे । कर्म्मणि क्त । २सोढे । ३निर्वैरो निवृत्तिः क्षान्तो निर्मन्युः शतिरेव च । त्रिपमो मातृवर्ती च व्याधाः परमधार्मिकाः" हरिवं० २१अ० उक्ते सप्तव्याधमध्ये ३व्याधभेदे । ते च गुरोर्गोहरणात् क्रमेण मृगचक्रवाकादियोनिभाजः तत्रैव तत्कथा । क्षान्ताशब्दे परे स्त्रियाः कर्मधारये न पुंवत् । परमक्षान्ता । उत्करा० चतुरर्थ्यां छ । क्षान्तीय तन्निर्वृत्तादौ त्रि० । ४ऋषिभेदे पु० । क्षान्तस्य गोत्रापत्यम् अश्वा० फञ् । क्षान्तायन तदपिगोत्रापत्ये पुंस्त्री० ।

**क्षान्ति** स्त्री क्षम भावे क्तिन् । क्षमायाम् सामर्थ्ये सत्यपकारिणोऽप्यपकाराचिकीर्षायाम् । "क्षान्त्या शुध्यन्ति विद्वांसः" मनुः । "शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्" गीता "शमोदमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्" भाग० ७।११.२२

**क्षान्तु** पु० क्षम–तुन् इडभावः । १क्षमाशीले उणादिकोषः २पितरि पु० सङ्क्षिप्तसा०

**क्षाम** त्रि० क्षै–कर्त्तरि क्त । १क्षीणे २अल्पे शब्दरत्ना० "क्षामोविश्रवणस्त्वं च नष्टे किञ्चिच्छिनत्त्यपि" । "क्षामेव मृदुकोष्ठे न मन्दाग्निना" सुश्रुत "क्षामच्छायं भवनमधुना मद्वियोगेन नूनम्" मेघ० "मध्ये क्षामा चकितहरिणीप्रेक्षणा नि-

द्वारपाचूर्णानि लोहनाड्य सममागानि ततः चारवदा- गतपाकमवतार्य लोहकुम्भे निदध्यात् । अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च । अस्याहर्शनात् स्पर्शात् विषात् समतिष्ठच्युते । एष चारागदो नाम शर्करास्वश्मरीषु च । अर्शःसु वातगुल्मेषु कासमू- लोदरेषु च । अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे । शोफे सर्व्वसरे चापि देयःश्वासे च दारुणे । एष सर्व वि- षाणां सर्वथैवोपयुज्यते । तथा तच्चकसुख्यानामयं द- र्पाहृयोऽगद"।

**चाराच्छ** न० चारेणाच्छम् । चाराद्रवणे फारा० ।

**चारिका** स्त्री चर-ण्वुल टाप् अतइत्वम् । चुधायां फारा०

**चारित** त्रि० चर-णिच्-क्त । १अपवादयस्ते, प्राप्तदोषे, अमर २स्राविते मेदि०

**चारोद(क)** पु० चारउदकेऽस्य वा उदादेशः । लवणसमुद्रे "चारोदेचुरसोदसुरोदघृतोदचीरोददधिमण्डोदशुद्धोदाः सप्त जलधयः" भाग० ५।१०।५ शो० "चारोदविरचल "जम्बुद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता चारोदधि" भाग० ५।२०।२शो०

**चाल** त्रि० चल-शोधने ज्वला० १कर्त्तरि ण । शोधनकर्त्तरि

**चालन** न० चल-भावे ल्युट् । शोधने "चौगूद्री प्रयतौ नित्य चालनाच करौतयो" का० त० मत्स्यपु० "मद्या चलनाद्धि पङ्कस्य दूरादस्पर्शनं परम्" नीतिशा०

**चालित** त्रि० चल-क्त । १शोधिते क्तप्रचालने च । "चालित तु शमितञ्च बधूना द्राविडं तु हृदय मधुवारैः" माव.

चि चये अक० ऐश्वर्ये सक० भ्वा० पर० अनिट् । चयति अ- चैषीत् चिचाय चीयात् । चीणः चितिः । चय । चयन् चेतुम् । भावे दैन्ये आक्रोशे च निष्ठातस्य वा न दीर्घो वा । तत्र दैन्ये चित चीणं वा तपस्विना । आक्रोशे चितायु चीणायु भूयात् । "चयन्तमस्य रजसः पराके" ऋ०७,१००,१५, "यस्मिन् चयन्ति पङ्क्तीः" अथ०१२,१,१, "ताहि मध्यं भराणामिन्द्राग्नी अधिचितः" ऋ०८,४०, २, कर्म्मकर्त्तरि चीयते "अपचीयते नश्यति" यास्कः "चीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" कठो० । "शरीरकर्षणात्प्राणाः चीयन्ते प्राणिनां यथा । तथा राज्ञामपि प्राणाः चीयन्ते राष्ट्रकर्षणात्" मनुः

चि हिंसायां स्वा० पर० सक० अनिट् । चिणोति, चिणुतः चिण्वः-चिणुवः । अचैषीत् । चिचाय । "चटिनी चि णोति" नैष० । "धर्म्मा इदग्नाअयस्तैः चिणोमि" भा० य० १४अ० । "चिंचीणेन भूत्वाचिणोति" शत० ब्रा० १।५।१।२५। अयं क्र्यादिरपि तदर्थे । "चिणामि ब्रह्म- णामित्रान्" अथ० ३।१६।३।

चि वासे अक० गतौ सक० तु० प० अनिट् । चियति । अचैषीत् चिचाय । "अन्तरीचं पृथिवीं चियन्ति"तैत्ति० २,१,१,७,"मतृस्य न दीन उदनि चियन्तम्"ऋ०१०,६८,८, वेदे गणव्यत्ययात् कचित् शपोलुक् । "चयति चेति पु- ष्यति" ऋ० ७।२२।६।"चेति चेमेभिः साधुभिः"८।७३।६।

चि त्रि० चि-मा० ड । १निवासे २गतौ ३चये च मेदि० ।

चिणु हिंसायां तना० उभ० सक० सेट् । चिणोति चिणुते अचणीत् अचणिष्ट । चिचाण चिचणे ।

चित त्रि० चि-हिंसायां कर्म्मणि क्त । १हिंसिते । भावे क्त २हिंसायां न०

चिति स्त्री चि-निवासे आधारे क्तिन् । १भूमौ,"निपीय यस्य चितिरचिणः कथाम्" नैष० । भावे क्तिन् । २निवासे चि चये भावे-क्तिन् । ३चये, कर्त्तरि क्तिच् । ४रोचना- द्योगन्धद्रव्ये शब्दच०५मनुष्ये निघ०।"इन्द्र ! प्रराज्ञ्स चितौ" ऋ० ८,६,२६"चितोर्भिनुग्रान्"भा० । "प्रजासु ता नः चितौ करतमूर्ज्ञयन्तीः" ऋ०७,६६,२, "भुवास चितिषु चियन्तः" ऋ० ७,८८,७,"पञ्च चितीर्मानुषीर्बोध- यन्ती"७,७६,१।"चितीर्हि सा"अथ०१२,५,१६ । चि चये व्याधारे क्तिन् । ६प्रलयकाले मेदि० । चितियद्वन्निरुक्तिः ब्रह्मवै०पु०प्रा०ख०७अ० । "महालये चय याति चिति- स्तेन प्रकीर्त्तिता"। अस्मिन्पचे कर्त्तरि क्तिच् इति भेद ।

**चितिकण** पु० ६त० । धूलौ त्रिका० ।

**चितिकम्प** पु० ६त० चितिधरायां चलननिमित्ते भूमे कम्पे तत्र विशेषः अद्भुतसागरे "मेषे वृषकभे गजः प्र- चलति व्याघ्रादिभिः कथ्यते, चापे मीनकुलीरभे च वृषभे सत्व चलेत् कच्छपः । यूके कुम्भधरे खगेन्द्रमिथुने कन्यासुगे पन्नगस्तत्स्वामिकतमो यदि प्रचलति चौणी तदा कम्पते । कच्छपे मरण ज्ञेयं मरणञ्चापि पन्नगे । सर्वत्र सुखदश्चैव पृथिव्या चलिते गजे । प्रथितनरे- श्वरमरणं व्यसनान्याग्नेयमारुतयो । चुद्भयमतिवृष्टि- भिरुपपीड्यन्ते जनाश्चापि । तिथ्युदयपञ्चमादिमे मासि पचे विपचके । भवति यदा भूकम्प प्रधाननृपनाशम कुरुते" । "चितिभृदिव चितिकम्पकीर्णशृङ्गः" भट्टि ।

**चितिचम** पु० चितौ चमते चम अच् । खदिरवृचे राजनि०

**चितिचित्** पु० चितिमीष्टे चि-ऐश्वर्ये क्विप् । भूमीश्वरे-

प्सीत् अक्षिप्त । चिक्षेप चिक्षिपे । क्षिप्तः क्षेपकः । क्षेप्ता क्षिप्त्वा क्षिरः क्षिरन् । "क्षिरयेकेन वेगेन पञ्च दागणतावपि च" भा० व० १०।८श्लो० । "सुधर्म्मा याय-कास्तीक्ष्णान् क्षिपते च पुनः पुनः" भा० वि० २२अ० । "पदाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनं" रामा० १।११अ० 'यस्मात् त्वयस्वपि शक्तिश्च स एकोन भविष्यति" भा० आ० ६७अ० "स यत् काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि" भा० व० २८।अ० "चिक्षेप मारीचोरसि" रामा० आ० ३२स० । अधःक्षेपे च "चिक्षेप च स त धीमान् वाग्भिरुग्राभिरच्युतम्" भा० आश्व० १५अ० । प्रेरणे क्वचित् स्वार्थे च णिच् क्षेपयति ते अचिक्षिपत् त

अति+अत्यन्तक्षेपे । "सन्धिमुक्तमनुत्पिष्टं श्लिष्टं विवर्त्तितं मवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम्" "अति-क्षिप्ते द्वयो सन्ध्योरतिक्रान्तता वेदना" सुश्रुत ।

अधि—तिरस्कारे "तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा" मनु । "त्वं नाधिक्षेप्तुमर्हसि" भा० व० ८८अ० । अधिक्षेपशब्दे विवृतिः । [ अपक्षेपणशब्दे विवृति

अव+अधः क्षेपणे "अवक्षिप दिशो अस्मानमस्य" ऋ० २,५२,५

आ+ आकर्षणे "आक्षिप्य केशान् वेगेन बाहुभ्यां प्राह पाण्डवम्" भा० वि० ७५०श्लो० । भर्त्सने । आक्षेपशब्दे ६०२पृ० विवृतिः । "आक्षिपन् प्रभां भानो" भा० आ० ११०२ । "आक्षिप्तनोमिव प्रभा शशिनः स्वेन तेजसा" भा० व० २१४७श्लो० । [ कुमा० ।

परि+आ+आलम्ब्य बन्धने । "पर्य्याक्षिपत् काचिदुदारबन्धम्"

उद्+ऊर्द्ध्वक्षेपणे । "वलिमाकाश उत्क्षिपेत्" मनु. "शिर उत्क्षिप्य नागस्य मुनः पुनरवाक्षिपत्" भा० आ० ११२६श्लो० उत्क्षेपणशब्दे १०८६ पृ० विवृतिः

नि+नितरां क्षेपणे निधाने च । "अत्र भूमौ श्वचाण्डाल वायसेभ्यश्च निक्षिपेत्" याज्ञ० । गात्राणि कान्तासु च नि-क्षिपन्त " रामा० ५।११ निक्षेपशब्दे विवृतिः

निस्+निःशेषेण क्षेपे । "मक्षिकाग्रुपजातस्य नि क्षिपन्ति सदा कमीन्" सुश्रुत ।

परि+परितः क्षेपे । "गङ्गास्रोत परिक्षिप्तम्" कुमा० ।

प्र+प्रकर्षेण क्षेपे "नामेध्यं प्रक्षिपेदग्नौ" मनु

प्रति+प्रतिरूपक्षेपे । "अन्न शिरायां श्लक्ष्ण सितोदरं प्रतिक्षिपम्" सुश्रु० । अधिक्षेपे निवारणे प्रेरणे च

वि+विशेषेण क्षेपे "विक्षिप्यमाणा प्रहुधा नरेन्द्रा" भा० आ० ७०२२श्लो० । वातुलते उन्मादे, विक्षिप्तचित्त । योगा-न्तरायकरणे चित्तवृत्तेरन्यत्र सञ्चारे च "अखण्डवस्त्वन-वलम्बनेन चित्तवृत्तेरन्यालम्बनं विक्षेप" वेदान्तसा० "लये सम्बोधयेत् चित्तं विक्षिप्तं शमयेत् पुन" तत्रत्या कारिका

सम्+सम्यक्क्षेपे विस्तीर्णस्य सङ्कोचापादने व्यापारे "आतपा-त्ययसंक्षिप्तनीवारासु निषादिभि" रघु । "संक्षिप्तं प्रति-संस्कृते" अमरः । "संक्षिप्तसारमाचष्टे" संक्षिप्तसा०

**क्षिप** प्रेरणे दिवा० प० सक० अनिट् । क्षिप्यति-ते अक्षै-प्सीत् । चिक्षेप । "मत्तमान् युधि हस्तिभोगिगिरीन् क्षिप्यस्तनितिमान्" "वाहृण लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्र-मिन्द्रजित्" भट्टि ।

उपसर्गभेदेनार्थविशेष तौदादिकवत् ।

**क्षिप्** स्त्री क्षिप क्विप् । अङ्गुलौ निरु० । "दश क्षिप पूर्व्यं सोमजीजनन्" ऋ० ३,११,१, हलन्तत्वात् वा टाप् । "हिन्वन्ति धीरा दशभि क्षिपाभि ऋ० ९.९७,५७,

**क्षिप** त्रि० क्षिप क । १क्षेपके । भावे भिदा० अङ् टाप् । क्षिपा । २क्षेपणे स्त्री ।

**क्षिपक** त्रि० क्षिप—क क्षिप ततः अज्ञातादौ कन् । क्षेपके स्त्रियां टापि क्षिपका० नात इत्त्वम् । तत निर्दिष्टादौ प्रेक्षादि० चतुरर्थ्याम् इनि । क्षिपकिन् तन्निर्दिष्टादौ त्रि० स्त्रियां ङीप् ।

**क्षिपकादि** पु० पा० उक्ते कापि इत्त्वनिषेधनिमित्ते शब्द गणभेदे स च गण । क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका 'आकृतिगणः' ।

**क्षिपण** न० क्षिप भावे ल्यु० क्युन् । क्षेपणे जटा०

**क्षिप(णि)णी** स्त्री क्षिप्यतेऽनया क्षिप-अनि कित् वा ङीप् । १नौकादण्डे (दाँड़) अमरटीका । कर्म्मणि अनि । २जालभेदे ३आयुधे च उज्ज्वल० ४वहित्रे शब्दचि० । ५अध्वर्य्यौ संक्षिप्तसा० । भावे अनि । ६क्षेपणे "उ तस्य वाजी क्षिपणिं तुरण्यति" ऋ० ४।४०।४, इमा-मुदाहृत्य "क्षिपणि क्षेपणम्" इति २।२८। निरुक्तोक्तम्

**क्षिपणु** पु० क्षिप—अनुङ् । १वाते त्रिका० २व्याधे "मृगा इव क्षिपण्वोरीयमाना " यजु० १७।६४ । "क्षिपण्वोः क्षिप-ति हिनस्ति क्षिपणुर्व्याध" वेददी०

**क्षिपण्यु** पु० क्षिप—कन्युच् । १वसन्ते उज्ज्वल० २देहे पु० ३सुरभिगन्धे पु० ४तद्वति त्रि० मेदि०

**क्षिपति(स्ति)** पु० क्षिप—बा०करणे अति(स्ति) । बाहौ निघ०

**क्षिप्त** त्रि० क्षिप–क्त। १प्रेरिते, २त्यक्ते, ३विकीर्णे ४अवज्ञाते, ५रागद्वेषादिवशाद्विषयासक्ते चित्ते, ६वायुरोगग्रस्ते च। ७निहिते निधानरूपेण स्थापिते "क्षिप्त समीरे सरिता पुर पतत्" "केशरी निष्ठुरक्षिप्तमृगयूथो मृगाधिप" माघ "तिरस्कृता विप्रलब्धा शप्ता क्षिप्ता हता अपि" भाग० २।१८।४८। "क्षिप्ता अवज्ञाता" श्रीधरः। "ध्यानस्य क्षिप्तचित्तताम्" भा० स० ५अ०। "हतस्य भेषजमथो क्षिप्तस्य भेषजीम्" अथ० ६।१०९।३।८ रात्रौ स्त्री हला०

**क्षिप्तकुक्कुर** पुस्त्री कर्म०। अलर्के (क्षेपा कुकुर) स्त्रियां ङीष्।

**क्षिप्तयोनि** त्रि० क्षिप्ता योनिर्गर्भोत्पत्तिस्थानमस्य। क्षिप्त मातृके स्वभर्त्रा नासक्तमातृके। "क्षिप्तयोनिरिति चैके" आ० श्रौ० ३८० सू० १,०२,१८ "क्षिप्तयोनिर्नाम यस्य माता स्वभर्त्तारं नाद्रियते" नारा० वृत्ति। तस्य (तत्कर्त्तृकम्) आर्त्विज्यं न कार्य्यमित्यनुषङ्ग

**क्षिप्नु** त्रि० क्षिप–क्नु त्रस्ना० न यत्वम्। क्षेपणशीले त्रि०

**क्षिप्र** न० क्षिप-रक्। १शीघ्रे क्रियाविशेषणत्वे क्लीवता "क्षिप्र ततोऽध्वन्यतुरङ्गयायी" भट्टि। २तद्वति त्रि० "अति क्षिप्रेव विध्यति" ऋ० ४।८।८। "पुष्याश्विन्यभिजिद्धस्ता लघु क्षिप्र गुरुस्तथा" ज्यो० उक्ते पुष्यादिषु ३नक्षत्रेषु "रिक्ताभौमघटान् विना च विपणौ मित्रध्रुवक्षिप्रभे" मुहू० चि० ४शीघ्रगे त्रि० "स्वतव्येन क्षिप्रेण धन्वना" ऋ०२।२४।५। तत अतिशायने इष्ठन् ईयसुन् रलोपे गुण। क्षेपिष्ठ क्षेपीयस् अतिशयशीघ्रे त्रि० "वायुर्वै क्षेपिष्ठा देवता" श्रुति इयसुनि स्त्रियां ङीप्। क्षेपीयसी।

**क्षिप्रकारिन्** त्रि० क्षिप्रं करोति कृ–णिनि। (चालाक) शीघ्रक्रियाकारके।

**क्षिप्रपाकिन्** पु० क्षिप्रं शीघ्रं पच्यते पच-बा० घिणुन्। (गन्धभादलिया) १वृक्षभेदे रत्नमा०। २शीघ्रपाकवति त्रि०

**क्षिप्रहोम** पु० क्षिप्रं हूयते हु-मन्। शाय प्रात कर्त्तव्ये होमे तद्विवृत्तं स० त० "द्विविधा होमा याज्ञिकप्रसिद्धा क्षिप्रहोमास्तन्त्रहोमाश्च। तत्र क्षिप्रहोमा क्षिप्रं हूयन्त इति व्युत्पत्त्या सायंप्रातर्होमादय। तन्त्रहोमाश्च परिसमूहनबर्हिरास्तरणाद्यङ्गविस्तारयुक्ता। अत्र ये समिद्विस्तारास्तन्त्रहोमा यत्र स्रुवप्रस्तरार्धे दोण्डीहोमरूपेषु येषाञ्च वैश्वदेवसायंप्रातर्होमादीनामेतद्विधाख्यं द्रव्य उपरि पश्चात् अथ इध्मानुकल्पयेत इध्मेन सुसंयोक्तं तेषु वा तन्त्रहोमेषु 'क्षिप्रहोमेषु इध्मस्य निवृत्तिर्भवेदिति"। तत्र विशेषमाह व्यास "दग्धे गृहे न कुर्वीत क्षिप्रहोमे स्थिरं द्वयम्" द्वय परिसमूहनमास्तरणं चेति। "विरूपं च न जपेत् प्रपदञ्च विवर्जयेत्" क्षिप्रहोमेषु अग्न्याधानेषु सायं प्रात गृह्याग्निहोमादिषु ब्राह्मणम् "इमं स्तोममर्हते" इत्यादिमन्त्रकरणं वा परिसमूहनं न कुर्य्यात्"।

**क्षिया** स्त्री क्षि–क्षये भावे भिदा० अङ्। १अपचये अमर० २धर्म्मव्यतिक्रमे सि० कौ०। "क्षेति क्षियायाम्" "क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्" पा० "क्षियाया धर्म्मव्यतिक्रमे" सि० कौ० यथा "स्वयं ह रथेन याति ३उपाध्यायं पदातिं गमयति" उदा० अत्राद्यतिङ् प्लुत।

**क्षिव** निरसने भ्वा० पर० सक० सेट्। क्षेवति अक्षेवीत्। चिक्षेव उदित्। क्षेवित्वा ष्ठ्यूत्वा ष्ठ्यूत ष्ठ्यूति। निरसन फूत्कार इति भट्टमल्ल मुखेन श्लेष्मादेर्निरसनमित्यन्ये

**क्षिव** निरसने दिवा० पर० सक० सेट्। क्षीव्यति अक्षेवीत् चिक्षेव। उदित् क्षेवित्वा ष्ठ्यूत्वा।

**क्षी** हिंसायां भ्वा० उभ० सक० अनिट्। क्षयति ते अक्षैषीत् अक्षेष्ट। चिक्षाय चिक्षिये [क्षीज

**क्षीज** अव्यक्तशब्दे भ्वा० पर० अक० सेट्। क्षीजति अक्षीजीत्

**क्षीजन** न० क्षीज–भावे ल्युट्। कीचकवंशशब्दे हेम०।

**क्षीण** त्रि० क्षि–क्त। १दुर्बले, २क्षामे च "अष्टमांशे चतुर्दश्यां क्षीणो भवति चन्द्रमा" छन्दो०। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" श्रुति

भावप्र० वातादिक्षयभेदेन क्षीणभेदास्तल्लक्षणादिकमुक्तम् "वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता। पित्तक्षयेऽधिक श्लेष्मा वह्निमान्द्य प्रभाक्षय। सन्धय शिथिला मूर्च्छा रौक्ष्यमन्तर्दाह कफक्षये। हृत्पीडा कण्ठशोषोऽथ तृट् शून्या हृत् रसक्षये। शिरा श्लथा हिमाम्लेच्छा त्वक्पारुष्य क्षयेऽसृज। गण्डौष्ठकन्धरास्कन्धवक्षोजठरसन्धिषु। उपस्थशोथपिण्डीषु शुष्कता गात्ररूक्षता। मेदोधमन्य शिथिला भवेयुर्मांससंक्षये। प्लीहाभिवृद्धि सन्धीनां शून्यता तनुरूक्षता। प्रार्थना स्निग्धमांसस्य लिङ्गं स्यान्मेदस क्षये। अस्थिशूलमथो रौक्ष्यं नखदन्तत्रुटिस्तथा। अस्थिक्षये लिङ्गमेतद्दृष्टं सर्व्व-दर्शाकृतम्। शुक्राल्पत्व पूर्व्वभेदस्तोद शून्य स्तनस्फिचि। लिङ्गान्येतानि जायन्ते नराणां मज्जसंक्षये। शुक्रक्षये रतेऽशक्तिर्व्यथा शेफसि मुष्कयो। चिरेण शुक्रसेक स्यात्सेके रक्ताल्पशुक्रता। अथौज क्षयस्य निदानमाह "ओज संक्षीयते कोपक्षुद्ध्यानशोकश्रमादिभि। कृशती

रूक्षोष्णकटुकैः कषायैरपरैरपि। अथ क्षीणौज आदीनां लक्षणमाह। "बिभेति दुर्बलोऽभीक्ष्णं चिन्तयेद्व्यथितेन्द्रियः। ध्यभ्युत्यानोन्मना रूक्षः क्षामः स्यादोजसः क्षये। पुरीषस्य क्षये पार्श्वे हृदये च व्यथा भवेत्। सशब्दस्यानिलस्योर्द्ध्वगमनं कुक्षिसङ्घति"। कुक्षिसङ्घति' उदरसङ्कोच' "मूत्रक्षयेऽल्पमूत्रत्वं बस्तौ तोदश्च जायते। स्वेदनाशे त्वचो रौक्ष्यञ्चक्षुषोरपि रूक्षता। स्तब्धाश्च रोमकूपाः स्युर्लिङ्गं स्वेदक्षये भवेत्। आर्त्तवस्य स्वकाले चाभावस्तस्याल्पताथ वा। जायते वेदना योनौ लिङ्गं स्यादार्त्तवक्षये। अभावः स्वल्पता वा स्यात् स्तन्यस्य भवतस्तथा। म्लानौ पयोधरावेतल्लक्षणं स्तन्यसंक्षये। अनुन्नतो भवेत् कुक्षिर्गर्भस्यास्पन्दनन्तथा। इति गर्भक्षये प्राज्ञैर्लक्षणं समुदाहृतम्"। अथ क्षीणानां धातुदोषमलानां वर्द्धनमाह। "तत्तत्संवर्द्धनाहारविहारातिनिषेवणात्। तत्तत् प्राप्य नरः शीघ्रं तत्तत्क्षयमपोहति। ओजस्तु वर्द्धते नृणां स्निग्धस्वादुभिस्तथा। द्रव्यैरन्यैर्विशेषात्तु क्षीरमांसरसादिभिः"। अन्यच्च "दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः। तत्तत्संवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति। यद्यदाहारजातन्तु क्षीणः प्रार्थयते नरः। तस्य तस्य स लाभेन तत्तत्क्षयमपोहति"। तत्र केन क्षीणः किमाकाङ्क्षतीत्याकाङ्क्षायामाह "कषायकटुतिक्तानि रूक्षशीतलघूनि च। यवमुद्गप्रियङ्गूंश्च वातक्षीणोऽभिकाङ्क्षति"। पित्तक्षीणः किं काङ्क्षतीत्याकाङ्क्षायामाह "तिलमाषकुलत्थादिपिष्टसर्जितिलन्तथा। मस्तुशुक्ताम्लतक्राणि काञ्जिकञ्च तथा दधि। कट्वम्ललवणोष्णानि तीक्ष्णक्रोधविदाहि च। समयं देशसम्पन्नं पित्तक्षीणोऽभिकाङ्क्षति। मधुरस्निग्धशीतानि लवणाम्लगुरूणि च। दधि क्षीरं दिवास्वप्नं कफक्षीणोऽभिकाङ्क्षति। रसक्षीणो नरः काङ्क्षत्यम्भोऽतिशिशिरं लघु। रात्रिनिद्रां हिमं चन्द्रं भोक्तुञ्च मधुरं रसम्। इक्षुं मांसरसं मद्यं मधुसर्पिर्गुडौदनम्। द्राक्षादाडिमयुक्तानि सर्वेऽलवणानि च। रक्तपित्तानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति। अम्लानि दधिपित्तानि माषमाद्यं मद्यमपि। स्थूलमत्स्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति"। काङ्क्षा मधुराम्लादिरसयोगपाचिता गुरुप्रधानतः। "मेदःसिक्तानि मांसानि ग्राम्यानूपौदकानि च। स्नायूनि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति। अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम्। स्वाद्वम्लसंयुतं द्रव्यं मज्जाक्षीणोऽभिकाङ्क्षति। शिखिनः कुक्कुटस्याण्डं हंससारसयोस्तथा। ग्राम्यानूपौदकानाञ्च शुक्रक्षीणोऽभिकाङ्क्षति। यवान्नं यावकान्नञ्च शाकानि विविधानि च। मसूरमाषयूषञ्च मलक्षीणोऽभिकाङ्क्षति। पेयमिक्षुरसं क्षीरं सगुडं बदरोदकम्। मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च। अभ्यङ्गोद्वर्त्तने मद्यं निवातशयनासने। गुरु प्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति। कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च। फलशाकानि पानानि स्त्री काङ्क्षत्यार्त्तवक्षये। सुरामास्यन्नमांसानि गोक्षीरं शर्करान्तथा। आसवं दधि पूपानि स्तन्यक्षीणाऽभिकाङ्क्षति। छागजाविवराहाणां गर्भान्काङ्क्षति सत्कृतान्। वसाशूल्यप्रकारादीन् भोक्तुं गर्भपरिक्षये"।

**क्षीणचन्द्र** पु॰ कर्म॰। उभयपक्षयोरष्टमीमध्यस्थे चन्द्रे "कृष्णाष्टमीदलादूर्द्ध्वं यावच्छुक्लाष्टमीदलम्। तावत्कालं शशी क्षीणः पूर्णस्तस्योपरि स्मृतः" ज्यो॰।

**क्षीणाष्टकर्म्मन्** पु॰ क्षीणान्यष्ट कर्म्माण्यस्य। जिने हेम॰ अर्हच्छब्दे १८६पृ॰ विवृतिः "अष्टकर्म्मक्षयान्मोक्षः" "क्षीणाष्टकर्म्मणो मुक्तिः" इति तत्रत्यवाक्यम्

**क्षीव(ब)** मदे भ्वा॰ आत्म॰ अक॰ सेट्। क्षीव(ब)ति अचिक्षी-(बी)त्। चिक्षीव(ब)

**क्षीव(ब)** त्रि॰ क्षीव(ब)–क्त नि॰। मत्ते। "क्षीबाः(बा॰) कुर्वन्ति हासञ्च कलहञ्च तथाऽपरे" रामा॰७॰६॰८॰।

**क्षीर** पु॰न॰ क्षि–क्रन् दीर्घश्च, घस–अदने ईरन् किच्च उपधालोपे चर् वा अर्द्धर्चा॰। १दुग्धे २जले अमरः ३सरलद्रव्ये शब्दच॰। "आमप्रायं पयस्यात् क्षीरं पेयूषमुच्यते। परतो मोरटं विद्याद्रसवत् कफात्मकम्" रत्नमा॰। क्षीरवर्गशब्दे विवृतिः "शाकाम्लफलपिण्याककुलत्थलवणान्वितैः। करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते। स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च। क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैतल्लवणेन सार्द्धम्। पिष्टान्नमत्स्याय-कशायमुद्गकोपातकीकन्दफलादिकैश्च"। "मत्स्यमांसगुडमुद्गमूलकैः कुष्ठितां व्रजति सेवितं पयः। शाकजाम्बवरकादिसेवितं मारयत्यबुधमाशु सर्पवत्" वैद्यके द्रव्यान्तरयोगे तस्य वर्ज्यतोक्ता।

"भेतव्यमाहमिच्छन्ति बाली क्षीरस्य येऽमरः। विरक्ता प्रतिगच्छन्ति च पापेभ्य महक्षते" वरा॰पु॰ "देषु क्षीरप्रा

**क्षीरनाश** पु० क्षीरं नाशयति नश–णिच् अण् उप०स० । शाखोटकवृक्षे राजनि० । तद्दलदुग्धयोगादन्यदुग्धस्य नाशनं लोकसिद्धम् ।

**क्षीरनीर** न० क्षीरात्त नीरमिव । १आलिङ्गने शब्दमा० आलिङ्गने हि क्षीरनीरयोरिव संसर्गो भवति । समा० द्व० । २क्षीरनीरसमाहारे न० "क्षीरनीरसममित्रं प्रशंसन्ति विचक्षणाः । तत्र नीरं क्षोरयति" वेता० । क्षीरमिव नीरम् । ३क्षीरतुल्ये जले न० क्षीरनीरं धीयतेऽत्र धा–आधारे कि । क्षीरधि दुग्धसमुद्रे पु० ।

**क्षीरप** त्रि० क्षीरं पिबति पा–क । दुग्धपायिनि बालकभेदे पु० "ततोनवोड्शवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपाः द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादाः" सुश्रु० "क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः । न तेषां क्षीरपाः केचित् भवन्ति कुलवर्द्धनाः" भा०आनु० १२५ अ० ।

**क्षीरपर्णिन्** पु० क्षीरयुक्तं पर्णमस्त्यस्य इनि । अर्कवृक्षे राजनि० ।

**क्षीरपर्णी** स्त्री क्षीरं पर्णेऽस्याः गौ० ङीष् । अर्कवृक्षे शब्दचि० ।

**क्षीरपलाण्डु** पु० क्षीरमिव शुभ्रः पलाण्डुः । श्वेतपलाण्डौ "स्निग्धोत्तविच्य स्थिरधातुकर्त्ता बल्योऽग्निमेधाकरपुष्टिदश्च । स्वादुर्गुरुः स्वादितपित्तवस्तः सपिच्छलः क्षीरपलाण्डुरुक्तः" इत्युक्ते तद्गुणा उक्ताः ।

**क्षीरपाण** पु० पीयते पा-कर्मणि ल्युट् क्षीरं पानं यस्य "पानं देशे" णत्वम् अत्र देशः देशस्थायिजनपरः । १उशीनरवासिजने सि०कौ० "वा भावकरणयोः" पा० भावे करणे च ल्युटि वा णत्वम् इत० । २तत्पानकरणे त्रि० । ३तत्पानपात्र्यां स्त्री ङीष् । ४दुग्धस्य पाने न० ।

**क्षीरभृत** पु० क्षीरेण भृतः । दुग्धमात्रभृतिके गोपाले भृत्यभेदे । "गोपः क्षीरभृतोयस्तु स दुह्याद्दशतो वराम् । गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनु "यो गोपालस्तो भृत्य क्षीरेण भृतो न भक्तादिना स स्वाम्यनुमत्या दशभ्योगोभ्य श्रेष्ठामेका गां भृत्यर्थं दुह्यात् सा भक्तादिरहिते गोपाले भृतिः स्यात् । एवञ्चैकगवीक्षीरदानेन दश गाः पालयेदित्युक्तम्" कुल्लू० ।

**क्षीरवर्ग** पु० ६त० सुश्रुतोक्ते क्षीरभेदवर्गे यथा "गव्यमाजन्तथा चौष्ट्रमाविकं माहिषञ्च यत् । अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत्पय । तत्त्वनेकौषधिरसप्रसाद प्राणदं गुरु । मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु । सर्वप्राणभृतां तस्मात्सात्म्यं क्षीरमिहोच्यते । तत्र सर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात् । वातपित्तशोणितमानसविकारेष्वविरुद्धम् । जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्वस्तिपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भस्रावरक्तपित्तश्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्षितानाञ्च पथ्यतमम् । गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम् । रक्तपित्तहरं शीतं मधुरं रसपाकयोः । जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् । गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् । दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् । अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् । नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः । रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु । शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् । आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् । पथ्यं केवलवातेषु कासे चानिलसम्भवे । महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् । निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु । उष्णं चैकशफं बल्यं शाखावातहरं लघु । नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् । नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् । हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् । प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् । रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा । दिवाकराभितप्ताना व्यायामानिलसेवनात् । वातानुलोमि श्रान्तिघ्नं चक्षुष्यं चापराह्णिकम् । पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्त्तितम् । तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् । वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् । धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा । तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते । अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत् । वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्" । भावप्र० अत्र विशेष उक्तस्तत्रैव दृश्यः ।

**क्षीरमोरट** पु० क्षीरवत् स्वादुः मोरट । मोरटभेदे मोरटशब्दे विवृतिः । "क्षीरमोरटमधूलिकाकुष्माण्डप्रभृतीभिः समासेन मधुरोवर्गः" सुश्रु० सा च पीलुपर्णीत्येके ।

**क्षीरलता** स्त्री क्षीरप्रधाना लता । क्षीरविदार्य्याम् राजनि०

नाविधानि रत्नानि दिव्यान्याभरणानि च। क्षीरोदधेस्तु-त्थितानि गन्धर्वाश्च सहस्रशः। एतान् दृष्ट्वा तदोत्पन्ना महाश्चर्यसमन्विताः। अभवन् जातहर्षास्ते तत्र सर्वे सुरासुराः। दैवपक्षे ततो मेघाः सम्यग्वर्षन्ति संस्थिताः। कण्ठाश्रया तु वायुस्तु सुखं वाति सुरान् प्रति। विष निःश्वासयातेन वासुकेश्चार्कतापनात्। निस्तेजसोऽभवन् दैत्या निर्वीर्याश्च महामते!। ततः श्रीरुत्थिता तस्मात् क्षीरोदाद्धृतपङ्कजा। विभ्राजमाना राजेन्द्र दिशः सर्वाः स्वतेजसा। ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता। दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता। देवपक्षं समाश्रित्य स्थिता चाप्यमरिन्दम!। हरिवक्षःस्थले प्राप्ता ततः सा कमलालया। ततोऽमृतघटं पूर्णं सङ्गृहीत्वा पयसो निधेः। धन्वन्तरिः समुत्तस्थौ"।

**क्षीराब्धितनया** स्त्री ६त०। लक्ष्म्यां १तस्यास्तज्जातत्वात्तथात्वम् २चन्द्रे पु० क्षीराब्धिजशब्दे दृश्यम्।

**क्षीराशी** स्त्री क्षीरमश्नाति अश—अण् ङीप्। दुग्धिकायाम् (दुधी) अमरः स्वार्थे क। तत्रार्थे। अस्याः पत्रच्छेदने दुग्धवन्निर्यासस्य स्रविभावात्तथात्वम्। सा च "स्वल्पतुल्य-पत्रा" सुभूतिः। [क्षिका०

**क्षीराह्व** पु० क्षीरमाह्वयते स्पर्द्धते आ+ह्वे-क। सरलद्रुमे

**क्षीरिका** स्त्री क्षीरं तत्तुल्यस्वादोऽस्त्यस्य ठन्। १राजादने २पिण्डखर्ज्जूरे अमरः। "क्षीरिकायाः फलं पक्वं गुरु विष्टम्भि शीतलम्" राजनि०। "क्षीरिकाया फलं हृद्यं बल्यं स्निग्धं हिमं गुरु। तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित्" भावप्र०। ३परमान्ने भावप्र० कृशरान्नशब्दे २१८०पृ० दृश्यम्

**क्षीरिद्रुमाद्य** न० "क्षीरिद्रुमाद्योत्थरसे विपक्वं तत्कैश्च कल्कैः पयसा च सर्पिः। सितोपलार्द्धं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम्" चक्रदत्तोक्ते घृतभेदे

**क्षीरिन्** पु० क्षीरं तत्तुल्यनिर्यासोऽस्त्यस्य इनि। क्षीरतुल्यनिर्यासयुक्ते १वृक्षभेदे स च भावप्र० उक्तो यथा "न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्। केचित्तु पारीषस्थाने शिरीषं वेतसं परे वदन्तीति शेषः। "क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः। रूक्षाः कषायाः मेदोघ्ना विसर्पशोथनाशनाः। शोथपित्तकफास्रघ्नाः, स्तन्याभग्नास्थिसंयोजकाः। स्वल्पमूलं हिमं ग्राहि व्रणशोथ विसर्पजित्। तेषां पत्रं हिमं ग्राहि कफवातास्रनुत्तनु।

विबन्धाध्मानजित् तिक्तं कषायं मधुरं समम्" तद्गुणाः। २हिमजायां तिक्तदुग्धायां शीतदुग्धायां क्षीरिकायां स्त्री ङीप् जटा०। "क्षीरिणी तिक्तशीता च रेचनी शोफतापनुत्। क्रिमिदोषकफघ्नी च पित्तज्वरहरी परा" राजनि०। ३वराहक्रान्तायां शब्दच०। ४कुटुम्बिन्यां ५काश्मर्यां ६दुग्धिकायां च राजनि० दुग्धिकायां पुंस्त्री शब्दच० ७स्नुहीवृक्षे दस्त्यर्कवृक्षे ८राजादन्याम् १०दुग्धपाषाणे ११पुष्पे १२सोमलतायां १३स्वर्णक्षीरवृक्षे च पु० राजनि०

**क्षीरी** स्त्री० क्षीर+अस्त्यर्थे अच् गौरा०ङीष्। (क्षिरखोला) ख्याते वृक्षभेदे शब्दर०।

**क्षीरीश** पु० क्षीरिणां वृक्षाणामीशः प्रधानत्वात्। वरपर्णे सुकुन्दे मूलकाकारमूले सुगन्धे वृक्षभेदे रत्नमा०।

**क्षीरेयी** स्त्री० क्षीरेण ईषत् शोभां याति या-क गौ० ङीष्, क्षीर+भा० भव.र्थे ढञ् वा ङीप्। परमान्ने हला०

**क्षीरोद** पु०"क्षीरमिव स्वादु उदकं यस्य उदादेश। दुग्धसमुद्रे "तत श्रीरुत्थिता तस्मात् क्षीरोदात् धृतपङ्कजा" म०भा०संहपु०। क्षीरोदमन्थनकथा यथा "मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्। दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम्। अहञ्च तत्र साहाय्यं करिष्यामि दिवौकसः। भविष्यत्यमृतं तत्र तत्पानाद्बलवत्तराः। भविष्यथ सुरा देवं अमृतस्य प्रभावत। यूयं सर्वे महावीर्या भुञ्जिष्ठ स्थमिक्रमाः। इन्द्राद्यास्तु महोत्साहाः स्थानलब्धिमहानरीन्। ततो हि दानवान् जेतुं समर्था नात्र संशयः। इत्युक्ता देवदेवेन देवा सर्वे जगत्पतिम्। प्रणम्यागत्य निलयं सन्धिं कृत्वाथ दानवैः। क्षीराब्धिमथने सर्वे चक्रुरुद्योगमुत्तमम्। बलिना चोद्धृतो राजन्! मन्दराख्यो महागिरिः। क्षीराब्धौ क्षेपितश्चैव तेनैकेन स्वपोत्तम!। सर्वौषधिश्च प्रक्षिप्ता दैवैर्दैत्यैः पयोदधौ। वासुकिश्च ततस्तत्र राजन्! नारायणाज्ञया। सर्वदेवहितार्थाय विष्णुश्च स्वयमागत। ततो विष्णुसमादेशात्तत्र सर्वे सुरासुराः। समेत्य मित्रभावेन क्षीराब्धेस्तटमाश्रिताः। मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाथ वासुकिम्। ततो मथितुमारब्धा श्रूयते! तरसाऽमृतम्। विष्णुना सुसभागे तु वासुकेर्दानवाः कृताः। देवाश्च पुच्छभागे तु मन्थनार्थं नियोजिताः। एवन्तु मन्थमानस्य मन्दराद्य प्रविश्य वै। आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः। सर्वलोकहितार्थाय कूर्मरूपमधारयत्। कालान सं

माविधानि रत्नानि दिव्यान्याभरणानि च। क्षीरोदधेस्तू-त्थितानि गन्धर्वाश्च सहस्रशः। एतान् दृष्ट्वा तदोत्पन्ना नत्वाश्चर्य्यसमन्विताः। अभवन् आनन्दपूर्णास्ते तत्र सर्वे सुरासुराः। दैवपक्षे ततो मेघाः सम्यग्वर्षन्ति संस्थिताः। कृष्णाज्ञया तु वायुस्तु सुखं वाति सुरान् प्रति। विष-निःश्वासपातेन वासुकेश्चार्कतापनात्। निस्तेजसोऽभवन् दैत्या निर्वीर्य्याश्च महामते!। ततः श्रीरुत्थिता तस्मात् क्षीरोदाद्धृतपङ्कजा। विभ्राजमाना राजेन्द्र दिशः सर्वाः स्वतेजसा। ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता। दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता। देवपक्षं समा-साद्य स्थिता क्षणमरिन्दम!। हरिवक्षःस्थलं प्राप्ता तन्मः सा कमलालया। ततोऽमृतघटं पूर्णं गृहीत्वा पयसो-निधेः। धन्वन्तरिः समुत्तस्थौ"।

क्षीराब्धितनया स्त्री ६त०। लक्ष्म्यां १तस्यास्तज्जातत्वा-त्तथात्वम् २चन्द्रे पु० क्षीराब्धिजशब्दे दृश्यम्।

क्षीरावी स्त्री क्षीरमवति अव—अण् ङीप्। दुग्धिकायाम (दुधी) अमरः स्वार्थे क। तत्रार्थे। अस्याः पत्रच्छेदने दुग्धवर्णद्रवनिर्गमात्तथात्वम्। सा च "शकलतुल्य-पत्रा" सुभूतिः। [ त्रिका०

क्षीराह्व पु० क्षीरमाह्वयते स्पर्द्धते आ+ह्वे-क। सरलद्रुमे

क्षीरिका स्त्री क्षीरं तत्तुल्यस्वादोऽस्त्यस्य ठन्। १राजादने २पिण्डखर्ज्जूरे अमरः। "क्षीरिकायाः फलं पक्वं गुरु विष्टम्भि शीतलम्" राजनि०। "क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु। तृष्णामूर्च्छामदभ्रान्तिक्षयदो-षत्रयास्रजित्" भावप्र०। ३परमान्ने भावप्र० कृतान्नशब्दे २१८०पृ० दृश्यम्

क्षीरिद्रुमाद्य न० "क्षीरिद्रुमाद्योत्थरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः। घृतोपचारं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम्" चक्रदत्तोक्ते घृतभेदे

क्षीरिन् पु० क्षीरं तत्तुल्यनिर्यासोऽस्त्यस्य इनि। क्षीरतुल्य-निर्यासयुक्ते १वृक्षभेदे स च भावप्र० उक्तो यथा "न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्। केचित्तु पारीषस्थाने शिरीषं वेतसं परे" वदन्तीति शेषः। "क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः। रूक्षाः कषाया मेदोघ्ना विसर्पशयनापहाः। शोथपित्तकफास्रघ्ना भग्नसन्धानकाः। तत्पल्लवं हिमं ग्राहि व्रणशोथ-विसर्पजित्। तेषां पत्रं हिमं ग्राहि कफवातास्रजित्।



विष्टम्भाध्मानजित् तिक्तं कषायं मधुरं समम्" तद्गुणाः। २हिमजायां तिक्तदुग्धायां पीतदुग्धायां क्षीरिकायां स्त्री ङीप् जटा० "क्षीरिणी तिक्तशीता च रेचनी शोकताप-नुत्। कृमिदोषकफघ्नी च पित्तज्वरहरी परा" राज-नि०। ३वराहक्रान्तायां शब्दचि० ४कुटुम्बिन्यां ५काक-र्य्यां ६दुग्धिकायां च राजनि० दुग्धिकायां पुंस्त्री शब्दच० ७क्षुद्रीवृक्षे ८अर्कवृक्षे ९राजादन्याम् १०दुग्धपाषाणे ११प्लक्षे १२सोमलतायां १३स्थालीवृक्षे च पु० राजनि०

क्षीरी स्त्री० क्षीर+अस्त्यर्थे अच् गौरा०ङीष्। (शिरखोला) ख्याते वृक्षभेदे शब्दर०।

क्षीरीश पु० क्षीरिणां वृक्षाणामीश प्रधानत्वात्। नरपर्णे कुक्कुटे मूलकाकारमूले स्वसगन्धे वृक्षभेदे रत्नमा०।

क्षीरेयी स्त्री० क्षीरेण ई शोभां याति या-क गौ० ङीष्, क्षीर+षा० भवार्थे ढञ् वा ङीप्। परमान्ने हला०

क्षीरोद पु० क्षीरमिव स्वादु उदकं यस्य उदादेशः। दुग्धस-मुद्रे "ततः श्रीरुत्थिता तस्मात् क्षीरोदात् धृतपङ्कजा" हरिवंश०। क्षीरोदमन्थनकथा यथा "मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्। दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम्। अहञ्च तत्र साहाय्यं करिष्यामि दिवौकसः!। भविष्यत्यमृतं तत्र तत्पानाद्बलवत्तराः। भविष्यथ सुरा देवा अमृतस्य प्रभा-वतः। यूयं सर्वे महावीर्या भुजिष्ठा रणविक्रमाः। इन्द्राद्यास्तु महोत्साहाः स्थानलब्धिसहामरीन्। ततो हि दानवान् जेतुं समर्था नात्र संशयः। इत्युक्ता देवदेवेन देवाः सर्वे जगत्पतिम्। प्रणम्यागत्य निलयं सन्धिं कृत्वाथ दानवैः। क्षीराब्धिमथने सर्वे चक्रु-रुद्योगमुत्तमम्। क्षिना चोद्धृतो राजन्! मन्दराख्यो महागिरिः। क्षीराब्धौ क्षेपितश्चैव तेनैकेन नृपोत्तम!। सर्वौषधिश्च प्रक्षिप्ता देवदैत्यैः पयोदधौ। वासुकिश्च ततस्तत्र राजन्। नारायणाज्ञया। सर्वदेवहितार्थाय वि-ष्णुश्च स्वयमागतः। ततो विष्णुसमादेशात्तत्र सर्वे सुरा-सुराः। समेत्य मित्रभावेन क्षीराब्धेस्तटमाश्रिताः। मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम्। ततो मथितुमारब्धा नृपते! तरसाऽमृतम्। विष्णुना मुखभागे तु वासुकेर्दानवाः कृताः। देवाश्च पुच्छभागे तु मन्थ-नार्थं नियोजिताः। एवन्तु मथ्यमानस्तु मन्दराख्यः प्र-विष्टो वै। आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः। सर्वलोकहितार्थाय कूर्म्मरूपमधारयत्। आत्मानं च

नाचामेत् दक्षिणं श्रवणं स्पृशेत्"। अन्यक्षुते जीवशब्दः प्रयोज्यः यथा मदनपारिजातधृतम् "जीवेति क्षुवतो ब्रूयात् जीवेत्युक्ते तथा वदेत्" "क्षुतोत्पतनजृम्भासु जीवेत्याशीर्निश्चिनि"। गर्गोरपि च कस्यचिद्धान्यथा प्रश्नका भवेत्"ति०त०। "दीर्घायुष्क त् क्षुतं दीर्घं युगपद्धि त्रिपिपिष्टतम्" काशीख०स्त्रीलक्षणे। वक्षयुतस्य च क्षुतकरण निषिद्धं यथा विष्णुध०"नाखुष्टस्तस्य कुर्याद्वास जृम्भा तथा क्षुतम्"। "स्वनित प्रतिक्षुतमिवोपग्राम्ये" माघ' ताजकोक्त्यायाम् श्चरिहष्टौ चरिष्यद्धे २५५पृ० विवृतिः "क्षुताच्छ्वा न शुभं तदापि"। "क्षुतहष्ट्रा रिपोर्भयम्" नीलक०।

क्षुतक पु० क्षुताय साधु कन्। राजिकायाम् राजनि०।

क्षुताभिजनन पु०क्षुतमभिजनयति अभि+जन-णिच्-ल्यु। (राइ) कृष्णसर्षपभेदे अमरटीकायां स्वामी

क्षुत्करी स्त्री क्षुत करोति कृ ट ङीप्। सर्पाक्षीःचे शब्दच०

क्षुद गतौ निघ० भ्वा० प० सक० सेट्। क्षोदति अक्षोदीत् चुक्षोद। "उत क्षोदन्ति रोदसी महित्वा" ७,८४,१, क्षोदन्त आपो रिणते वनानि" ऋ०५,५८,६।

क्षुद पेषणे रुधा० उभ० सक० अनिट् इरित्। क्षुणत्ति अक्षुदत् अक्षौत्सीत् अक्षुत्त। चुक्षोद चुक्षुदे। क्षुत्ता क्षुन्दन् क्षुन्दान। क्षोद। "क्षुण्णमिभविषयकं" क्षुन्नन्ति सर्पान् पाताले"भट्टिः। "ते न व्यामिषुरक्षौत्सु" "अक्षुद्यहाजिकञ्जरम्"भट्टिः "यतः खड्गमखड्गसाद्यसकलक्षोदक्षमे" नैषध०। उपसर्गपूर्वस्तु तत्तदर्थे युक्ते पेषणे। [ कविक०।

क्षुद् स्त्री क्षुद-सम्प० भावे क्विप्। चूर्णने "क्षुदिर चदि"

क्षुद्र त्रि०क्षुद-कर्त्तरि रक्। १कृपणे२अधमे३क्रूरे४अल्पे च मेदि०।५दरिद्रे हेम०।६तस्य भीयशाके पु० शब्दमा०। "क्षुद्रेऽपि नूनं शरणं प्रपन्ने" कुमा० "क्षुद्राः संत्रासमेते विजहत हरयः" शा०द०। "कामाता विषय क्षुद्र" मनु। तत अतिशायने इष्ठन् ईयसुन् रलोपे गुणः। क्षोदिष्ठ क्षोदीयस अतिशयकृपणादौ त्रि०। "इह्रस्वहाय कार्यानि क्षोदीयानपि गच्छति" माघ।

क्षुद्रकण्टकारी स्त्री नि० क०। अग्निदमनीवृक्षे राजनि०

क्षुद्रकण्टकी स्त्री क्षुद्रं कण्टकं यस्याः गौ०ङीप्। १हृहत्याम् भावप्र० क्षुद्रभण्टाकीति वा पाठः

क्षुद्रकण्टिका क्षुद्रं कण्टकं यस्याः टाप् अत इत्वम्। कण्टकारिकायाम् शब्दचि०।

क्षुद्रकमानस न० काश्मीरदेशस्थे कुङ्कुमोत्पत्तिस्थानभेदे। "काश्मीरेषु सरोनाम्ना दिव्यं क्षुद्रकमानसम्" सुश्रु०

क्षुद्रकम्बु पु० कर्म०। शम्बूके (शामुक)। हेमच०

क्षुद्रकारवेल्ली स्त्री कर्म०। यवकारवल्लीभेदे राजनि० स्त्री०। क्षुद्रकारलिकाप्यत्र राजनि०

क्षुद्रकुलिश पु० नि० कर्म०। वैक्रान्तमणौ राजनि०

क्षुद्रकुष्ठ न० कर्म० सुश्रुताद्युक्तेषु एककुष्ठादिषु एकादश कुष्ठभेदेषु कुष्ठशब्दे विवृतिः [ क्षुरे राजनि०

क्षुद्रक्षुर पु० क्षुद्रक्षुरस्येवाकारोऽस्त्यस्य अच्। क्षुद्रगो-

क्षुद्रगोक्षुरक क्षुद्रगोक्षुरमिव कायति कै—क (छोटगोखुरी) गोक्षुरभेदे राजनि० [ किङ्किणयाम् (घुङुर) अमर०

क्षुद्रघण्टिका स्त्री० घण्टा+अल्पार्थे कन् घण्टिका कर्म०।

क्षुद्रघोली स्त्री नि० कर्म०। १चिरिल्लिकाख्ये राजनि०

क्षुद्रचञ्चु पु० क्षुद्र चञ्चुरिवाकारोऽस्य। क्षुपभेदे राजनि०

क्षुद्रचन्दन पु० नित्य कर्म०। रक्तचन्दने राजनि०

क्षुद्रचिर्भटी स्त्री नि० कर्म०। गोपालकर्कट्यां राजनि०

क्षुद्रचूड पुंस्त्री क्षुद्रा चूडा यस्य (गुरसालिक) खगभेदे शब्दच०

क्षुद्रजन्तु पु० कर्म०। 'क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव वा। शतं वा प्रसृतौ येषा केचिदान कुलादपि' इत्युक्ते स्वल्पे १जन्तौ। २शतपद्यां शब्दमाला

क्षुद्रजम्बू स्त्री कर्म०। भूमिजम्ब्वाम् शब्दचि०।

क्षुद्रजातीफल पु० कर्म०। अमलके राजनि०

क्षुद्रजीरक न० कर्म०। कणजीरके, सुगन्धे शब्दच०

क्षुद्रजीवा स्त्री कर्म०। जीवन्तीवृक्षे राजनि०

क्षुद्रतुलसी स्त्री नि० कर्म०। बर्बरीभेदे राजनि०

क्षुद्रदंशिका स्त्री नि०कर्म०। (छोटडाँश) दंशभेदे जटा०।

क्षुद्रदुरालभा स्त्री नि०कर्म०। स्वल्पदुरालभाभेदे राजनि०

क्षुद्रदुस्पर्शा स्त्री नि० कर्म०। अग्निदमनीवृक्षे राजनि०

क्षुद्रधात्री स्त्री नित्य कर्म०। कर्कटवृक्षे राजनि०।

क्षुद्रधान्य न० कर्म०। तृणधान्ये कङ्गुप्रभृतौ भावप्र० "क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम्। क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम्। वातकृत् बद्धविट्कञ्च पित्तरक्तकफापहम्" तद्गुणा उक्ताः।

क्षुद्रनासिक त्रि०क्षुद्रा नासिकाऽस्य। स्वल्पनासिके (बाँदा)

क्षुद्रपत्रा स्त्री क्षुद्रं पत्रं यस्याः टाप्। चाङ्गेर्याम् (तुकोपालङ्ग)। जटा०। २स्वल्पपत्रान्विते त्रि०। गौरा० ङीप्। १वचायां स्त्री राजनि०।

**क्षुद्रपनस** पुं० नि० कर्म्म० । लकुचे (माँदार) राजनि० ।

**क्षुद्रपर्ण** पुं० क्षुद्रं पर्णमस्य । १अर्जके वर्वरीभेदे राजनि० । २स्वल्पपत्रयुक्ते त्रि० । [ क्षुपभेदे राजनि० ।

**क्षुद्रपाषाणभेदा** स्त्री नि० कर्म्म० । गिरिभवे कन्दरोत्थे

**क्षुद्रपिप्पली** स्त्री नित्य० कर्म्म० । वनपिप्पल्याम् राजनि०

**क्षुद्रपृषती** स्त्री नित्य० कर्म्म० । स्वल्पविचित्रबिन्दुयुक्तायां पृषत्यां मृगीभेदे "पृषती क्षुद्रपृषती स्थूलपृषती मैत्रावरुण्य" यजु० २४,२, अत्रत्यवेददीपे उक्तार्थकता दृश्या

**क्षुद्रपोतिका** स्त्री नि० कर्म्म० । मूलपोतिकायां राजनि० ।

**क्षुद्रफल(क)** क्षुद्रं फलमस्य वा कप् । १जीवनवृक्षे शब्दच० । २भूमिजम्बुवृक्षे शब्दमा० । कप्भावे । ३इन्द्रवारुण्यां ४गोपालकर्कट्याम् ५अग्निदमन्यां ६कण्टकारिकायां च स्त्री राजनि० टाप् ।

**क्षुद्रभण्डाकी** स्त्री नि० कर्म्म० । बृहत्याम् राजनि० ।

**क्षुद्रमत्स्य** पुं० कर्म्म० । स्वल्पमत्स्ये (छोटमाछ) "क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः । लघुपाका रुचिकराः सर्वदा ते हिता मताः । अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः" भावप्र० तद्गुणा उक्ताः ।

**क्षुद्रमुस्ता** स्त्री नि० कर्म्म० । कसेरुक्षुपे राजनि० ।

**क्षुद्ररोग** पुं० कर्म्म० । सुश्रुतोक्ते चतुश्चत्वारिंशत्स्वल्परोगभेदे यथा "अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः । समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जालगर्द्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराऽर्बुदं पामा विचर्च्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्ते दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्म्मशकश्चर्म्मकीलस्तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति । स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा । कफवातोत्थिता ज्ञेया बालानामजगल्लिका१ । यवाकारा सुकठिना ग्रथिता मांससंश्रिता । पिडका श्लेष्मवाताभ्यां यवप्रख्येति२ सोच्यते । घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् । अन्धालजी३मल्पपूयां तां विद्यात् कफवातजाम् । विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् । विवृतामिति४ तां विद्यात्पित्तोत्थां परिमण्डलाम् । ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः । कफानिलाभ्यां पिडकां विद्यात्तां कच्छपी५मिति । पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि । ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते । तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः । व्याधिर्वल्मीक६ इत्येष कफपित्तानिलोद्भवः । पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धान्तु७ तां विद्याद्वातपित्तोत्थितां भिषक् । कर्णोपरि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् । शालूकवत्पनसिका८ तां विद्यात् श्लेष्मवातजाम् । हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् । पाषाणगर्द्दभ९ विद्याद्बलासपवनात्मकम् । विसर्पवत्सर्पति यो दाहज्वरकरस्तनुः । अपाकः श्वयथुः पित्तात्स ज्ञेयो जालगर्द्दभ१० । बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपात्सम्भूतां कक्षामिति११ विनिर्दिशेत् । अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः । क्वचित्सर्वत्र वा देहे स्मृता विस्फोटका१२ इति । कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः । सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् । तामग्निरोहिणीं१३ विद्यादसाध्यां सन्निपाततः । नखमांसमधिष्ठाय पित्तं वायुश्च वेदनाम् । करोति दाहपाकौ च तं व्याधिं चिप्प१४मादिशेत् । तदेव क्षतरोगाख्यं तथोपनखमित्यपि । अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसितः खरः । भवेत्तं कुनखं१५ विद्यात्कुलीनमिति संज्ञितम् । गम्भीरामल्पसंरम्भां सवर्णामुपरि स्थिताम् । कफात्तु प्रपाकान्तां विद्यादनुशयीं१६ भिषक् । विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु । रक्तां विदारिका१७ विद्यात् सर्वजां सर्वलक्षणाम् । प्राप्य मांसशिरास्नायुः श्लेष्मा मेदस्तथाऽनिलः । ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् । स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य ग्रथितां शर्करां जनयेत्पुनः । दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिराः । स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम्१८ । पामाविचर्च्चिके१९ २०कच्छ्वा रकसा२१ च प्रकीर्त्तिता । परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः । पादयोः कुरुते दारीं२२ सरुजां तलसंश्रिताम् । शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः । मेदोरक्तानुगैश्चैव दोषैर्वा जायते त्वचाम् । स कीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा । कोलमात्रः सरुक्स्रावो जायते कदरस्तु२३ सः । क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ । दुष्टकर्द्दमसंस्पर्शादलसं२४ तं विनिर्दिशेत् । रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् । प्रच्यावयति

रोमाणि तत्र श्लेष्मा सशोणितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं२५ खालित्यं रुज्येति च विभाव्यते। दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते। कफवातप्रकोपेण विद्याद्दारुणकन्तु२६ तम्। अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्यादरुंषिकाम्२७। क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तञ्च केशान् पचति पलितं२८ तेन जायते। दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः। गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः२९। शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः। जायन्ते पिडका यूनां ३०वक्त्रे या मुखदूषिकाः। कण्टकैराचितं वृत्तं कण्डुमत्पाण्डुमण्डलम्। पद्मिनीकण्टकप्रख्यैस्तदाख्यं३१ कफवातजम्। नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम्। सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं३२ विदुः। अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते। माषवत्कृष्णमुत्सन्नमनिलान्मषकं३३ दिशेत्। समुत्थाननिदानाभ्यां चर्मकीलं३४ प्रकीर्त्तितम्। कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान्३५। मण्डलं महदल्पं वा श्यामं वा यदि वा सितम्। सहजं नीरुजं गात्रे न्यच्छं३६ इत्यभिधीयते। क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। सहसा मुखमागम्य मण्डलं विसृजेत्ततः। नीरुजं तनुकं श्यावं मुखे व्यङ्गं३७ तमादिशेत्। मर्द्दनात्पीडनाच्चापि तथैवाप्यभिघाततः। मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः। तदा वातोपसृष्टन्तु चर्म प्रतिनिवर्त्तते। मणेरधस्तात्कोशस्तु ग्रन्थिरूपेण लम्बते। सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित्। मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम्३८। सकण्डूः कठिना चैव सैव श्लेष्मसमुत्थिता। अल्पीयसीं यदा हर्षाद्बालां गच्छेत्स्त्रियं नरः। हस्ताभिघातादथ वा चर्मण्युद्वर्त्तिते बलात्। मर्द्दनात्पीडनाद्वापि शुक्रवेगविघाततः। यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम्३९। वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम्। मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च। निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम्। मूत्रं प्रवर्त्तते जन्तोर्मणिश्च न विदीर्य्यते। निरुद्धप्रकशं४० विद्यादरुजा चावपाटिकाम्। वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः। निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च। मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषं तस्य गच्छति। सन्निरुद्धगुदं४१ व्याधिमेनं विद्यात्सुदुस्तरम्। शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्नस्यास्नाप्यमानस्य कण्डूरक्तकफोद्भवा। कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते। एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्४२। स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः। यदा प्रक्लिद्यते स्वेदात्स कण्डूं जनयेत्तदा। तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते। प्राहुर्वृषणकच्छूं४३ तां श्लेष्मरक्तप्रकोपजाम्। प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्।

**क्षुद्रल** त्रि० क्षुद्राः क्षुद्ररोगाः सन्त्यस्य सिध्मा० लच्। क्षुद्ररोगयुक्ते

**क्षुद्रवर्वरा** स्त्री नित्यकर्म०। वरटायां राजनि०

**क्षुद्रवल्ली** स्त्री नित्यकर्म०। मूलपोतिकायाम् राजनि०

**क्षुद्रवार्त्ताकिनी** स्त्री नि०कर्म०। श्वेतकण्टकार्य्यां राजनि०

**क्षुद्रवार्त्ताकी** स्त्री नि० कर्म०। वृहत्याम् अमर०

**क्षुद्रशङ्ख** पु० नित्य कर्म०। शङ्खनखे(जोङड़ा) अमरटीका

**क्षुद्रशर्करा** स्त्री नि०कर्म०। यावनालशर्करायाम् राजनि०

**क्षुद्रशार्दूल** पुंस्त्री नि० कर्म०। क्षुद्रव्याघ्रे (चिताबाग) राजनि० [वति त्रि०

**क्षुद्रशीर्ष** पु० क्षुद्रं शीर्षमस्य। १मयूरशिखावृक्षे, २स्वल्पशीर्ष-

**क्षुद्रशुक्ति** स्त्री नि० कर्म०। जलशुक्तिकायाम्। स्वार्थे क तत्रैवार्थे राजनि०

**क्षुद्रश्यामा** स्त्री नि० कर्म०। कटभीवृक्षे राजनि०

**क्षुद्रश्लेष्मातक** पु० नि० कर्म०। भूकर्बुदारवृक्षे राजनि०

**क्षुद्रश्वास** पु० कर्म०। श्वासरोगभेदे
"क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चधा भिद्यते स महाव्याधिः श्वास एको विशेषतः। प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा। आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च। किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते। निषण्णस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः" सुश्रु०
"रूक्षायासोद्भवः कोष्ठे क्षुद्रवातमुदीरयन्। क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः। हिनस्ति न च गात्राणि न च दुःखं यथेतरे। न च भोजनपानानां निरुणद्ध्युचितां गतिम्। नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम्। स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः" भावप्र०

**क्षुद्रश्वेता** स्त्री सुश्रुतोक्ते कर्कादिगणोक्ते ओषधिभेदे "श्वेतान्द्रपुष्पी क्षुद्रश्वेता महाश्वेतादि" सुश्रुतः

क्षुद्रसहा स्त्री सह-अच क्षुद्रस सहा इत॰। १सहदेव्याम् २मार्ज्जारगन्धायाञ्च राजनि॰

क्षुद्रसुवर्ण न॰ नि॰ कर्म॰। पित्तले राजनि॰

क्षुद्रहिङ्गुली स्त्री कर्म॰। १कण्टकार्य्याम्। स्वार्थे क अणो ह्रस्वे टाप्। अत्रैवार्थे शब्दच॰।

क्षुद्रा स्त्री क्षुद-रक्। १वेश्यायाम्, "क्षुद्राधिष्ठितभवना" काद॰ २कण्टकार्य्याम्, ३सरघायाम्, अमर ४मक्षिकामात्रे, ५चाङ्गेर्य्याम्, ६हिंस्रायाम्, हेमच॰ ७नवेधुकाया (गड-गड़े धान) रत्नमा॰ ८वादरतायाम्, शब्दर॰ "क्षुद्राभि-रक्षुद्रतराभिराकुलम्" माघ॰ "क्षुद्राभि सरघाभि" मल्लि॰ ९व्यङ्गायाञ्च। क्षुद्राभि निर्वृत्तम् अण्। क्षौद्र मधुनि "स क्षौद्रपटलैरिव" रघु [कायाम् राजनि॰

क्षुद्राग्निमन्थ पु॰ कर्म॰ (छोटगणियारी) स्वल्पगणिकारि-

क्षुद्राञ्जन न॰ सुश्रुतोक्ते अञ्जनभेदे "गोमूत्रपित्तमदिरा शकृद्धा-त्रीरसे पचेत्। क्षुद्राञ्जनं रसे चाप्यतयाजत् स्त्रीफलेऽपि वा। गोमूत्राद्यावर्यवमवपिप्पलीपौष्करकटफल सैन्धवो-पहितं युक्तप्रा सिद्धित वेणुगर्भरे। मेदो यकद्वत्तथाजं पिप्पल्यः सैन्धव मधु। रसमामलकस्यापि पक्वं सम्यङ्नि-धापयेत् कोषे खदिरनिर्मार्णे तद्वत् क्षुद्राञ्जन हितम्"।

क्षुद्राण्डमत्स्यसंघात पु॰ क्षुद्राणामण्डमत्स्यानामगणा भिनवजातानां मत्स्यानां सघात। (पोनार झांक) पोनाधाने अमर॰

क्षुद्रादिकषाय पु॰ चक्रदत्तोक्ते कषायभेदे "क्षुद्रामृता नागरपुष्कराह्वयैः कृत कषाय कफमारुतोद्भवे। श्वा-सकासारुचिपार्श्वरुग्भवे ज्वरे त्रिदोषप्रभवे च शस्यते"

क्षुद्रापामार्ग पु॰ नि॰ कर्म॰। रक्तापामार्गे राजनि॰

क्षुद्रामलसञ्ज पु॰ क्षुद्रामलकस्य संज्ञेव संज्ञा यस्य। कर्कटवृक्षे राजनि॰

क्षुद्राम्र पु॰ नि॰ कर्म॰। कोषाम्रे राजनि॰

क्षुद्राम्रपनस पु॰ नि॰ कर्म॰। नकुच त्रिका॰

क्षुद्राम्ला स्त्री अम्ला अमरसा कर्म॰। १चाङ्गेर्य्याम् हारा॰ (चुकोपालङ्ग) स्वार्थे क। तत्रैवार्थे। २यवासङ्कु-ल्याम् राजनि॰

क्षुद्रिका स्त्री क्षुद्रैव क। दंशे (डाँश) राजनि॰

क्षुद्रीय त्रि॰ क्षुद्र+उत्करा॰ चतुरर्थ्यां छ। क्षुद्रनिर्वृत्तादौ

क्षुद्रेङ्गुदी स्त्री नित्यकर्म॰। यवासे राजनि॰

क्षुद्रैर्वारु पु॰ कर्म॰। गोपालकर्कट्याम् राजनि॰

क्षुद्रोदुम्बरिका स्त्री कर्म॰। काकोदुम्बरिकायाम् राजनि॰

क्षुद्रोपोदिका स्त्री नि॰ कर्म॰। मूलपोतिकायाम् राजनि॰

क्षुद्रोलूक पु स्त्री कर्म॰। उलूके राजनि॰

क्षुध बुभुक्षायां दिवा॰ पर॰ सक॰ अनिट् लृदित। क्षुध्यति अक्षुधत्। चुक्षोध क्षुत्। क्षुधा क्षुधितः। क्षुधित्वा। "क्षुध्यन्तोऽयय आसतिंदा ऋ॰ १,१०४,७, मा क्षुधन्मा-क्षृषत्" अथ॰ २,२९,४, क्षुध्यन्तोऽग्नयस्तत् व्याला"। "क्षुधित्वा परिभिर्वनम्" भट्टि। क्षुधाजाताञ्च तारका॰ इतच्। क्षुधित सञ्जातक्षुधे त्रि॰

क्षुध् स्त्री क्षुध-भावे सप॰ क्विप्। १बुभुक्षायाम्। कर्म्मणि क्विप्। २अन्ने निघ॰ पाठान्तरम्। "यस्य राज्ञस्तु विषये श्रोत्रिय सीदति क्षुधा" मनु॰ हलन्तत्वात् वा टाप्। क्षुधाप्यत्र स्त्री क्षुधार्त्तः। "या देवी सर्वभूतेषु क्षुधा-रूपेण संस्थिता" देवीमा॰। क्षुधा च प्राणिनां स्वाभा-विकदुःखहेतुर्यथोक्त सुश्रुते "स्वाभाविका क्षुत्-पिपासाजरामृत्युनिद्रा प्रभृतय"। इयञ्च प्राणधर्म्मः यथाह शा॰ति॰ "बुभुक्षा च पिपासा च प्राणस्य,मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः"। क्षुधा कार्य्याणि यथा

"आधयो निर्जिताः सर्वे क्षुधया अपचत्तम्!। कुरुक्षेत्री सकटी कामी तथैवालङ्कृतो नर। क्षुधार्त्तो न विरा-जेत प्रेतवद्भूषितो भवाम्। क्षीरान्नं विविधान् भोगान् वस्त्रालङ्कारभरणानि च। न चेच्छति नरः किञ्चित् क्षुधया कलुषीकृत। यथा भूमिगतं तोयं रविरश्मिभिः शुष्यति। शरीरस्थस्तथा धातुः शुष्यते जाठराग्निना। न शृणोति न जानाति चक्षुषा न च पश्यति। दह्यते वेपते मूढः शुष्यते च क्षुधार्दित। मूकत्वं बधिरत्वञ्च जडान्धत्वन्तु पङ्गुताम्। रौद्रं मर्य्यादहीनत्वं क्षुधा सर्वं प्रयच्छति। भगिनीं जननीं पुत्र भार्य्यां दुहितरं तथा। भ्रातर स्वजन वापि क्षुधाविष्टो न विन्दति"।

क्षुधाकुशल पु॰ ७त॰। विल्वान्तरवृक्षे राजनि॰

क्षुधाभिजनन पु॰ क्षुधामभिजनयति अभि+जन+णिच् ल्यु। १राजिकायां अमर। २क्षुधाजननमात्रे त्रि॰

क्षुधालु त्रि॰ क्षुध-वा॰ आलुच्। क्षुधायुक्ते

क्षुधावत् त्रि॰ क्षुधा-अस्त्यस्य क्षुधा वाच्यतयाऽस्त्यस्या वा मतु-प् मस्य व। १क्षुधायुक्ते स्त्रियां ङीप्। भैषज्यरत्नाव-ल्युक्ते २गुटिकाभेदे स्त्री "रसगन्धकतास्रांश्च त्रुटी त्रिफला यथा। यमानी शतपुष्पा च चविका जीरकद्व-यम्। प्रत्येक पलमेकान्तु मण्डूरस्य चतुर्गुणा। खादेत

पश्चिमश्चेन्द्रकेशराजसुदर्शनाः। दण्डोत्पला विषघ्नी जामाहरन्तचन्दनम्। भल्लातापामार्गकुमुका मण्डूकस्य पलार्द्धकम्। आर्द्रकस्य रसेनाथ गुडिका संप्रकल्पयेत्। बदरास्थिसमाश्चैता भक्षयित्वा पिबेत्तु। वारि भक्तं च तस्यैव प्रातरुत्थाय मानवः। वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी। अग्निञ्च कुरुते दीप्तं भस्मकञ्च नियच्छति। अम्लपित्तञ्च शूलञ्च परिणामकृतञ्च यत्। तत् सर्वं शमयत्याशु भास्करस्तिमिरं यथा। मसूरं वर्जयेदत्र विशेषात् क्षीरशर्करे"।

**क्षुधासागररस** पु० भैषज्यरत्नावल्युक्ते औषधभेदे "त्रिकटु त्रिफला चैव तथा लवणपञ्चकम्। क्षारत्रयं रसं गन्धं भागैकं पूर्ववद्भिषक्। गुञ्जामात्रां वटीं कुर्य्यात् प्रवङ्गै पञ्चभिः सह। क्षुधासागरनामायं रसः सूर्य्येण निर्म्मितः"। [अमरः। "अश्वस्य क्षुधितः पातम्"

**क्षुधित** त्रि० क्षुधा+जाताऽस्य तार० इतच्। क्षुधायुक्ते

**क्षुधुन** पुंस्त्री क्षुध—उन किच्च। म्लेच्छजातौ उज्ज्वल०।

**क्षुप** मर्दे सौ० प० सक० सेट्। क्षोपति अक्षोपीत् चुक्षोप "स सद्यश्चुक्षुपत" भा० आ० १७१अ०

**क्षुप** पु० क्षुप—क क्षु—पक् वा। ह्रस्वशाखाशिफे वृक्षे अमरः। वासुदेवस्य सत्यभामायां गर्भजातपुत्रभेदे। "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः" हरिवं० १६अ०। इक्ष्वाकुपितरि ३राजभेदे च पु०। "आसीत् कृतयुगे तात! मनुर्दण्डधरः प्रभुः। तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः। प्रसन्धेरभवत् पुत्रः क्षुप इत्येव विश्रुतः। क्षुपस्य पुत्र इक्ष्वाकुः" भा०शान्ति०१२अ०। ४द्वारकापश्चिमस्थे ४पर्वतभेदे।

"बभौ रैवतकः शैलो रम्यसानुगुहाजिरः। पूर्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः। दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते। इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः" हरि० १५७अ०।

**क्षुपडोडमुष्टि** पु० डोडवति दृश—उत्क्षेपे अच् तादृशोमुष्टिरस्य पृषो० कर्म०। विषमुष्टिक्षुपे राजनि०

**क्षुब्ध** पुं० क्षुभ णि०कर्मणि क्तः। मन्थानदण्डे हेम०। "क्षुब्धेव मन्दरेणाश्च क्षोभिताम्भोधिवर्णना" माघ०। २क्षोभयुक्ते त्रि०। "पार्ष्णीमरिपदे कृत्वा योनिं विक्षेप ताडयेत्। बाहुभ्यां धारयं गाढं बन्धोऽयं क्षुब्धसंज्ञकः" रतिम०उक्ते ३रतिबन्धभेदे पु०

**क्षुभ** सञ्चलने भ्वा०आत्म०अक०सेट् इदित्। क्षोभते अक्षुभत् चुक्षुभे क्षोभम्। क्षोभः क्षोभणम् क्षोभी "तानसौ नापि-

चाक्षुभत्" नाक्षुभद्राजसोभ्रातुः" भट्टिः क्षुब्धः क्षुभितः। "क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः" भा० व० ८अ०। "क्षुभिताः सागराः सर्वे" रामा०आ० ६५स०। "चुक्षुभे द्विषतां मनः" रघुः "यदेतदादित्यस्य मध्ये क्षोभत इव" छा० उ०। क्षोभमाणः।

**क्षुभ** सञ्चलने वा दिवा० क्र्या० अक० सेट्। क्षुभ्यति क्षुभ्नाति अक्षोभीत्। क्षुभितः। "क्षुभ्यन्ति प्रसभमहो विनापि हेतोः" माघः। क्षुभ्नातीत्यत्र क्षुभ्ना० न णत्वम्। प्राद्युपसर्गपूर्व्वकस्तत्तद्धोत्यार्थयुक्ते क्षोभे

**क्षुभ** त्रि० क्षुभ—क। १क्षोभके २प्रवर्त्तके च "महरारुणद्वाताद्यांस्तांस्तान् यन्देऽशनिक्षुभान्" भा०व० ३अ० "अशनिक्षुभान् तत्प्रवर्त्तकान्" नीलक०। ३सूर्य्यपारिषदभेदे स्त्री। "क्षुभया सहिता मैत्री याश्चान्याभूतमातरः" तत्रैव "क्षुभा-निष्प्रहानुप्रकर्त्त्रौ देवता" नीलक०

**क्षुभित** त्रि० क्षुभ—क्त। १आलोडिते, २व्याकुले, ३भीते च हला०। "क्षुभितसैन्यपरागविपाण्डुरे" माघः "महाप्रलयमारुतक्षुभितपुष्करावर्त्तकेति वेणी०

**क्षुभ्नादि** पा० उक्ते निमित्ते सत्यपि णत्वनिवृत्तिनिमित्ते शब्दगणे स च गणः "क्षुभ्ना नृनमन नन्दिन् नन्दन नगर। एतान्युत्तरपदानि संज्ञायाम्प्रयोजयन्ति। हरिनन्दी हरिनन्दन गिरिनगरम्। नृतिर्यङि प्रयोजयति। नरीनृत्यते। नर्त्तन गहन नन्दन निवेश निवास अग्नि अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्त्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः। आचार्य्यादणत्वञ्च। आचार्य्यभोगीनः। आकृतिगणोऽयम् क्षुभ्नादिः। "अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य" इति भाष्यम्" न माभूदक्षमीत्यादयस्तस्यैव प्रपञ्चः" इति कैयटः। पाठान्तरम्" क्षुभ्ना तृप्नु नृनमन नर नगर नन्दन यङ्नृति गिरिनदी गृह,नमन निवेश निवास अग्नि अनूप आचार्य्यभोगीन चतुर्हायन इरिकादीनि वनोत्तरपदानि (संज्ञायाम्) इरिका तिमिर समीर कुबेर हरि कर्म्मार क्षुभ्नादिः"।

**क्षुमत्** त्रि० क्षु+अस्त्यर्थे मतुप्। १अन्नयुक्ते उपचारात् २अन्नवत्तुल्ये च। "आ तु इन्द्र! क्षुमन्तम्" ऋ० ८,८१,१,"क्षुमन्तं स्तुत्यम्" भा०

**क्षुमा** स्त्री क्षु—मक्। (मसिना) (तिसी) १अतस्याम् अमरः। "क्ष्मायो विधूनने क्ष्मायति मक् न कम्पयति पृषो०। क्षुमा २शत्रुकम्पके त्रि० "क्षुमासि पासये-

नृपाज्ञया चरेत् । यवनाहृतीर्थगमसिन्धुमज्जनं क्षुर-
माचरेन्न खलु गर्भिणीपतिः" । मु० चि०
"अथ केषाञ्चिन्निमित्तविशेषे क्षौरस्य विहितनियतौ मञ्जुभाषिणीछन्दसाह । क्रतुपाणीति अत्र पूर्व्वोक्तेष्वपि निषिद्धवारादौ एषु कर्म्मसु क्षुरकर्म क्षौरं सद्य कार्य्यमिति वाक्यार्थः क्रतौ यज्ञे विप्राज्ञया क्षौरम् । तथा पाणिपीडो विवाहो लक्षणया तत्र प्रागभाविनि गोदानकर्म्मणि केचित्तु विवाहे श्मश्रुकर्म्माख्यपरं क्षौरमित्याहुः अतएव शाखाविशेषेण विवाहे क्षौरमुक्तमित्यूचुः । तथा च श्रुतिः "मुण्डयितारं श्रविष्ठाय नावप्रमुदामित्यादि" । मृतौ मातापित्रोर्मरणे बन्धमोक्षणे कारागृहे बन्धस्य यदा मोचनं भवेत्तदा द्विजाज्ञया राजाज्ञया तदापीति बोध्यम् नृपो राजा तस्याज्ञया चौरादे क्षौरं कार्य्यमेव यदाह नारद "नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे । उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टमिति" । धर्म्मशास्त्रे "गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि । आधाने सोमपाने चाष्टसु क्षौरं विधीयते" इति । अथ यवेति गर्भिणी गर्भवती तस्याः पतिर्भर्त्ता यवनाह मृतकवहनं तीर्थयात्रा उपलक्षणत्वाद्विदेशगमनमपि । सिन्धुमज्जनम् समुद्रस्नानं, क्षुरं क्षुरकर्म एतानि कर्म्माणि न आचरेन्न कुर्य्यात् । यदाह वशिष्ठ "दहनमिर्माणमुदधिस्नान चौलं मृतस्य च । तीर्थयात्रां नखश्मश्रु न कुर्य्याद्गर्भिणीपतिः" । "सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् । विदेशगमनञ्चैव न कुर्य्याद्गर्भिणीपतिः" धर्म्मशास्त्रे तु विशेषतः "राजा योगी पुरन्ध्री च मातापित्रोस्तु जीवतोः । मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिः" अयञ्च क्षौरादिनिषेधो गुर्विणीपते सप्तमासादूर्द्ध्वं न प्राक्, यदुक्तं नारदीये "वपनं तीर्थयात्राञ्च वर्जयेद्गुर्विणीपतिः । श्राद्धञ्च सप्तमान्मासादूर्द्ध्वं नान्यत्र वेदवित्" । श्राद्ध श्राद्धभोजनम् । इदमुत्तरार्द्धं गर्भाधानप्रकरणे वक्तव्यमपि प्रसङ्गादत्रैवोक्त मन्यक्तेति" । पी० धा०
"नृपाणां हित क्षौरभे श्मश्रुकर्म दिने पञ्चमे पञ्चमेऽह्नोदये वा । षडग्निघ्नमैत्रोऽष्टक पञ्चपित्र्योऽब्दतोऽब्धग्र्यमा क्षौरकृन्मृत्युमेति" । मु० चि०
"अथ क्षौरे राज्ञां विशेषं सर्व्वथा वर्ज्यनक्षत्राणि च भुजङ्गप्रयातेनाह नृपाणां हितमिति क्षौरभे क्षौरनक्षत्रे विहिते सति पञ्चमे पञ्चमे एव दिने श्मश्रुकर्म्म-मुखशोभाकारि क्षुरकर्म नृपाणां राज्ञां हितं प्रशस्तं यदाह वशिष्ठ "महीभृता पञ्चमे पञ्चमेऽह्नि क्षौरं च कार्य्यं हितमृक्षभेषु" न तु पञ्चमे इति वीप्सोक्त्या नियम । प्रतीतेर्विहितनक्षत्राभावे च सति श्मश्रुकर्म कार्य्यमित्युक्तं च वशिष्ठेन "न लभ्यते चेत्तु तदुक्तधिष्ण्यं तस्योदये वा निखिलं विधेयमिति" उदयशब्देन मुहूर्त्त इति कजयो व्याकुर्वते तदाह गर्गः "क्षौरकर्म महीशानां पञ्चमे पञ्चमेऽहनि । कर्त्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्त्तके" इति तेषां क्षौरनक्षत्राणां ये स्वामिनस्तेषां मुहूर्त्ते इत्यर्थः । तांश्च मुहूर्त्तान् विवाहप्रकरणे वक्ष्यति । अत्र क्षौरपदं श्मश्रुकर्मपरम् । "राजा योगी पुरन्ध्री च मातापित्रोस्तु जीवतोः । मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिरिति" राज्ञो मुण्डननिषेधात् । अतएवोक्तं श्रीपतिना "श्मश्रुकर्म पञ्चमे च पञ्चमेऽह्नि च भूभृताम् । क्षौरभस्योदये वाऽपि स्याननिन्द्यतारका न चेत्" इति । निन्द्यतारका जन्मविपदादितारका । अन्ये त्वेवं व्याचक्षते अस्योदये वेति अस्य क्षौरभस्योदये लग्ने । यथा मेषलग्नं त्रिंशद्भागात्मकं तत्राद्याश्वयोदशभागा १२,२० सविंशतिलिप्ता यावता कालेन मेषलग्ने उदयं यान्ति तावदश्विनीनक्षत्रमुदयं यातीत्यर्थः । तदनन्तरं तावन्त एवांशा यावता कालेनोदयं यान्ति तावद्भरण्युदय इत्यनेन न्यायेन सर्वेषां नक्षत्राणामुदयाज्ञेया । इयं च व्याख्या वराहपद्यव्याख्यावसरे भट्टोत्पलेनाभ्यधायि । पीयूषधारकारास्त्वेवं व्याकुर्वते । यस्मिन्काले अश्विन्या उदयः क्षितिजसम्बन्धः सम्पद्यते तं समयमारभ्य यावद्भरण्या उदयः क्षितिजसम्बन्धस्तदन्तराले यावान्कालः सोऽश्विन्या उदय उच्यते । एवं सत्युदयद्वयान्तरालाद्गणितमार्गेण यावानिष्टकाल आगच्छेत्स एव तत्तन्नक्षत्रोदय इति निष्कृष्टार्थ इति । नक्षत्रस्योपलक्षणत्वाच्छुभवारादावपि सक्षौराद्या कार्यम् उक्तञ्च नारदेन "यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते । ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदेति" । क्षणवारः कालहोरा । एवं सति निषिद्धनक्षत्रवारेष्वपि प्रथमश्मश्रुकर्म कार्यमिति युक्तमुत्पश्याम । षडग्निरिति । अग्नि कृत्तिका क्षौराद्युक्त्या षड्वारं कृत्तिका यस्य । एवं त्रीणि मैत्राण्यनुराधा यस्य अष्टौ का रोहिण्यो यस्य । पञ्च पित्र्याणि मघा यस्य । अब्धयश्चत्वारोऽर्यमाण उत्तराफाल्गुन्यो यस्य । एवंतारश्च क्षौरकृत् अब्दतः वर्षानन्तरं मृत्युं

नागमेति भारेति यदाह वशिष्ठ "षष्ठाश्वक पितृपञ्चकश्च मङ्गलिष्ण्यचतुर्थमर्क्षं । त्रिमैत्रभ पद्मजसंनिभोऽपि चौरी नरोऽचिरान्निधनं गत स" इति । पद्मजो ब्रह्मा तद्विम्मन्तादयस्तदुपादान कैस्तिकन्यायसूचनार्थम् मनु रत्नमालायाञ्च "षट्कृत्तिक पञ्चमघस्त्रि मैत्रो मघाष्टकोष्टवतुरुत्तरश्च । चौरी ह वर्णं चतुराननोऽपि न प्राप्नोतीति मघुर मघाद" इत्येव सामान्यतस्त्रिसृणामप्युत्तराणां ग्रहणाद्विरोध इति चेत् मैव व्रतात्युत्तरापदेन प्रथमोपस्थितिकत्वाद्वसिष्ठवाक्ये न सकैकवाक्यतानुरोधाच्चोत्तराफाल्गुन्येव गृह्यते नाषाढभाद्रपदे । यत्र तु वचनान्तरविरोधो नास्ति पौष्णमारुतसचोत्तरान्वितैरित्यादौ तत्र सामान्यत सर्वासामुत्तराणां ग्रहणं भवति" पी० धा०

"प्राचीमुख सौम्यमुखोऽपि भूत्वा कुर्यान्नरः क्षौरमनुत्कटस्थ । उत्तरात्रितयशाक्रोहिणीमैन्द्रसार्पपितृभेषु चाग्निभे । श्मश्रुकर्म सकलं विवर्जयेत् प्रेतकार्यमपि बुद्धिमान्नरः" ज्यो० त०

क्षुरधान न० क्षुरो धीयतेऽत्र धा—आधारे—ल्युट् । (भांड) इति ख्याते नापितास्त्रस्थापने पात्रभेदे "क्षानस्थामेभ्यो यथा क्षुरः क्षुरधानेऽवहित" शत० ब्रा० १४,४,२,१६ [ पर्णयुक्ते २शरवणादौ त्रि० राजनि०

क्षुरपत्र पु० क्षुर इव पत्रमस्य । क्षुरधारे बाणे, क्षुरतुल्य-

क्षुरपत्रिका स्त्री० क्षुर इव पत्रं यस्याः कप् अतइत्त्वम् । पालङ्क्यशाके राजनि०

क्षुरपवि त्रि० क्षुरतुल्या पविर्धारास्य । तीक्ष्णाग्रभागे "ते ह स्म क्षुरपवी निमेयम्" शत०१,६,२,१८ "क्षुरपवी क्षुरधारे" भाष्यम् निरुक्ते ५.५ पविशब्दस्य पूतार्थकत्वमाह "पवीरवनेमिर्भवति यद्विपुनाति भूमिम् । "त मवत क्षुरपविना व्ययु"

क्ष(खु)रप्र पु० क्षुर (खुर) इव पृणाति छिनत्ति पृ—क । (क्षुरपी) इति ख्याते १घासच्छेदनास्त्रे, तत्तुल्याग्रफलके २शरभेदे च हेमच०

क्षुरभाण्ड न० ६त० । (भांड)ख्याते नापितास्त्रस्थापने पात्रभेदे "शीघ्रमानीयतां क्षुरभाण्ड क्षौरकर्मकरणाय गच्छामि" पञ्चत० [ हेमच०

क्षुरमर्द्दिन् पु० क्षुरं मर्द्दाति घर्षयति मृद-णिनि । नापिते

क्षुरमुण्डिन् पु० क्षुरेण मुण्डयति मुण्ड णिनि ३त० । नापिते । शब्दचि०

क्षुराङ्ग पु० क्षुर इवाङ्गमस्य । गोक्षुरे (गोखुरी) । राजनि०

क्षुरिका स्त्री० क्षुद्र क्षुर ङीप् संज्ञा कन् । १छुरिकायां (पालङ्) २शाकभेदे राजनि०

क्षुरिकापत्र पु० क्षुरिका छुरिकेव पत्रमस्य । शरे राजनि०

क्षुरिणी स्त्री० क्षुर + अस्त्यर्थे इनि ङीप् । १वराहक्रान्तायाम् २नापितभार्यायाञ्च शब्दच०

क्षुरिन् पु० क्षुर + इनि । १नापिते २पशौ च ।

क्षुरी स्त्री० स्वल्प क्षुर ङीप् । छुरिकायाम् हेम०

क्षु(खु)ल्ल त्रि० क्षुद(खुद्) क्विप् क्षुद्(खुद्) ता लाति ला क । १अल्पे, २नधी० ३कनिष्ठे च हेम० स्वार्थे क । तत्रार्थे

क्षुल्लक त्रि० क्षुधा लक्ष्यते लक्ष-आस्वादने घञर्थे क । १नीचे २अल्पे च भरत । ३पामरे, हेमच० ४क्षुद्रशङ्खे राजनि०

क्षुल्लतात पु० नित्यकर्म० । पितुःकनिष्ठभ्रातरि जटाध० । एवं क्षुल्लपितामहादयोऽपि पितामहादिकनिष्ठभ्रातरि

क्षेत्र न० क्षि-ष्ट्रन् । १शस्याद्युत्पत्तिस्थाने केदारे (क्षेत) अमरः शस्यभेदेन तस्य नामभेदा शब्दरत्ना० उक्ता यथा

"व्रीहिभवोचितं क्षेत्रं व्रैहेयं तत् समीरितम् । शाल्युद्भवोचित यत्तु शालेयमभिधीयते । यव्यं यवोचितं क्षेत्रं यवक्यं यवकोचितम् । षष्टिकोद्भवम यत्तु षष्टिक्यं तत् प्रकीर्त्तितम् । तिलोद्भवोचितं यत्तु तिल्यं तैलीनमित्यपि । एवं माष्यन्तु माषीणं कौद्रव्यं कौद्रवीणवत् । तथा भङ्ग्यञ्च भाङ्गीनमुम्यमौमीनमित्यपि । अथ मौद्गञ्च मौद्गीनमणव्यमाणवीनवत् । माषकोद्रवभङ्गोमासद्रागुप्रभवोचितम् । वीजाक्षतमप्रकृष्टमुत भीतिसमाहुये । सीत्यं कृष्टञ्च हल्यञ्च तृतीयाकृतमित्यपि । त्रिगुणाकृतमित्येवं त्रिपारकृष्टभूमिषु । शम्बाकृत द्विहल्यञ्च द्विसीत्यं द्विगुणाकृतम् । द्वितीयाकृतमप्यत्र द्विपारकृष्टभूमिषु । द्रोणाढकखार्य्यादिर्वापादौ द्रौणिकस्तथा । खारीढकिकखारीको उत्तमर्णादयस्त्रिषु । यादृश्या मास्त्रिकादिश्च पाकादौ द्रौणिकोऽपि च

२देहे ३अन्तःकरणे ४कलत्रे, ५सिद्धस्थाने च मेदि० । सिद्धस्थानानि काशीक्षेत्रादीनि तानि भारतादौ प्रसिद्धानि कतिचित् सङ्क्षिप्य प्रदर्श्यन्ते

तत्र वाराणसीक्षेत्रं यथा "आसन्न मुनयो क्षेत्रमिदं वाराणसी तु यत् । कथितं नातिदूरे च वर्त्तते नरसत्तमो" । कामरूपक्षेत्र यथा । "नाचिरात् कामदं पुण्यं क्षेत्रं पीठ मिगद्यते । चिरात्तु कामदो देवो नचिराद्यत्र प्रामद । तत् क्षेत्रमिति लोके यद्गद्यते

दृश्यते सर्वैरपि । कामरूपं महापीठं गुह्याद्गुह्यतमं परम्” कालिकापु० ५० अ० । गङ्गाक्षेत्रं स्कान्दे “तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते” । नारायणक्षेत्रं यथा “प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्र नारायणः स्वामी गङ्गागर्भान्तरे वरे । तत्र नारायणक्षेत्रे कुरुक्षेत्रे वरे पदे । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च” ब्रह्मवै० पु० प्र० ख० २७ अ० । भास्करक्षेत्रम् “गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृते गुरौ । आधाने सोमपाने च वपनं सप्तसु स्मृतम् । इतिस्मृतिसमुच्चयलिखितवचनम् । “भास्करक्षेत्रं प्रयाग” इति प्रायश्चित्ततत्त्वम् । गयाक्षेत्रं यथा “पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः” इति वायुपुराणम् । पुरुषोत्तमक्षेत्रम् । “मुनय ऊचुः । पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम्” । “जैमिनिरुवाच । एतत् क्षेत्रवरस्यास्य वपुर्भूत महात्मनः । स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्” उत्कलखण्डम् । विष्णुक्षेत्राणि यथा “श्रीभगवानुवाच । शृणुष्वावहितो ब्रह्मन् ! गुह्यनामानि सेऽधुना । क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः । कोकामुखे वराहञ्च मन्दरे मधुसूदनम् । अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् । माल्योदये तु वैकुण्ठं महेन्द्रे तु नृपात्मजम् । ऋषभे तु महाविष्णुं द्वारवत्यान्तु भूपतिम् । पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम् । वल्लीवने महायोगं चित्रकूटे नराधिपम् । नैमिषे पीतवासञ्च गवां निष्क्रमणे हरिम् । शालग्रामे तपोवासम् अचिन्त्यं गन्धमादने । कुब्जागारे हृषीकेशं गङ्गाद्वारे गदाधरम् । गरुडध्वजं तोयके च गोविन्दं नामसाह्वये । वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् । केदारे माधवं विद्यात् वाराणस्यान्तु केशवम् । पुष्करे पुष्कराक्षन्तु दृष्टद्वत्यां जयध्वजम् । तृणबिन्दुवने वीरमशोकं सिन्धुसागरे । कसेरटे महाबाहुममृतं तैजसे वने । विश्वासयूपे विश्वेशं नारसिंहं वने वने । लोहकूले रिपुहरं देवशाले त्रिविक्रमम् । पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः । विद्याधरं वितस्तायां वाराहे धरणीधरम् । देवदारुवने गुह्यं कावेर्यां नागशायिनम् । प्रयागे योगमूर्त्तिञ्च पयोष्ण्यां सुन्दरं विदुः । कुमारतीर्थे कौमारं लौहित्ये हयशीर्षकम् । त्रिविक्रमं उज्ज्यिन्यां लिङ्गस्फोटे चतुर्भुजम् । हरिहरं तु भद्रायां दृष्ट्वा पापात् प्रमुच्यते । विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् । लोकनाथमयोध्यायां कुण्डिने रुक्मिणीपतिम् । मथुरे वासुदेवञ्च चक्रतीर्थे सुदर्शनम् । आद्यं विष्णुपदे विद्यात् शूकरे शूकरम् विदुः । क्रुशेशं मानसे तीर्थे दण्डके श्यामलं विदुः । त्रिकूटे नागमोक्षञ्च मेरुपृष्ठे च भास्करम् । विरजं पुष्पभद्रायां बालं चामीकरे विदुः । यशस्करं विपाशायां माहिष्मत्यां हुताशनम् । क्षीराब्धौ पद्मनाभञ्च विमले तु सनातनम् । शिवनद्यां शिवकरं गयायाञ्च गदाधरम् । सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते । अष्टषष्टिस्तु नामानि कीर्त्तितानि मया तव । क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः । द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः । वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम्” नारसिं० पु० ६२ अ० । मेषादिद्वादशराशिषु । “राशिनामानि च क्षेत्रं भवनं स्थाननाम च । मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्” । यहाणां क्षेत्राणि ज्यो० त० “कुजशुक्रबुधेन्दर्कसौम्यशुक्रावनीभुवाम् । जीवार्किमानुजेज्यानां क्षेत्राणि स्युरजादयः” ज्योति० त० । “इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः । एतत् क्षेत्रं समासेन सविकारमुदाहृतम्” गीतोक्तेषु ७ पदार्थेषु क्षेत्राकारे दन्तीवालत्वादिप्रसिद्धे त्रिकोणचतुष्कोणादिके पदार्थे तादृशक्षेत्रभेदाश्च रेखाभेदसाध्या अतो रेखाभेदसत्ता निरूप्यते तत्राद्युक्षचरणे क्षेत्रतत्त्वदीपिकायामित्थमभ्यधायि यथा

१ यः पदार्थोऽन्यचयितुं शक्यः परिमाणस्थूलत्वदैर्घ्यविस्ताररहितः स विन्दुः । [(विन्दुसमुदायो रेखा)

२ यः पदार्थो दैर्घ्यो विस्तारस्थूलत्वाभ्यां रहितः सा रेखा

३ यः पदार्थो विस्तारदैर्घ्ययुक्तः स्थूलत्वरहितः स धरातलम्

४ यः पदार्थो विस्तारदैर्घ्यस्थौल्ययुक्तः सः स्थूलपदार्थः ।

५ रेखा च त्रिविधा सरला वक्रा मिश्रिता च ।

६ तत्र या रेखा एकादिग्गमनेनैव चिह्नद्वयान्तराले तिष्ठति, यद्वा ययोश्चिह्नयोरन्तराले कृताऽनेकरेखासु तिर्यगेनाल्पतमा सा सरला । यत्र रेखाशब्दस्तत्र सरलैव ग्राह्या ।

७ या रेखा वर्त्तनेन प्रतिचिह्नं दिगन्तरं गच्छति सा वक्रा । (उभयलक्षणाक्रान्ता मिश्रिता)

८ रेखा च समानान्तरा विषमान्तरा लम्बसम्पातरेखा च ।

९ ययोः रेखयोरन्तरं समानमेव वर्त्तनेन तयोर्याः

कदापि न भवितुमर्हति सा समानान्तरा रेखा भवति ।

१० ययोरन्तरं विषमम् एव यद्दिग्रुस्थान्तरं तद्दिशि वर्द्धने नोत्तरोत्तरमल्पान्तरं यावद्रेखायोगस्तदनन्तरमुत्तरोत्तरमल्पान्तरं विवर्द्धते योगश्च कदापि भवितुं न शक्नोति सा विषमान्तरा ।

११ एकरेखायामन्यरेखासंयोगादुत्पन्नौ कोणौ यदि समानौ भवतस्तदा ते रेखे मिथोलम्बरूपे भवतः ।

१२ या रेखा वृत्तपालिमिलिता सती पालिखण्डं न करोति सा स्पर्शरेखा भवति । यद्धत्त वृत्तसम्पातेन खण्डितं न भवति स वृत्तसम्पातः ।

१३ एकचिह्नाद्विःसृते द्वे रेखे यदि सम्मुखेतरभिन्नदिग्गते भवतस्तदा तच्छिद्रे कोणोभवति ।

१४ कोणस्त्रिविधः समकोणोऽल्पकोणोऽधिककोणश्च ।

१५ तत्र समानरेखायां लम्बयोगादुत्पन्नः कोणः समकोणः

१६ समातिरिक्तोविषमकोणोभवति ।

१७ समकोणान्न्यूनोऽल्पकोणोभवति ।

१८ समकोणादधिकोऽधिककोणो भवति ।

१९ धरातलं द्विविधं समं वर्त्तुलं च ।

२० तत्र यस्मिन्धरातले सरला रेखा सर्वतो भावेन संलग्ना भवति यद्वा यत्र कुत्रापि चिह्नद्वये लग्ना सरला रेखा सर्वत्र स्पृशति तद्धरातलं समं ज्ञेयम् । समातिरिक्तं विषममिति ।

२१ सरलरेखाभिः कुटिलरेखाभिर्वा निबद्धसीमं धरातलं समधरातलक्षेत्रं भवति । यत्र क्षेत्रमन्द्रस्तत्र समधरातलक्षेत्रं ज्ञेयम्

२२ सरलरेखानिबद्धसीमं धरातलक्षेत्रं भुजैः कोणैर्वाऽभिधेयं भवति किन्तु यावन्तोभुजास्तावन्त एव कोणा भवति । [ क्षेत्रंऽनेकविधं भवति ।

२३ त्रिभिर्भुजैर्निबद्धसीमं धरातलं त्रिभुजक्षेत्रं भुजैः को-

२४ यस्य त्रयोबाहवः समानास्तत्समत्रिभुजं भवति ।

२५ यस्य द्वौ बाहू समानौ तत्समद्विभुजं ज्ञेयम् ।

२६ यस्य त्रयोबाहवोविषमास्तद्विषमत्रिभुजं भवति ।

२७ यस्यैकः समकोणस्तत्समकोणत्रिभुजं ज्ञेयम् ।

२८ समातिरिक्तकोणं विषमत्रिभुजं भवति ।

२९ यस्यैकोऽधिककोणस्तदधिककोणत्रिभुजं भवति ।

३० यस्य त्रयोऽपि न्यूनकोणास्तन्न्यूनकोणत्रिभुजं ज्ञातव्यम् ।

३१ चतुर्भुजैर्निबद्धसीमं धरातलं चतुर्भुजक्षेत्रं भवति ।

३२ यस्य चतुर्भुजस्य परस्परं सम्मुखौ भुजौ समानान्तरौ भवतस्तत्समानान्तरभुजं चतुर्भुजक्षेत्रं भवति । तद्व्यवस्थाभिधानं चतुर्विधं तद्यथा ।

३३ यस्य चतुर्भुजस्य परस्परसम्मुखौ भुजौ समानौ एवमेकः समकोणश्च भवति तच्चतुर्भुजं समकोणायतं भवति ।

३४ यस्य चत्वारोभुजा मिथः समानाः कोणाश्च समास्तच्चतुर्भुजं समकोणसमचतुर्भुजं वर्गक्षेत्रं वा भवति ।

३५ यस्य परस्परं सम्मुखरेखाद्वयं समानं समानान्तरं च भवति । कोणाश्च विषमास्तच्चतुर्भुजं विषमकोणायतम्

३६ यस्य चत्वारोबाहवः समानाः समानान्तराश्च भवन्ति कोणाश्च विषमास्तद्विषमकोणसमचतुर्भुजं भवति ।

३७ यस्य च परस्परं सम्मुखौ भुजौ विषमान्तरौ तच्चतुर्भुजं विषमचतुर्भुजं भवति ।

३८ यस्य भुजद्वयं समानान्तरं तत्समानान्तरविषमचतुर्भुजम्

३९ चतुर्भुजस्यैकान्तरकोणसंलग्ना रेखा कर्णो भवति ॥

४० चतुर्भुजादधिकभुजैर्निबद्धं धरातलं सामान्यतोबहुभुजक्षेत्रं तद्बहुविधं भुजानुसारेण कोणानुसारेण वा तेषां नामानि

४१ यथा पञ्चभुजं षड्भुजं सप्तभुजमष्टभुजं नवभुजं दशभुजमेकादशभुजं द्वादशभुजमित्यादीनि ॥

४२ तत्र बहुभुजक्षेत्रं यदि समभुजं भवति तस्य कोणाः समानाभवन्ति तदा तत्क्षेत्रं समपञ्चभुजमित्याभिधानकं भवति तदितरत् विषमपञ्चभुजमित्यादि ।

४३ एवमेव समत्रिभुजे कोणाः समानाभवन्त्येवेति नियमः तत्त्रिभुजं समानकोणसमत्रिभुजं भवति । यस्य चत्वारो भुजाः समानाः सन्ति तत्समचतुर्भुजं क्षेत्रं भवति ।

४४ यस्य क्षेत्रस्य भुजाः समानाभवन्ति तत् क्षेत्रं समभुजं यस्य कोणाः समानास्तत्समानकोणं क्षेत्रं यस्य भुजाः कोणाश्च समानाभवन्ति तत्क्षेत्रं समकोणसमभुजं भवति

४५ कुटिलरेखया निबद्धसीमं धरातलं वृत्तक्षेत्रं भवति सा रेखा परिधिसंज्ञिका पालिसंज्ञिका वा भवति तस्या मध्यबिन्दुः केन्द्रसंज्ञकोभवति ॥

४६ केन्द्राद्विःसृता वृत्तपालिसंलग्ना रेखा व्यासार्द्धं भवति ।

४७ या रेखा उभयतः पालिसंलग्ना केन्द्रगा च भवति सा व्याससंज्ञिका भवति ॥

४८ परिधिखण्डश्चापसंज्ञकोभवति ॥

४९ चापोभयप्रान्तगा रेखा चापकर्णसंज्ञिका ज्यासंज्ञिका च

५० जीवाचापाभ्यां निबद्धधरातलकं क्षेत्रं धनुःक्षेत्रं चापक्षेत्रं वा भवति ॥

५१ यस्य चापस्य व्यासरेखा जीवा भवति तत् अर्द्धवृत्तम् ।

५२ केन्द्राद्भिःसृते द्वे रेखे चापोभयप्रान्तसंलग्ने यदि भवत स्तदा तत्क्षेत्रं वृत्तांशसंज्ञकं वृत्तखण्डकं च भवति ॥

५३ यस्य चापं परिधिपादमितं केन्द्राद्भिःसृताभ्यां रेखाभ्यां समकोणश्च भवति तद्वृत्तपादक्षेत्रं भवति ॥

५४ क्षेत्रयोर्द्धकोणादाधाररेखायां पतितमम्बमितमीरितम्

५५ समकोणत्रिभुजे समकोणसम्मुखभुजः कर्णोभवत्यन्यौ पादौ भवतः किं वैकः आधारोऽन्योन्यलम्बः ॥

५६ अत्र कोणोपलब्धिः कल्पितत्रिभिर्वर्णैर्भवति किन्तु सदैव कोणसंलग्नोवर्णोमध्यउच्चारणीयः ॥

५७ परिधेः षष्ट्यधिकशतत्रयांशो ऽंशसंज्ञकोभवति । अंशस्य षष्ट्यंशः कला । कलायाः षष्ट्यंशोविकला । विकलायाः षष्ट्यंशः प्रतिविकलेत्यादि ।

५८ कोणस्य परिमितिः कोणचिह्नकृतकेन्द्रात् कृते वृत्ते तत्कोणाकारकरेखयोरन्तरालचापगतांशतुल्या भवति सकोणस्तद्वृत्तस्य केन्द्रं भवति ॥

५९ तेषां चापानां केन्द्राद्दूरत्वं समानं भवति येषु केन्द्राद्भिःसृतोलम्बः समोभवति ॥

६० येषु दीर्घोलम्बः पतति तेषां दूरत्वं दीर्घं भवति ॥

६१ चापगतैकचिह्नाद्भिःसृते द्वे रेखे तदन्यचापोभयप्रान्तमिलिते तदुद्भूतः कोणश्चापान्तर्गतकोणोभवति ॥

६२ अनन्तरोक्तकोणादपरांशगतः कोणस्तत्कोणस्य चापोपरिस्थः कोणोभवति किन्तु द्वयोः कोणयोः स्वरूपं समानं तयोः प्रथमोऽन्तर्गतो द्वितीयउपरिस्थइत्येव भेद

६३ यत्कोणचिह्नं परिधिगतं भवति स परिधिकोणोभवति यस्य तच्चिह्नं केन्द्रगतं स्यात् स कोणः केन्द्रकोणोभवति ॥

६४ सरलरेखाकृतक्षेत्रस्य सर्वे कोणा यदि वृत्तमध्ये परिधिसंलग्नाभवन्ति तदा तत्क्षेत्रं वृत्तान्तर्गतं क्षेत्रोपरिगतवृत्तं वा भवति ॥

६५ यदि सरलरेखाकृतक्षेत्रस्य मध्ये सर्वभुजसंलग्नः परिधिस्तदा तद्वृत्तं क्षेत्रान्तर्गतं वृत्तोपरिगतक्षेत्रं वा

६६ सरलरेखाकृतक्षेत्रस्य सर्वभुजसंलग्नायदि तद्बहिर्स्थान्यक्षेत्रस्य सर्वे कोणाभवन्ति तदा तत्क्षेत्रं क्षेत्रान्तर्गतं क्षेत्रोपरिगतक्षेत्रं वा भवति ॥

६७ यद्रेखायाएकांशोवृत्तान्तर्गतोद्वितीयोबहिर्गतः स्यात् सा रेखा वृत्तखण्डिनी भवति ॥

६८ ययोर्द्वयोस्त्रिभुजयोर्येषां सरलरेखाकृतक्षेत्राणां वा प्रतिदिग्भुजे प्रतिदिग्भुजा समानाः सन्ति तानि परस्परं समभुजानि भवन्ति ययोर्येषां वा प्रतिदिक्कोणे प्रतिदिक्कोणाः समानास्तानि क्षेत्राणि परस्परं समानकोणानि भवन्ति ॥

६९ उभयोः क्षेत्रयोः परस्परं भुजाः कोणाश्च परस्परं भुजैः कोणैश्च समानाभवन्ति किं वैकस्य क्षेत्रस्य सर्वे भुजाः कोणाश्च द्वितीयक्षेत्रस्य सर्वैर्भुजैः कोणैश्च परस्परं समानाः यथा एकक्षेत्रोपरि द्वितीयक्षेत्रं स्थाप्यते तदा सर्वे भुजाः कोणाश्च सर्वभुजोपरि कोणोपरि च समानरूपेण पतिताः स्युः यथा द्वयोरेकरूपं स्यादीदृक्क्षेत्राण्येकरूपाणि भवन्ति ॥

७० येषां क्षेत्राणां प्रतिदिक्कोणाः समानाएवं प्रतिदिग्भुजा एकमित्यनुपातयुताभवन्ति तानि क्षेत्राणि सजातीयानि

७१ क्षेत्रस्याखिलभुजयोगः सीमास्थलमित्युच्यते ॥

एवं रेखानिष्पन्नक्षेत्राणां भुजकोणादिमानफलज्ञानार्थं लीलावत्युक्तः क्षेत्रव्यवहारोऽत्र दर्श्यते यथा "भुजकोटिकर्णानामन्यतमाभ्यामन्यतमानयनाय करणसूत्रं वृत्तद्वयम् । इष्टाद्बाहोर्यः स्यात्तत्स्पर्धिन्यां दिशीतरोबाहुः । त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्तिता तज्ज्ञैः । तत्कृत्योर्योगपदं कर्णो,दोः कर्णवर्गयोर्विवरात् । मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः । उदाहरणम् । कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः । कोटिं दोःकर्णतः, कोटिश्रुतिभ्यां च भुजं वद ।

न्यासः




कोटिः ।४। भुजः ।३। भुजवर्गः ९ । कोटिवर्गः । १६। एतयोर्योगात् ।२५।मूलम्५। कर्णोजातः ॥

॥अथ कर्णभुजाभ्यां कोट्यानयनम् ॥

न्यासः




कर्णः ।५। भुजः ।३।अनयोर्वर्गान्तरम् ।१६। एतन्मूलं ।४। कोटिः

॥अथ कोटिकर्णाभ्यां भुजानयनम् ॥




कोटि ।४। कर्ण ।५। अनयोर्वर्गान्तरम् ।९। एतन्मूलं । ३ । भुज

"प्रकारान्तरेण तदानयनाय करणसूत्रं सार्द्धवृत्तम् ।

राश्योरन्तरवर्गेण द्विघ्ने घाते युते तयो । वर्गयोगो भवेदेव तयोर्योगान्तराहति । वर्गान्तरं भवेदेव ज्ञेयं सर्वत्र धीमता ॥

कोटिचतुष्टयमिति पूर्वोक्तोदाहरणे ।




कोटि । ४ । भुज । ३ । अनयोर्घाते ।१२। द्विघ्न ।२४। अन्तरवर्गेण ।१। युते वर्गयोग ।२५। अस्य मूलं कर्ण ।५।

अथ कर्णभुजाभ्यां कोट्यानयनम् ।




कर्ण ।५। भुज ।३। अनयोर्योग ।८। पुनरेतयोरन्तरम् ।२। ऽऽहतोवर्गान्तरम् । १६ । अस्य मूलं कोटि । ४ ।

अथ कर्णकोटिभ्यां भुजानयनम् ।




कोटि ।४। कर्ण ।५। (उक्तरीत्या) जातोभुज । ३ ।

उदाहरणम् । साङ्घ्रित्रयमितोबाहुर्यत्र कोटिश्च तादृशी । तत्र कर्णप्रमाणं किं गणक । ब्रूहि मे द्रुतम् ॥




भुज १३/४ कोटि १३/४ अनयोर्वर्गयोर्योग १६९/८ अस्य मूलाभावात्करणी गतणाय कर्ण

अस्यासन्नमूलज्ञानार्थमुपाय वर्गेण महतेष्टेन हताच्छेदांशयोर्वधात् । पद गुणपदघ्नच्छिद्भक्तं निकट भवेत् ॥

अयं कर्णवर्ग १६९ दलस्य छेदांशघात १९५२ अयुतघ्नः १९५२०००० अस्यासन्नमूलम् ४६७७ इद गुणमूल १०० गुणितच्छेदेन ८०० भक्त लब्धमासन्नपद ४ भागा ४७७ ८०० अयं कर्ण । एव सर्वत्र ।

"सत्र्यस्त्रजात्ये करणसूत्र वृत्तद्वयम् । इष्टोभुजोऽस्माद्द्विगुणादिष्टाद्विस्तार्ण कार्यं द्विगुणेष्टेन युक्तम् । कोटि पृथक् सेष्टगुणा भुजोना कर्णोभवेत्त्र्यस्रमिदन्तु जात्यम् ॥ इष्टोभुजस्तत्कृतिरिष्टभक्ता । द्विः स्थापितेष्टोनयुतार्द्धि ता वा । तौ कोटिकर्णाविति कोटितोवा बाहुश्रुती वाऽ करणीगते स्त ।

उदाहरणम् । भुजे द्वादशके यौ यौ कोटिकर्णौ पमेकधा । प्रकाराभ्यां वद क्षिप्र तौ तावकरणीगतौ ।

न्यास




भुज । १२ । इष्टम् । २ । अनेन द्विगुणेन । ४ । गुणितोभुज ।४८। इष्ट । २ । कृत्या । ४ । एकोनया । ३ । भक्त लब्धा । १६ । कोटिः इ-ष्टाभिहतगुणा। ३२ । भुजो। १२ । ना जात. कर्ण । २० ।

त्रिकोणेष्टेन वा ।




कोटि । ९ । कर्ण ।१५।

(उक्तरीत्यावात)

पञ्चकेनेष्टेन वा




कोटि । ५ । कर्ण । १३ । (उक्तरीत्यायात )

अथ द्वितीयप्रकारेण ।

न्यासः




भुजः । १२ । अस्य कृतिः । १४४ । इष्टेन । २ । भक्ता लब्धम् । ७२ । इष्टेन । २ । ऊनम् । ७० । युतौ । ७४ । अर्द्धितौ जातौ कोटिकर्णौ । ३५ । ३७ ।

चतुष्टयेन वा ।




कोटिः । १६ । कर्णः । २० ।

(उक्तरीत्यायातः)

षट्केन वा ।




कोटिः । ९ । कर्णः । १५ ।

(उक्तरीत्यायातः)

अथेष्टकर्णात्कोटिभुजानयने करणसूत्रं वृत्तम् । इष्टेन निघ्नाद्द्विगुणाच्च कर्णादिष्टस्य कृत्यैकयुजा यदाप्तम् । कोटिर्भवेत् सा पृथगिष्टनिघ्नी तत्कर्णयोरन्तरमत्र बाहुः ॥

"उदाहरणम् । पञ्चाशीतिमिते कर्णे यौ याधकरणीगतौ । ज्ञातां कोटिभुजौ तौ तौ वद कोविद । सत्वरः

न्यासः




कर्णः । ८५ । अयं द्विगुणः । १७० । द्विकेनेष्टेन हतः । ३४० । इष्ट । २ । कृत्या । ४ । ऐकया । ५ । भक्तो जाता कोटिः । ६८ । इयमिष्टगुणा । १३६ । कर्णेन । ८५ । मिता जातो भुजः ॥ ५१ ॥

चतुष्केणेष्टेन वा ।




कोटिः । ४० । भुजः । ७५ ।

(उक्तरीत्यायातः)

प्रकारान्तरेण तत्करणसूत्रं वृत्तम् । इष्टवर्गेण सैकेन द्विघ्नः कर्णोऽथ वा हृतः । फलोनः श्रवणः कोटिः फलमिष्टगुणं भुजः ॥

पूर्वोदाहरणे । न्यासः




कर्णः । ८५ । अत्र द्विकेनेष्टेन जातौ क्रिया कोटिभुजौ । ५१ । ६८ ।

चतुष्केण वा ।




कोटिः । ७५ । भुजः । ४० । अत्र दोःकोट्योर्विभेद एव केवलं न स्वरूपभेदः ।

अथेष्टाभ्यां भुजकोटिकर्णानयने करणसूत्रं वृत्तम् । इष्टयोराहतिर्द्विघ्नी कोटिर्वर्गान्तरं भुजः । कृतियोगस्तयोरेवं कर्णश्चाकरणीगतः ॥

उदाहरणम् । यैर्वेद्यस्य भवेज्जात्य कोटिदोःश्रवणैः सखे । । तानिष्टैर्विदितानेतान् क्षिप्रं ब्रूहि विचक्षण ! ॥

न्यास




अत्रेष्टे । २ । १ । आभ्यां कोटि भुजकर्णाः । ४ । ३ । ५ ।

(उक्तरीत्यायाता )




अथवेष्टे । २ । ३ । आभ्यां कोटिभुज कर्णाः । १२ । ५ । १३ ।

(उक्तरीत्यायाता )




अथवेष्टे । २ । ४ । आभ्यां कोटिभुजकर्णाः । १६ । १२ । २० । एवमन्यथानेकधा ॥

कर्णकोटियुतौ भुजे च ज्ञाने पृथक्करणसूत्रं वृत्तम् । वंशाग्रमूलान्तरभूमिवर्गो वंशोद्धृतस्तेन पृथग्युतोनौ । वंशौ तदर्द्धे भवतः क्रमेण वंशस्य खण्डे श्रुतिकोटिरूपे । उदाहरणम् । यदि समभुवि वेणुर्द्वित्रिपाणिप्रमाणो गणक ! पवनवेगादेकदेशे स भग्नः । भुवि नृपमितहस्तेष्वङ्ग लग्नं तदग्रं कथय कतिषु मूलादेष भग्नः करेषु ॥




वंशाग्रमूलान्तरभूमिर्भुजः । १६ । वंश कोटिकर्णयुतिः । ३२ । जाते कर्णाद्यखण्डे । २० । १२ ।

राशिकर्णयोगे दृष्टे कोट्याञ्च ज्ञातायां पृथक्करणसूत्रं वृत्तम् । स्तम्भस्य वर्गोऽहिबिलान्तरेण भक्तः फलं व्यालबिलान्तरालात् । शोध्यं तदर्द्धप्रमिते करैः स्याद्बिलाग्रतो व्यालकलापियोगः ॥

उदाहरणम् । अस्ति स्तम्भतले बिलं तदुपरि क्रीडाशिखण्डी स्थितः स्तम्भे हस्तनवोच्छ्रिते त्रिगुणितस्तम्भप्रमाणान्तरे । दृष्ट्वाहिं बिलमाव्रजन्तमपतत्तिर्यक् स तस्योपरि क्षिप्रं ब्रूहि तयोर्बिलात्कतिमिते साम्येन गत्योर्युतिः ॥




स्तम्भः । ९ । अहिबिलान्तरम् । २७ । जाता बिलग्व्योमध्यहस्ताः । १२ ।

कोटिकर्णान्तरे भुजे च दृष्टे पृथक्करणसूत्रं वृत्तम् । भुजाद्वर्गितात्कोटिकर्णान्तराप्तं द्विधा कोटिकर्णान्तरेणोनयुक्तम् । तदर्द्धे क्रमात्कोटिकर्णौ भवेतामिदं धीमताऽवेद्य सर्वत्र योज्यम् । सखे ! पद्मतन्मज्जनस्थानमध्यं भुजः कोटिकर्णान्तरं पद्मदृश्यम् । नलः कोटिरेतन्मितं स्याद्यदम्भो वदैवं समानीय पानीयमानम् ॥

उदाहरणम् । चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे तोयादूर्द्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम् । मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे तस्मिन्मग्नं गणक ! कथय क्षिप्रमम्भःप्रमाणम् ॥ न्यास




कोटिकर्णान्तरम् १/२ भुजः । २ । लब्धं जलगाम्भीर्य्यम् १५/४ इयं कोटिः इयमेव कलिकामानयुता जातः कर्णः १७/४

कोट्येकदेशेन युते कर्णे भुजे च दृष्टे कोटिकर्णज्ञानाय करणसूत्रं वृत्तम् । द्विनिघ्नतालोच्छ्रितिसंयुतं यत्सरोऽन्तरं तेन विभाजितायाः । तालोच्छ्रितेस्तालसरोऽन्तरघ्न्या उड्डीनमानं खलु लभ्यते तत् ॥

उदाहरणम् । वृक्षाद्धस्तशतोच्छ्रयाच्छतयुगे वापीं कपिः कोऽप्यगादुत्तीर्य्याथ परो द्रुतं श्रुतिपथेनोड्डीय किञ्चिद्द्रुमात् । जातैवं समता तयोर्यदि गतावुड्डीनमानं कियद्विद्वन् ! चेत् सुपरिश्रमोऽस्ति गणिते क्षिप्रं तदाऽऽचक्ष्व मे ॥ ॥ न्यास




वृक्षवाप्यन्तरम् । २०० । वृक्षोच्छ्राय । १०० । लब्धमुड्डीनमानम् । ५० । कोटिः । १५० । कर्णः । २५० । भुजः । २०० ।

भुजकोट्योर्योगे कर्णे च ज्ञाते पृथक्करणसूत्रं वृत्तम् । कर्णस्य वर्गाद्द्विगुणा

द्विशोध्योदोःकोटियोगः स्वगुणोऽस्य मूलम् । योगो द्विधा मूलविहीनयुक्तः स्यातां तदर्द्धे भुजकोटिमाने ॥

उदाहरणम् । दशसप्ताधिकः कर्णस्त्र्यधिका विंशतिः सखे । भुजकोटियुतिर्यत्र तत्र ते मे पृथग्वद ॥

न्यासः




कर्णः । १७ । दोःकोटियोगः । २३ । जाते भुजकोटी । ८ । १५ ।

उदाहरणम् । दोःकोट्योरन्तरं शैलाः कर्णो यत्र त्रयोदश । भुजकोटी पृथक् तत्र वदाशु गणकोत्तम ॥

न्यासः




कर्णः । १३ । भुजकोट्यन्तरम् । ७ । लब्धे भुजकोटी । ५ । १२ ।

लम्बावबाधज्ञानाय करणसूत्रं वृत्तम् । अन्योऽन्यमूलाग्रगसूत्रयोगाद्वेण्वोर्वधे योगहृतेऽवलम्बः । वंशौ स्वयोगेन हृतावभीष्टभूघ्नौ च लम्बोभयतः कुखण्डे ॥

उदाहरणम् । पञ्चदशदशकरोच्छ्राययेण्वोरज्ञातमध्यभूमिकयोः । इतरेतरमूलाग्रगसूत्रयुतेर्लम्बमानमाचक्ष्व ॥

न्यासः




वंशौ । १५ । १० । जातो लम्बः । ६ । वंशान्तरभूः । ५ । अत्र जाते भूखण्डे । ३ । २ अथवा भूः । १० । खण्डे । ६ । ४ । वा भूः । १५ । खण्डे । ९ । ६ । वा भूः । २० । खण्डे । १२ । ८ । एवं सर्वत्र लम्बः स एव ।

यद्यत्र भूमितुल्ये भुजे यथाकोटिस्तदा भूखण्डेन किमिति त्रैराशिकेन सर्वत्र प्रतीतिः ।

अथ असन्नक्षेत्रे सूत्रम् । धृष्टोद्दिष्टमृजुभुजं क्षेत्रं यत्रैकबाहुतः स्वल्पा । तदितरभुजयुतिरथवा तुल्या ज्ञेयं तदक्षेत्रम् ॥

उदाहरणम् । चतुरस्रे त्रिषड्द्र्यर्काभुजास्त्र्यस्रे त्रिषड्नवा । उद्दिष्टा यत्र धृष्टेन तदक्षेत्रं विनिर्दिशेत् ॥

एते अनुपपन्ने क्षेत्रे ।






भुजप्रमाणाङ्गुलयष्टिकाभिः भुजस्थितेषु विन्यस्तानुपपत्तिर्दर्शनीयेति ।

आबाधादिज्ञानाय करणसूत्रमार्याद्वयम् । त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या । द्विस्था भूरूनयुता दलिताऽबाधे तयोः स्याताम् ॥

स्वाऽबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः । लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति ॥

उदाहरणम् । क्षेत्रे मही मनुमिता त्रिभुजे भुजौ तु यत्र त्रयोदशतिथिप्रमितौ च मित्र । तत्रावलम्बकमिति कथयावबाधे क्षिप्रं तथा च समकोष्ठमितिं फलाख्याम् ॥ न्यासः




भूः । १४ । भुजौ । १३ । १५ । लब्धे आबाधे । ५ । ९ । लम्बः । १२ । क्षेत्रफलम् । ८४ । ऋणाऽबाधोदाहरणम् । दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रमा मही । अबधे वद लम्बकं तथा गणितं गाणितिकाशु तत्र मे ॥




भुजौ । १० । १७ । भूमिः । ९ । अत्र त्रिभुजे भुजयोर्योगादिना लब्धम् । २१ । अनेन भूरूना न स्यात् अस्मादेव भूरपनीता शेषार्द्धमृणगताऽबाधा दिग्वैपरीत्येनेत्यर्थः । तथा जाते आबाधे । ६ । १५ । अतउभयत्रापि जातो लम्बः । ८ । फलम् । ३६ ।

चतुर्भुजत्रिभुजयोरस्पष्टफलानयने करणसूत्रं वृत्तम् । सर्वदोर्युतिदलं चतुःस्थितं बाहुभिर्विरहितं च तद्वधात् । मूलमस्फुटफलं चतुर्भुजे स्पष्टमेवमुदितं त्रिबाहुके ॥

उदाहरणम् । भूमिश्चतुर्दशमिता मुखमङ्कसङ्ख्या बाहू त्रयोदशदिवाकरसम्मितौ च । लम्बोऽपि यत्र रवि-

उभयत्र तुल्यैव । गणितञ्च । ६२५ ।

अथायतस्य ।




विस्तृति ।६।
दैर्घ्यम् । ८ ।
अस्य गणितम्
। ४८ ।

न्यासः

उदाहरणम् । क्षेत्रस्य यस्य वदनं मदनारितुल्यं वि
श्वम्भरा द्विगुणितेन मुखेन तुल्या । बाहू त्रयोदशनख-
प्रमितौ च लम्ब सूर्यांङ्गितश्च गणित वद तत्र किं
स्यात् ॥ न्यासः




वदनम् । ११ ।

विश्वम्भरा ।२२।

बाहू ।१३।२०।

लम्ब ।१२।

अत्र सर्वदोर्युतिदलमित्यादिना स्थूल फलम् ।२५०
वास्तवन्तु लम्बेन निघ्न कुमुखैक्यखण्डमिति जात फलम्।
।१६८। चतस्य खण्डत्रय त्वा फलानि पृथगानीय
ऐक्य कृत्वास्य फलोपपत्तिर्दर्शनीया खण्डत्रयदर्शनम् ।




प्रथमस्य भुजकोटिकर्णाः ।५।१२ ।१३। द्वितीयतस्य-
विस्तृति । ६ । दैर्घ्य । १२। तृतीयस्य भुजकोटिकर्णाः
।१६। १२ । २० ।

अत्र त्रिभुजयोर्भुजकोटिघातार्द्धं फलम् यथा प्रथमत्र्यस्रे
फलम् । ३० । द्वितीये । ७२ । तृतीये ।९६। एषामैक्यं
सर्वक्षेत्रफलम् । १९८ ।

अथान्यदुदाहरणम् । पञ्चाशदेकसहिता वदनं यदीयं
भू पञ्चसप्ततिमिता प्रमितोऽष्टषष्ट्या । सव्यो भुजो द्विगुण-
विंशतिसम्मितोऽन्यस्तस्मिन् फलं श्रवणलम्बमिती प्रचक्ष्व
न्यासः




वदनम् ।५१ । भूमिः । ७५

भुजौ । ६८

अत्र फलावलम्बश्रुतीनां ज्ञानार्थ सूत्रं वृत्तार्द्धम् ।
ज्ञातेऽथ लम्बे श्रवण श्रुतौ तु लम्ब फलं स्यान्नियतन्तु
तत्र । कर्णस्यानियतत्वाल्लम्बोऽप्यनियतस्त्वर्ध ।

लम्बज्ञानाय करणसूत्रं वृत्तार्द्धम् । चतुर्भुजान्त-
स्त्रिभुजेऽवलम्ब प्राग्वद्भुजौ कर्णभुजौ मही भू ॥
अत्र लम्बज्ञानार्थ सव्यभुजाग्राद्दक्षिणभुजमूलगामी दृष्ट
कर्ण सप्तसप्ततिमित कल्पितस्तेन चतुर्भुजान्तस्त्रिभुज
कल्पित तत्रासौ कर्णएकोभुज । ७७ । द्वितीयस्तु स-
व्यभुज । ६८ । भू सैव ।७५ । अत्र प्राग्वल्लब्धोलम्बः
३०८/५

लम्बे ज्ञाते कर्णज्ञानार्थ सूत्र वृत्तम् । यल्लम्बल-
म्बाश्रितबाहुवर्गविश्लेषमूल कथिताऽबधा सा ।
तदूनभूवर्गसमन्वितस्य यल्लम्बवर्गस्य पदं स कर्ण ॥
अत्र सव्यभुजाल्लम्ब किल कल्पित ३०८/५
तदूनभूवर्गसमन्वितेत्यादिना जात कर्ण । ७७ ।

द्वितीयज्ञानार्थ सूत्रं वृत्तद्वयम् । इष्टोऽत्र कर्ण प्र-
थमं प्रकल्प्यस्त्र्यस्रे तु कर्णोभयत स्थिते ये । कर्णं
तयो क्ष्मामितरौ च बाहू प्रकल्प्य लम्बावबधे च साध्ये
स्याताम् ययोरेककुभस्तयोर्यत्स्यादन्तरन्तत्कृतिसंयुतस्य । ब-

वृत्तान्तःषड्भुजे भुजमानानयनाय न्यासः




व्यासः २०००
खखाभ्राभ्रर-
सै ६०००० गुणि-
तः १२००००
खखखाभ्राग्नि
१२००००
उक्तं लब्धं षडस्रे
भुजमानम् १०००

वृत्तान्तःसप्तभुजमानानयनाय न्यासः




व्यासः २०००
नागेषुनयनार्थैः
५२०५५ गुणित
॥ १०४११०००
खखाभ्राग्नि
१२०००० भक्तं
लब्धं सप्तास्रे
भुजमानम् ८६७
११
२०

वृत्तान्तरष्टभुजे भुजमानानयनाय न्यासः




व्यासः २०००
द्विद्विनन्देषुसागरै
४५९२२ गुणित
॥९१८४४००० ॥ ख०
खखाभ्राग्नि १२०००
भक्तं लब्धमष्टास्रे
भुजमानम् ७६५
११
२०

वृत्तान्तर्नवभुजे भुजमानानयनाय न्यासः




व्यासः २०००
कुरामदस्रवेदै
॥४१०३१॥ गुणितः
८२०६२०००।
खखाभ्राग्नि
॥१२००००॥ भक्तो
लब्धं नवास्रे
भुजमानम् ६८३
११
२०

एवमिष्टव्यासादेभ्योऽन्यासामपि जीवाः सिध्यन्तीति तासु गोले ज्योत्पत्तौ वक्ष्ये।

अथ स्थूलजीवाज्ञानार्थं लघुक्रियया करणसूत्रं वृत्तम् चापोननिघ्नपरिधिः प्रथमाह्वयः स्यात्पञ्चाहतः परिधिवर्गचतुर्थभागः। आद्योनितेन खलु तेन भजेच्चतुर्घ्नव्यासाहतं प्रथममाप्तमिह ज्यका स्यात्।

उदाहरणम्। अष्टादशांशेन वृतेः समानमेकादिनिघ्नेन च यत्र चापम्। पृथक् पृथक्तत्र वदाशु जीवाः खार्कैर्मितं व्यासदलं यत्र। न्यासः




(अत्रचित्रे ४जीवामानं २२४ इत्ययुतम् १५४ इतियुतम्)

व्यासः ॥२४०॥ अत्र किलाङ्कलाघवाय षिंशते सार्कैशताशमितं सूक्ष्मपरिधि ७५४ अष्टादशभाग ४२ अत्रायं कृतानाय इयोरष्टादशांशयुतोऽष्ट-

गतचिह्निनी. धा। गते व्यासार्द्धजीवान्तरशेषघातात् तत्त्वाश्वि- लब्धा ग्रहितेऽपि सुता स्यात्" इत्युक्तरीत्या ताः कलाः क्रमेण तत्त्वाश्वि २२५ भक्ताः क्रमेण लब्धे १६ षट्- त्र्यंशे।१२ पञ्चांशे ८।१२१। शेषं षडंशे ८। सप्तांशे ६।१८२। शेषः अष्टांशे ६। नवांशे ५।७५ शेषं तथाच त्रिकोणे क्रमज्यासु पठिता षोडशी २८७७। अर्द्धजीवा। चतुरस्रे तत्रोक्ता द्वादशी २४११ पञ्चकोणे तत्रोक्ता नवमी १८१० गता एष्या दशमी २०८१ तयोरन्तरं १८२। शेषकला १२१ तयोर्घातं २४७०५ तत्त्वाश्वि २२५ भक्तो लब्धं ११० अनया सहिता गतजीवा।२०२०। इयं अर्द्धजीवा। षडस्रे तत्रोक्ता अष्टमी १७।८। सप्तास्रे षष्ठी जीवा १२१५ गता। एष्या १५२० तयो- रन्तरं २०५। शेषकलाः १८१ अनयोर्घातः २८५६५। तत्त्वाश्विभक्ते १७५ लब्धं अनया युक्ता गतजीवा १४८० इयं सप्तास्रे अर्द्धजीवा। अष्टास्रे, षष्ठी १२१५। नवास्रे पञ्चमी ११०५ गता एष्या १२१५ तयोरन्तरं ११० शेषकला ७५। तयोर्घातं ८२५० तत्त्वाश्विभक्तः लब्धः १० अनया सहिता गतजीवा ११०५। १११५ नवास्रे अर्द्धजीवा। एताद्विगुणा क्रमेण चक्रकला २१६०० तुल्य परिधिकवृत्ते समत्र्यस्रादीनां भुजाः यथा ५८५४।४८६२।४०४०।२४२८।२८८०।२६२०।२२१०। क्रमेण भुजाः। यदि चक्रकलापरिधिव्यासार्द्धे, ३४३८। क्रमेण एते भुजाः तदा फलेच्छयोः समानजातीयत्वकरणेन षड्गुणित- प्रकृतव्यासार्द्धे क इत्यनुपाते फलं द्विगुणितं त्रिज्या ना- विका षड्गुणिते १२००००व्यासे त्रिद्व्यङ्काग्निनभश्चन्द्रादयः क्रमेणाङ्काःसख्याः। यदि सावयवार्क १२०००० व्यासकृते एते १०३९२३ ८४८५३।७०५३४५।६००००।५२०५५।४५९२२। ४१०३१। क्रमेण भुजाः तदा इष्टव्यास २००० इत्ते के इत्यनुपातेन लब्धानि फलानि भुजमानानि स्युरिति

अत्र वृत्तान्तर्गतं त्रिकोणस्य समत्रिकोणत्वं तत्र सर्वेषां भुजानां तुल्यत्वात्। तथाहि परिधितृतीयांश- रूपाणां सर्वचापांशानां तुल्यतया तच्चापांशेषु जीवास्थानीयभुजानां तुल्यत्वौचित्यात्। अन्यान्यक्षेत्रभूपपत्तिर्लीलावतीटीकायां दर्शिता विस्तर- भयान्नोल्लिखिता।

६ स्थानमात्रे "धर्म्मक्षेत्रे कुरुक्षेत्रे" गीता। तत्र केदारे "यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते" ७ "क्षेत्रिणो बीजवन्तः परक्षेत्रे प्रवापिणः" मनुः कलत्रे "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः" याज्ञ० देहे "इदं शरीरं कौन्तेय। क्षेत्रमित्यभिधीयते" गीता। क्षेत्रज्ञ "क्षेत्रक्षेत्रज्ञयोरेवम्"। "गीता क्षेत्रं क्षेत्रज्ञोऽय- मात्मा" श्रुतिः तीर्थस्थाने "प्रविशन्तस्तु तत्क्षेत्रं सर्वे स्यु- र्विष्णुमूर्त्तयः"। स्वत्वकलत्र०। क्षेत्रं विद्यतेऽस्य इति क्षेत्रिन्, ठन् क्षेत्रिक क्षेत्रस्वामिनि त्रि० "फलं त्वनभिसन्धाय च तेषां बीजिनां तथा। कुर्व्वन्ति क्षेत्रिणोयद्यद्" प्रत्यक्षं क्षेत्रिकस्यार्थं" "क्षेत्रिकस्यैव तद्बीजम्" मनुः। एतस्मि- न्नुपपदे कर्म्मभूते कर्त्तरि क्रमः टः। क्षेत्रकर क्षेत्रकारिणि त्रि० स्त्रियां ङीप्। [राजनि०

**क्षेत्रकर्कटी** स्त्री क्षेत्रजाता कर्कटी। वालुक्यां कर्कटीभेदे

**क्षेत्रचिर्भिटा** स्त्री क्षेत्रजाता चिर्भिटा। पाण्डुफलायां चिर्भिटाभेदे राजनि०

**क्षेत्रज** पु० क्षेत्रे जायते जन ड ७त०। "यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य च। स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः" इति मनूक्ते पुत्रभेदे नियोगधर्म्मश्च मनुनोक्ता निषिद्धश्च वाग्दानोत्तरमेव पतिमरणे विहितः यथा

"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया। प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये। विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन। द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः। अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्म्मतस्तयोः। विधवायां नियोगार्थे निर्वृत्ते तु यथा- विधि। गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्। नि- युक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ। नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम्। नोद्वाहिकेषु म- न्त्रेषु नियोगः कीर्त्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः। अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशा- सति। स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां सङ्करं चक्रे कामोपहतचेतनः। ततः प्रभृति

यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः । यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ” ।

इत्यस्मृतिना “उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि” इत्यादिना तन्निषेधश्चोक्तः। मिताक्षरायामप्यत्र पक्षो द्व्यामुष्यायणपक्षे समर्थितः यथा

“अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः” या० । “अपुत्रो गुर्वनुज्ञातः” इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्य्यायां गुरुनियोगेनोत्पादितः पुत्र उभयोर्बीजिक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्मत इत्यस्यायमर्थः । यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं यतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न बीजिनः । स च नियमेन बीजिनो रिक्थहारी पिण्डदोऽपीति । यथोक्तं मनुना “क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत् प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चेति” । क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत् क्षेत्रं क्षेत्रस्वामिना बीजिने बीजवपनार्थं दीयते तस्मिन् क्षेत्रउत्पन्नस्यापत्यस्य बीजक्षेत्रिणौ भागिनौ दृष्टौ महर्षिभि । तथा । “फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसीति” मनुः । “फलं त्वनभिसन्धायेति अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव । यतो बीजाद्योनिर्बलीयसी गवाश्वादिषु तथादर्शनात् । अत्रापि नियोगो वाग्दत्ताविषयएव इतरस्य नियोगस्य मनुना निषिद्धत्वात् “देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये । विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन” इत्येव नियोगमुपन्यस्य मनुः स्वयमेव निषेधति । “नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् । नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः । अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति । स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां सङ्करं चक्रे कामोपहतचेतनः । ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं गर्हन्ते तं हि साधवः” इति । न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम् नियोक्तॄणां निन्दाश्रवणात् । स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात् संयमस्य प्रशस्तत्वाच्च । यथाह मनुरेव “कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु” इति । “आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः । अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते” इति पुत्रार्थमपि पुरुषान्तरगमनं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् । एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह “यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत्सकृदृतावृताविति” । यस्यै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यवगम्यते । तस्मिन् प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यङ्गवाङ्नियमादिना । शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रहस्यागर्भग्रहणादृतावृतावेकैकवारं गच्छेत् । अयञ्च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्य्यात्वमापादयत्यतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य संविदा तूभयोरपि

अनेन सन्दर्भेण प्रमीतपतिकायां नियोगनिषेधात् सधवायामनिषेधः तेन पाण्डुराजेन कुन्त्यां माद्र्यां च नियोगद्वारा पुत्राणामुत्पादनं न विरुद्धम् ।

वस्तुतः “अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः । न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः” इति इत्यप-

तथाक्तम्। सोऽल्पेन कालेन य ऊर्ध्वसंस्थोऽनल्पेन सोऽस्मादुदया न तुल्याः। य उद्गमे याम्यनतास्तथाद्याः स्वस्वापमेनापि निरक्षदेशे। याम्याक्षतस्तेऽतिनतत्वमाप्ता उद्यन्ति कालेन ततोऽल्पकेन। कर्क्यादयः सौम्यनतास्तु देऽत्र ते यान्ति याम्याक्षवशादृजुत्वम्। कालेन तस्माद् बहुनोदयं ते तदन्तरे स्वचरखण्डमेव" सि०शि०। "विषुवदहोरात्रवृत्तानि लङ्कायां समपश्चिमगानि राशियन्त्र तु मकरादौ परमक्रान्त्या २४ विषुवन्मण्डलाद्दक्षिणतो मिथुनान्त उत्तरतो लग्नमतस्तिरश्चीनं तत्रापि मेषः स्वक्रान्त्या महत्या तिरश्चीन उदेति अतोऽल्पकालोदयः वृषभस्तदल्पयातस्तस्मात्किञ्चिदधिककालः मिथुनस्तदल्पयातस्तदधिककालः एवं निरक्षेऽपि न समा उदयाः। अथ ये मकरादयो याम्ये नतास्ते याम्याक्षवशात् अतिनता उद्यन्ति स्वदेशेऽतोऽल्पकालोदयाः, ये तु कर्क्यादयः स्वक्रान्त्या सौम्ये नतास्ते याम्याक्षवशादृजुत्वं गता उद्यन्ति अतश्चिरकालोदयाः लङ्कास्वदेशोदययोरन्तराले स्वचरखण्डमेव भवति यतस्तत्क्षितिजयोरन्तराले चरम्। अथ चरखण्डैरूनाधिकत्वं गोलभ्रमणेनोपरि यथा प्रतीयते तथाह" प्रमि०। "भचक्रपादास्तिथिनाडिकाभिः पृथक् समुद्यन्ति निरक्षदेशे। चक्रार्धमाद्यं च तथा द्वितीयं सर्वत्र पूर्णाग्निमिताभिरेव। मेषादेर्मिथुनान्तो नाडीभिस्तिथिमिताभिरुद्गच्छेत्। लगति कुजे तदग्रस्थे प्रथमं नाभश्चरोनाभि। कन्यान्तात्तुलादेऽन्तस्तिथिमितनाडीभिरुद्गच्छेत्। लगति कुजे चोर्ध्वस्थे पश्चात्ताभिश्चरार्धाभिः। तद्द्वितत्रिभज्ञिः कन्यान्तो वा भषान्तो वा। चरखण्डैरूनाढ्यास्तेन निरक्षोदयाः स्वदेशे स्युः। क्षितिजेऽजादिं कृत्वा गोलं भ्रमयन् प्रदर्शयेत्सर्वम्। उक्तमनुक्तं चान्यत् शिष्याणां बोधजननार्थम्"। सि० शि०। चरखण्डकालमाह सि०शि० "उन्मण्डलक्ष्मावलयान्तराले द्युरात्रवृत्ते चरखण्डकालः। तज्ज्यात्र कुज्याचरशिञ्जिनी स्याद्व्यासार्धवृत्ते परिणामिता सा" सि०शि०। "क्षितिजोन्मण्डलयोर्मध्येऽहोरात्रवृत्ते यावान् कालः स चरखण्डकालः तत्रोन्मण्डलादुभयतश्चरतुल्येऽन्तरे चिह्ने कृत्वा तयोर्निबद्धसूत्रस्यार्धं कुज्या सैव त्रिज्यावृत्तपरिणता मती चरज्या स्यादित्यादि त्रिप्रश्ने व्याख्यातम्" प्रमि०।

इदानीं लङ्कास्वदेशार्कोदययोरन्तरं चरकालमाह। "निरक्षदेशे क्षितिजाख्यवृत्तमुन्मण्डलं तच्च गुरन्यदेशे। तस्मिन् कुजेऽर्कस्य समुद्गमोऽस्माच्चरार्धमर्कोदययोस्तु मध्ये" सि० शि०। चरफलस्य धनर्णवासनामाह। "आदौ स्वदेशेऽथ निरक्षदेशे सूर्योदयो हि समयोऽन्यथात। ऋणं गृहेऽस्मादुदये स्वमस्ते फलं चरोत्थं रविसौम्य गोले। याम्ये विलोमं खलु तत्र यस्मादुन्मण्डलं स्वक्षितिजादधस्तात्। नाड्यास्त्वयमुत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ" सि० शि०।

चरस्यानयनं सि०शि० दर्शितं यथा

"यत्र ज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः। आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखोदयात् स्यात् तस्मात् क्रियते तदन्तरभवं खेटेष्वृणं स्वं फलम्" सि०शि०। "लङ्काया मेरुपर्यन्तं नीयमाना रेखोज्जयिनी कुरुक्षेत्रादिदेशान् स्पृशन्ती या याति सा मध्यरेखेत्युच्यते। रेखाया यदार्कोदयस्तत्कालात् पूर्वमेव पूर्वदेशे भवति। रेखोदयकालादनन्तरं पश्चिमदेशेऽर्कोदयः। तदन्तरालस्तदन्तरयोजनैः स्पष्टभूवेष्टनादनुपातेन ज्ञायते। यदि स्फुटपरिधियोजनैः षष्टि ६० घटिका लभ्यन्ते तदा रेखास्वपुरयोरन्तरयोजनैः किमितीति त्रैराशिकेन देशान्तरघटिका लभ्यन्ते। मध्यगत्या च या आनीता नाडिकाभिरनुपातः। यदि घटीषष्ट्या ग्रहस्य गतिकला लभ्यन्ते तदा देशान्तरघटीभिः किमिति। अथ योजनैरेवानुपातः। यदि स्फुटपरिधियोजनैर्गतिः प्राप्यते तदा देशान्तरयोजनैः किमिति। फलं कलाः प्राग्देशे यतस्तत्रादावुदयः। पश्चाद्धनम्। यतस्तत्र रेखोदयादनन्तरमर्कोदय इत्युपपन्नम्" प्रमि०।

चरखण्डानयनं सि०शि० "एकस्य राशेर्बृहती ज्यका या द्वयोस्त्रिभस्यापि कृतीकृतानाम्। स्वस्वापमज्याकृतिवर्जितानां मूलानि तासां त्रिगुणा २४२८ हतानि। स्वस्वद्युमौर्व्या विभजेत् फलानां चापान्यधोऽधः परिशोधितानि। क्रमोत्क्रमस्थानि निरक्षदेशे मेषादिकानामुदयासवः स्युः" सि०शि०। "एकस्य राशेर्बृहती ज्येत्यष्टमी १७१९ ज्या। द्वयोरिति षोडशी २९७७ ज्या। त्रिभस्येति २४२८ त्रिज्या। आसां वर्गितानां स्वकीयस्वकीयक्रान्तिज्यावर्गैर्वर्जितानां मूलानि त्रिज्यागुणितानि स्वस्वद्युज्यया विभजेत्। फलानां चापान्यधोऽधः परिशोधितानीति तृतीयात् द्वितीयं द्वितीयात् प्रथमं शोध्यम्। प्रथमं तथाविधमेव। एवं लङ्कोदयासवः स्युः। अत्रोपपत्तिः। अत्रोत्क्रमतः क्रान्तिवृत्तस्य तिर्यक्स्थितत्वात् तत्र-

चापानि चैत्राण्युत्पद्यन्ते । तद्यथा मेषान्तस्य ज्या क्रान्तिवृत्ते कर्णः, तत्क्रान्तिज्या वक्षाक्षितिजे भुजः । तद्वर्गान्तरपदं मेषान्तेऽहोरात्रवृत्ते कोटिः । एवं राशिद्वयस्य ज्या कर्णः, तत्क्रान्तिज्या भुजः, तद्वर्गान्तरपदं वृषभान्तेऽहोरात्रवृत्ते कोटिः । एवं त्रिराशिज्या कर्णः, परमा क्रान्तिज्या भुजः, परमाल्पद्युज्या कोटिः । एताः कोटयश्चापकरणार्थं त्रिज्यावृत्ते परिणामिताः । त्रिज्यागुणाः स्वस्वद्युज्यया भक्तास्तासां चापानि । प्रथमं मेषोदयस्य कालः । द्वितीयं राशिद्वयस्य । तृतीयं राशित्रयस्य । अतो विश्लेषितानीत्युपपन्नम्" प्रमि० । "इदानीं प्रकारान्तरेणाह । ''कीटादिराश्यन्तजकोटिजीवास्त्रिज्या २४२८ गुणाः स्वस्वदिनज्ययाप्ताः । चापीकृताः प्राग्वदथो विशुद्धाः कीटादिकानामुदयासवो वा" सि०शि० । ''कीटादिराश्यन्तजकोटिजीवास्ता एकद्वित्रिराशिज्या भवन्ति १३१४१।२९७७।२४१८ एतास्त्रिज्यया २४२८ गुण्याः स्वस्वदिनज्यया भक्ता इति यैव वृषभान्ते द्युज्या सैव कीटान्तेऽपि ३२१८ । यैव मेषान्ते द्युज्या सैव सिंहान्तेऽपि ३२६६ । कन्यान्ते द्युज्या त्रिज्यैव ३४३८ । आभिर्या भाज्याः । फलानां चापान्यधोऽधः शुद्धानि कीटादीनामुदयासवः स्युर्निरक्षे वा । त एव मिथुनवृषभमेषाणामित्यर्थः । अत्रोपपत्तिः । क्रान्तिवृत्ते वृषभान्ते सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं कीटान्ते नियम्यते तत्र सूत्रस्यार्धमेकराशेर्ज्या भवति । एवं सूत्रस्यैकमग्रं मेषान्ते बद्धा द्वितीयं सिंहान्ते तस्य सूत्रस्यार्द्धं राशिद्वयस्य ज्या भवति । एवं मेषतुलादौ बद्धसूत्रस्यार्द्धं त्रिज्या । एता एव वृषभान्तमेषान्तमीनान्ताहोरात्रवृत्तानां ज्या भवन्ति । यतस्तत्सम्पातेषु क्रान्तिवृत्ते सूत्राणि बद्धानि । अतस्तासां त्रिज्यावृत्तपरिणतानां चापान्तराणि कीटादिकानामुदया भवन्तीति गोले प्रदर्शयेत्''। इदानीं पुनः प्रकारान्तरेणाह प्रमि० । ''मेषादिजीवास्त्रिगृहद्युमौर्व्या २१४१ गुणा हृताः स्वस्वदिनज्यया वा । चापीकृताः प्राग्वदथो विशुद्धा मेषादिकानामुदयासवो वा" सि०शि० । अस्योपपत्तिर्गोले कथितैव सुगमा च । अथ निरक्षोदयासूनाह । "तेऽभ्राद्रिभूपा १६७० गुणगोऽद्रिचन्द्रा १७९२ सप्ताग्नि नन्देन्दुमिता १९३७ अर्थते । क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः । मेषादिषण्णामुदयाः स्वदेशे तुलादितोऽमी च विलोमसंस्थाः । उदेति राशि समयेन येन तत्सप्तमोऽस्तं समुपैति तेन" सि०शि० । अत्र प्रथमप्रकारेण प्रथम उदयो ज्ञायते । द्वितीयप्रकारेण द्वितीयतृतीयौ । "अत्रोपपत्तिः । निरक्षस्वदेशार्कोदययोरन्तरं चरम् । निरक्षे स्वदेशे च मेषादिः सममुदेति मेषान्त आदौ स्वक्षितिजे तत उन्मण्डले लगति । अतश्चरखण्डोनो मेषोदयः स्वदेशोदयो भवति । एवं वृषमिथुनयोरपि । कर्कादौ तु चरखण्डानामपचीयमानत्वाद्धनं तानि परिणमन्ति । तुलादौ तून्मण्डलस्याधःस्थितत्वाच्चरखण्डानि धनं भवन्ति । मकरादौ तु चरखण्डानामपचीयमानत्वादृणं परिणमन्ति । इत्यादि गोले सम्यगुक्तम्" प्रमि० ।

दिननिशोर्लघुत्वमहत्त्वे हेतुमाह "अतश्च सौम्ये दिवसो महान् स्याद्रात्रिर्लघुर्व्यस्तमतश्च याम्ये । द्युगोलवृत्ते क्षितिजादधःस्थे रात्रिर्यतः स्याद्दिनमानमूर्ध्वे । सदा समत्वं द्युनिशोर्निरक्षे नोन्मण्डलं तत्र कुजाद्यतोऽन्यत्" सि० शि० । "क्षितिजादुपरिस्थेऽहोरात्रवृत्तखण्डे यावान् कालस्तावान् दिवसः यावांस्तदधःस्थे तावती रात्रिरिति" प्रमि० । इदानीं विशेषमाह "षट्षष्टिभागाभ्यधिकाः पलांशा यत्राथ तत्राप्यपरो विशेषः । तस्याधिका क्रान्तिरुदक् च यावत्तावद्दिनं सन्ततमेव तत्र । यावच्च याम्ये सततं तमिस्रा ततश्च मेरौ सततं दिनार्द्धम्" सि०शि० । "यत्र देशे षट्षष्टे (६६) रधिकाः पलांशाः तत्राय विशेष अर्कस्योत्तरा क्रान्तिः (२४)र्यावत्कालं लम्बाधिका भवति तावत्कालं सततं दिनमेव याम्या क्रान्ति (२४)र्यावत् तावत्सततं रात्रिरेव तद्यथा यत्र किल सप्तति (७०)पलांशास्तत्र लम्बो विंशति (२०)स्तत्र देशे विषुवद्वृत्तं दक्षिण क्षितिजादुपरिभागविंशत्योत्तरक्षितिजादधश्च तत्र यदा रवेरुत्तरा क्रान्तिर्भागविंशतिर्भवति तदोत्तरक्षितिजे रविबिम्बमर्धोदितं भूत्वा मध्याह्ने दक्षिणक्षितिजादुपरि-याम्योत्तरमण्डले भागचत्वारिंशतोच्चतं भवति तदा त्रिंशद्घटिका दिनदलम् अतोदिनं षष्टिः रात्रिः शून्यम् ततो द्वितीयदिने उत्तरक्रान्तेरधिकत्वादर्क उत्तरक्षितिजं न स्पृशति एवं प्रतिपर्यय परमक्रान्ति(२४)र्यावदुपर्युपरि परिभ्रमति एवं मिथुनान्ते उत्तरक्षितिजादुपरिभागचतुष्टयं याति पुनस्तेनैव क्रमेणावरोहति विंशतिभागाधिका क्रान्तिर्यावत्तावत्कालं रविः सततं दृश्यः तावद्दिनमेव समस्तैव क्षुत्रा दक्षिणगोले क्षितिजादधःस्थेऽर्के सततं रात्रिरिति अतएव मेरौ षण्मासं दिनम्" प्रमि० ।

कालविभागाः सि॰शि॰ दर्शिता यथा। "गुर्वक्षरैः खेन्दुमितैरसुः स्यात् षड्भिः पलं तैर्घटिका खषड्भिः। स्याद्वा घटीषष्टिरहः खरामैर्मासो दिनैस्तैर्द्विकुभिश्च वर्षम्" "एकमात्रो लघुः। द्विमात्रो गुरुः। तथाच "सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः" इति छन्दोलक्षणप्रतिपादितम् यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्याक्षरस्य परतः संयोगस्तल्लघ्वपि गुरुसंज्ञं ज्ञेयम्। गुर्वक्षरस्योच्चार्यमाणस्य यावान् कालस्तादृशकैर्दशभिरेकोऽसुः प्राणः प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासान्तर्वर्त्ती काल इत्यर्थः। षड्भिः प्राणैरेकं पानीयपलम् पलानां षष्ट्या घटी। घटीनां षष्ट्या दिनम्। त्रिंशद्भिर्दिनैरेको मासः मासैर्द्वादशभिर्वर्षमिति कालस्य विभागो दर्शितः" प्रमि॰। भचक्रविभागस्तत्रैव "विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते। तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते"।

ब्राह्मादि दिनभेदाः सू॰सि॰ उक्ता यथा "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव। चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः। बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः" सू॰सि॰। "अत्र मनुष्यलोके सौरचान्द्रनाक्षत्रसावनैश्चतुर्भिर्मानैर्व्यवहारः कर्मघटना। षष्ट्यब्दं प्रभवादिषष्टिवर्षं जात्यभिप्रायेणैकवचनम्। बार्हस्पत्येन बृहस्पतिमानेन बृहस्पतिमध्यमराशिभोगात्मकवर्षेण प्रत्येकं ज्ञेयम्। अन्यैरवशिष्टैर्ब्राह्मदिव्यपित्र्यप्राजापत्यैः। नित्यशः सदेत्यर्थः। व्यवहारो नास्ति। तुकारात् कदाचित्तुकत्वेन तैर्व्यवहारः" रं॰ना। अथ सौरेण व्यवहारं प्रदर्शयति "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता" सू॰सि॰। "अहोरात्रयोर्मानं सौरेण ज्ञेयम्। प्रात्यहिकसूर्यगतिभोगादहोरात्रं भवतीत्यर्थः। षडशीतिमुखानि वक्ष्यमाणानि। च समुच्चये। तेन सौरमानेन ज्ञेयानि अयनं विषुवत्। च समुच्चये। संक्रान्तेः पुण्यकालता सूर्यबिम्बकलासम्बद्धा सौरमानेन" रं॰ना॰। अथ षडशीतिमुखमाह "तुलादिषडशीत्याह्नां षडशीतिमुखं क्रमात्। तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु" सू॰सि॰। "तुलारम्भात् षडशीतिदिवसानां सौराणां षडशीतिमुखं भवति। तच्चतुष्टयं षडशीतिमुखस्य चतुःसंख्या द्विस्वभावेषु राशिषु चतुर्षु क्रमादेव वक्ष्यमाणा भवति"

रं॰ना॰। "षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च। मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे" सू॰सि॰। "धनुराशेः षड्विंशतितमेऽंशे षडशीतिमुखं, मीनराशेर्द्वाविंशतितमेऽंशे षडशीतिमुखम्। चकारः समुच्चयार्थकः प्रत्येकमन्वेति। मिथुनराशेरष्टादशेऽंशे षडशीतिमुखं, कन्यायाश्चतुर्दशे भागे षडशीतिमुखम्। अत एव तुलादितः षडशीत्यंशो गणनया येषु राशिषु भवति ते राशयो द्विस्वभावाः षडशीतिमुखसञ्ज्ञा संक्रान्तिप्रकरणे साहितिकैरुक्ताः" रं॰ना॰। अथ षडशीत्यंशगणनया चत्वारि षडशीतिमुखान्युक्त्वा भगणांशपूर्त्त्यर्थमवशिष्टांशाः षोडशातिपुण्या इत्याह "ततः शेषाणि कन्याया यान्यहानि तु षोडश। क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्" सू॰सि॰। "ततः कन्यादिचतुर्दशभागानन्तरं शेषाणि भगणभागेऽवशिष्टानि कन्याया यान्यहानि सौरभागसमानि तानि षोडश। तुकारात् पूर्वदिनासमानि क्रतुभिर्यज्ञैः समानि। अतिपुण्यानीत्यर्थः। तत्र पितॄणां दत्तं श्राद्धादि शतमक्षयमनन्तफलदं भवति" रं॰ना॰। "अथ राशित्रयभिन्नक्रान्तिवृत्ते चत्वारि स्थानानि पदसन्धिस्थाने विषुवायनाख्यानि प्रसिद्धानीत्याह "भचक्रनाभौ विषुवद्द्वितयं समसूत्रगम्। अयनद्वितयं चैव चतस्रः प्रथितास्तु ताः" सू॰सि॰। "भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्द्वितयं विषुवद्द्वयं समसूत्रगं परस्परं व्याससूत्रान्तरितं ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ च क्रमेण पूर्वापरौ विषुवल्लग्नौ मेषतुलाख्यौ चेत्यर्थः। अयनद्वितयमयनद्वयं कर्कमकरादिरूपम्। च समुच्चये। तेन समसूत्रगं ता विषुवायनाख्याः क्रान्तिवृत्तप्रदेशरूपा भमयचतस्रश्चतुःसंख्याकाः प्रथिताः गणितादौ पदादित्वेन प्रसिद्धाः। एवकारादन्यराशीनां निरासः। तुकारात् तासां समसूत्रस्थत्वेऽपि विषुवायनत्वाभावात् पदादित्वे नाप्रसिद्धिरित्यर्थः" र॰ना॰। अथावशिष्टमासादिसंज्ञामन्यदप्याह। "तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः। नैरन्तर्यात्तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्" सू॰सि॰। "तदन्तरेषु विषुवायनान्तरालेषु। अत्रान्तरालानां चतुःस्थाने बहुवचनम्। संक्रान्तिद्वितयं द्वितयं पुनः राश्यादिभागे पश्चात्प्राक्क्रमवत् चारद्वयं भवति। तदन्तराले राश्याद्यादिभागौ द्वौ भवत इत्यर्थः। तथा हि मेषास्य-

मिथुनकर्कटयोरयनयोरन्तराले वृषमिथुनयोरादौ। कर्क-तुलयोरन्तराले सिंहकन्ययोरादौ। तुलामकरयोरन्तराले वृश्चिकधनुषोरादौ। मकरमेषयोरन्तराले कुम्भमीनयोरादौ इति। एवं विषुवानन्तरं सङ्क्रमणद्वयमनन्तरमयनं तदनन्तरं सङ्क्रान्तिद्वयं तदनन्तरं विषुवमनन्तरं सङ्क्रान्तिद्वयमनन्तरमयनमित्यादि पौनःपुन्येन ज्ञेयमित्यर्थः। सङ्क्रान्तिद्वयमध्ये प्रथमसङ्क्रान्तौ विशेषमाह नैरन्तर्य्यादिति। निरन्तरतया सम्भूतायाः सङ्क्रान्तेः सकाशाद्विष्णुपदीद्वयं तदन्तराले इत्यर्थः। अयनस्य प्रथमसङ्क्रान्तिर्विष्णुपदसञ्ज्ञा तयोर्द्वयं तदभ्यन्तरे प्रत्येकं भवतीति तात्पर्य्यार्थः। षडशीतिसञ्ज्ञं द्वितीयसंक्रमणं पूर्व्वसूचितं तयोरपि द्वयं तदन्तराले भवतीति ध्येयम्" र॰ना॰। अथायनद्वयमाह "भानोर्म्मकरसङ्क्रान्तेः षण्मासा उत्तरायणम्। कर्क्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्" सू॰सि॰। "सूर्य्यस्य मकरसङ्क्रान्तेः सकाशात् षट् सौरमासा उत्तरायणं भवति। कर्क्कादेः कर्क्कसंक्रान्तेः सकाशात् तथा सूर्य्यभोगात्। एवकारादन्ययोगनिरासः। षण्मासाः तुकारात् सौराः। दक्षिणायनं भवति" र॰ना॰। अथर्त्तुमासवर्षाण्याह "द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः। मेषादयो द्वादशैते मासास्तैरेव वत्सरः" सू॰सि॰। "ततो मकरसङ्क्रान्तेः सकाशात्। अपिशब्दः उत्तरायणावधिना समुच्चयार्थकः। द्विराशिनाथा राशिद्वयस्वामिका राशिद्वयार्कभोगात्मका इत्यर्थः। शिशिरादयः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता ऋतवः कालविभागविशेषा भवन्ति। एते सूर्य्यभोगविषयका मेषादयो राशयो द्वादश मासास्तैर्द्वादशभिर्म्मासैः। एवकारादत्र नाधिकव्यवच्छेदः। वत्सरः सौरवर्षं भवति" र॰ना॰। अथ प्रसङ्गात् संक्रान्तौ पुण्यकालानयनमाह। "अर्कबिम्बकलाः षष्ट्या गुणिताभुक्तिभाजिताः। तदर्द्धनाड्यः संक्रान्तेरर्व्वाक् पुण्यं तथापरे" सू॰सि॰। "सूर्य्यस्य बिम्बप्रमाणकलाः षष्ट्या गुणिताः सूर्य्यगत्या भक्तास्तस्य फलस्यार्द्धे तत्सङ्ख्याका घटिका इत्यर्थः। सङ्क्रान्तेः सूर्य्यस्य राशिप्रवेशकालादित्यर्थः। अर्व्वाक् पूर्व्वं पुण्यं स्नानादिधर्म्मकृत्ये पुण्यघटिकाः पुण्यवृद्धिकारिकाः। अपरे सङ्क्रान्त्युत्तरकाले तथा। स्नानादिधर्म्मकृत्ये पुण्यवृद्धिदा इत्यर्थः। अत्रोपपत्तिः। सूर्य्यबिम्बकेन्द्रस्य राश्यादौ सञ्चरणकालः सङ्क्रमणकालस्तस्य सूक्ष्मत्वेन दुर्ज्ञेयत्वात् स्थूलकालः कोऽप्यभ्युपेयः स तु राश्यादौ बिम्बसञ्चरणरूपोऽङ्गीकृतो बिम्बसम्बन्धात्। अतोऽर्द्धसूर्य्यगत्या षष्टिघटिकास्तदा सूर्य्यबिम्बकलाभिः का इत्यनुपातानीता बिम्बघटिकाः सङ्क्रान्तिकालः स्थूलः प्राङ्नेमिसञ्चरणकालात् पश्चिमनेमिसञ्चरणकालपर्य्यन्तं तदर्द्धघटिका व्यासार्द्धघटिका इति। सङ्क्रान्तिकालात् ताभिः पूर्व्वमपरत्र काले प्रागपरनेम्योः क्रमेण सञ्चरणात् पूर्व्वोत्तरकाले पुण्या इति" र॰ना॰ अथ सौरसञ्ज्ञा क्रमप्राप्तं चान्द्रमानमाह। "अर्क्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः" सू॰सि॰। "सूर्य्यात् समागमस्थानात् विनिर्गतः पृथग्भूतः चन्द्रोऽहरहः प्रतिदिनं यत् तत्सङ्ख्यामितं प्राचीं पूर्व्वां दिशं गच्छति तत् प्रतिदिनं चान्द्रमानं तत् गत्यन्तरांशमितम्। ननु सौरदिनं सूर्य्ययोगेन यथा भवति तथैतद्भोगांशैः कियद्भिः पूर्णं चान्द्रं दिनं भवतीत्यत आह अंशैरिति। भागैस्तुकारात् सूर्य्यचन्द्रान्तरोत्पन्नैः, तस्य तद्रूपत्वात् द्वादशभिर्द्वादशसङ्ख्याकैस्तिथिर्व्वा। एकं चान्द्रं दिनं ज्ञेयमित्यर्थः। एतदुक्तं भवति। सूर्य्यचन्द्रयोगाच्चान्द्रदिनप्रवृत्तेः पुनर्योगे माससमाप्तेर्भगणान्तरेण चान्द्रो मासस्त्रिंशच्चान्द्रदिनात्मकः। अतस्त्रिंशद्भिरेव द्वादशभगणांशान्तरं तदेकेन किमिति। द्वादशभागैरेव चान्द्रदिनम्। "दर्शः सूर्य्येन्दुसङ्गमः" इत्यभिधानाद्दर्शावधिकमासस्य त्रिंशत्तिथ्यात्मकत्वात् तिथिश्चान्द्रदिनरूपेति" र॰ना॰। अथ चान्द्रव्यवहारमाह "तिथिः करणमुद्वाहः क्षौरं सर्व्वक्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते" सू॰सि॰। "तिथिः प्रतिपदाद्या करणं ववादिकमुद्वाहो विवाहः क्षौरं क्षौरकर्म्म। एतदाद्याः सर्व्वक्रियाः व्रतबन्धाद्युपनयनरूपाः व्रतोपवासयात्राणां नियमोपवासगमनानां क्रिया करणम्। तथा समुच्चयार्थकः। चान्द्रमानेन गृह्यते अङ्गीक्रियते" र॰ना॰। अथ चान्द्रमासप्रसङ्गात् पित्र्यमानं चाह "त्रिंशता तिथिभिर्मासश्चान्द्रः, पित्र्यमहः स्मृतम्। निशा च, मासपक्षान्तौ तयोर्मध्ये विभागतः" सू॰सि॰। "त्रिंशता त्रिंशन्मितैस्तिथिभिश्चान्द्रो मासः। पित्र्यमपि सम्बन्धि। अहर्दिनम् निशा च रात्रिः पितृसम्बद्धा। चकारो व्यवस्थार्थकः। तेनोभयं नैकं प्रत्येकं, किन्तु मिलितम्। स्मृतमिति विज्ञातुरीणोभयत्राऽन्वेति तथा च चान्द्रो मासः पित्र्याहोरात्रमित्यर्थः कथितः। मासपक्षान्तौ मासान्तो दर्शान्तः, पक्षान्तः पूर्णिमान्तः

एतावित्यर्थः । विभागतः क्रमेणेत्यर्थः । तयोः पितृणामहोरात्रयोर्मध्येऽर्द्धे भवतः । दर्शेन पितॄणां मध्याह्नः, पूर्णिमान्ते पितॄणां मध्यरात्रमित्यर्थः । अर्थात् कृष्णाष्टम्यर्द्धे दिनप्रारम्भः । शुक्लाष्टम्यर्द्धे दिनान्त इति सिद्धम्” र०ना० । अथ क्रमप्राप्तं नाक्षत्रमानं प्रसङ्गान्माससंज्ञाञ्चाह “भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते । नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः” “नित्यं प्रत्यहं भचक्रभ्रमणं नक्षत्रसमूहस्य प्रवहवायुकृतपरिभ्रमः नाक्षत्रं नक्षत्रसम्बन्धि दिनं मानज्ञैः कथ्यते नित्यमित्यनेन चन्द्रभोगनक्षत्रभोगो नाक्षत्रमित्यस्य निरासः भचक्रभ्रमणानुपपत्तेः । माससंज्ञा महानक्षत्रनाम्नेति । पर्वान्तयोगतः पर्वान्तः पूर्णिमान्तः तस्य योगात् तत्सम्बन्धात् नक्षत्रसंज्ञया मासाः । तुकाराच्चान्द्रा अवगम्याः पूर्णिमान्तस्थितचन्द्रनक्षत्रसंज्ञो मासो ज्ञेय इति तात्पर्य्यार्थः । तथाहि यद्दर्शान्तावधिकश्चान्द्रो मासस्तदभ्यन्तरस्थितपूर्णिमान्तस्थितचन्द्रनक्षत्रसंज्ञः । यथा चित्रासम्बन्धाच्चैत्रः । विशाखासम्बन्धाद्वैशाखः । ज्येष्ठासम्बन्धाज्ज्यैष्ठः । आषाढासम्बन्धादाषाढः । श्रवणसम्बन्धाच्छ्रावणः । भाद्रपदासम्बन्धाद्भाद्रपदः । अश्विनीसम्बन्धादाश्विनः । कृत्तिकासम्बन्धात् कार्त्तिकः । मृगशीर्षसम्बन्धान्मार्गशीर्षः । पुष्यसम्बन्धात् पौषः । मघासम्बन्धान्माघः । फाल्गुनीसम्बन्धात् फाल्गुन इति” र०ना० । ननु पूर्णिमान्ते तत्तन्नक्षत्राभावे कथं तत्संज्ञा मासानामुचितेत्यत आह “कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्” सू०सि० । नक्षत्रसंयोगार्थमिति निमित्तसप्तमी । कार्त्तिक्यादिषु कार्त्तिकमासादीनां पौर्णमासीष्वित्यर्थः । कृत्तिकादि द्वयं द्वयं नक्षत्रं कथितं कृत्तिकारोहिणीभ्यां कार्त्तिकः । मृगार्द्राभ्यां मार्गशीर्षः । पुनर्वसुपुष्याभ्यां पौषः । आश्लेषामघाभ्यां माघः । चित्रास्वातिभ्यां चैत्रः । विशाखानुराधाभ्यां वैशाखः । ज्येष्ठामूलाभ्यां ज्यैष्ठः । पूर्वोत्तराषाढाभ्यामाषाढः । श्रवणधनिष्ठाभ्यां श्रावण इति फलितम् । अवशिष्टमासानामाह । अन्त्योपान्त्याविति । अत्र कार्त्तिकस्यादित्वेन पश्चादन्त्य आश्विनः । उपान्त्यो भाद्रपदः । एतौ मासौ पञ्चमः फाल्गुनः । चकारः समुच्चये इति मासत्रयं त्रिधा स्थानत्रय उक्तम् । रेवत्यश्विनीभरणीति नक्षत्रत्रयसम्बन्धादाश्विनः । शततारापूर्वोत्तराभाद्रपदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः । पूर्वोत्तराफाल्गुनीहस्तेति नक्षत्रत्रयसम्बन्धात् फाल्गुन इति सिद्धम्” र०ना० । अथ प्रसङ्गात् कार्त्तिकादिबृहस्पतिवर्षाण्याह । “वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ । कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा” सू०सि० । यथा पौर्णमास्या नक्षत्रसम्बन्धेन तत्संज्ञो मासो भवति । तथेति समुच्चयार्थकम् । बृहस्पतेः सूर्य्यसान्निध्यदूरत्वाभ्यामस्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमायामित्यर्थः । चकारः पौर्णमासीसम्बन्धात् समुच्चयार्थकः । योगो दिननक्षत्रसम्बन्धः कार्त्तिकादीनि द्वादश वर्षाणि भवन्ति । वैशाखकृष्णपक्षपञ्चदश्याममावास्यायां बृहस्पतेरस्त उदये वा जाते सति तदादि बृहस्पतिवर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसंज्ञम् । एवं ज्येष्ठाषाढश्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषमाघफाल्गुनचैत्रमासेषु मृगपुष्यमघापूफाचित्राविशाखाज्येष्ठापूषाश्रवणपूभाश्विनीदिननक्षत्रसम्बन्धान्मार्गशीर्षादीनि भवन्ति । अत्रापि प्रोक्तनक्षत्रद्वयत्रयसम्बन्धः प्रागुक्तो बोध्यः । पञ्चदशे इत्युपलक्षणम् । तेन यद्दिने बृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं बार्हस्पत्यं वर्षं भवतीति तात्पर्य्यम् । संहितास्वन्येऽस्तोदयवशाद्वर्षोक्तिः परमिदानीमुदयवर्षव्यवहारो गणकैर्गृह्यते ‘येनोदितेज्य इत्युक्तेरिति” र०ना० । अथ क्रमप्राप्तं सावनमाह “उदयादुदयं भानोः सावनं तत् प्रकीर्त्तितम् । सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः” सू०सि० । सूर्य्यस्योदयादुदयकालमारभ्याव्यवहितोदयकालपर्य्यन्तं यत् कालात्मकं तत् सावनं मानज्ञैरुक्तम् । एतेनोदयद्वयान्तरात्मकालस्य गणनया सावनानि वक्ष्यमाणाद्रीत्यादिना मध्याधिकारोक्तानि भवन्ति । तद्व्यवहारमाह यज्ञकालविधिरिति । यज्ञस्य यः कालस्तस्य गणना तैः सावनैः । तुकारोऽन्यमाननिरासार्थकैवकारपरः” र०ना० । अथ व्यवहारान्तरमाह । “सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा । मध्यमा ग्रहभुक्तिश्च सावनेनैव गृह्यते” सू०सि० । “सूतकं जननमरणसम्बन्धि । आदिपदग्राह्यं चिकित्सितचान्द्रायणादि । तस्य परिच्छेदो निर्णयः । दिनाधिपमासेश्वरवर्षेश्वराः । तथा समुच्चये ग्रहाणां गतिर्मध्यमा । तुकारात् स्पष्टगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धाभावात् । एतेन स्पष्टगत्या स्पष्टग्रहस्य

चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन एवकारादन्यमाननिरासः। गृह्यते सुधीभिरङ्गीक्रियते। अत्र वक्ष्यमाणरीत्या गृह्यते इत्यत्र वक्ष्यमाणं ज्ञेयम्। अथ दिव्यमानमाह। "सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्" सू॰सि॰। "पूर्वार्द्धं पूर्वं व्याख्यातम्। यदहोरात्रं पर्वार्णोक्तं सूर्यस्य भगणभोगपूर्त्तौ प्रोक्तं पूर्वमनेकधा निर्णीतं तदहोरात्रं दिव्यमानं स्यात्" र॰ना॰। अथावशिष्टे प्राजापत्यब्राह्ममाने आह "मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्। न तत्र द्युनिशोर्भेदो ब्राह्मः कल्पः प्रकीर्त्तितम्" सू॰सि॰।

दृष्टान्तभगोलभूगोलरचनाप्रकारः सू॰सि॰ दर्शितो यथा "भूभगोलस्य रचनां कुर्य्यादाश्चर्य्यकारिणीम्। अभीष्टं पृथिवीगोलं कारयित्वा तु दारवम्। दण्डं तन्मध्यगं मेरोरुभयत्र विनिर्गतम्। आधारकक्षाद्वितयं कक्षां वैषुवतीं तथा" सू॰ सि॰। "भगोलस्य भूगोलादभिन्नमध्यस्थितस्य नक्षत्राधिष्ठितगोलस्य प्रागध्यायोक्तार्थस्य रचना स्थितिज्ञानार्थं दृष्टान्तात्मकगोलस्य निर्मितिं सुधीर्गणको गोलशिल्पज्ञः कुर्य्यात्। ननु स्वबुद्ध्या न सर्वं ज्ञानं भवतीति दृष्टान्तगोलनिबन्धनं व्यर्थमेवेत्यत आह आश्चर्य्यकारिणीमिति। उक्तप्रतीत्यनुपपत्त्या बुद्धिमतामपि तथात्वोक्तेन खाधस्तिर्य्यग्भागयोर्लोकावस्थानस्य तद्भागस्थभगोलप्रदेशस्य च भूमेर्निराधारत्वादेश्च ज्ञानं सम्यक् सम्प्रतीतिकं न भवत्यतो दृष्टान्तगोले तन्निश्चयसम्भवात् तन्निबन्धनमावश्यकमिति भावः। कथं रचनां कुर्य्यादित्यत आह अभीष्टमिति। सुधीर्गोलमभीष्टं स्वेच्छाकल्पितप्रमाणकं दारवं काष्ठघटितं सच्छिद्रं कारयित्वा काष्ठशिल्पज्ञद्वारा कृत्वेत्यर्थः। मेरोस्तु कल्पनारूपं दण्डकाष्ठं तन्मध्यगं तस्य काष्ठघटितभूगोलस्य मध्ये छिद्रमध्ये शिथिलतया स्थितम्। उभयत्र भूगोलस्य व्यासप्रमाणच्छिद्रस्थानाभ्यां बहिरित्यर्थः। विनिर्गतमेकस्मादन्यस्मात् पार्श्वयोर्दण्डप्रदेशतुल्यं निःसृतम्। उभयपार्श्वयोस्तुल्यौ दण्डप्रदेशौ यथा स्यातां तथा कुर्य्यादित्यर्थः। भगोलनिबन्धनार्थमाधारवृत्तद्वयमाह आधारकक्षाद्वितयमिति। भगोलनिबन्धनार्थमादावाधारार्थं वृत्तयोर्द्वितयमूर्ध्वाधस्तिर्य्यगवस्थानक्रमेणैकमेकमेव द्वयमित्यर्थः। भूगोलादुभयतस्तुल्यान्तरेण दण्डप्रदेशयोः प्रोतमेकं वृत्तं कुर्य्यात्। तत्तुल्यवृत्तमपरं तदर्द्धच्छेदेन दण्डप्रोतं कुर्य्यादिति सिद्धोऽर्थः। एतद्वृत्तद्वयव्यतिरेकेण भूगोलादभितो भगोलनिबन्धनानुपपत्तेः। भगोलनिबन्धमारम्भमाह कक्षेति। वैषुवतीं विषुवत्सम्बन्धिनीं कक्षां वृत्तपरिधिं विषुवद्वृत्तमित्यर्थः। तथाधारवृत्तद्वयस्यार्द्धच्छेदेन भगोलमध्यवृत्तानुकल्पेन गणकेन निबध्नीयादित्यर्थः" र॰ ना॰। अथ मेषादिद्वादशराशीनामहोरात्रवृत्तनिबन्धनमन्यदपि श्लोकपञ्चकेनाह "भगणांशाङ्गुलैः कार्य्या दलितैस्तिस्र एव ताः। स्वाहोरात्रार्द्धकर्णैश्च तत्प्रमाणानुमानतः। क्रान्तिविक्षेपभागैश्च दर्शितैर्दक्षिणोत्तरे। स्वैः स्वैरपक्रमैस्तिस्रो मेषादीनामपक्रमात्। कक्षाः प्रकल्पयेत् ताश्च कर्कादीनां विपर्ययात्। तद्वत् तिस्रस्तुलादीनां मृगादीनां विलोमतः। याम्यगोलाश्रिताः कार्य्याः कक्षाधारद्वयोरपि। याम्योदग्गोलसंस्थानां भानामभिजितस्तथा। सप्तर्षीणामगस्त्यस्य ब्रह्मादीनां च कल्पयेत्। मध्ये वैषुवती कक्षा सर्वेषामेव संस्थिता" सू॰ सि॰। "भगणांशाङ्गुलैः द्वादशराशिभागैः षष्ट्यधिकशतत्रयपरिमिताङ्गुलैः दलितैः समविभागेन खण्डितैरङ्कितैरित्यर्थः। ताः कक्षाः वक्ष्यमाणाः तिस्रः त्रिसङ्ख्याकाः। एवकारादूने वृत्ते च न्यूनाधिकव्यवच्छेदः। शिल्पज्ञेन गोलगणितज्ञेन कार्य्याः। एताः पूर्ववृत्तप्रमाणेन न कार्य्या इत्यभिप्रायेणाह स्वाहोरात्रार्द्धकर्णैरिति। स्वशब्देन मेषादित्रिकं तस्य प्रतिराश्यहोरात्रवृत्तस्यार्द्धकर्णो व्यासार्द्धं द्युज्या ताभिरित्यर्थः। चकारात् कार्य्याः। स्वस्वद्युज्यामितेन व्यासार्द्धेन मेषादित्रयाणां वृत्तत्रयं कार्य्यमित्यर्थः। ननु स्पष्टाधिकारोक्ताहोरात्रार्द्धकर्णानयने युक्त्यभावात् तैर्वृत्तनिर्माणं कुतः कार्य्यमित्यत आह तत्प्रमाणानुमानत इति। विषुववृत्तप्रमाणानुमानाद्वृत्तत्रयं कार्य्यम्। यथा विषुवद्वृत्तं पूर्वकृतं समम्। तथा तदनुरोधेन मेषान्तवृत्तमल्पं तदनुरोधेन वृषान्तवृत्तमल्पं तदनुरोधेन मिथुनान्तवृत्तमल्पमित्युत्तरोत्तरमल्पव्यासार्द्धकम्। तत्त्वहोरात्रवृत्तमिति द्युज्याव्यासार्द्धेन वृत्तनिर्माणं युक्तियुक्तं क्रान्तिज्यावशेन्नात् विज्ञायते भूगोलस्याहोरात्रवृत्तव्यासार्द्धत्वादिति भाव इत्येतस्य शिवं तथा दृष्टान्तगोले निबध्नीत। क्रान्तिविक्षेपभागैरिति क्रान्तिवृत्तस्य विषुववृत्तप्रदेशाद्विभिन्नप्रदेशा यैरंशैः। चकारादाधारवृत्ते दर्शितैः समविभागेन खण्डितैरङ्कितैः। दक्षिणोत्तरैर्विषुवद्वृत्त-

क्रान्तितत्प्रदेशयोर्दक्षिणोत्तरान्तरात्मकैरुत्क्रमज्यारूपैः स्वकीयैः स्वकीयैः स्वराशिवृत्तैरपक्रमैः स्पष्टाधिकारानीतक्रान्त्यग्रैर्मेषादीनां मेषादिराशित्रयान्तानां मेषान्तवृषान्तमिथुनान्तानामित्यर्थः । त्रिसंख्यसङ्ख्याकाः प्राङ्निर्मिता वृत्तरूपाः कक्षाः । अपक्रमात् । अपशब्दस्योपसर्गत्वात् क्रमादित्यर्थः । प्रकल्पयेत् । शिल्पज्ञगणको विषुवद्वृत्तानुरोधेनाधारवृत्तद्वये उत्तरतो निबध्नीयादित्यर्थः । कर्कादीनामाह ता इति । मेषादिकक्षा निबद्धाः कर्कादीनां कर्कसिंहकन्यान्तानामादिप्रदेशानां विपर्ययात् व्यस्तपाठात् । चकारः समुच्चये । तेन प्रकल्पयेदित्यर्थः । मिथुनान्तवृत्तं कर्कादेः, वृषान्तवृत्तं सिंहादेः, मेषान्तवृत्तं कन्यादेरिति फलितम् । तुलादीनामाह तद्वदिति । तुलादीनां तुलावृश्चिकधन्विनां तिस्रः कन्यान्तसङ्ख्याकाः कक्षास्तद्वदेकदिक्स्थराशिक्रान्त्यग्रैस्तुलान्तवृश्चिकान्तधनुरन्तानां याम्यगोलाश्रिताः । विषुवद्वृत्ताद्दक्षिणभागे आधारवृत्तद्वये निबद्धाः कार्याः । गणकेनेति शेषः । मकरादीनामाह । मृगादीनामिति । विलोमत उत्क्रमात् तुलादिकक्षाः कक्षा मकरादीनां भवन्ति । धनुरन्तवृत्तं मकरादेः, वृश्चिकान्तवृत्तं कुम्भादेः, तुलान्तवृत्तं मीनादेरिति फलितम् । ताराणां कक्षानिबन्धनमाह । कक्षाधारादिति । भानामश्विन्यादिसप्तविंशतिनक्षत्रबिम्बानां याम्योदग्गोलसंस्थानां विषुवद्वृत्ताद्दक्षिणोत्तरभागयोर्यथायोग्यमवस्थितानां यन्नक्षत्रस्फुटक्रान्तिरुत्तरा तच्चलाग्रामुत्तरभागावस्थितानां येषां स्फुटक्रान्तिर्दक्षिणा तेषां दक्षिणभागावस्थितानामित्यर्थः । स्वयोर्दक्षिणोत्तरभागयोः । अपिशब्दो याम्योत्तरमण्डलकमेव संबन्धार्थकः । कक्षाधारात् कक्षाणामाधारवृत्तद्वयात् तयोरित्यर्थः । सप्तम्यर्थे पञ्चमी । कक्षाः स्वस्फुटक्रान्तिज्योत्पन्नद्युज्याव्यासार्द्धप्रमाणेन वृत्ताकाराः प्रकल्पयेत् । शिल्पज्ञो निबध्नीयात् । अन्येषामप्याह अभिजित इति अभिजिद्ब्रह्मविष्णुसप्तर्षिबिम्बानामगस्त्यमृगव्याधबिम्बानां चकारोऽनुक्तस्येव तथा कक्षा यथायोग्यं प्रकल्पयेदित्यर्थः । निबन्धप्रकारस्तु तत इति मध्य इति । सर्वासां कक्षाणां मध्ये तुल्यभागेऽनाधारवृत्तद्वयप्रदेशे । एवकारादन्ययोगव्यवच्छेदः । वैषुवती कक्षा विषुवत्सम्बन्धिनी वृत्तरूपा संस्थिता यथाऽवस्थिता भवति तथा शिलाद तत्र निबध्नीयादित्यर्थः । विषुवद्वृत्तात् स्वस्फुटक्रान्त्यन्तरेण स्वद्युज्याव्यासार्द्धप्रमाणेनाहोरात्रवृत्तमाधारवृत्तयोर्निबध्नीयादिति निष्कृष्टोऽर्थः ।” र० ना० । अथ गोले मेषादिराशिसन्निवेशं सार्द्धश्लोकेनाह । “तदाधारयुतेरूर्द्ध्वमयने विषुवद्द्वयम् । विषुवत्स्थानतो भागैः स्फुटैर्भगणसञ्चरात् । क्षेत्राण्येवमजादीनां तिर्यग्ज्याभिः प्रकल्पयेत्” सू० सि० । “तदाधारयुतेस्तत् विषुवद्वृत्तमाधारवृत्तं च तयोर्युतेः सम्पातादूर्द्ध्वमुपरि । अन्तिमाहोरात्राधारवृत्तयोः सम्पातेऽयने दक्षिणोत्तरायणसन्धिस्थाने भवतः अतोऽर्द्ध्वमध्यस्थाराधारवृत्तमूर्द्ध्वाधरं याम्यं न तिर्यग्न्यस्तकाकारम् । तेनैतत् फलितम् विषुवद्वृत्तस्योर्द्ध्वाधराधारवृत्ते ऊर्द्ध्वमधश्च यत्र सम्पातस्तत्रोर्द्ध्वसम्पातान्मकराद्यहोरात्रवृत्तं चतुर्विंशत्यंशैस्तदाधारवृत्ते दक्षिणतो यत्र लग्नं तत्रोत्तरायणसन्धिस्थानम् । एवमधःसम्पातात् कर्काद्यहोरात्रवृत्तं चतुर्विंशत्यंशैस्तदाधारवृत्ते उत्तरतो यत्र लग्नं तत्र दक्षिणायनसन्धिस्थानमिति । अयनाद्विषुवच्च विपरीतस्थितत्वादूर्द्ध्वमधःस्थयोजितविपरीताधःसम्बन्धाद्विषुवद्द्वयं भवति । तात्पर्यार्थस्तु तिर्यग्वृत्तवलयाकाराधारवृत्तविषुवद्वृत्तसम्पातौ पूर्वापरौ क्रमेण मेषादितुलादिरूपौ विषुवत्स्थाने भवत इति । अथ राशिसाकल्यसन्निवेशमाह विषुवत्स्थानत इति । विषुवप्रदेशात् स्फुटैराशिसम्बन्धिभिरंशमितैर्भैर्भगणसञ्चारात् राशिचक्रसन्निवेशात् तिर्यग्ज्याभिर्वक्रवृत्तानुकाराभिर्वक्रानुकारसूत्रवृत्तप्रदेशैरजादीनां मेषादीनाम् । एवमयनविषुवत्कल्पनरीत्या तदन्तराले क्षेत्राणि स्थानानि यथोक्तवक्रः प्रकल्पयेद्भवेत् । तद्यथा पूर्वदिक्स्थविषुवत्स्थानात्तोलसूत्रद्वादशांशस्वल्पप्रदेशेन मेषान्ताहोरात्रवृत्ते पूर्वभागे यत्र स्थानं तस्मात् तदन्तरेण वृषान्ताहोरात्रवृत्ते तदन्तरेण वृषान्तस्थानमस्मादयनसन्धिस्थानं तत्प्रदेशान्तरेण मिथुनान्तस्थानमस्मात् पश्चिमभागे कर्कान्ताहोरात्रवृत्ते तदन्तरेण कर्कान्तस्थानमस्मादपि सिंहान्ताहोरात्रवृत्ते तदन्तरेण सिंहान्तस्थानमस्मादपि तदन्तरेण पश्चिमविषुवत्स्थानं कन्यान्तस्थानमस्मादपि तुलान्ताहोरात्रवृत्ते तदन्तरेण तुलान्तस्थानमस्मादपि वृश्चिकान्ताहोरात्रवृत्ते तदन्तरेण वृश्चिकान्तस्थानमस्मादपि तदन्तरेण दक्षिणायनसन्धिस्थानं धनुरन्तस्थानमस्मात् कुम्भाद्यहोरात्रवृत्ते तदन्तरेण मकरान्तस्थानमस्मादपि मीनाद्यहोरात्रवृत्ते तदन्तरेण कुम्भान्तस्थानं मीनादिस्थानं चास्मादपि पूर्वविषुवे मीनान्तस्थानं मेषादिस्थानं च तदन्तरेणेति ज्ञेयम् ।” र० ना० । अथ गोले खे हा-

द्वादशराशीनां सत्त्वादन्यथा चक्रकलानुपपत्तेरित्यतैकवृत्ताभावात् कथं राशत्रयम् ? राशिविभानुपपत्तिश्च अन्तरालभागस्याकाशात्मकत्वादित्यतो वृत्तकथनच्छलेन पूर्वोक्तं स्पष्टयन् सूर्यस्तद्वृत्ते भगणभोगं करोतीत्याह "अयनादयनं चैव कक्षा तिर्यक् तथापरा। क्रान्तिसंज्ञा तया सूर्यः सदा पर्येति भासयन्" सू० सि०। "अयनस्थानमारभ्य परिवर्त्ततद्यनस्थानपर्यन्तं चकार आरम्भसमाप्त्योर्भिन्नायनस्थाननिरासार्थकः। अपरा गोल आधारवृत्तसमा वृत्तरूपा कक्षा तथा राशत्रयमार्गेण। एवकारोऽन्यमार्गव्यवच्छेदार्थकः। तिर्यक् उक्तवृत्तानुकारविलक्षणानुकारा क्रान्तिसंज्ञा क्रमशः क्रान्तिः। चन्द्रगमनभोगज्ञानार्थं वृत्तं तत्सञ्ज्ञमनुकल्पितम्। अयनविषुवद्द्वयसंसक्तं क्रान्तिवृत्तं द्वादशराश्यङ्कितं गोले निबध्नीयादिति तात्पर्यार्थः। भासयन् भुवनानि प्रकाशयन् सन् स सूर्यः। एतेन चन्द्रादीनां निरासः। सदा निरन्तरं तया क्रान्तिसंज्ञया कक्षया पर्येति स्वगत्या गच्छन् भगणपरिपूर्त्तिभोगं करोति। सूर्य्यगत्यनुरोधेन नियतं क्रान्तिवृत्तं कल्पितमिति भावः"। ननु चन्द्राद्याः क्रान्तिवृत्ते कुतो न गच्छन्तीत्यत आह" र० ना०। "चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रिताः। ततोऽपकृष्टा दृश्यन्ते विक्षेपान्ते ष्वपक्रमात्" सू० सि०। "चन्द्रादयोऽर्कव्यतिरिक्ताः ग्रहाः स्वकैः स्वीयैः पातैः पाताख्यदैवतैरपमण्डलं क्रान्तिवृत्तमाश्रिताः स्वस्वभोगस्थानेऽधिष्ठितैस्तैः क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः। चकाराद्विक्षेपान्तरेणापकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति। अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः। दक्षिणत उत्तरतो वा विक्षेपान्तेषु गणितागतविक्षेपकलाग्रस्थानेषु भूस्थजनैर्दृश्यन्ते। तथाच क्रान्तिवृत्तं यथा विषुवन्मण्डलेऽवस्थितं तथा क्रान्तिवृत्ते पातस्थाने तत्षड्भान्तरस्थाने च लग्नसूत्रापरमविक्षेपकलाभिस्त्रिभान्तरस्थानादूर्ध्वाधःक्रमेण दक्षिणोत्तरतो लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं भिन्नं कल्पितं तत्र गच्छन्तीति भावः" र० ना०। अथ त्रिप्रश्नाधिकारोक्तलग्नमध्यलग्नयोः स्वरूपमाह "उदयक्षितिजे लग्नमस्तं गच्छच्च तद्वशात्। लङ्कोदयैर्यथासिद्धं खमध्योपरि मध्यमम्" सू० सि०। "उदयक्षितिजे क्षितिजवृत्तस्य पूर्वदिग्देश इत्यर्थः। लग्नं क्रान्तिवृत्तं यत्प्रदेशे प्रवहवायुना संसक्तं तत्प्रदेशो मेषाद्यवधिभोगेनोदयलग्नमुच्यत इत्यर्थः। प्रसङ्गादस्तलग्नस्वरूपमाह अस्तमिति। तद्वशादुदयलग्नानुरोधात् पश्चिमक्षितिजे क्षितिजवृत्तस्य पश्चिमदिक्प्रदेशमित्यर्थः। क्रान्तिवृत्तं गच्छत्। यत्प्रदेशेन प्रवहवायुना संलग्नं तत्प्रदेशो मेषाद्यवधिभोगेनास्तलग्नमुच्यत इत्यर्थः। तथा च क्षितिजोर्द्ध्वं तथा क्रान्तिवृत्तस्य सत्त्वादुदयास्तलग्नयोः षड्राश्यन्तरं सिद्धम् लङ्कोदयैर्निरक्षदेशीयराश्युदयासुभिः। यथा त्रिप्रश्नाधिकारोक्तप्रकारेण तल्लग्नानीतं सिद्धं निष्पन्नम्। मध्यमं मध्यलग्नं तत् खमध्योपरि खस्य दृश्यांशविभागस्य मध्यं मध्यगतदक्षिणोत्तरसूत्रवृत्तानुकारप्रदेशरूपं न तु खमध्यं भास्कराचार्याभिमतं खस्वस्तिकं तल्लग्नस्य कादाचित्कत्वेन तदानुपपत्तेः। तस्योपरि स्थितं क्रान्तिवृत्तं याम्योत्तरवृत्ते यत्प्रदेशेन लग्नं तत्प्रदेशो मेषाद्यवधिभोगेन मध्यलग्नमुच्यत इति तात्पर्यार्थः" र० ना०। अथ त्रिप्रश्नाधिकारोक्तान्त्यायाः स्वरूपं स्पष्टाधिकारोक्तचरज्यायाः स्वरूपं चाह "भमध्यास्ततजयोर्मध्ये या ज्या सान्त्याभिधीयते। ज्ञेया चरदलज्या च विषुवत्क्षितिजान्तरम्" सू० सि०। "या उत्तरगोले त्रिज्या चरज्यायुतिरूपा दक्षिणगोले चरज्योनत्रिज्यारूपा त्रिप्रश्नाधिकारोक्ता। सा अन्त्या मध्ये याम्योत्तरवृत्त क्षितिजं स्वाभिमतदेशक्षितिजवृत्त तयोर्मध्येऽन्तराले अहोरात्रवृत्तस्यैकदेशप्रदेशे ज्या। उदयास्तसूत्रयाम्योत्तरसूत्रसम्पातादहोरात्रयाम्योत्तरवृत्तसम्पातावधिसूत्ररूपा ज्यासूत्रानुकारा न तु ज्या अहोरात्रक्षितिजवृत्तसम्पातद्वयसक्तोदयास्तसूत्रस्याहोरात्रवृत्तव्यासखण्डत्वाभावात्। अतएवोत्तरगोलेऽन्त्या त्रिज्याधिका सङ्गच्छते। अभिधीयते गोलज्ञैः कथ्यते। नन्वन्त्योपजीव्यचरज्यैव किंस्वरूपा यया तत्सिद्धिरित्यत आह ज्ञेयेति। "उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्यते" इति त्रिप्रश्नाधिकारोक्तेन द्वयोः शब्दयोरेकार्थवाचकत्वात् तिर्यगाधारवृत्तानुकारं स्थिरं निरक्षक्षितिजवृत्तमुन्मण्डलं क्षितिजं स्वाभिमतदेशक्षितिजवृत्तमनयोरन्तरम्। चकारो विशेषार्थकस्तुकारपरस्तेन तदन्तरालस्थिताहोरात्रवृत्तैकदेशस्यार्द्धज्यारूपस्तत्सूत्रयोरन्तरविशेषात्मकम्। तथा च क्षितिजनिरक्षदेशस्वदेशयोरुदयास्तसूत्रयोरन्तरसूत्रमपरमिति फलितार्थः। चरदलज्या तदन्तरालस्थिताहोरात्रवृत्तैकदेशरूपचरासुखण्डस्य। न तु दलमर्द्धम्। ज्या चरज्येत्यर्थः। गोलज्ञैर्ज्ञातव्या" र० ना०। ननु पूर्वश्लोक-

दृयोक्तं क्षितिजज्ञानं विना दुर्बोधमित्यतः श्लोकार्धेन क्षितिजस्वरूपमाह "कृत्वोपरि स्वकं स्थानं मध्ये क्षितिजमण्डलम्" सू॰ सि॰। भूगोले स्वकं स्वीयं स्थानं भूप्रदेशैकदेशरूपमुपरि सर्वप्रदेशेभ्य ऊर्द्ध्वं कृत्वा प्रकल्प्य मध्ये तादृशभूगोल ऊर्द्ध्वाधःखण्डसन्धौ यद्वृत्तं तत् क्षितिजवृत्तं तदनुरोधेन दृष्टान्तगोले क्षितिजवृत्तं स्थिरं संसक्तं कार्य्यमिति भाव." र॰ ना॰। अथैनं दृष्टान्तगोलं सिद्धं कृत्वास्य स्वत एव पश्चिमभ्रमो यथा भवति तथा प्रकारमाह "वस्त्रच्छन्नं बहिश्चापि लोकालोकेन वेष्टितम्। अमृतस्रावयोगेन कालभ्रमणसाधनम्" सू॰ सि॰। "बहिः गोलोपरीत्यर्थः। गोलाकारेण वस्त्रेण छन्नं छादितं दृष्टान्तगोलम्। चकाराद्वस्त्रोपरि तत्तद्वृत्तानामङ्कनं कार्यम्। लोकालोकेन वेष्टितं दृग्ग्राह्यदृग्ग्राह्यसन्धिस्थवृत्तेन क्षितिजाख्येन संसक्तम्। अपिः समुच्चये। एतेन क्षितिजं वस्त्रच्छन्नं न कार्यं किं तु वस्त्रोपरि क्षितिजं गोलसंसक्तं केनापि प्रकारेण स्थिरं यथा भवति तथा कार्य्यमिति तात्पर्यम्। अमृतस्रावयोगेनैतादृशं गोलं कृत्वा जलप्रवाहाघातेन कालभ्रमणसाधनं षष्टिनाक्षत्रघटीभिर्दृष्टान्तगोलस्य भ्रमणं यथा भवति तथा साधनं कारणं कार्य्यं स्वयंवहगोलयन्त्रं कार्य्यमित्यर्थः। एतदुक्तं भवति दृष्टान्तगोलं वस्त्रच्छन्नं कृत्वा तदाधारयष्ट्यग्रे दक्षिणोत्तरभित्तिच्छिद्रनलिकयोः क्षेप्ये। यथा यष्ट्यग्रं ध्रुवाभिमुखं स्यात्। ततो यष्ट्यृजुमार्गगतजलप्रवाहेण पूर्वाभिमुखेन तस्याधः पश्चाद्भागे घातोऽपि यथा स्यात् तथाऽस्य दर्शनार्थमेव वस्त्रच्छन्नत्वमुक्तम् अन्यथा गोलवृत्तान्तरवकाशमार्गेण जलाघातदर्शनभ्रमेण चमत्कारानुत्पत्तेः। आकाशाकारतासम्पादनार्थमपि वस्त्रच्छन्नत्वमुक्तम्। इदं वस्त्रमार्द्रं यथा न भवति तथा चिक्कणवस्तुना मषादिना लिप्तं कार्य्यम्। क्षितिजवृत्ताकारेणाधो गोलो दृश्यो यथा स्यात् तथा परिखारूपा भित्तिः कार्य्या। परन्तु दक्षिणयष्टिभागस्तत्र शिथिलो यथा भवति अन्यथा भ्रमणानुपपत्तेः। पूर्वदिक्स्थपरिखाविभागाद्बहिर्जलप्रवाहोऽदृश्यः कार्य्य इत्यादि स्वबुद्ध्यैव ज्ञेयमिति" र॰ ना॰।

सि॰शि॰ अत्र विशेषोऽभिहितो यथा

"कृत्वादौ ध्रुवयष्टिमिष्टतरुजामृज्वीं सुवृत्तां ततो यष्टीमध्यगतां विधाय शिथिलां पृथ्वीमपृथ्वीं बहिः। वंशीवाञ्छविशीर्णयष्टिकृतपञ्चारेखार्किभागां ·इदान् गोलान्तपुरतः श्लथौ च नलिकासंस्थौ खगगोलकौ" सि॰शि॰ "आदौ सारदारुमयीं यष्टिं कृत्वा तदर्द्धस्थाने तत्र प्रोताम् अपृथ्वीं सूक्ष्मां शिथिलां च पृथ्वीं विधाय तस्या बहिश्चन्द्रादीनां गोलान् यष्ट्या सह दृढान् बध्नीयात्। तेषां बहिर्नलिकासंस्थौ खगगोलाविति साधारणेनोक्तम्" प्रमि॰। इदानीं सविशेषमाह "पूर्वापरं विरचयेत् सममण्डलाख्यं याम्योत्तरं च विदिशोर्वलयद्वयं च। ऊर्द्ध्वाधरं एवमिह वृत्तचतुष्कमेतदावेष्ट्य तिर्यगपरं क्षितिजं तदर्द्धे" सि॰शि॰। "एकं पूर्वापरमन्यद्याम्योत्तरं तथा कोणवृत्तद्वयमेवं वृत्तचतुष्टयमूर्द्ध्वाधोरूपमावेष्ट्य तदर्द्धे वृत्तं क्षितिजाख्यं निवेशयेत्। अत्र याम्योत्तरवृत्त उत्तरक्षितिजादुपरि पलांशान्तर एकं ध्रुवचिह्नं कार्यम्। दक्षिणक्षितिजादधोऽन्यत्। इदानीमुन्मण्डलमाह" प्रमि॰ "पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाक्षलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" सि॰शि॰। "समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च सक्तं यद्विबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः। इदानीं विषुवन्मण्डलमाह" प्रमि॰ "पूर्वापरस्वस्तिकयोर्विलग्नं स्वस्तिकाद्दक्षिणतोऽक्षभागैः। अधश्च तैरुत्तरतोऽङ्कितं च घट्यात्म नाडीवलयं विदध्यात्" सि॰शि॰। "तयोरेव पूर्वापरसंपातयोर्विलग्नं तथा याम्योत्तरवृत्ते स्वस्तिकाद्दक्षिणतोऽधःस्वस्तिकादुत्तरतोऽक्षांशान्तरे यद्वृत्तं निबध्यते तद्विषुवद्वृत्तम्। इदानीं दृङ्मण्डलमाह" प्रमि॰। "ऊर्द्ध्वाधरस्वस्तिककीलयुग्मे प्रोतं श्लथं दृग्वलयं तदन्तः। कृत्वा परिभ्राम्य च यत्र तत्र नेयं ग्रहो गच्छति यत्र यत्र" सि॰शि॰ "स्वस्तिके चाधःस्वस्तिके चान्तःकीलकौ कृत्वा तयोः प्रोतं श्लथं दृग्वलयं कार्यम्। तत्तु पूर्ववृत्तेभ्यः किञ्चिन्न्यूनं कार्यम्। यथा खगोलान्तर्भ्रमति। यद्येक एव ग्रहगोलस्तदैकमेव दृङ्मण्डलम्। यो यो ग्रहो यत्र यत्र वर्त्तते तत्र तस्योपरिगमेव परिभ्राम्य विन्यस्य दृग्ज्याशङ्क्वादिकं दर्शनीयम्। अथ वा पृथक् पृथग्ग्रहाणां दृङ्मण्डलानि रचयेत्। तथाष्टमं वित्रिभलग्नस्य। तस्य दृक्क्षेपमण्डलम्। अथ विशेषमाह" प्रमि॰। "स्वेष तदेवाखिलखेचराणां पृथक् पृथग्वा रचयेत्तथाष्टौ। दृङ्मण्डलं वित्रिभलग्नकस्य दृक्क्षेपवृत्ताख्यमिदं वदन्ति" सि॰शि॰। व्याख्यातमेवेदम्। इदानीमेव

| | |
|---|---|
| ऐरावतवीथि | पुनर्व्वसुपुष्याश्लेषाः |
| वृषभवीथिः | मघादित्रयम् |
| गोवीथि | हस्तादित्रयम् |
| जरद्गववीथि | विशाखादित्रयम् |
| मृगवीथि | मूलादित्रयम् |
| अजवीथि | श्रवणादित्रयम् |
| दहनवीथि | पूर्वभाद्रपदादित्रयम् |

सूर्य्यादिग्रहाणां ४३२०००० वर्षात्मकयुगे राशिचक्र भ्रमणसंख्या सू॰सि॰ उक्ता यथा

| | | |
|---|---|---|
| रवेः | ४३२०००० | पूर्वगत्या |
| बुधस्य | ४३२०००० | तथा |
| शुक्रस्य | ४३२०००० | तथा |
| अदृश्यभौमशीघ्रोच्चस्य | ४३२०००० | तथा |
| अदृश्यगुरुशीघ्रोच्चस्य | ४३२०००० | तथा |
| अदृश्यशनिशीघ्रोच्चस्य | ४३२०००० | तथा |
| चन्द्रस्य | ५७७५३३३६ | तथा |
| भौमस्य | २२९६८३२ | तथा |
| अदृश्यबुधशीघ्रोच्चस्य | १७९३७०६० | तथा |
| गुरोः | ३६४२२० | तथा |
| अदृश्यशुक्रशीघ्रोच्चस्य | ७०२२३७६ | तथा |
| शनेः | १४६५६८ | तथा |
| अदृश्यचन्द्रमन्दोच्चस्य | ४८८२०२ | तथा |
| अदृश्यराहोः (पातस्य) | २३२२३८ | पश्चाद्गत्या |

एत एव सहस्रगुणिता कल्पे सूर्य्यादिभगणाः।
अत्र सि॰शि॰सूक्ष्मतया विशेष उक्तः स च २४२९पृ॰दर्शितः।

कल्पे सूर्यमन्दोच्चादिभगणसंख्या

| | सू॰सि॰ मते | सि॰शि॰ मते |
|---|---|---|
| प्राग्गते सूर्यमन्दोच्चस्य | ३८७ | ४८० |
| तथा कुजमन्दोच्चस्य | २०४ | २९२ |
| तथा बुधमन्दोच्चस्य | ३७८ | ३३२ |
| तथा जीवमन्दोच्चस्य | ९०० | ८५५ |
| तथा शुक्रमन्दोच्चस्य | ५३५ | ६५३ |
| तथा शनिमन्दोच्चस्य | ३९ | ४१ |
| पश्चाद्गते कुजपातस्य | १४ | २६७ |
| तथा बुधपातस्य | ४८८ | ५२१ |
| तथा जीवपातस्य | १७४ | ६३ |
| तथा शुक्रपातस्य | ९०३ | ८९३ |
| तथा शनिपातस्य | ६६२ | ५८४ |

कल्पादौ पातं विहाय सर्वे ग्रहाः मीनान्ते मेषादौ प्राग्गत्या स्थिताः पातस्तु विलोमगत्या तुलादौ स्थित इति भेदः। तदुत्तरकाले तु स्वस्वगत्यनुसारेण राशिकलादौ स्थितिः प्राग्गत्या पश्चाद्गत्या वा बोध्या॥ चैत्रशुक्लप्रतिपदि शनिवारे कल्पारम्भ इदानीञ्च श्वेतवराहकल्पः। तत्र च वर्त्तमानकालपर्य्यन्ताहर्गणानयनम् अहर्गणशब्दे ५७७ पृ॰ दर्शितरीत्या ज्ञेयम्। अत एव शुक्रवारे प्रवृत्तिः।

महायुगे नाक्षत्रादिदिनसंख्या सू॰सि॰ उक्ता

| | |
|---|---|
| नाक्षत्रदिनसंख्या | १५८२२३७८२८ |
| सावनदिनसंख्या | १५७७९१७८२८ |
| चान्द्रदिनरूपतिथिसंख्या | १६०३०००८० |

सूर्य्यादिबिम्बमानयोजनानि सि॰शि॰ उक्तानि

| | |
|---|---|
| रवेर्बिम्बव्यासयोजनानि | ६५२२ |
| चन्द्रमण्डलव्यासयोजनानि | ४८० |

भूमण्डलव्यासयोजनानि स्थूलानि १६०० सू॰सि॰ उक्तानि १५८१ सूक्ष्माणि सि॰शि॰ उक्तानि। योजने करमानाङ्गुलस्य षट्सप्ताष्टत्वपरिमितत्वभेदेन योजनसंख्याभेदः। अन्येषां ग्रहाणां बिम्बमानं सौरागमे बोध्यम्।

कल्पादौ ग्रहाणां भुक्ताः २४३२ पृष्ठे उक्ता ग्रहाणां सावनदिने मध्यगतिमानं तत्रैव पृष्ठे उक्तं, मेषादौ सूर्यस्य सावनमानेन भोगकालः ४२१४,३५ पृ॰ दर्शितः

दशगुर्वक्षरोच्चारणकालं प्राणं असुरिति चोच्यते ६ षड्भिः प्राणैः पलं विनाडी च, षष्ट्या पलैः नाडीदण्ड इति चोच्यते षष्ट्या दण्डैर्नाक्षत्रमहोरात्रम्। भचक्रस्य तावता कालेन भूवृत्तभ्रमणात् तस्य नाक्षत्रत्वम्। सावनदिनं सूर्योदयाद्द्वितीयसूर्य्योदयपर्य्यन्तकालरूपम् तच्च नाक्षत्रदिनात् सूर्य्यस्य स्वाक्रान्तनक्षत्रभोगादिभोगकालाधिकम्। सावनदिनमपि नाक्षत्रदिनवत् स्वपरिमाणानुसारिषष्टिदण्डात्मकमिति भेदः।

नक्षत्रचक्रस्य षष्ट्या दण्डैर्भूवृत्तभ्रमणेऽपि तस्य द्वादशराश्यात्मकतया षष्टिदण्डमध्ये द्वादशराशीनामुदयः। राश्युदयश्च स्वस्वदृष्टिगोचरकुजवृत्ते पूर्वस्यां प्राथमिकदृष्टिगोचरयोग्यस्थानसम्बन्धः। राशीनां मध्ये यस्य यत्किञ्चित्कलाद्युदयः तस्योदय इति व्यवह्रियते। राशिचक्रस्य तिर्य्यक्स्थिततया देशभेदेन दृष्टियोग्यकालतारतम्येन कालभेदेनैव मेषादीनामुदयः न तु समकालेन। तत्र निरक्षदेशेषु मेषादीनामुदयासवः सू॰सि॰उक्ता यथा

च्छति। तत्र रात्र्यारम्भे तुलायाः प्रथमार्द्धद्वितीयार्द्धं, ततो धनुरादिमञ्चकम् १५० अंशात्मक, मेषस्याद्यांशश्च क्रमेण रात्रौ दृश्यन्ते। अत एकस्यां रात्रौ सर्वराशिचक्रांशदर्शनम्। इयांस्तु विशेषः पूर्वक्षितिजवृत्तात् खमस्तकोपरिस्थाकाशभागरूपं खस्वस्तिकं यावत् ९० अंशात्मकं राशित्रयं मध्याह्नकालमध्ये क्रमेणोन्नतं भवति अपराह्णे तु तदेव ९० अंशात्मकराशित्रयं खस्वस्तिकात् पश्चिमक्षितिजवृत्ताभिमुखं सत् नतं भवति। उन्नतांशानां मध्ये यस्य यस्य स्थानापेक्षया पूर्वस्यैकनवतितमांशस्योदयः तस्य तस्य नतिर्भवति। नतांशानान्तु मध्ये यस्य स्थानापेक्षया १८१ पूर्वस्यैकाशी-त्युत्तरशततमांशस्योदयः तस्य तस्य पश्चिमक्षितिजवृत्तेनाच्छादनादस्तत्वम् भवति। राशिचक्रवत् तत्स्थानि अश्विन्यादीनि नक्षत्राणि तत्स्था भौमादिग्रहाश्च एकरात्रौ दर्शनयोग्या भवन्ति। अस्तगतास्तु सूर्य्येण सह दिन एव उदिता अपि सूर्य्यकिरणाभिभूततेजस्कत्वात् न दृश्यन्ते। कालयन्त्रे १९९ पृ० दर्शिताकाशमध्यवर्त्तिनस्तु सूर्य्यसन्निकर्षविशेषेण मन्दकिरणतया दृश्या अपि न सम्यक् दृश्यन्ते। चन्द्रस्य दर्शने तत्र विशेषः चन्द्रो हि जलमयः तस्य स्वतोदीप्तिर्नास्ति तस्य दूरस्थितजलमयस्य दृश्ययोग्यत्वात्। सूर्य्यकिरणप्रवेशेनैव दीप्त्या दर्शनयोग्यता तन्मण्डलस्य सूर्य्याश्रस्थितत्वेऽपि एकराशेरंशांशावस्थितिकालरूपामावास्यान्तकालात् क्रमेण सूर्य्यात् पूर्वगतस्य तिर्य्यग्रूपेण स्थितत्वात् तत्प्रवेशः। तत्रापि ४८० योजनात्मकचन्द्रबिम्बस्य गोलाकृततया सूर्य्याभिमुखार्द्ध एव सूर्य्यकरप्रवेशः नेतरार्द्धे। तथा च पूर्णिमान्तसमय एव तयोः सम्यक्तिर्य्यग्रूपेण स्थितत्वात्तदाभिमेव चन्द्रबिम्बार्द्धे २४० योजनात्मके तत्करसंपूर्णप्रवेशः। पूर्णिमान्तकालश्च सूर्य्याक्रान्तराश्यंशादितः भचक्रस्य १८० अंशस्थे चन्द्रे भवति। स च पञ्चदशतिथिभिर्भवति तथा च यदि १५ दिने १८० अंशगत्या करप्रवेशपूर्णकालः तदा एकेन दिनेन क इत्यनुपातेन फलम् १२ अंशाः। यदि १८० अंशगत्या २४० योजनात्मकपूरणं तदा द्वादशांशगत्या किमित्यनुपातेन फलं १६ योजनात्मकचन्द्रबिम्बार्द्धस्य पञ्चदशांशरूपकलापूरणं लभ्यते तत्र चन्द्रबिम्बार्द्धस्य पूर्वगतो पञ्चदशांशात्मक १६ योजनरूपायाः कलायाः पश्चिमस्य सूर्य्यापेक्षया तिर्य्यक्स्थित्या सूर्य्यकिरणप्रवेशानुकूलतया तत्क्रियात्वमारोप्यते। पञ्चदशकलात्मकचन्द्रमण्डलस्य तु शुक्लप्रतिपद्यपि सूर्य्याक्रान्तांशादितो विभागानुकूलक्रियारूपनिवरणस्य सत्त्वात् न केवलैकादिमात्रकलाक्रिया, तथाङ्गीकारे च केवलायास्तस्या बिम्बं विहाय गत्यसम्भवात् न तस्मिन् वरणं सम्भवति न वा दृश्यते। दृश्यते च द्वितीयादौ सूर्य्याक्रान्तांशादिभ्योबहुदूरतया चन्द्रबिम्बस्य स्थितिः। किन्तु प्रथमादि दिने प्रथमादिकलामात्रस्य पूर्वतोनिवरणस्वीकारे चन्द्रबिम्बस्य पूर्वादिकलानामेव दृश्यतापत्तिः। न च तथा दृश्यते प्रत्युत पश्चिमस्थकलानामेव क्रमशः दृष्टिर्जायते। अतः सूर्य्यकिरणप्रवेशयोग्यत्वसम्पादिका तिर्य्यक्स्थित्यनुकूलैव प्रथमादिकलाक्रियेति वस्तुस्थितिः। तत्रामावास्यान्तक्षणे सूर्य्याक्रान्तराश्यंशादिसाम्येन तदंशस्थचन्द्रस्य सर्वथाऽदर्शनम् सूर्य्येण सह दिन एव तस्योदयात्। तत्र शुक्लप्रतिपदि द्वादशांशान्तरितत्वेन तस्य सूर्य्यात् पूर्वगत्या १६ योजनात्मकचन्द्रबिम्बार्द्धकलायाः तिर्य्यक्स्थितत्वेऽपि कालयन्त्रे १९९ पृ० दर्शिताकाशमध्यवर्त्तित्वात् अस्ताशमध्यवर्त्ति भौमादीनामिव न दृष्टिः। एवं कृष्णचतुर्द्दश्यामपि द्वादशांशान्तरित्वेन पश्चात्तिर्य्यक्स्थित्यापि न दृष्टियोग्यता। शुक्लद्वितीयायान्तु सूर्य्याक्रान्तराश्यंशात् दिनद्वयेन २४ अंशान्तरितत्वेन पूर्वापेक्षया सूर्य्यादधिकतिर्य्यक्स्थित्या २४ योजनात्मकस्य चन्द्रबिम्बार्द्धपञ्चदशांशरूपकलाद्वयस्य सूर्य्यकिरणप्रवेशात् दृष्टियोग्यता। एवं तृतीयादिष्वपि क्रमेण सूर्य्यकिरणप्रवेशाधिक्यात् चंशविशेषे दीप्तिपरिवृद्धिः। शुक्ले पक्षे सूर्य्याक्रान्तराशितः द्वितादिराश्यन्तरितत्वेन स्थितस्य दिवोदितस्यापि चन्द्रबिम्बस्य सूर्य्यकिरणविशेषप्रवेशेऽपि सौरालोकेनाभिभूतत्वात् सूक्ष्मतयैव दृष्टियोग्यता। पूर्णिमायान्तु चन्द्रस्य सूर्य्याक्रान्तराशितः १८० भचक्रांशगत्या परमतिर्य्यक्स्थित्या सर्वकलासु २४० योजनात्मिकासु सूर्य्यकिरणप्रवेशः। कृष्णप्रतिपदि तु द्वादशांशान्तरितत्वेन सूर्य्यात् पश्चात् स्थित्वा तिर्य्यग्गत्यल्पतया १६ योजनरूपप्रथमकलाया न सूर्य्यकरप्रवेश इत्यतस्तस्य न दर्शनम् तत्र सूर्य्यकराप्रवेशनानुकूलतिर्य्यग्गतिभेद एव कृष्णपक्षीयकलाक्रियेति भेदः। अधिकमिन्दुयन्त्रे ९२० पृ० उक्तम्।

तिथिकरणयोगनक्षत्रवारेशादिस्वरूपादिकं तत्तच्छब्दे दृश्यमिति दिक्।

खगाण्ड पु० खे आकाशे गच्छति गम–ड ष्ठो० षस्य द। (खागडा) ख्याते द्रव्यभेदे रत्नमा०। [पूर्णकुलस्य हेमच०।

खगेन्द्र पु० खगपति खन–क्विप् कीर्य्यते क–अप् कप्पधा०।

**खच** पूतौ उत्पत्तौ च अतिक्रान्तोत्पत्तौ सि॰कौ॰ क्र्या॰ प॰अक॰सेट्। खच्ञाति अखचीत्-अखाचीत्। मध-व्यत्यासात् "खचट्टहसावसीडम्" कथास॰।

**खच** बन्धने अद॰ चुरा॰ उभ॰ सक॰ सेट्। खचयति ते अचखचत् त। "मकुन्तनीडखचितं बिभ्रज्जटामण्डलम्" शकु॰ "रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः" मेघदू॰ उद्+खच बन्धने। "अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव" रघु॰। "उत्खचिता खच ध-चिता" मल्लिना॰।

**खचमस** पु॰ खे आकाशे चम्यतेऽसौ चम-कसच्। चन्द्रे त्रिका॰ "एष सोमोराजा देवानामन्नं देवा एनं भक्षयन्तीति" श्रुतेः स्वर्गमार्गाभिभक्षणादस्य तथात्वम्।

**खचर** पु॰ खे आकाशे चरति चर-ट। १मेघे शब्दच॰। २वायौ ३सूर्य्ये च। ४राक्षसे पु॰स्त्री मेदि॰स्त्रियां ङीप्। "खचरस्य सुतस्य सुतः खचरः खचरस्य पिता न हि खचरः। खचरस्य सुतेन हतः खचरः खचरी परिरोदिति हा खचर!" इति शब्दकल्पद्रुमे प्रोक्तपद्यीयतया लिखितं तत्तु घटोत्कचवधपर्वण्येव सम्भवदपि तत्र न दृश्यते। तस्य श्लोकस्यायमर्थः खचरस्य वायोः सुतस्य भीमस्य सुतः पुत्रः खचरः घटोत्कचः। खचरस्य राक्षसस्य तस्य पिता भीमः न खचरः राक्षसः। खचरः घटोत्कचः खचरस्य सूर्य्यस्य सुतेन कर्णेन हतः। खचरी हिडम्बा तन्माता राक्षसी हा खचरेत्युक्त्वा रोदितीति। ५आकाशगामिमात्रे देवपक्षिशरपक्षादौ त्रि॰ स्त्रियां ङीप्। "प्रमोदितकूर्पतिभूमिराकाशं खचरामरा"। सङ्कस्यादौ पाठभन्न। अत्र खचरशब्देन पक्षा उच्यन्ते अमरपवनयोः पृथङ्निर्देशात्। "खचरनगरकल्पं मानयन् पाण्डवानाम्" भा॰द्रो॰७अ॰। "पुर सुरमथोवाच खचरं सुमहाप्रभम्" भा॰व॰ १७२ अ॰। खपुरशब्दे विवृतिः। "जितकाशिनच खचरास्तिरिताव महारथा" भा॰व॰२४१ अ॰। खचरा गन्धर्वाः। ६ ह॰सं॰ १४ अ॰ कूर्मविभागे उत्तरस्यामुक्ते देशभेदे पु॰ब॰व॰। "उत्तरतः कैलासः" इत्युपक्रमे "क्षेमतास्वराजन्यखचरगव्याश्च" "खचरो रक्तताले स्यात् गुरुरादौ लघुस्तथा। शान्तोऽथ वा हास्यरसे भवेदेष दयाधरः" संगीतदा॰ उक्ते ७गीतभेदे पु॰।

**खचारिन्** त्रि॰ खे आकाशे चरति-चर-णिनि। १आकाशगामिनि पक्षिसूर्य्यादौ स्त्रियां ङीप्। २कार्त्तिकेये पु॰ "खचारी ब्रह्मचारी च शूरः शरवणोद्भवः" भा॰व॰१२३अ॰

**खचित** त्रि॰ खच-क्त। १संयुक्ते त्रिका॰ २व्याप्ते शब्दच॰। ३स्फुरिते जटाध॰। [खचि कुत्स॰ खजयति।॰

**खज** मन्थे भा॰पर॰सक॰सेट्। खजति अखा(ख)जीत् घटा॰

**खञ्ज** गतिवैकल्ये भ्वा॰ इदित् पर॰ अक॰ सेट्। खञ्जति अखञ्जीत्। खञ्जः। पङ्गुता चैकैकपादविकलता।

**खज** पु॰ खजति मथ्नाति खज-अच्। १मन्थानदण्डे। "पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः। ग्राम्यं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः" भा॰शा॰ २१४ अ॰। "दध्नः सौम्य! मथ्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तत्सर्पिर्भवति" छा॰उ॰। "वायुसंहितेन खजेन मथ्यमानस्य दध्नः" भा॰या॰। "खजोमन्थानः तेन मथ्यमानस्य दध्नः" व्याख॰ (हाता) २दर्व्याम् भरतः ३युद्धे च तत्र शत्रोर्मर्दनात् तथात्वं "अवर्ण युध्म खजकृत् पुरन्दर!" ऋ॰८।१।७, "खजकृत् युद्धकर्त्तः!" भा॰ स्वार्थे क। खजक। मन्थानदण्डे हेम॰। [अमरटी॰।

**खजप** न॰ खज्यते मथ्यते खज-कर्म्मणि कपन्। घृते उ-

**खजल** न॰ खे आकाशे संस्थितं, खात् पतितं वा जलं शाक॰ त॰। १नीहारे त्रिका॰ २आकाशपतिते जले च "विषांशु चरन्ति यत्र सरोरमा वियति कीटकुलाय। तद्विपजुष्टमपेय खजलमगस्त्योदयात् पूर्वम्" राजवल्लभः।

**खजा** स्त्री खज-घटा॰ भावे अङ्। १मन्थने (मन्थोता) २मारणे हेम॰। कर्त्तरि अच् टाप्। चमसाकारे ३पाकसाधनद्रव्ये मेदि॰। "खजाश्च दर्वीश्च करेण धारयन्" भा॰ वि॰ ७अ॰।

**खजाक** पुं स्त्री खज-आकन्। १पक्षिणि उज्ज्वलद॰ खजा-स्वार्थे क। २चमसाकारे पाकसाधने द्रव्ये स्त्री अमर।

**खजिका** स्त्री खजेव स्वार्थे क वा अत इत्वम्। खजायां चमसाकारे पाकसाधनभेदे शब्दच॰।

**खजित्** पु॰ खेन शून्यभावनया जयति संसारं जि-क्विप्। बुद्धभेदे स हि "सर्वं शून्यं शून्यमिति" भावनया जगतां स्थिरत्वनिराकरणेन संसारं जयतीति" तस्य तथात्वं बुद्धशब्दे विवृतिः। [राजनि॰।

**खज्योतिस्** पु॰ खे आकाशे ज्योतिरस्य। खद्योते कीटभेदे

**खञ्ज** त्रि॰ खजि गतिवैकल्ये अच्। (खोंडा) एकपाद-विकले। तस्य लक्षणादिकं भावप्र॰ उक्तं यथा "वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद् यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात्। सक्थ्न कट्यादि-

गुल्फसत्र, कण्डरा कथाम्नायुम आक्षिपेत् गमनादौ कम्पयेत् । वधात् गमनादिक्रियाघातात्" । तथाच एक पादविकलत्वे खञ्जः द्विपादविकलत्वे पङ्गुरिति भेदः । तस्यैव भेदः कलापखञ्ज तल्लक्षणं तत्रोक्तं यथा "कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते । कलापखञ्जं विद्यान्मुक्तसन्धिप्रबन्धनम् । गमनारम्भे कम्पते । एतत्र खञ्जादयमेव भेदः कलापखञ्ज इति शास्त्रे रूढा संज्ञा न तु यौगिकी"। तस्य कर्मविशेषविपाकत्वम् शातातपेनोक्तं यथा "हरणे निहते खञ्जः मृगाखेतु विपादकः"। विपादकः पादद्वयगतिशून्य पङ्गुरित्यर्थः ।"काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम्" मनु तस्य दैवपैत्रकर्मकरणकालेऽपसार्य्यतामाह" मनु "खञ्जो वा यदि काणो दातुः प्रेष्योऽपि वा भवेत् । हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः" जन्मतः खञ्जत्वे सुश्रुतेन कारणमुक्तं यथा "दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति" । स्वार्थे क खञ्जक । खञ्जक तत्रार्थे हेम० । अस्य कडारादिपाठात् वा पूर्वनिपात खञ्जजङ्घः कलापखञ्ज इत्यादि ।

**खञ्जकारि** पु० खञ्जकसारि (खेसारि) धान्यभेदे राजनि० तत्सेवनात् खञ्जत्वं गच्छतीति तस्य तथात्वम् ।

**खञ्जखेट** पुंस्त्री खञ्ज इव खेटति खिट-गतौ अच् । खञ्जन विहगे शब्दमा० । स्त्रियां जातित्वात् ङीष् ।

**खञ्जखेल** पुंस्त्री खञ्ज इव खेलति खेल-अच् । खञ्जनखगे स्त्रियां जातित्वात् ङीष् ।

**खञ्जन** न० खजि-भावे ल्युट् । १विकलगतौ मेदि० कर्त्तरि ल्यु । २खनामख्याते पक्षिभेदे पुंस्त्री० स्त्रियां ङीष् । स्वार्थे क । तत्रार्थे । तस्य दर्शने शुभाशुभफलादुक्तं वृ०सं० ४५ अ० यथा "खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे । प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि । स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः । आ कण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम् । कृष्णो गलेऽस्य बिन्दुः सितकरटान्तः स रिक्तकृद्रिक्तः । पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः । अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु । करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु । गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे । हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु । हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु । दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते । पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते । शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः । गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः । पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु । महिषोष्ट्रगर्दभास्थिश्मशानगृहकोणशर्करादिस्थः । प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः । पक्षौ धुन्वन् शुभः शुभं पिबन् वारि निम्नगासंस्थः । सूर्योदयेऽथो शस्तो नेष्टफलः खञ्जनोऽस्तमये । नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् । पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति । तस्मिन्निधिर्भवति मैथुनमेति यस्मिन् यस्मिंस्तु छर्दयति तत्र तलेऽस्ति काचः । अङ्गारमस्य पदिशन्ति पुरीषणेऽस्य तत्कौतुकापनयनाय खनेद्धरित्रीम् । नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले निदध्यात् । सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दितमेवमेति वृद्धिम् । अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः । न नृपतिरशुभं समाप्नुयात् न यदि दिनानि च सप्त मांसभुक् । आ वर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषे । दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्तादिभिश्चोह्यम्" ति०त० । "कृत्वा नीराजनं राजा बलहर्षैर्यथाबलम् । शोभनं खञ्जनं पश्येत् जलगोगोष्ठसंश्रयी । (तत्रातिमन्त्र) "नीलग्रीव! शुभग्रीव! सर्वकामफलप्रद! । पृथिव्यामवतीर्णोऽसि खञ्जरीट! नमोऽस्तु ते"। वसन्तराजे "दृष्टो दिनेऽगस्त्यमुनौ सुदेशे सुचेष्टितः खञ्जनकोविदध्यात्" इत्युपक्रम्य "स योगयुक्तोऽतिनिपुणकस्तमदृश्यतामेति शिखोद्गमेन । स दृश्यते प्रावृषि निर्गतायां स खञ्जनाश्चर्य्यमयो नमस्ते" । एतद्वचनात् यदा शिरसि शिखोद्गमस्तदा खञ्जनो न दृश्यते अगस्त्योदयानन्तर शिखाविगमात् पुनर्दृश्यते । दर्शनफलम् "अब्जेषु गोषु गजवाजिमहोरगेषु । राज्यप्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खञ्जरीटः" । वर्षकृत्ये "वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशे भयं, याम्ये त्वग्निभयं सुरद्विषि कलिः क्षोभः समुद्राश्रये । वायव्यां वरवस्त्रगन्धसहितं दिव्याङ्गना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने" ।

"अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्" नैष० "शुभनृकृते खञ्जनगञ्जनाक्षि! शिरोमदीप यदि यासि यातु" "एकोऽपि खञ्जनवरोऽनलिनीदलस्थ" इति च उद्भट०। तत शिवादि० अपत्यादौ अण्। खाञ्जन तदपत्यादौ

**खञ्जनरत** न० खञ्जनस्येव गोप्यं रतम्। यतीनां गोप्ये मैथुने हारा०।

**खञ्जना** स्त्री खञ्जन इवाचरति खञ्जन+इव क्विप्। खञ्जनाकारायां पक्षिण्याम् सर्प्याम्" मेदि०।

**खञ्जनाकृति** पुंस्त्री खञ्जनस्येवाकृतिरस्य। १खञ्जनाकारे पक्षिभेदे शब्दच०। ६त०। २खञ्जनस्याकारे स्त्री।

**खञ्जनासन** न० "खञ्जनासनमाख्यास्ये यत्कृत्वा सुस्थिरो भवेत्। पृष्ठे पादद्वयं कृत्वा हस्तौ भूमौ प्रसारयेत्। भूमौ हस्तद्वयं न्यस्य। पातयित्वाऽनिलं पिबेत्। पृष्ठे पादद्वयं बद्ध्वा खञ्जनेन जयी भवेत्" रुद्रयामलोक्ते आसनभेदे।

**खञ्जनिका** स्त्री खञ्जनस्येवाकारोऽस्त्यस्याः ठन्। खञ्जनाकारे पक्षिभेदे त्रिका०।

**खञ्जरीट** पुंस्त्री खञ्ज इव ऋच्छति ऋ-गतौ वा० कीटन्। खञ्जनविहगे अमर० स्त्रियां जातित्वात् ङीष्।

**खञ्जा** स्त्री "शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम्। सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततिभवति शिखा। विनिमयविनिहितशकलयुगलकलितपदविततिविरचितगुणनिचया। श्रुतिसुखकृदियमपि जगति जि जघिर उपगतवति सति भवति खञ्जा। छ०रत्नाकरोक्ते मात्रावृत्तभेदे अस्यार्थः "शिखिभिस्त्रिभिर्गुणिता दश लघवस्तैः त्रिंशल्लघुभिरित्यर्थः। रचितम्। अपगतं लघुयुगलं यस्मात् तत् अष्टाविंशतिलघुकमित्यर्थः एवं आद्यखण्डमित्येवं रूपम् अपरं द्वितीयं शकलमखिलं सम्पूर्णलघुरूपमित्यर्थः। अन्ते गुरुवर्णेन सहितं शकलयुगलं खण्डद्वयं यस्य तथाभूतं शिखा नाम छन्दः। तस्याएवार्द्धविनिमयेन जि जघिरः उपगतवति सति खञ्जा खञ्जा नाम छन्दः।

**खञ्जार** पु० खजि-आरन् खञ्ज इव ऋच्छति वा ऋ-अच् वा। ऋषिभेदे तस्य गोत्रापत्यम् अश्वादि० फञ्। खाञ्जारायण तद्गोत्रापत्ये पुंस्त्री०। ततः शिवा० अपत्यादौ अण्। खाञ्जार तदपत्यादौ त्रि०।

**खञ्जाल** पु० खजि-कालन् खञ्ज इवालति अल-अच् वा। ऋषिभेदे तत गोत्रापत्ये अश्वा० फञ्। खाञ्जालायन तद्गोत्रापत्ये पुंस्त्री०।

**खट** काङ्क्षायां भ्वा०पर०सक० सेट्। खटति अखाटीत्-अखटीत् चखाट। प्रनिखटति।

**खट** पु० खट-अच्। १अन्धकूपे, २कफे, ३टङ्के, ४घासभेदे च मेदि०। ५तृणे हेमच०। ६लाङ्गले ७कतृणे इत्यजयपाल।

**खटक** पु० खट वा० वुन्। १नागवीटे २घटके त्रिका०। ३कुञ्चितपाणौ शब्दमाला०। [शब्दचि०।

**खटकामुख** पु० खटकस्येवामुखमस्य। शराकर्षणमुद्राभेदे

**खटिक** पु० खट-अस्त्यस्य ठन्। कुञ्चितपाणौ हेम०।

**खटिका** स्त्री खट-अच् टाप् संज्ञायां कन् अत इत्त्वम् वा। १लेखनसाधनद्रव्यभेदे (खडी) २कर्णच्छिद्रे ३गौरखे (वेणारमूल) विश्व०। "खटिका चिनोति" नैष०। खटिकागुणाश्च भावप्र० उक्ता यथा
"खटिका कठिनी चापि लेखनी च निगद्यते। खटिकादाहजिच्छीता मधुरा विषशोथजित्। लेपादेतद्गुणा प्रोक्ता भक्षिता मृत्तिकासमा। खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्त्तिते"।

**खटिनी** स्त्री खट-वा० इनि ङीप्। लेखनद्रव्ये (खडी)। राजनि०। "न पतति खटिनी भसभूसा यस्य" इत्युद्भट०।

**खटी** स्त्री खट-अच् गौरा० ङीष्। (खडी) लेखनसाधनद्रव्यभेदे त्रिका०।

**खट्ट** वृतौ चुरा०उभ०सक० सेट्। खट्टयति ते अचखट्टत् त।

**खट्टन** त्रि० खट्ट-कर्मणि ल्युट्। खर्वे (खाट) हेमच० खर्वेणैव वस्तुना तस्यावरणात् तथात्वम्।

**खट्टा** स्त्री खट्ट कर्मणि अच्। खट्वायां शब्दच०। स्वार्थे क संज्ञायां कन् वा अत इत्त्वम्। तत्रार्थे खट्टाभेदे त्रि० शवयाने त्रिका० अभाषितपुंस्कत्वात् वाऽत इत्त्वम् इत्त्वाभावे आत्, ह्रस्वो वा। खट्टका खट्टाकाप्यत्रार्थे। ह्रस्वार्थे कन्। क्षुद्रखट्टायाम्।

**खट्टाश** पुंस्त्री० खट्ट सन् अश्नुते अश व्याप्तौ अच्। (खाटाश) इति वनजन्तुभेदे शब्दरत्ना० स्त्रियां ङीष्।

**खट्टास** पुंस्त्री खट्ट इवासति दीप्यते अस-दीप्तौ अच्। खट्टाशे शब्दरत्ना०।

**खट्टि** पु० खट्ट-इन्। शवशय्यायाम् त्रिका०।

**खट्टिक** त्रि० खट्टनमावरणं खट्ट स शिल्पत्वेनास्त्यस्य ठन्। जालादिना पक्षिमारके (पाखिमारा) शाकुनिके शब्दमा०।

**खट्टेरक** त्रि० खट्ट-वा० कर्मणि एरक। खर्वे शब्दमाला।

**खट्वा** स्त्री खट्यते निद्रालुभिः खट-आकाङ्क्षायाम् क्वन्।

कर्मणा प्रोक्तः । आयामत्र्यंशसमः पादोच्छ्रायः सकुक्षिशिरा । यः सर्वः श्रीपर्ण्या पर्यङ्को निर्मितः स धनदाता । असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः । यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः । चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् । यः पद्मकपर्यङ्कः स दीर्घमायुः श्रियं श्रुतं वित्तम् । कुरुते, शालेन कृतं कल्याणं शाकरचितश्च । केवलचन्दनरचितं काञ्चनगुप्तं विचित्ररत्नयुतम् । अध्यासनपर्यङ्कं विबुधैरपि पूज्यते स्वर्गात । अन्येन समायुक्ता न तिन्दुकी शिंशपा च शुभफलदा । न श्रीपर्णी न च देवदारुवृक्षो न चाप्यसनः । शुभदौ तु शाकशालौ परस्परं संयुतौ पृथक् चैव । तद्वत् पृथक् प्रशस्तौ संहितौ च हरिद्रककदम्बौ । सर्वः स्पन्दनरचितो न शुभः प्राणान् हिनस्ति चाम्रकृतः । असनोऽन्यदारुसहितः क्षिप्रं दोषान् करोति बहून् । आम्रस्पन्दनचन्दनवृक्षाणां स्पन्दनाच्छुभाः पादाः । फलतरुणा शयनासनमिष्टफलं भवति सर्वेषाम् । गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगे । कार्योऽलङ्कारविधिर्गजदन्तेन प्रशस्तेन । दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् । श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः । लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः । स्त्रीरूपे स्वविनाशो भृङ्गारेऽभ्युदिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन । कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशत्वम् । गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः । पाशेऽथ वा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः । अशुभशुभच्छेदा ये शयनेष्वपि ते तथा फलदाः । ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः । अपसव्येऽधोदिगग्रे भवति भयं भूतसंजनितम् । एकेनाग्राङ्घ्रिरसा भवति हि पादेन पादवैकल्यम् । द्वाभ्यां न जीर्यतेऽन्नं त्रिचतुर्भिः क्लेशवधबन्धाः । सुषिरेऽथ वा विवर्णे ग्रन्थौ पादस्य शीर्षगे व्याधिः । पादे कुम्भो यश्च ग्रन्थौ तस्मिन्नुदररोगः । कुम्भाधस्ताज्जङ्घा तत्र कृतो जङ्घयोः करोति भयम् । तस्याश्चाधारोऽधः खुरसञ्ज्ञस्तत्र कृत । खुरदेशे यो ग्रन्थिः खुरिणां पीडा-

करः स निर्दिष्टः । ईषाशीर्षण्ययोस्त्रिभागसंस्थो भवेच्च शुभः । निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं च । कालकमन्यद्धुन्धुकमिति कथितश्छिद्रसङ्क्षेपः । घटवत् सुषिरं मध्ये सङ्कटमास्ये च निष्कुटं छिद्रम् । निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् । शूकरनयनं विषमं विवर्णमध्यर्धपर्वदीर्घं च । वामावर्त्तं भिन्नं पर्वमितं वत्सनाभाख्यम् । कालकसञ्ज्ञं कृष्णं धुन्धुकमिति यद्भवेद्विनिर्भिन्नम् । दारुसवर्णं छिद्रं न तथा पापं समुद्दिष्टम् । निष्कुटसञ्ज्ञे द्रव्यक्षयस्तु कोलेक्षणे कुलध्वंसः । शस्त्रभयं सूकरके रोगभयं वत्सनाभाख्ये । कालकधुन्धुकसञ्ज्ञं कीटैर्विद्धं च न शुभदं छिद्रम् । सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु । एकद्रुमेण धन्यं द्रुमद्वयनिर्मितं च धन्यतरम् । त्रिभिरात्मजवृद्धिकरं चतुर्भिरर्थो यशश्चाग्र्यम् । पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते । षट्सप्ताष्टतरूणां काष्ठैर्घटिते कुलविनाशः" वृ०स० ।

सुश्रुतोक्तेषु चतुर्दशसु व्रणबन्धविशेषेषु खट्वाकारे २बन्धभेदे "तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः" तस्य बन्धस्योपयोगस्तत्रैवोक्तो यथा "हनुशङ्खगण्डेषु खट्वाम्"

**खट्वाका** स्त्री खट्वा—स्वार्थे क "आदाचार्य्याणाम्" पा० वा आत्व । १खट्वायाम् । अल्पार्थे कन् । २स्वल्पखट्वायाम् । ह्रस्वाभावे वा ह्रस्वः पक्षेऽतदन्त्यम् । खट्वका खट्विकाप्यत्र ।

**खट्वाङ्ग** न० ६ब० । (खाटेरखुर) १खट्वापादभेदे तदाकारे २शिवस्यास्त्रभेदे । "खट्वाङ्गवरधारक" शिवस्तव । "खट्वाङ्गे पट्टिशे शूलैर्लाङ्गलैर्मुसलैरलम्" काशीख० ३सूर्य्यवंश्ये नृपभेदे पु० । "सुतः पञ्चजनादासीद्गुणानिति विश्रुतः । दिलीपस्तत्सुतस्तस्य खट्वाङ्ग इति विश्रुत" हरिवं० १५अ० । भागवते तु ९।९।२२ श्लो० "ततो दशरथस्तस्मात् पुत्र ऐडविडिस्ततः । राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्त्यभूत्" इत्यनेन अन्यपुत्रता तस्याभिहिता कल्पभेदादविरोध । प्रायश्चित्तीयधार्य्ये खट्वाङ्गाकृतौ ४पात्रभेदे न० "एककालं तु भुञ्जीत चरन् भैक्ष्यं स्वकर्मकृत् । कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोद्यत" भा० शा० ३५ अ० । "खट्वाङ्गी चीरवासाश्च" मनुः ।

**खट्वाङ्गधर** पु० खट्वाङ्गं धरति धृ—अच् । शिवे । भृ—क्विप । खट्वाङ्गभृदप्यत्रार्थे । २खट्वाङ्गधारिणि त्रि० ।

खट्वाङ्गमुद्रा स्त्री तन्त्रोक्ते मुद्राभेदे तल्लक्षण यथा "पञ्चाङ्गुल्योर्दक्षिणस्य मिलिताग्रं समुन्नताः। खट्वाङ्गमुद्रा-विख्याता देवस्य सुप्रिया मता" रुद्रया०।

खट्वाङ्गवन न० नित्यक०। वनभेदे "अथ हि खट्वाङ्गवने नारदेन समागत" हरिवं० ७८ अ०।

खट्वारूढ त्रि० खट्वा+आरूढ अलौकिकविग्रहे द्वितीयान्तस्य-क्तान्तेन नित्यसमासः निन्दायाम्। जाल्मे सि०कौ०। मयूरादि० अन्तोदात्ततास्य। "इतस्ततः पातेसमितं खट्वा-रूढं प्रमादवान्" भट्टिः। "खट्वारूढ उत्पथप्रस्थितः" जयमङ्गला। तेन २तदर्थे च।

खड मन्थने भञ्जने च भ्वा०आत्म० इदित् सक० सेट्। खण्डते अखण्डिष्ट। चखण्डे खण्डन खण्ड खण्डितः।

खड भेदने चुरा०उभ०सक० सेट्। खाडयति ते अचीखडत् त खाडयाम् बभूव आस चकार चक्रे। खण्डयन्।

खड न० खड अच्। १तृणभेदे (खड) २पानकभेदे, पु० मेदि० तच्च पानकं वैद्यके प्रसिद्धम् तत्करणप्रकारः वैद्यान्तरेय यथाह सुश्रुतः "खडा खडयवागूश्च खाडवाः पानकानि च। एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः" स च भोजनकाले प्रस्तरमाले पेयो यथोक्तं सुश्रुते "सूक्तानि च खडांश्चैव सर्वगैलेषु दापयेत्"। खड+चातुरर्थ्यामनद्यामपि मतुप् मस्य व। खडवत् खडसन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। ३ऋषिभेदे पु० तस्य गोत्रापत्यम् अश्वा० फञ्। खाडायन तद्गोत्रापत्ये पुंस्त्री०

खडक न० खड+सञ्ज्ञायां कन्। स्थाणौ "स्थाणु खडकमुच्यते" कात्या०श्रौ० १४।३।१२ सू० व्याख्यायां कर्कः।

खडक्की स्त्री खडक् इत्यव्यक्तशब्दं करोति कृ-बा०ड गौ० ङीष्। पक्षद्वारे (खिड्कि)। स्वार्थे क ह्रस्व। खडक्किका तदर्थे हारा०।

खडतु पु० खड+अतु। वाहजज्ञातरणे सञ्चिप्रसार०।

खडयवागू स्त्री खडपक्का यवागूः। पानकभेदे खडशब्दे विवृतिः "खडयूषयवागूषु पिप्पल्याद्यैश्च योजयेत्" सुश्रुत०

खडयूष पु० "तक्र कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः। सुपक्व खडयूषोऽयमथ काम्बलिकोऽपरः" चक्रदत्तोक्ते पक्वतक्रभेदे।

खडिक त्रि० खडमस्त्यस्य ठन्। खडयुते। तत सुतङ्गमा० चातुरर्थ्याम् इञ्। खाडिकि तत्सन्निकृष्टदेशादौ त्रि०।

खडी स्त्री खड-अच् गौ० ङीष्। खटिकायाम् शब्दच०। स्वार्थे क ह्रस्व। खडिका तदर्थे।

खडु स्त्री खड-कु। मृतशय्यायां संक्षिप्तसार०।

खड्डूर त्रि० खडमस्त्यस्य वा० ऊरच्। खडयुक्ते। "खड्डूरे अधिचङ्क्रमा खर्विकां खर्ववासिनीम्" अथर्व० ११।६।१६। ततः शुभ्रा० अपत्ये ढक्। खाड्डूरेय तदपत्ये पुंस्त्री०

खडोन्मत्ता स्त्री खडेन उन्मत्ता। खडस्पर्शेनोन्मत्तायाम्। ततः शुभ्रा० अपत्ये ढक्। खाडोन्मत्तेय तदपत्ये पुंस्त्री०।

खड्ग खड-भेदने गन्। अभिधाने ५।१।पृ० दर्शितलक्षणके लौहादिमये १प्रहरणास्त्रभेदे। "न हि खड्गो विजानाति कर्मकारं स्वकारणम्" उद्भट (खाण्) इति ख्याते २पदार्थे ३गण्डकशृङ्गे ४गण्डके (गण्डार) पुंस्त्री०। ५बुद्धभेदे पु० मेदि० ६चोरनामगन्धद्रव्ये पु० राजनि०। खड्गस्योत्पत्तिः शब्दकल्पद्रुमे ब्रह्मपुराणोक्ता उक्ता तत्प्रमाणस्य मूलमृग्यम्। तस्य चालने गतिभेदस्त्रयोदशविध महाभारते उक्तो यथा "मण्डलाकारतः खड्गभ्रामण भ्रान्त १मुच्यते। तदेव बाहुमुद्यम्य तदुद्भ्रान्त २मीरितम्। भ्रामणं स्वस्य परितः खड्गस्याविद्ध ३मुच्यते। परप्रयुक्तशस्त्रस्य वारणार्थमिदं मतम्। शत्रोराक्रमणार्थाय गमनन्त्वाप्लुत ४मतम्। खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृत ५मतम्। वञ्चयित्वा रिपौ शस्त्रपातनं गदितं सृतम्६। परिवृत्तं ७भवेच्छत्रोर्वामदक्षिणतो गतिः। पश्चात् यदापसरणं निवृत्त ८मसम्पद्यते। अन्योन्य ताडनं प्राहुः सम्पात९मुभयोरपि। आधिक्यमात्मनो यत् तत्समुदीर्ण१०मुदीरितम्। अङ्गप्रत्यङ्गदेशेषु भ्रामण भारत ११स्मृतम्। शिक्षितखड्गसञ्चारदर्शनं कौशिक१२ स्मृतम्। निलीय चर्मनिक्षेपो यदसौ सात्वत १३हि तत्" वह्निपुराणे खड्गचर्मयुद्धे द्वात्रिंशत्स्थानान्युक्तानि यथा "भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विसृतं सृतम्। सम्पात समुदीर्णञ्च श्येनपात-मथाकुलम्। उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च। अनालक्षितविस्फोटौ करालेन्द्रमहामुखौ। विकरालनिपातौ च विभीषणभयानकौ। समग्रार्द्धतृतीयांशपादपादार्द्धधारणम्। प्रत्यालीढमथालीढं वराहं लुलितं तथा। इति द्वात्रिंशतो ज्ञेया खड्गचर्मविधौ रणे"। गण्डकरूपखड्गस्य पञ्चनखत्वेऽपि भक्ष्यतामाह मनुः "श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुः"। अस्य मांसस्य श्राद्धे प्रशंसामाह मनुः "कालशाकं महाशल्काः खड्गलौहामिषं मधु। आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः"। "प्रायोविषाणपरिमोक्षलघूत्तमाङ्गान् खड्गां-

चकार नृपतिर्निशितैः क्षुरप्रैः" रघुवंशमहाकाव्य ।

**खड्गधेनु** स्त्री खड्गिनी धेनुः जातित्वात् युवतिपोटेत्यादि कर्म० पूर्वनिपातः पुंवच्च । गण्डकजातिधेन्वाम् । "खड्गधेनुकानां लाभपरिभ्रष्टपोतान्वेषिणीनाम्" काद० ।

**खड्गिन्** पुंस्त्री खड्गं तदाकारं शृङ्गमस्त्यस्य इनि । १गण्डके "एतत् खड्गिकुलक्रीडितम्" काद० । स च चन्तुते आनूपवर्गे कूलचरतयोक्तः यथा "तत्र गजगवयमहिषरुरुचमरसृमर रोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्र-न्यङ्कुरण्यगवयप्रभृतय कूलचराः पशवः" । तन्मांसगुणास्तत्रोक्ता यथा "कफघ्नं खड्गिपिशितं कषायमनिलापहम् । पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् । स्त्रियां ङीप् २असिधारके त्रि० । ३मञ्जुघोषे पु० शब्दच० । ४महादेवे पु० ५"असनी शतघ्नी खड्गी पट्टिशी चायुधी महान्" भा० आनु० १७ शिवसहस्रनामोक्तौ [खड्गाकारपत्रके लताभेदे शब्दच० ।

**खड्गिमार** पु० खड्गिनं मारयति मृ-णिच्-अण् उप०स० ।

**खड्गीक** न० खड्गो तत्कर्मणि कुशलः वा०ईक । दात्रे शब्दरत्ना० । तस्य खड्गकार्य्यकारित्वात् तथात्वम् ।

**खण्ड** पु० खडि-घञ् । १भेदे "खण्डं खण्ड ययुर्धरा" देवीमाहात्म्यम् । २निष्कपणे, ३इक्षुविकारभेदे (खाँड) न० राजनि० । खण्डगुणाः इक्षुशब्दे ८१० पृ० उक्ताः । "षष्टखण्डमखण्डखाद्यमहजलोदरमे" नैष० । कर्मणि घञ् । ६एकदेशे पु० न० अमरः । "ताराधिपखण्डधारी" कुमा० काशीखण्डः केदारखण्ड इत्यादि । ७मणिदोषभेदे मेदि० । कर्मणि घञ् । ८खण्डिते त्रि० "खण्डाशौचविपिलुप्ततौ" स्मृतिः "न खण्डे खण्डमिष्यते" स्मृतिः तत पृथ्वा० भावे इमनिच् । खण्डिमन् खण्डभावे पु० । उत्करा० चतुरर्थ्यां छ । खण्डीय खण्डसन्निकृष्टदेशादौ त्रि० ।

**खण्डक** पु० खण्डेन निर्वृत्तादि खण्ड+ऋश्या० क । खण्डनिर्मिते सिताखण्डे शर्कराभेदे राजनि० । खण्डयति खडि-ण्वुल् । २छेदके त्रि० । [त्रिका० ।

**खण्डकथा** स्त्री० खण्डः खण्डिता कथा । स्वल्पकथायाम्

**खण्डकर्ण** पु० खण्ड इव कर्णः कन्दो यस्य । (शकरकन्द) आलुभेदे । हेमच० ।

**खण्डकाद्यलौह** पु० चक्रदत्तोक्ते खण्डपकलौहभेदरूपे औषधभेदे तल्लक्षणं यथा

"शतावरीच्छिन्नरुहावृषमुण्डितिकावलाः । तालमूली च गायत्री त्रिफलायास्त्वचस्तथा । भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च । जलद्रोणे विपक्तव्यमष्टभागावशेषितम् । दिव्यौषधहतस्यापि माक्षिकेण हतस्य वा । पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् । खण्डतुल्यं घृतं देयं पलषोडशिकं बुधैः । पचेत् ताम्रमये पात्रे गुडपाको यथामतम् । प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम् । शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम् । त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम् । चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् । यथाकालं प्रयुञ्जीत विडालपदकं ततः । गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः । गुरुवृष्यान्नपानानि स्निग्धं मांसादिबृंहणम् । रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः । वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम् । श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा । आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च । चाक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् । आरोग्यपुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम् । श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् । छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः । कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् । नारिकेलपयःपानं सुनिषण्णकवास्तुकम् । शुष्कमूलकजीराख्यं पटोलं बृहतीफलम् । फलं वार्त्ताकुपक्वाम्रं खर्जूरं स्वादु दाडिमम् । ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम् । वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता । लौहान्तरवदत्रापि पुटनादिक्रियेष्यते" । [आलुभेदे शब्दच० ।

**खण्डकालु** पु० खण्ड इव कायति कै-क कर्म० । (शकरकन्द)

**खण्डकाव्य** न० "खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च" सा०द० उक्ते काव्यभेदे तच्च महाकाव्यस्य अष्टाधिकसर्गतया ततो न्यूनसर्गात्मकं यथा मेघदूतादि ।

**खण्डकुष्माण्डक** पु० खण्डेन पक्वं कुष्माण्डमत्र कप् । कुष्माण्डरसायनशब्दे १०५ पृ० चक्रदत्तोक्तलक्षणे औषधभेदे ।

**खण्डखर्जूर** न० खण्डेन पक्वं खर्जूरम् । खण्डपक्वे १खर्जूरफले । खण्ड इव स्वादु खर्जूरम् । २स्वादुखर्जूरे च

**खण्डज** पु० खण्ड इव जायते जन-ड । यवासशर्करायां गुडभेदे राजनि० ।

**खण्डजोद्भवज** पु० खण्डज उद्भवोऽस्य तस्मात् जायते जन-ड । यवासशर्करारचिते खण्डभेदे राजनि० ।

**खण्डताल** पु० "द्रुतमेकं भवेद्यत्र खण्डतालः स उच्यते

अपरं नियमं विना" इत्युक्तलक्षणे एकतालरूपे संगीते तालभेदे (एकताला) सङ्गीतदामो० ।

**खण्डधारा** स्त्री खण्डे एकदेशे धारा यस्याः । कर्त्तर्याम् (कामारी) अस्त्रभेदे शब्दमाला ।

**खण्डन** न० चु० खडि—भावे ल्युट् । १भेदने, २छेदने, ३निराकरणे च । "अरसस्य रसखण्डनवर्जितम्" "दर्शनेन कृतखण्डनव्यथम्" रघु । भावे युच् । तत्रार्थे स्त्री शब्दार्थनिर्वचनखण्डनया नयन्त" श्रीहर्षखण्डनम् । खडि-करणे ल्युट् । परमतादिनिराकरणे ५शास्त्रभेदे यथा श्रीहर्षखण्डनं शिरोमणिपदार्थखण्डनम् ।"षट् खण्डनखण्डखाद्यसंज्ञकं चोदयन्मे" नैष० । कर्त्तरि ल्यु । ६खण्डके त्रि० "शरगरलखण्डनम् मम शिरसि मण्डनम्" गीतगो०

**खण्डनखण्डखाद्य** न० खण्डन पदार्थस्य निर्वचनीयतानिराकरणं खाद्यम् खण्ड इव । श्रीहर्षप्रणीते सर्वपदार्थानाम् निर्वचनीयताप्रतिपादके चतुःपरिच्छेदात्मके ग्रन्थभेदे तत्र प्रथमपरिच्छेदे प्रमाणतदाभासनिर्वचनखण्डनम् । द्वितीये हेत्वाभासनिग्रहस्थाननिर्वचनखण्डनम् । तृतीये सर्वनामार्थनिर्वचनखण्डनम् । चतुर्थे भावाभावविशेषसत्तादिपदार्थानां निर्वचनखण्डनम्

**खण्डपरशु** पु० खण्डयतीति खण्डः परशुरस्य । १शिवे ततोलब्धततृपरशुके २जामदग्न्ये च हेदि० "येनैव खण्डपरशुर्भगवान् प्रचण्ड चण्डीपतिर्त्रिभुवनेषु गुरुः, प्रकृष्ट" वीरच० ३विष्णौ "इभन्ना खण्डपरशु" विष्णुस० । "शत्रूणां खण्डनात्खण्ड परशुरस्य जामदग्न्याकृतेरिति" भा०

**खण्डपाल** पु० खण्डं पालयति खण्डसाधनतया पालि-ण्वुल् । गुडविकारनिर्मातरि शिल्पिभेदे (मयरा)

**खण्डप्रलय** पु० खण्डस्य भूम्यादिखण्डस्य प्रलयः । चतुर्युगसहस्ररूपब्राह्मदिनावसाने भूम्यादिखण्ड लयाधारे कालभेदे "हविर्भिर्विधेरह्नि भुवः समन्तात् स्याद्योजनः भूभवभूतपूर्वैः । ब्राह्मे लये योजनपालस्वर्णीः भुवः प्राकृतिकेऽखिलाया" सि०शि० । "अत्र लयो नाम भूतविनाशः । प्रत्यहस्तत्पद्यते । स दैनं दिन उच्यते । यो ब्रह्मदिनान्ते चतुर्युगसहस्रावसाने लोकत्रयस्य संहारः स ब्राह्मलय उच्यते । तत्राक्षीणपुण्यपापा एव लोका कालवशेन ब्रह्मशरीरं प्रविशन्ति । तत्र मुखे ब्राह्मणाः, बाह्वन्तरं क्षत्रिया, ऊरुद्वयं वैश्याः, पादद्वयं शूद्राः । ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो मुखादिस्थानेभ्यः कर्मपुटान्तरत्वाद्ब्राह्मणादयस्तत एव निःसरन्ति । तस्मिन् प्रलये भुवो योजनशतसहस्रेभ्यो नाखिलाया" प्रमि० ।

खण्डप्रलयप्रकारश्च हरिव० १९८ । १९९अ० उक्तो यथा "दिव्य द्वादशसाहस्र यदेतद्युगमुच्यते । तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते । एतद्वर्द्धशगुणमहर्ब्राह्ममिहोच्यते । ततोऽहनि गते तस्मिन् सर्वेषामेव देहिनाम् । शरीरनिर्वृत्तिकरं रुद्रः संहारबुद्धिमान् । देवतानाञ्च सर्वेषां ब्राह्मणानां महीपते ! । दैत्यानां दानवानाञ्च यक्षकिन्नररक्षसाम् । देवर्षीणां ब्रह्मर्षीणां तथा राजर्षीणामपि । गन्धर्वाणामप्सरसां भुजगानां तथैव च । पर्वतानां नदीनाञ्च पशूनाञ्चैव भारत ! । तिर्य्यग्योनिगतानाञ्च सत्त्वानां कृमीणां तथा । महाभूतपतिर्द्देवः पञ्च भूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वेगवन्महत् । भूत्वा सूर्य्यश्चक्षुषी चाददाति भूत्वा वायुः संहरन् प्राणिजालम् । भूत्वा वह्निर्निर्दहन् सर्वलोकान् मेघो भूत्वा भूय एवाभ्यवर्षत् १९८अ० । वैशम्पायन उवाच । भूत्वा नारायणो योगी सप्तमूर्त्तिर्विभावसुः । गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान् । पीत्वाऽर्णवांश्च वै सर्वान् नदीः कूपांश्च सर्वशः । पर्वतानाञ्च सलिलं सर्वमादाय रश्मिभिः । भित्त्वा महीं गत्वा रसातलम् । रसातलगतं कृत्स्नं पिबते रसमुत्तमम् । अपसृजन् क्लेदमन्यद्ददाति प्राणिनां ध्रुवम् । ततः सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः । वायुश्च बलवान् भूत्वा स विधूयाखिलं जगत् । प्राणोद्य सुराणाञ्च वायुना कुरुते हरिः । ततो देवगणानाञ्च सर्वेषामेव देहिनाम् । ये चेन्द्रियगणाः सर्वे ये चान्ये भूतसम्भवाः । तथा घ्राणं शरीरञ्च पृथिवीमाश्रिता गुणाः । जिह्वा रसश्च स्नेहश्च संश्रिताः सलिलं गुणाः । रूपं चक्षुर्विपाकश्च ज्योतिरेवाश्रिता गुणाः । स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः । परमेष्ठिनस्तेते वै हृषीकेशं समाश्रिताः । ततो भगवता तत्र रश्मिभिः परिवारिताः । वायुना क्रम्यमाणाश्च रूपाभ्योऽन्यस्वनाश्रयात् । तेन संघर्षजेनाऽग्नौ पावकः शतधा ज्वलन् । अदहत्त्रिदिवान् लोकांश्च सवर्त्तकोऽनलः । स पर्वतान् द्रुमांश्च गुल्मान् लतावल्लीस्तृणानि च । विमानानि च दिव्यानि पुराणि विविधानि च । आश्रमांश्च तथा पुण्यान् दिव्यान्यायतनानि च । यानि चाश्रयणीयानि

खसदीत् चखाद । प्रमिखदति । "तयाखदिन्नःसरण- यक्कुवति तथा निखनति" शत०ब्रा० १।७।४।१० खलतर- लाऽस्थिरमगाढपलम्" भाष्यम् ।

**खद्** पु० खद-भा० भावे अप् । १स्थिरत्वे । तस्मै हिनादि गणादि० यत् । खद्य स्थिरत्वहिते त्रि० । खद्यपत्नी ।

**खदिका** स्त्री खे आकाशे दीयते दो-खण्डने घञर्थे क टाप् तत स्वार्थे कन् । लाजेषु त्रिका० तेषां भर्ज- नपात्रात् ऊर्द्ध्वाकाशे एव स्फोटनात् तथात्वम् ।

**खदिर** पु० खद-किरच् । (खयेर) ख्याते १वृक्षभेदे तस्य सारे स्थिरत्वात्तथात्वम् । २इन्द्रे त्रिका० शत्रुच्छेदकत्वात् तथात्वम् । खे आकाशे दीर्यते इष्टापूर्त्तकारिभिर्यतः ट-अपादाने किरच् । ३चन्द्रे मेदि० । इष्टापूर्त्तकारि- भिर्हि चन्द्रमण्डलात् आरभ्याकाशदेशविदारेणाकाशे पततात् तस्य तथात्व अपरोक्षग्रन्थे ४४० पृ० विवृति० खदिरवृक्षभेदपर्य्यायगुणा भावप्र० उक्ता यथा "खदिरो रक्तसारश्च गायत्री दन्तधावन । कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः । खदिर शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् । तिक्तः कषायो मेदोघ्नः कृमि- मेहज्वरव्रणान् । श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् । खदिरः श्वेतसारोऽन्य कदरः सोमवल्ककः । कदरो विशदो वर्ण्यो मुखरोगकफास्रजित् । इरिमेदो विट्खदिरः कालस्कन्धोऽरिमेदक । इरिमेद कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठ विषव्रणान्" खदिररसादिविधानं सुश्रुते उक्तं यथा "अत ऊर्ध्वं खदिरविधानमुपदेक्ष्यामः । प्रशस्तदेशजातमनुपहत मध्यवयसं खदिरं परितः खानयित्वा मध्यममूलं छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रस- ग्रहणसमर्थो भवति । ततस्तं गोमयमृदावलिप्तमवकीर्य्ये- न्धनैर्गोमयमिश्रैरादीपयेत् । यथास्य दह्यमानस्य रसो द्रवत्यधस्ताद्यदा जानीयात्पूर्णं भाजनमित्यथैनमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात् ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योप युञ्जीत जीर्णे भल्लातकविधानवदाहार परिहारश्च । प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति ॥ खदिरसारतुलामुदकद्रोणे विपाच्य षोडशभागावशिष्टमव- तार्य्यानुगुप्तं निदध्यात् तमामलकरसमधुसर्पिर्भिः संसृ- ज्योपयुञ्जीत । एव एव सर्वेष्वसारेषु कल्पः । खदिर- सारचूर्णतुला खदिरसारकाथभावितां वा प्रातः प्रातरुप- सेवेत खदिरसारकाथसिद्धमाविकं वा सर्पिः । अमृत भल्लीसरसं काथं वा प्रातःप्रातरुपसेवेत तत्सिद्धं वा सर्पिः अपराह्णे ससर्पिष्कमोदनमामलकयूषेण भुञ्जी- तैवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यते" इति । "अथ तस्य भल्लातकतैलामलकरससर्पिषा ह्येवं मासशारा- दिकषायस्य च त्रिफलात्रिकटुकत्वक्फलमज्जपिष्टप्रक्षेप- सारश्वित्राकोपवृद्धकरिकाह्वयविष्णुक्रान्तीन्द्रयवपटोलमुस्ता- तिनिशारग्वधाञ्जनप्रियङ्गूनां च त्रिकान् भागांस्तानेकध्य- क्षोद्रपाकविधानेन पचेत् ततसाधुसिद्धमवतार्य्य परिस्रा- व्यानुगुप्तं निदध्यात् अत उपसंस्कृत शरीरं प्रातः प्रात- रुत्थाय पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदक सिद्धं भक्तोदनमश्नीयात् खदिरोदकसेवीत्येवं द्रोणसु- पुष्पं सर्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुर- रोगो भवति" । खदिरवृक्षस्योत्पत्ति श्रूयते । "प्रजा- पतेः प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमभ्रियत" इत्युपक्रम्य "अस्थिभ्य एवास्य खदिरः समभवत् तस्मात् स दारुणो बहुसारोदारुणमिव ह्यस्थि तेनैवेनं तद्रूपेण समर्द्धयति अन्तरे वैता भवन्ति यास्ते खादिरा अन्तरे हि मज्जानो ह्यस्थान्यस्थीनि" शत०ब्रा० १३।४।४।६ "विना खदिर- सारेण हारेण हरिणीदृशाम् । गायते जायते रागो- ऽनुरागः पयोधरे" उद्भटः । खदिरस्य विकारः अण् । खादिर खदिरवृक्षजाते त्रि० । "खादिरे पशु बध्नाति खादिरं वीर्यकामस्य यूपं कुर्वीत" श्रुति । स्त्रियां ङीप् । "अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः । उदुम्बर शमी दूर्वा कुशाश्च समिधः क्रमात्" यास० उक्तं तस्य सर्वप्रकृतित्वम् । "अभावे खदिरबिल्वरोहितकाम्" "खदिराभावे सोमवल्कात्" । कात्या० ६।१।८।१० पलाशाभावे खदिरादीन् यूपान् कुर्वीत सोमयागे खदिर एव मुख्य । तदभावे बिल्वादि इति भेद । ४ऋषि भेदे च तस्य गोत्रापत्यम् अश्वादि० फञ् । खादि- रायण तद्गोत्रापत्ये पुंस्त्री० । ततः अश्वादि० चतु- रर्थ्यां फ । खदिरक तन्निर्वृत्तादौ त्रि० । खदिरो विद्यते ऽस्य मतुप् मस्य व अजिरा० न पूर्वदीर्घ । खदिरवत् खदिरयुते त्रि० स्त्रियां ङीप् खदिरवती नदीभेदे स्त्री "अन्तोऽवत्या" पा० अस्यान्तोदात्तता । खदिरात् परव- मवङ्गस्य असंज्ञायामपि णत्व खदिरवणम् । खदिरस्य पाक पीलवा० कुणप् । खदिरकुण तत्पाके पु० । तत

उत्करादि चतुरर्थ्याम् छ। खदिरीय तत्सन्निकृष्टदेशादौ त्रि०। वराहा० चतुरर्थ्यां कक्। खादिरक तत्सन्निकृष्टादौ त्रि०

**खदिरपत्रिका** स्त्री खदिरस्य पत्रमिव पत्रमस्याः कप् कापि अत इत्वम्। १अरिमेदे २लज्जालुलतायाञ्च राजनि० कबभावे ङीप्। खदिरपत्री लज्जालुलतायां स्त्री जटा०। [“विना खदिरसारेण” उद्भट०।

**खदिरसार** पु० ६त०। खदिरद्रुमस्य निर्यासजे सारे (खएर)

**खदिरा** स्त्री खदिर० तत्पत्राकारोऽस्त्यस्याः पत्रे अच्। लज्जालुलतायाम् राजनि०।

**खदिरिका** स्त्री खदिरः खदिररसवद्रसोऽस्त्यस्याः ठन्। १लाक्षायां तस्या हि खदिरत्वङ्निर्यासवत्त्वात् तथात्वम्। २लज्जालुलतायां च राजनि०।

**खदिरी** स्त्री खद–किरच् गौरा० ङीप्। लज्जालुलतायाम् शाकभेदे, (छाडजोडा) २लतायाञ्च जटा०। [रत्नमा०।

**खदिरोपम** न० खदिर उपमा यस्य। (काँटायावला) द्रुमभेदे

**खदूरक** त्रि० खद–बा० ऊरच् संज्ञायां कन्। ऋषिभेदे। ततः शिवा० अपत्यादौ अण्। खादूरक तदपत्यादौ।

**खदूरवासिनी** खे आकाशे दूरे वसति वस–णिनि ङीप्। बुद्धशक्तिभेदे त्रिका०।

**खद्यपत्री** स्त्री खे स्थैर्ये हितं गवा० यत्, खद्यं पत्रमस्य गौरा० ङीष्। खदिरे राजवल्लभ०।

**खद्योत** पु० खे द्योतते द्युत–अच्। १कीटभेदे (जोनाकीपोका) “खद्योतवद्भिभाति तन्मया विष्णयान्वितम्” भा० व० १२२ अ०। “खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्” मेघदू०। खं द्योतयति द्युत णिच्–अच् उप०स०। २सूर्य्ये जटाधर०।

**खद्योतक** पु० खद्योत इव कायति कै–क। १फलविषवृक्षभेदे सुश्रु०। “कुमुद्वतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि”। २सूर्य्ये पु०। [जटा०।

**खद्योतन** पु० खमाकाशं द्योतयति द्युत–णिच्–ल्यु। सूर्य्ये

**खधूप** पु० खमाकाशं धूपयति धूप–अण् उप०स०। खे धूप इव वा। आकाशगामिनि अग्निशिखायुक्ते (हाउइ) इति ख्याते पदार्थे “ससृजुः खधूपान्” भट्टि०।

**खन** विदारे भ्वा०उभ०सक० सेट्। खनति ते-अखानीत्-अखनीत् अखनिष्ट खायात्-खन्यात्। चखान चख्नतुः चख्ने, खातम् खनितं खेयम्। खनिता। खनित्वा-खात्वा खाम। खनितुम्। खनन् खनमानः। खायते खन्यते खनिः खनकः। “इमां खनाम्योषधिम्” ऋ० १०।१४५।२१। “अभ्रिरसि नार्य्यसि त्वया वयमग्निं शकेम खनितुम्” यजु०।१० “त्वा गन्धर्वा अखनन्” यजु० १२,९८। “यथा खनन् खनित्रेण नरोवार्य्यधिगच्छति” मनुः। “अगस्त्यः खनमानः खनित्रैः” ऋ० १,१७९६।

अभि+आभिमुख्येन सर्वतश्च खनने। “यो वीहाभिखनेदप एवाभिविन्देत्” शत०ब्रा० ११,१,६,१६।

अव+अधः खनने। अवखनति अवखातः।

आ+समन्तात् खनने आखरः आखनः आखुः।

उद्+उत्पाटने “फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः” (कलमाः)। “त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः।” “यन्तानुत्खाय तरसोत्खातलोकत्रयकण्टकोऽपि” रघु०।

नि+निधाने सक० “निचखान जयस्तम्भम्” यज्ञघाया निचख्नुः०” “अष्टादशद्वीपनिखातयूपः” रघु० “विषादशङ्कुश्च मतौ निचख्ने” भट्टि०।

निस्+निर्+निष्क्रमणे “समुद्रान्निरखनं स्तोत्रैरभिरश्मिभिः” शत०ब्रा० ७।५।२।५२।

परि+परितः खनने परिखा उत्पाटने च “कण्टकिक्षीरिणस्तु समूलान् परिखायाद्वासयेदपामार्गम्” आश्व०२।७।५

वि+विशेषेण खनने। “यत्ते भूमि विखनामि क्षिप्रं तदपि रोहतु” अथ० १२।१।३५।

**खनक** पु० खन–वुन्। १मूषिके, २सन्धिचौरे च। ३भूमिदारके (कोडा) त्रि० हेम०। “विदुरस्य सुहृत् कश्चित् खनकः कुशलोऽब्रवीत्” भा०आ० १४७ अ०। ४स्वर्णाद्युत्पत्तिस्थाने आकरे मेदि०। “पुरी समन्ताद्विहिता सपताका सतोरणा। सचक्रा सहुडा चैव सयन्त्रखनका तथा” भा०व०१५अ०।

**खन(मा)पान** अनुवंश्ये क्षत्रियभेदे “खन(मा)पानोऽङ्गदोजज्ञे तस्मादवितथस्ततः” भाग० ९।२२।२।

**खनयित्री** स्त्री खन–णिच्-नि० इत्वाभाव तृच् ङीप्। (खुन्ती) इति ख्याते अस्त्रभेदे सा च जिगीषुणा यात्रायामग्रे चालनीया यथाह नारदपञ्चरात्रे “खनयित्री शुभा यात्रा जयार्थं युद्धकाङ्क्षिभिः। पञ्चवर्षशिशुकयुता चालनीया पुरःस्थिता”

**खनित्र** न० खन-इत्र। (खोन्ता) अस्त्रभेदे। “यथा खनन् खनित्रेण नरोवार्य्यधिगच्छति” मनु०। स्वार्थे क तत्रार्थे हारा०।

**ख(नि)नी** स्त्री खन–इन् वा ङीप्। धात्वाद्युत्पत्तिस्थाने

१आकरे "खनिभिः सुषुवे रत्नम्" "रत्नोपहारैरुदितैः खनिभ्यः" रघुः। २भूविदारणे च। ३आधारमात्रे "नदिः पट् च मरा योषित् खकुलस्वसृखनी" काशी० २७अ०। ४खाते गर्त्ते "हतगम्भीरखनीखनीलिभ"मैष०।

खनित्रिम त्रि० खननेन निर्वृत्तम् खन-भावे बा० क्त्रि—मप् च। खननिर्वृत्ते। "खनित्रिमा उत वा याः स्वयंजाः" ऋ० ७।४९।२

खनिनेत्र पु० इक्ष्वाकुवंश्ये नृपभेदे "विविंशतेः सुतोरम्भः खनिनेत्रोऽस्य धार्मिकः" भाग० ९।२।१६।

खन्य त्रि० खन—वेदे नि० यत्। खननीये खन्यत्। खान्य इत्यपि तत्रार्थे। लोके तु खेय इत्येव।

खपुर पु० खं पिपर्त्ति उच्चतया पॄ—क। १गुवाके अमरः। खमिन्द्रियं पिपर्त्ति—पॄ—क। २अलसे त्रि० मेदि०। खेन पूर्य्यते घञर्थे कर्म्मणि क। ३भद्रमुस्तके पु० मेदि० ४व्याघ्रनखद्रव्ये राजनि०। खे आकाशे उदित पुरं शा०त०। अशुभसूचनायाकाशोदिते ५गन्धर्वनगरे। तस्योत्तरादिदिग्भेदेनोदये फलभेद वृ०सं० ५६अ० उक्तो यथा "उदगादि पुरोहितनृपबलपतियुवराजदोषदं खपुरम्। सितरक्तपीतकृष्णं विप्रादीनामभावाय। नागरनृपतिजयावहमुदग् विदिक्स्थं विवर्णनाशाय। शान्तायां दृष्टं सतोरणं नृपतिविजयाय। सर्वदिगुत्थं सततोत्थितं च भयदं नरेन्द्रराष्ट्राणाम्। चौराटविकान् हन्याद् धूमानलशक्रचापाभम्। गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्। दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये। अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्। यदा तदा नागमनुष्यवाजिनां पिबत्यसृग् भूरि रणे वसुन्धरा।" खे आकाशे चरं पुरं शाक०त०। ६आकाशगामिनि दैत्यपुरभेदे तदुत्पत्तिकथा "पुलोमा नाम दैतेयी कालका च महासुरी। दिव्य वर्षसहस्रं चेरतुः परमं तप। तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददद्वरम्। अगृह्णीतां वरन्ते तु सुतानामल्पदुःखिताम्। अवध्यताञ्च राजेन्द्र! सुरराक्षसपन्नगैः। पुरं सुरमणीयञ्च खचरं सुमहाप्रभम्। सर्व्वरत्नैः समुदितं दुर्द्धर्षममरैरपि। महर्षियक्षगन्धर्वपन्नगासुरराक्षसैः। सर्व्वकामगुणोपेतं वीतशोकमनामयम्। ब्रह्मणा भरतश्रेष्ठ! कालकेयकृते कृतम्। तदेतत् खपुरं दिव्यं चरत्यमरवर्जितम्। पौलोमाध्युषितं वीर! कालकेयैश्च दानवैः" भारते वनपर्व्वणि १७३ अध्याये। "विध्वस्ते खपुरे तस्मिन् दानवेषु हतेषु च" भा० व० १७३ अ०। ७हरिश्चन्द्रपुरे त्रिका०।

खपुष्प न० ६त०। आकाशकुसुमे तच्च यथा मिथ्यात्वेव मिथ्यात्वद्योतनाय खपुष्पोपमा शास्त्रेषु दीयते खकुसुमादयोऽप्यत्र।

खभ्रान्ति पु०स्त्री खे आकाशे भ्रान्तिर्भ्रमणं मांसान्वेषणाय यस्य। चिल्ले त्रिका०। तस्य मांसान्वेषणाय खे भ्रमणशीलत्वम्। स्त्रियां वा ङीप्। [त्रिका०।

खमणि पु० खे आकाशे मणिरिव प्रकाशकत्वात्। सूर्य्ये

खमीलन न० खानामिन्द्रियाणां मीलनम्। तन्द्रायाम्। शब्दच० तत्र सर्वेषां बहिरिन्द्रियाणां स्वस्वकार्य्ये व्यापाराभावात् निमीलनं भवतीति तथात्वम्।

खमूर्त्ति पु० खं मूर्त्तिरस्य। अष्टमूर्त्तिधरे १शिवरूपे शिवे खस्य ब्रह्मणो मूर्त्तिः स्वरूपम्। २ब्रह्मस्वरूपे स्त्री "स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान्" मनुः।

खमूली स्त्री खं शून्यभूतं मूलमस्याः ङीप्। कुम्भिकायां (पाना) त्रिका० तस्याः मूलशून्यत्वात् तथात्वम्। प्रभो० त्रा ह्रस्वः। खमूलि तत्रार्थे। स्वार्थे क ह्रस्वः, खमूलिका तत्रार्थे शब्दच०।

खम्ब गतौ भ्वा०पर०सक० सेट्। खम्बति अखम्बीत् चखम्ब।

खर पु० खं मुखबिलमतिशयेनास्त्यस्य र खमिन्द्रियं खाति खा-क वा रवर्णोरेकत्वम्। १गर्दभे। २अश्वतरे अमरः ३राक्षसभेदे च हेम० 'चेरतुः खरदूषणावि'ति भट्टिः। "ततस्तस्य रामस्य तत शूर्पणखाकृतम्। खरेणासीत् महद्वैरं जनस्थाननिवासिना। रक्षार्थं तापसानान्तु राघवो धर्मवत्सलः। चतुर्दश सहस्राणि जघान भुवि राक्षसान्। दूषणञ्च खरञ्चैव, त्रिशिरसं महाबलौ। जघ्ने क्षेम पुनर्धीमान् धर्मारण्यं स राघवः" भा०व० २७६ अ०। ४कण्टकिवृक्षभेदे, अजयः ५काके, कलमपालः ६कङ्कविहगे, ७कुररपक्षिणि राजनि० ६०संवत्सरमध्ये पञ्चविंशतितमे वत्सरभेदे तत्फलं यथा। "उपद्रुतं जगत्सर्वं तस्करैर्नृपकैः खरैः। पीडिताश्च प्रजाः सर्वा देशभङ्गः खरे प्रिये!" ज्यो०त०। ९रविपार्श्वचरे १०परिचयाहारकभेदे शब्दच० ११तिक्तरसे च। १२तद्वति, त्रि० अमरः। खरकिरणः खरांशुः १३कठिने च त्रि० 'खरविशदमभ्यवहार्यं गङ्गमिति" पा० भाष्यम्। १४देवताडवृक्षे स्त्री टाप् अमरः। १५मद्ये मेदि०। १६निष्ठुरे हेम०। १७दैत्यभेदे त्रिका०। जातित्वे वर्णत्वे स्त्रियां ङीप्।

**खरकार** पु० खरत्तीव्रं करोऽस्य । सूर्य्ये खरकिरणखरांशुप्रभृतयोऽप्यत्र । [ह्रस्वम् । वलायामौषधौ राजनि० ।

**खरकाष्ठिका** स्त्री खरमुग्रं काष्ठं यस्याः कप् कापि अत

**खरकुटी** स्त्री खरा तीक्ष्णा क्षुरवत्त्वात् कुटी । १नापितगृहे त्रिका० तस्या क्षुरवत्त्वात्तथात्वम् । ६त० । गर्द्दभगृहे च खरगृहादयोऽप्यत्र ।

**खरकोणा** पुंस्त्री खरं तीव्रं कोणायते शब्दायते कुण—सङ्कोचे धातूनामनेकार्थत्वात् इह शब्दार्थता अण् उप०स० । तित्तिरिपक्षिणि हेम० । जातित्वात् स्त्रियां ङीष् ।

**खरगन्धनिभा** स्त्री खरगन्धेन नितरां भाति नि+भा—क । नागवलायां नागबल्लीम् (पान) जटा० ।

**खरगन्धा** स्त्री खरो गन्धोयस्याः । नागवलायाम् राजनि०

**खरघातन** पु० खरमपरोग, तन्नामराक्षसं वा घातयति हन—स्वार्थे णिच्—ल्यु । १नागकेशरे, २श्रीरामे च शब्दच० ।

**खरच्छद** पु० खरं छदं पत्रमस्य । (उलुखड़) १तृणभेदे रत्नमा० । २कुन्दरवृक्षे राजनि० ।

**खरज्रु** त्रि० खरं जीर्य्यति जॄ—बा० कु । तीव्रगतौ "अभूनापत् खरमज्रा खरज्रु" ऋ० १०,१०६,७ ।

**खरणस्** त्रि० खरस्य नासेव खरा वा नासा यस्य नसादेशः णत्वम् । १खरतुल्यनासिके २तीव्रनासिके च । अच् समा० । खरणसोऽप्यत्रार्थे अमरः । [भावप्र० ।

**खरत्वच्** पु० खरा कठिना त्वक् यस्य । १लक्ष्मालुभेदे ।

**खरदण्ड** न० खरः उग्रः कण्टकाद्यततत्वात् दण्डोऽस्य । पद्मे धरणी ।

**खरदला** स्त्री खरं दलं यस्याः । काकोदुम्बरे शब्दच० ।

**खरदूषण** पु० खरमुग्रं दूषणरञ्जादकत्वाद्देहदोषो यत्र । १धस्तूरे (धुतुरा) २वक्रदोषे त्रि० । शब्दरत्ना० । द्व० । राक्षसभेदयोः द्वि० "खरदूषणयोर्भ्रात्रोः" भट्टिः ।

**खरधार** त्रि० खरा उग्रा धाराऽस्य । तीक्ष्णधारे अस्त्रभेदे करपत्रच्छिन्नस्य खरधारस्य च शस्त्रादौ प्रयोगे दोषाः यथाह सुश्रुतः "तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम्" ।

**खरध्वंसिन्** पु० खरं खरनामानं राक्षसं ध्वंसयति ध्वन्स-णिच्—णिनि । श्रीरामे । खरघ्नादयोऽप्यत्र । रामस्य खरध्वंसकथा खरशब्दे दृश्या ।

**खरनादिन्** त्रि० खरं नदति नद—णिनि । तीव्रशब्दकारके स्त्रियां ङीप् । सा च २रेणुकायामगन्धद्रव्ये शब्दच० । खर इव नदति नद—णिनि । ३गर्द्दभतुल्यनादकारके त्रि० "उपमान शब्दार्थप्रकृतावेव" पा० अस्यादुदात्तता । खरनादिनोऽपत्यं बाह्वादि० इञ् । खारनादि तदपत्ये पुंस्त्री० ।

**खरनाल** न० खरं नालमस्य । पद्मे "नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताज" भाग० ३,८,२१ ।

**खरप** पु० खरं पिबति पा—क । १ऋषिभेदे ततो नडादि० गोत्रापत्ये फक् । खारपायण तद्गोत्रापत्ये पुंस्त्री० । बहुषु तस्य यास्का० लुक् । खरपास्तद्गोत्रापत्येषु ।

**खरपत्र** पु० खरं पत्रमस्य । १शाकवृक्षे (सेगुन) २क्षुद्रतुलसीवृक्षे च रत्नमा० । ३यावनालशरे ४मरुवके ५हरिद्र्भे च राजनि० । वा कप् । खरपत्रक । तिलकवृक्षे शब्दच० ।

**खरपत्री** स्त्री खरपत्रमस्याः गौ० ङीष् । १गोजिह्वावृक्षे २काकोदुम्बरिकायाञ्च राजनि० ।

**खरपाल** न० खरं पालम् कर्म० । लौहपात्रे त्रिका० ।

**खरपादाढ्य** पु० खरैः पादैर्मूलैराढ्य । कपित्थद्रुमे शब्दच

**खरपुष्प** पु० खरं पुष्पमस्य । मरुवके रत्नमा० ।

**खरपुष्पा(ष्पी)** स्त्री खराणि पुष्पाण्यस्याः वा ङीप् । वर्वराशाके (वावुइ तुलसी) अमरः ।

**खरप्रिय** पुंस्त्री खलो धान्यादिमर्द्दनस्थानं प्रियोऽस्य लस्य रः । पारावते शब्दमा० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् ।

**खरमज्र** पु० खरं मज्जयति मस्ज—र । अत्यन्तशोधके । खरज्रुशब्दे उदा० ।

**खरमञ्ज(रि)री** स्त्री खरा मञ्जरी यस्याः समासान्तविधेरनित्यत्वात् न कप् ह्रस्व वा ङीप् । अपामार्गे अमरः । तत्र ह्रस्वान्ते "पलाशपुष्पे खरमञ्जरेर्वा" "फलानि त्रियोः खरमञ्जरेर्वा" । "खरमञ्जरियष्ट्रागृहैस्त्वथामरदारुभिः" सुश्रु० । दीर्घान्ते "बिल्वखरमञ्जरीमधुशिग्रुसूर्य्यवल्लीत्यादि० सुश्रुत० ।

**खररोमन्** त्रि० खरं रोमाऽस्य । कठिनरोमयुक्ते स्त्रियां वा डाप् । खररोमत्व गर्द्दभहत्याकर्मविपाकः यथाह शाता० "खरे विनिहते चैव खररोमा प्रजायते" इति । २नागभेदे पु० जटा० । [काभावे खरयष्टीत्यप्यत्र रत्नमा०

**खरयष्टिका** स्त्री खरा यष्टी सैव स्वार्थे क । नागवलायाम्

**खरशब्द** पु० खर उग्रः शब्दोऽस्य । १कुररखगे । ६त० । २गर्द्दभशब्दे पु० । कर्म० । ३उग्रशब्दे पु० । [भावप्र० ।

कठमया गर्वहेतुत्वात् तथात्वम्। खर्व–गतौ अच्। वर्ण्य-मध्यः। २ह्रस्वे ३वामने त्रि० अमरः "खर्वे! गर्वसमूह-पूरिततनो!" ताराम्तोत्रम्। ४संख्याभेदे (सहस्रकोटौ) "अर्बुदमब्जं खर्वनिखर्व"मिति लीलावती। ५तत्संख्याते च

खर्व(र्व)ट पु० खर्व(र्व)–अटन्। "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्व(र्व)टोनाम नदीगिरिसमाकुलः" भाग० टीकायां श्रीधरोक्ते ग्रामभेदे।

खर्वशाख त्रि० खर्वा शाखा तत्तुल्यस्य हस्तपादादयोऽस्य। वामने हेम०।

खर्वित त्रि० खर्व–नीचगतौ कर्त्तरि क्त। ह्रस्वे स्त्रियां टाप्। सा च अमावास्याभेदे, "अभिन्नयेन्नतद्दर्शा अमावास्या भवेत् क्वचित्। खर्वितां तां विदुः केचिद्गताध्वामिति चापरे" कर्मप्रदी० पूर्वदिनस्थिततिथ्यपेक्षया परदिने २अल्पकालस्थिततिथिमात्रे च।

खर्वुरा स्त्री खर्व उरच्। तरदीवृक्षे राजनि०।

खर्बु(र्वु)ज न० खर्बु(र्वु) उन् तथा भूता जायते जन–ड। (खरमुज) लताफलभेदे। तस्य गुणा भावप्र० उक्ता "खर्बु(र्बु)जं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु। स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम्। तेषु यच्चाम्लमधुरं सक्षारञ्च रसाद्भवेत्। रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम्"।

खल चलने संचये च भ्वा० पर० सक० सेट्। खलति अखालीत् खलति प्रनिखलति खलः।

खल पुंन० खल–अच् अर्द्धर्चा०। धान्यमर्द्दनस्थाने हेम०। (खामार) धान्यखलः गोधूमखलः यवखलं। "खलात् क्षेत्रादगाराद्वा यतोवाप्युपलभ्यते" मनुः। खलयज्ञः खलेकपोतः। "खले न पर्षान प्रतिहन्मि भूरि" ऋ० १०,४८,७, २धूलिराशौ च ३भुवि ४स्थानमात्रे च। खलञ्च साद्यस्क्रेषु यज्ञेषु उत्तरवेदित्वेन विहितो यथा "साद्यस्क्रे मूर्वरा वेदिः "खल उत्तरवेदिः" आश्व० श्रौ० ९,१२,१४, तत्र खलशब्दनिर्द्धारणं कात्यीये यथा "खल उत्तरवेदिः धान्यखलं प्रत्ययात्" कात्या० श्रौ० २२,२,४२,४४, खल इत्युक्ते धान्यखलः प्रतीयते यतः" कर्कः। "ये वेदिमभितस्तानुत्तरवेदिदेशे खनन्ति" कात्या०श्रौ० ४५, "धान्यखलमभितः सन्निधानात् वेदिमभितो ये गर्त्तविशेषास्तानुत्तरवेदिदेशे खनन्ति मर्द्दयन्ते सम्बन्धो विलोकार्थमतुच्छैः परितो गर्त्ताङ्कराकामकीलकैः" कर्कः। इति पूर्वपक्षः "पांशुखलो वा प्रत्यक्षाविशेषात्" ४७सू०। वाशब्दः पक्षान्तरे पांशुखलो-मोत्तरवेदिर्भवति तत्रापि खलशब्दप्रयोगप्रत्ययौ" कर्कः "पांशुखलो धूलिराशिः प्रत्येतव्यः कुतः खल इत्युक्ते धान्यखलोऽपि प्रतीयते पांशुखलोऽपि प्रतीयते" स०व्या० इति सिद्धान्तः। ५तिलकल्के पु० (खलि) ६नीचे ७अधमे ८दुर्जने त्रि० "सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः। मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते" चाणक्यः। "खमाश्रयान् यः परमार्थैः सुपुष्णात्यद्भ्यः खलः" भाग० १,७,३७,। ९इतरे च त्रि० अमरः। खे लीयते ली–ड। १०सूर्ये। खं तद्दर्शं लाति ला–क। ११तमालवृक्षे पु० शब्दच०। १२मत्सरग्न्ये औषधमर्द्दनपात्रभेदे वैद्यकम्। १३खले उभयोरैक्यात्। "खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः" सुश्रुतः। "खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ" सुश्रुत। खलएव अङ्गुल्या० स्वार्थे ठक्। खालिक खलशब्दार्थे। [शब्दच०।

खलक पु० खं शून्यं मध्ये लाति ला–क संज्ञायां कन्। कुम्भे

खलकुल –० खलको खलभूमौ लीयते ली–बा० ड। कुलत्थकलाये "दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च खल्वाः खलकुलाश्च" वृ०उ० "खलकुलाः कुलत्थाः" भा०।

खलता स्त्री खस्य लता। १आकाशलतायाम्। खलस्य भावः तल्। २दुर्जनत्वे च। "अनिवारितताश्मस्पद कुलक्षीणां स्वमनोभिरुत्थितताम्। खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधोजनः" माघः। खलता च "अष्टोहि षि तथा यान्ते विद्वेषः खलता स्मृता" इत्युक्तलक्षणा।

खलति पु० स्खलन्ति केशाः अस्मात् भीमा० अपादाने अति पृषो०। (टाक) १इन्द्रलुप्तरोगे तच्छब्दे विवृतिः। २तद्वति त्रि० स्त्रियां वा ङीप्। तद्रोगयुक्तपरत्वे कडा० कर्मधा० परनि०। युवखलतिः खलतियुवा। "अथैष चेत्रन्ते इत्युपक्रमे "पिङ्गलखलतिविक्लिधशुक्लस्य मूर्द्धनि जुहोति" कात्या० श्रौ० २०,८,१८, "खलतिः खल्वाटः" कर्क०।

खलतिक पु० खलतिरिव कायति कै–क। पर्वते "खलतिकादिषु वचनम्" वार्त्ति०। खलतिकः पर्वतस्तस्य वनानि खलतिकं वनानि" बहुत्वेऽपि एकवचनम् सि०कौ०।

खलधान पु० खलाः खला धीयतेऽस्मिन् धा–आधारे ल्युट्। (खामार) ख्याते खलपदार्थे हेमच०।

खलपू त्रि० खलं भूमिं पुनाति पू–क्विप्। स्थानशोधनकारिणि (फराश)। अमरः।

खलयज्ञ पु० खले कर्त्तव्यो यज्ञः। खले कर्त्तव्ये यज्ञभेदे

लाट्यायनश्रौ० सू० ४,१,२५, सूत्रादौ तस्य विवृतिः ।

**खलाजिन** न० खलस्थितमजिनम् । खलस्थितचर्मणि ततः उत्करा० चतुरर्थ्यां छ । खलाजिनीय तत्सन्निकृष्ट-देशादौ त्रि० ।

**खलादि** पु० का० वार्त्तिकोक्ते समूहार्थे इनिप्रत्ययनिमित्ते शब्दसमूहे स च गणः । "खल डाक कुटुम्ब कुम्भ षण्ड गो रथ कुण्डल" खलिनी डाकिनीत्यादि तत्समूहे ।

**खलाधारा** स्त्री खल आधारो यस्याः । तैलापोका) "तैल-पायिकायाम्" जटाध० ।

**खलि** स्त्री खल–इन् । (खलि) इति ख्याते तैलकिट्टे राजनि० वा० ङीप् । "स्थाल्या वैदूर्य्यमय्या पचति तिल-खलीं चन्दनैरिन्धनौघै" भारतरत्ना० २ताजमूले रत्नमा० ।

**खलि(ली)न** पुन० खे अश्वमुखच्छिद्रे लीनं पृषो० वा ह्रस्व अर्शआदि । अश्वमुखस्थायां कविकायां (कड़ि-याल) । मुखमध्य इति रायमुकुट । "उभयत खलीन कनककटकायसग्नाभ्यां पदेपदे लताकुञ्जनप्रयत्नाभ्यां मुखाभ्यामवलम्ब्यमानम्" (अश्वम्) काद० । दीर्घमध्य २आकाशलीने त्रि० ।

**खलिवर्द्धन** पु० "मारुतेनाधिकोदन्तो जायते तीव्रवेदन । खलिवर्द्धनसंज्ञोऽसौ जायते रुक् न शाम्यति" इति भावप्र० उक्ते दन्तरोगभेदे ।

**खलिश** पु०स्त्री आकाशे जलादूर्द्धभागे लिशति लिश-क । (खलसा) मत्स्यभेदे शब्दरत्ना० । तद्गुणाश्च "खलिशस्तु मतोग्राही कषायो वातकोपन । रूक्षो लघु स्थूलकर किञ्चिदामविनाशन" राजवल्लभ । पृषो० खल्लिशः खलीशोऽप्यत्र ।

**खलीकार** पु० खल+अभूततद्भावे च्वि–कृ–भावे घञ् । १अपकारे जटाधर । २भर्त्सने च । खलीकधातोस्तद-र्थकताऽपि तेन "परोक्षे खलीकृतोऽयं द्यूतकर" "खलीक्रियते" मृच्छ० खलीक्रियते भर्त्स्यते इत्यर्थ ।

**खलु** अव्य० खल–उन् । निषेधे एतदर्थयोगे धातो क्त्वा "निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम्" माघ "खल्विति १निषेध २वाक्यालङ्कार ३जिज्ञासा ४अनुनय ५नियमेषु" गणरत्नोक्तेषु वाक्यालङ्कारादिषु च तत्र वाक्यालङ्कारे "खलु वाचिकम्" जिज्ञासायां "स खलु-प्रीते वेदम्"। अनुनये "न खलु न खलु सुग्धे । साहसं कार्य्यमेतत्" । नियमे (अवधारणे) "प्रकृतिधाराः खलु माऽस्मां धिय." प्रकृतिधारा एवेत्यर्थः" गणरत्नम् । जिज्ञासायां "न खलूपरमा पिनाकिना" कुमा० । ६निश्चये ७वाक्यपादपूरणे दवीप्रभायाया शब्दरत्ना० । तत्र निश्चये "न खलु प्रेम चलं सुहृज्जने" कुमा० । "न खलु वय-मसुष्य दानयोग्या" माघ । "न खल्वनिर्जित्य" रघु "हती भवान्" रघु । वाक्यालङ्कारे "सर्वं प्रिय खलु भव-त्यनुरूपचेष्टम्" माघ । "भव्या गुणाः खल्वपि लोक-कान्ता" रघु । वीप्सा व्याप्ति "काले खलु समारब्धा फल बध्नन्ति नीतय" रघु० । काले समारब्धा नीतयः फलजननव्यापिका इत्यर्थ ।

**खलुक्** पु० सर्वेन्द्रिय नेत्रव्यापारं लुञ्चति लुञ्च–अपनये क्विप् । अन्धकारे त्रिका० ।

**खलुरिष** पुंस्त्री खलु रिष्यते बध्यतेऽसौ खलु+रिष–बधे कर्म्मणि घञ् सुप्सुपेति स० । मृगभेदे शब्दच० ।

**खलूरिका** स्त्री अभ्युत्पन्नोऽयम् । शस्त्राभ्यासे हेमच० ।

**खलेकपोत** पु० ब०व० खले पतन्तः कपोता शा०त० अलुक् स० । खलेपतत्सु कपोतेषु । तत्तुल्य न्याय खलेकपोत न्यायः यथा खले कपोता युगपत् पतन्ति तथा परस्पर-विशेष्यविशेषणभावानापन्ना एकत्रान्विताः यथा क्रियाया कर्त्रादिकारकाणां सर्वेषामेव युगपदन्वय न तु विशेष्ये-विशेषणमिति रीत्या "गुणानाञ्च परार्थत्वादसम्बन्ध समत्वात् स्यात्" जै०उक्तः । अयमेव न्यायः एकत्र-द्वयमिति संज्ञकोऽपि । यथा नञ्समभिव्याहृतस्थले एकस्मिन् अभावप्रतियोगिनि बह्नित्व-स्वत्व उभय प्रकारविधया भासते इति जगदीश । गदा-धरमते तु निर्द्धर्मितावच्छेदकभावालोकारेण बह्नित्व धर्म्मितावच्छेदकीकृत्यैवात्र मञ्समभिव्याहृत भासते इति तत्र न एकत्रद्वयमिति रीत्या बोधः किन्तु क्रियाकारकान्वय एव तथा बोधः इति भेदः अयव खलेकपोतन्याय ।

**खलेधानी** स्त्री खले धीयन्ते धान्याः अत्र धा–आधारे ल्युट् ङीप् । मेधिकाष्ठे जटाधरः । २स्थूणौ हेम० ।

**खलेयव** अव्य० । खले यवोऽत्र काले तिष्ठद्गु० स० । खले-स्थितयवकाले ।

**खलेवाली** स्त्री खले वाल्यन्ते चाल्यन्ते पशवो यत्र वल–चालने आधारे घञ् गौरा० ङीष् । खलमध्ये भूमिमध्यस्थे काष्ठभेदे (मेदकाठ) । "खलेवाली यूपो वाक्येभ्यः" शाङ्खा० श्रौ० १२,१,४८, खलमध्ये निखाता मेधिभूता खलेवाली" इति सं०व्या० । कात्या० श्रौ० ८,७,१२, तु कल्पमाख्यावयवाभ्या व्युत्पत्तिदर्शा यथा खलेवाली

यूप" सू०। खलेऽनडुद्गमने तद्बन्धनार्था मेथिः खलेवालीत्युच्यते खलेऽनडुहो वारयतीति खले वाली" नारा० "मेथ्यां हि दाम्नेनानडुहां वारणात् तथा भवति" रलयोरैक्यात् तथात्वम्।

खलेबुस अव्य० खले बुसमत्र काले तिष्ठद्गु०स०। खलेस्थित बुसकाले

खलेश पु० स्त्री खे जलादूर्द्ध्वाकाशे शेते संश्लिष्यति गतिकाले शी-अच् ७त०। (खलिसा) मत्स्यभेदे हारा० स्त्रियां जातित्वात् ङीष्।

खलेशय पु० स्त्री खलेशं जलादूर्द्ध्वस्याकाशसंसर्गं याति या-क। (खलिसा) मत्स्यभेदे शब्दरत्ना०। स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। [(खामार समूह)।

खल्या स्त्री खलानां समूहः यत्। खलसमूहे अमरः

खल्ल पु० खलति क्विप् खल् तं लाति ला-क। १ वस्त्रभेदे २ गर्त्ते ३ चर्म्मणि ४चातकविहगे पु०स्त्री० मेदि०। स्त्रियां जातित्वात् ङीष्। ५ दृतौ चर्म्ममयपात्रे (मसक) हेम०। ६ औषधमर्द्दनपात्रे (खल) वैद्यकम्।

खल्लिका स्त्री खल-क्विप् तं लाति-ला-क ततः संज्ञायां कन् कापि अत इत्त्वम्। ऋजीषे भर्जनपात्रे (भाजनाखोला) शब्दच०। शब्दचिन्तामणौ अयं बमध्यः पठितः तत्र वाते क इति भेदः।

खल्ली स्त्री खल्ल-क्विप् तं लाति ला-क गौरा० ङीष्। "खल्ली तु पादजङ्घोरुकरमूलावमोटनी" इति भावप्रकाशोक्ते रोगभेदे।

खल्लीट पु० खल्लीव टलति टल-विक्लवे वा० ड। १खलतिरोगे २तद्वति त्रि० त्रिका० पृषो० लस्य डः खल्लिटोऽप्यत्र शब्दरत्ना०। "खल्लीटः परनिन्दायाम् धेनुं दद्यात् सकाञ्चनाम्" शातातपेन तस्य परनिन्दनकर्मविपाकतोक्ता। खल्वाट इत्येव पाठः साधुः। तत्र खल्लु इवाटति अट-अच् इति व्युत्पत्तिः।

खल्व पु० खल-क्विप् तं वाति वा-क। निष्पावे धान्यधान्यभेदे "दश ग्राम्याणि धान्यानीत्युपक्रमे "खल्वाश्च खल कुलत्थाश्च" छा०उ०। "खल्वाः निष्पावाः वल्ला इति प्रसिद्धाः" शङ्करभाष्ये "व्रीहयश्च मे इत्युपक्रमे "खड्गावश्च मे खल्वाश्च मे" यजु० १८,१२, खल्वाश्चणकाः वेददीपः। तेन २चणके च।

खल्वाट पु० खल-क्विप् तं वटते वेष्टयते वट-वेष्टे अच् कर्म०स०। इन्द्रलुप्तरोगे (टाक) २तद्रोगवति त्रि० हेमच०

खव सम्पत्तिपवित्रतयोः प्रादुर्भावे, च क्र्या० पर०सक०सेट्। खव्नाति अखावीत् अखवीत्। चखाव। प्रनिखव्नाति।

खवल्ली स्त्री खे शून्ये वल्ली। मूलशून्यायाम् १आकाशवल्लयाम् राजनि०। खवल्लरीखलतादयोऽप्यत्र २आकाशलतायाञ्च।

खवारि न० खात् पतितं वारि शा०त०। दिव्योदके राजनि० खजलादयोऽप्यत्र।

खवाष्प पु० खस्य वाष्पम्। हिमजलकणे (ओस) हारा०।

खश(स) पु० देशभेदे त्रिका०। तस्य दन्त्यमध्यता मन्वादौ दृश्यते क्वचित् तालव्यमध्यता च तेनोभयरूपता। स च देशः वृ०स० कूर्म्मविभागे १४अ० पूर्वस्यामुक्तः "अथ पूर्वस्यामित्युपक्रमे "खशमगधशिविरगिरिमिथिलसमतटोड्राश्ववदनदन्तुरकाः"। सोऽभिजनोऽस्य, तद्देशस्य राजा वा अण्। खाश(स)। तद्देशवासिनि तद्देशनृपे च बहुषु तु अणो लुक्। ख(शा)साः तद्देशवासिनः तन्नृपाश्च। ते च शनकैः क्रियालोपात् वृषलत्वं गताः यथाह मनुः "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च। पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः। पारदापह्लवाश्चीनाः किराता दरदाः खशाः"। "खशांस्तु चारांश्चोलांश्च मद्रान् किष्किन्धकांस्तथा" हरि० १४ अ०। "खशा एकासनाह्यर्हाः प्रदरादीर्घवेणवः" भा० स० ५१ अ०। "अङ्गवङ्गखसेष्वेव माध्यदेशे कदाचन" मू०चि०। ३सुरामांसगन्धद्रव्ये शब्दच० ४कश्यपपत्नीभेदे दक्षकन्यान्तरे स्त्री यथा गरुडपु० ६अ० "धर्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम्। अदितिर्दितिर्दनुः काला अनायुः सिंहिका मुनिः। कद्रूः प्रधा इरा क्रोधा विनता सुरभिः खशा(सा)"। "इरा वृक्षलतावल्लीतृणजातीश्च सर्वशः। खशा(सा) च यक्षरक्षांसि मुनेरप्सरसस्तथा" तत्रैव तत्प्रजोक्तिः।

खशीर पु० १देशभेदे २तद्देशवासिनि ३तन्नृपे च बहुव०। "खशीराश्चान्तचाराश्च पह्लवा गिरिगह्वराः" भा० भी० ९ अ० उत्तरस्थजनपदकथने।

खशेट पुंस्त्री खे शेटति शिट-अनादरे अच्। (खविसर) मत्स्ये त्रिका०। तस्य गतिकाले खस्याधारत्वेन गतियोग्यत्वाभावेऽपि तस्य तथात्वमादरेण गमनात्तथात्वम्

खश्वास पु० खस्य श्वास इव। वायौ त्रिका०।

खष बधे भ्वा० पर० सक० सेट्। खषति अखाषीत्-अखषीत्। चखाष।

खष्प पु० खन-प नि० नस्य षः। १ क्रोधे २ बलात्कारे च। खष्पौ क्रोधबलात्कारौ, सि० कौ० उज्ज्वः शब्द-

**खाण्ड** न० खण्डस्य भावः ष्यञ्० भावे पक्षे अण् । खण्डभावे खण्डस्य विकारः अण् । २खण्डविकारे च ।

**खाण्डव** त्रि० खाण्ड खण्डविकारं वाति वा०क । खण्ड-विकारयुक्ते मोदकादौ । "रसालापूपकांश्चित्रान् मोदकांश्च सखाण्डवान्" भा० आनु० ५३ अ० ।

२वनभेदे । तच्च वनं पुरा शक्राद्यावासस्थानं तच्च छित्त्वा सोमवंश्येन सुदर्शनेन राज्ञा खाण्डवी पुरी कृता पुनः सा काशीराजेन विजयेन जित्वा शक्रनिदेशात् वनतां प्रापिता यथाह कालिकापु० ७८ अ० ।

"सोमवंशेऽभवद्राजा महात्मा स महाबलः । वीरः सुदर्शनो नाम चारुरूपः प्रतापवान् । स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् । सिंहान् व्याघ्रान् समुत्-सार्य्य कांश्चिच्चापि तपोधनान् । खाण्डवीं नाम नगरीम-करोत्तत्र शोभनाम् । त्रिंशद्योजनविस्तीर्णामायतां शतयोजनम्"॥ "असहिष्णुर्नरपतिर्विजयस्य सुदर्शनम् । कृतापचारं बहुधा देवानाञ्च तथा नृणाम् । वाराणसी-पतिं वीरं विजयं जयशालिनम् । सन्धाय कृत्वा सा-चिव्यं तत्रैवैष न्ययोजयत् । विजयो विवरं प्राप्य महाबलपराक्रमः । सुदर्शनस्य नृपतेरवस्कन्दमथा-करोत् । नासहत् सोऽप्यवस्कन्दं विजयस्य सुदर्शनः । चतुरङ्गबलेनाशु युद्धायाभिमुखोऽभवत् । विजयो रथ-मारुह्य नियुज्य चतुरङ्गिणीम् । सेना सुदर्शनं योद्धुं सम्मुखोऽभवदञ्जसा । तदा महद्युद्धमासीद्विजयेन महात्मना । सुदर्शनस्य नृपतेर्बलवासवयोरिव । ततः सुदर्शनो राजा दारितो गदयाऽपतत् ॥ उत्फुल्लनयनो राजा विजयः परवीरहा । मेनेऽमरावतीं तान्तु पुरीं क्षितिगतामिव" । "तं वीक्षन्तं नरपतिं नगरीं तां सुरे-श्वरः । समेत्य विजयं प्राह सान्त्वयन् श्लक्ष्णया गिरा । इन्द्र उवाच । राजन् ! महद्वनमिदमासीद्देवगणाट्टतम् । नरगन्धर्वयक्षाणां मुनीनाञ्च मनोहरम् । सर्व्वांस्तुत्-सार्य्य देवादीन्मम चात्यप्रिये रतः । भङ्क्त्वा वनमिदं शुद्धं समुत्सार्य्य तपोधनान् । खाण्डवीं नगरीं चक्रे हठाद्राजा सुदर्शनः । तदिदं पुनरेव त्वं वनं कुरु नृपोत्तम ! । तत्राहं विहरिष्यामि तच्चक्रेण समं रह । मुनीनाञ्च तपःस्थानं मण्डनं ते प्रसादतः । भवि-ष्यति च यक्षाणां किन्नराणाञ्च पार्थिव ! । मार्कण्डेय उवाच । एतत् श्रुत्वा वचस्तस्य शक्रस्य विजयस्तदा । वनमेवाकरोत्तान्तु खाण्डवीं शक्रगौरवात् । गच्छन्तु मो यथास्थानं प्रजाः सर्व्वा यथेच्छया । येषां वाञ्छास्ति लोकानां मद्राज्यगमने पुनः । वाराणसीं ते गच्छन्तु मयैव प्रतिपालिताम् ॥ ततस्तस्य वचः श्रुत्वा जनाः केचिन्निजं पदम् । जग्मुर्वाराणसीं केचिद्विजयेनाभिपा-लिताम्" ॥ "अष्टाविंशतिमे प्राप्ते युगे द्वापरशेषतः । वह्निर्ब्राह्मणरूपेण भिक्षां जिष्णुमयाचत । दातुमङ्गी-कृते भिक्षां तदा पाण्डुसुतेन वै । वह्निस्वरूपमास्थाय जिष्णुं वचनमब्रवीत् । अहमग्निः पाण्डुपुत्र ! यज्ञ-भागातिभोजनात् । व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना । खाण्डवं नाम विपिनं सपक्षिमृग-राक्षसम् । यदि त्वं मां भोजयितुं शक्नोषि श्वेतवाहन ! तदा ममात्यसौ व्याधिरपयास्यति नोचिरात् । पुरा तु विजयो राजा खाण्डवी नाम तां पुरीम् । भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् । यदर्थं देवविहितं वनं बध्येतवाहन ! । विरोधात्तत् शक्रस्य न स्वयं भोक्तु-मुत्सहे । तन्मां त्वाहि महाभाग ! वने तस्मिन्नियोजय । यथाहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः । तस्य तद्वचनं श्रुत्वा सव्यसाची महाबलः । दाहयामास विपिनं तत् सर्व्वं प्राणिसंयुतम् । देवकीतनयोपेतो वासुदेवेन पालितः । खाण्डवं दाहयामास ज्वलनस्य हिते रतः" । २तन्नामपुर्य्यां स्त्री ।

**खाण्डवप्रस्थ** पु० इन्द्रप्रस्थे युधिष्ठिरवासस्थानभेदे "अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽभिचिन्तितः" भा० आ० ६१ अ० । इन्द्रप्रस्थशब्दे तत्कथा दृश्या ।

**खाण्डवायन** पु० ऋषिभेदे "व्यजन्त तदा राजन् ! प्रख्याताः खाण्डवायनाः" भा० व० ११७ अ० ।

**खाण्डविक** पु० खाण्डवं मोदकादि शिल्पमस्य ठञ् । मोदक-कारके (मयरा) "आरालिकाः सूपकाराः ये च खाण्डविकास्तथा" भा० आश्र० १ अ० ।

**खाण्डवीरणक** त्रि० खण्ड इव वीरणः खण्डवीरणः तत अदूरभवा० चतुरर्थ्यां वुञ् । खाण्डवीरणसन्निकृष्ट-देशादौ । [मोदककारके हारा० ।

**खाण्डिक** स्त्री खण्डं मोदकादि शिल्पमस्य ठञ् । (मयरा)

**खात** न० खन–भावे क्त । १खनने कर्म्मणि क्त । २पुष्करि-ण्यादौ त्रि० "पूर्त्तं खातादिकर्म्म च" अमरः । तडाग-शब्दे विवृतिः । खातवेतनादिदानार्थं क्षेत्रफलज्ञानोपयोगी खातव्यवहारो लीला० उक्तो यथा ।

"अथ खातव्यवहारे करणसूत्रं सार्द्धार्य्या । गणयित्वा

विस्तारे वसुषु स्थानेषु तद्युतिभक्त्या । खातकमित्या समभितिरेव दैर्घ्ये च वेधे च । क्षेत्रफलं वेधगुणं खाते घनहस्तसङ्ख्या स्यात् ॥ उदाहरणम् । भुजवक्रतया दैर्घ्यं दशेशार्ककरैर्मितम् । त्रिषु स्थानेषु षट्पञ्चसप्तहस्ता च विस्तृतिः ॥ यस्य खातस्य वेधोऽपि द्विचतुस्त्रिकरः सखे ! । तत्र खाते कियन्तः स्युर्घनहस्ताः प्रचक्ष्व मे ॥

१२
१० ११ ४ ४ ३ ३ २ १ मध्यान्तविषमखातं
व्यासः ७ ६ ५ ५ ६ ७
५ ८ ६ ६ ४ ४ १० ११
१२

अत्र समभितिकरणेन विस्तारे हस्ताः । ६ । दैर्घ्ये ११ वेधे । ३ ।

तत् क्षेत्रदर्शनम् यथा

११
३
व्यास ६ सम्भितिः ६
११

यथोक्तकरणेन लब्धा घनहस्तसङ्ख्या । १९८ ।

खातान्तरे करणसूत्रं सार्द्धवृत्तम् । मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं षड्भिः ॥ क्षेत्रफलं सममेवं वेधगुणं घनफलं स्पष्टम् । समखातफलत्र्यंशः सूचीखाते फलं भवति ॥

उदाहरणम् । मुखे दशद्वादशहस्ततुल्यं विस्तारदैर्घ्यं तु तले तदर्द्धम् । यस्याः सखे ! सप्तकरश्च वेधः का खातसङ्ख्या वद तत्र वाप्याम् ॥

१२
७
व्यास १० विषमखातं १०
१२

मुखजं क्षेत्रफलम् ।१२०। तलजम् ।२०। तद्युतिजम् । २७० । एषामैक्यम् । ४२० ।

षड्भिः । ६ । हृतं जातं समफलम् ।७० । वेध । ७ । हृतं जातं खातफलं घनहस्ताः । ४९० ।

द्वितीयोदाहरणम् । खातेऽथ तिग्मकरतुल्यचतुर्भुजे च किं स्यात् फलं नवमितः किल यत्र वेधः । हस्ते तथैव दशविस्तृतिपञ्चवेधे सूचीफलं वद तयोश्च पृथक् पृथङ्मे ॥

१२
९
व्यासः १२ समखातं १२
१२

भुजः । १२ । वेधः । ९ जातं यथोक्तकरणेन खातफलं घनहस्ताः ।१२९६। सूचीफलम् । ४३२ ।

वृत्तखातदर्शनाय ।

वेधः ५ वृत्तखातं
व्यासः व्यासः १०

व्यासः । १० । वेधः । ५ । अत्र सूक्ष्मपरिधिः ३९२७/१२५ सूक्ष्मक्षेत्रफलम् ३९२७/५

वेधगुणं जातं सूक्ष्मखातफलं ३९२७/१० सूक्ष्मसूचीफलं १३०९/१० तथा स्थूलखातफलं २७५०/७ सूचीफलं स्थूलं वा २७५/२१ ।"

खनकशब्दे उदा० । २कूपे निघ० । ३खननकर्ममात्रे त्रि० "खातभुवैर्द्विभुजां विषमभे" माघ. ।

**खातक** न॰ खात प्रशंसायां कन्। १परिखायाम् (खाद) हेमच॰। “अधमर्णो धनस्वामी अधमर्णस्तु खातक” इत्युक्ते २अधमर्णे ३परसैन्यविदारके च “खातक-व्यूहतत्त्वज्ञ बलहर्षणकोविदम्” भा॰ शा॰ ११८ अ॰। “खातका परसैन्यविदारका.” नीलक॰।

**खातभू** स्त्री खातयुक्ता भूः। १परिखायाम् २प्रतिकूपे च हारा॰

**खाति** स्त्री खन–खै–वा भावे क्तिन् आत्। खनने।

**खात्र** न॰ खन–त्रल् किच्च आत्। खनित्रे २जलाधारे च सि॰कौ॰ ३वने ४सूत्रे च शौचसूत्रार॰।

**खाद** भक्षणे भ्वा॰ पर॰ सक॰ सेट्। खादति अखादीत् चखाद। खाद्यः खादकः खादनम्। णिचि। खादयति अचिखादत् त। “शक्तून् खादति यस्य तस्य रिपवोनाशं प्रयान्ति ध्रुवम्” ति॰ त॰ “न खादेः पर-शस्यानि” कर्मोत्सर्गमन्त्रः। “देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्” मनुः। “स हि (उशस्ति॰) कुल्माषान् खादन्तं बिभिक्षे” छा॰ उप॰। “मांसानि च न खादेद्यस्तयोः पुण्यं समं स्मृतम्” मनु॰। “आशङ्कमानो वैदेहीं खादिता निहतां स्मृताम्” भट्टिः। “तादृशं भवति प्रेत्य यथा मांसानि खादकः” मनुः। भट्टभावप्रकाशः। खादनस्य हिंसाव्यभिचरितत्वात् हिंसार्थत्वात् अकित्त्वेऽपि वा॰ चुरा॰ तेन स्वार्थे णिच् खादयति। “दुर्बलं भक्षयन्तो हि मत्स्यामत्स्यं विशेषतः। खादयन्ति” मत्स्यपु॰ “मां खादय मृगश्रेष्ठ। दुःखादस्माद्विमोचय” भा॰व॰ ६१ अ॰। “देवराजो मया दृष्टो वारिवारणमस्तके। खादयन्नर्कपत्राणि” विदग्धमु॰। अस्य भक्षणार्थत्वेऽपि “आदिखाद्योर्न” वार्त्ति॰ णिचि प्रयो-ज्यकर्त्तुः न कर्मत्वम्। खादयति अन्नं बटुना “वयोभिः खादयन्त्यन्ये” “तां श्वभिः खादयेद्राजा” मनुः। “मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः” भट्टिः। खादनञ्च कठिनादि द्रव्यस्य गलाधःसंयोगानुकूलव्यापारविशेषः प्रति-षिद्धभक्ष्यविषये तु यद्गमात्रप्रवेशेऽपि प्रायश्चित्तार्द्धमिति भेदः यथाह प्रा॰त॰ “यद्यपि अश्नादीनां कण्ठादधो-नयनमेव भक्षणं न तु निष्ठीवनाय मुखन्यादे कवोष्ण-धारणं, तथाविधे प्रयोगाभावात्। तथापि पापविषये तथा-विधानुबन्धेऽपि प्रायश्चित्तं, ब्रह्मघ्ने तथा दर्शनात् यथा याज्ञवल्क्यः “चरेद्व्रतमहत्वाऽपि घातार्थञ्चेत् समागतः”। अत्र हननप्रतिषेधेन यथा तदङ्गभूताध्यवसायादेरपि प्रति-षिद्धत्वात् प्रायश्चित्तविधानं तथाऽत्रापि भक्षणप्रतिषेधेन तदङ्गभूताव्यभिचारिताघ्रादिसंयोगस्यापि प्रतिषिद्ध-त्वेन दोषस्य विद्यमानत्वात् भवत्येव प्रायश्चित्तं, मिता-क्षरायामप्येवम्। अतएवोक्तं “निष्ठन्नपि सुरां कश्चित् पिबतीत्यभिधीयते। यावन्न क्रियते यत्नो गण्डूषस्य प्रवेशनम्” इति। अत्र यत्नो गण्डूषस्य प्रवेशनेन पानाति-देशवद्भक्षणोद्यमेऽपि भक्षणातिदेशः। ततश्च विप्रदण्डो-द्यमे कृच्छ्रमतिकृच्छ्रं निपातने” इति याज्ञवल्क्योक्तेः दण्डोद्यमे दण्डनिपातप्रायश्चित्तार्द्धवत् भक्षणोद्यमे कण्ठादधोनयनसम्भावनारहिते अर्द्धं प्रायश्चित्तं ज्ञेयम्”

**खादक** त्रि॰ खाद–ण्वुल्। १भक्षके। “तथा मांसानि खादकः” मनुः “यदि चेत् खादको न स्यात् न तदा घातको भवेत्” भा॰ आनु॰ ५६२४ श्लो॰। २अधमर्णे च “खादको वित्तहीनः स्यात् लग्नको वित्तवान् यदि। मूलं तस्य भवेद्देयम्” नारदः “खादकोऽधमर्णः” मिता॰।

**खादतमोदता** खादत मोदत इत्युच्यते यस्यां क्रियायाम् मयू॰स॰। खादनमोदनाय निदेशक्रियायाम्।

**खादन** पु॰ खादत्यनेन खाद–करणे ल्युट्। १दन्ते हेम॰। भावे ल्युट्। २भक्षणे न॰। “अश्मना खादनेनाहमर्थी नास्येन केनचित्” रामा॰२,५०स॰४५ श्लोक।

**खादि** त्रि॰ खाद–कर्मणि इन्। भक्ष्ये “धंसेष्वा वः प्रपथेषु खादयः” ऋ॰१,१६६,९,। “खादयः भक्ष्याः” भा॰ खाद–धातूनामनेकार्थत्वात् त्राणे कर्त्तरि इन्। २त्रायके। “हस्तेषु खादिश्च कृतिश्च संदधे” ऋ॰१, १६८,३। “हस्तेषु खादि कृत्तत्रायक.” भा॰।

**खादित** त्रि॰ खाद–क्त। भक्षिते अमरः। “आशङ्कमानो वैदेहीं खादितां निहतां स्मृताम्” भट्टि।

**खादिन्** त्रि॰ खाद–णिनि। भक्षके स्त्रियां ङीप्। “लोष्ट-मर्द्दी तृणच्छेदी नखखादी च यो नरः” मनुः।

**खादुक** त्रि॰ खाद–उकञ् सञ्ज्ञायां कन्। हिंसाशीले हेम॰।

**खादोअर्णस** स्त्री खाद–कर्मणि असुन् खादः खाद्यमर्णः जलं यस्याः पृषो॰ पूर्वरूपैकादशाभावः नद्याः। निघ॰।

**खाद्य** त्रि॰ खाद–कर्मणि ण्यत्। भक्ष्ये। “मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप!” भा॰स॰ ४अ॰।

**खान** न॰ खै–धातूनामनेकार्थत्वात् भक्षणे भावे ल्युट्। भक्षणे। “सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः। इतरे खानपानेन वाक्प्रदानेन पण्डिताः” गरु॰ पु॰ १०९ अ॰। “खाने पाने च दातव्यम्” दत्ता॰ तन्त्रम् खै-खनने हिंसने च भावे ल्युट्। १खनने २हिंसने च।

खानक त्रि० खन–ण्वुल्। खनके "व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान्" मनु।

खानि स्त्री खनिरेव पृषो० वृद्धिः। स्वर्णाद्युत्पत्तिस्थाने आकरे हेमच०। वा ङीप् तत्रार्थे शब्दच०। [त्रिका०।

खानिक न० खानेन खननेन निर्वृत्तं ठञ्। कुड्यच्छेदे गर्त्ते

खानिल पु० खानं खननं शिल्पत्वेनास्त्यस्य वा० इलच्। सन्धिचौरे भित्तिभेदनेन चोरयितरि त्रिका०।

खानिष्क पु० "दीप्ताग्नीनां सदा पथ्यः खानिष्कः कफहा गुरुः" सुश्रुतोक्ते मत्स्यभेदे। [त्रिका०।

खानोदक पु० खानाय भोजनाय उदकमत्र। नारिकेले

खापगा स्त्री खस्याकाशस्यापगा। गङ्गायाम् हेम०। खधुनी खनदीप्रभृतयोऽप्यत्र।

खार पु० खमवकाशमाधिक्येन ऋच्छति ऋ–अण् उप० स०। खारीपरिमाणे उज्ज्वल०।

खारि(री) स्त्री खं मध्यावकाशमाराति आ+रा–क गौरा० ङीष् वा ह्रस्व। द्रोणषोडशात्मके धान्यादिमानभेदे। "पलञ्च कुडवः प्रस्थ आढको द्रोण एव च। धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः। द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते" हेमा० दा० विष्णुध०। अर्द्धशब्दात् संख्यायाश्च परतोऽस्य समासे वा टच्। अर्द्धखारम् अर्द्धखारि। द्विखार द्विखारि। अर्द्धखार्य्या क्रीतम् ठक् पूर्वपदस्य वा वृद्धिः। अ(आ)र्द्धखारिकम्। अध्यर्द्धशब्दात् संख्यायाश्च परतः खार्य्याः क्रीताद्यर्थे ईकन्। अध्यर्द्धखारीकं द्विखारीकम्। केवलाया अपि ईकन् तत्रार्थे खार्य्या क्रीतम् खारीकम्। [ह्रस्वश्च। खारीध्मायके।

खारिन्धम त्रि० खारीं धमति ध्मा–खश् धमादेश मुम्

खारिम्पच त्रि० खारीं तन्मितधान्यं पचति पच–खश् मुम् ह्रस्वश्च। खारीमितान्नपाचके।

खारीक त्रि० खारीं खारीवापमर्हति ईकन्। खारीवापयोग्ये क्षेत्रे शब्दर० २खारीमितधान्यादिक्रीते च।

खारीवाप त्रि० खारी तन्मितधान्यम् उप्यतेऽत्र वप–आधारे घञ्। खारीमितधान्यवपनयोग्ये क्षेत्रादौ अमरः। खारीं वपति वप–कर्त्तरि अण् उप०स०। खारीमितधान्यादिवापके त्रि० स्त्रियां टाप् सि०कौ०। मुग्ध० मते अण्यन्त स्त्रियाम् ङीप् इति भेदः।

खार्कार पु० गर्द्दभजातिशब्दे "खार्काररभसा मत्ताः पर्य्यधावन् वरूथशः" भाग० ३,१७,१२ तस्य तत्रार्थतामाह श्रीधरः।

खार्जुरेय त्रि० खर्जुरस्येदम् वा० ढक्। खर्जुरसम्बन्धिनि। २रसालभेदे न०। "मधुरदधनि मध्ये शर्करां चन्द्रिकोत्थ शुचि विदलितखण्डं मर्दयेत् खार्जुरेयम्। कर्पूरसु-[र]भितमेवैवोसितं नाभिनन्द्यैर्ज्जनमिह जठराग्निं स्थापय-त्येव नूनम्। रसालं खर्जु(र्जू)रजस्वेद निर्ज्जितरविकार-कम्। हृद्यञ्च कफदं बल्य पित्तघ्नं शुक्रकृत् वरम्" भावप्र०।

खालत्य न० खलतेर्भावः ष्यञ्। इन्द्रलुप्तरोगे "जरा खालत्यं पालित्यं शरीरमनुप्राविशन्" शत० ११।८।१९। पृषो० इन्द्रलुप्ताख्ये रोगे यथाह सुश्रुतः "रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते"।

खिखिर पुंस्त्री खिङ्किर–पृषो०। (खेंकशियाली) शिवाभेदे त्रिका०। [शेयाली) शिवाभेदे त्रिका०।

खिङ्किर पु० खिमितव्यक्तं शब्दं किरति कॄ–क। (खेंक-

खिट भये भ्वा० पर० सक० सेट्। खेटति अखेटीत्। चिखेट। खेटकम्।

खिद् परितापे तुदा० पर० सक० अनिट् मुचादि। खिन्दति खिन्दतः। अखैत्सीत् चिखेद। खिन्नः।

खिद् दैन्ये दिवा० रुधा० च आत्म० अक० भीषायां सक० अनिट्। खिद्यते खिन्ते अखित्त चिखेद। खिन्नः। "सद्गुणनिरभिलाप खिद्यते शोकहेतो" प्रबु०। "हरिरित्यखिद्यत नितम्बिनीजनः" माघः। "खिन्ने तेष्वेव ये द्रव्य दीयमानं न स्फुरति" कविरहस्यम्। "अखिन्दानस्य तेजसा" भट्टिः। "प्रहस्तश्चिखिदे न च" भट्टिः "खिदज् ध्यौ दैन्यके" इत्येव वोपदेवे पाठ अतएव "रक्षः व्यचीवदक्षाप्यदखिद्यद्वाजिकुञ्जरम्" भट्टिः

आ+प्रकर्षेण खेदने। "आखिद्यते प्रखिद्यते च मम" ऋक्० १६।४६। "आखिद्यते प्रकर्षेण खेदयति पापिन" वेददी०। वेदे गणव्यत्ययः अन्तर्भूतण्यर्थता च।

उद्+उत्पाटने। "प्रजापतिरात्मनो वपामुदखिदत्" श्रुतिः। "अथ वपामुत्खिदन्ति" शतब्रा० ३।८।२।५। "इमां वपामुत्खिदन्ति मध्यतः" ३।८।३।२। "वपामुत्खिदतो-त्सृत्खिद्य" ४।५।१।१२। सर्व्वत्र गणव्यत्ययः।

परि+समन्तात् खेदे। "कान्ताविभागपरिखेदितचित्तवृत्तिः"। "परिखेदितविन्ध्यवीरुधः" भट्टिः। "लोकस्यानभिमान आत्मन परिखिद्यतः" भाग० ३।९।२८।

सम्+सम्यक्तापे अक० उत्पाटने सक०। "यथा हृदयः समही

यद्ब्रूनू संखिदेत् यद्भितरान् समखिदत्” छा०उ० ।

**खिदिर** पु० खिद्यते अण्णपद्मे खिद्–किरच् । चन्द्रे उज्ज्वल० ।

**खिद्यमान** त्रि० खिद्–ताच्छील्ये चानश् ।१दैन्ययीने२खेद-युक्ते च ।

**खिद्र** त्रि० खिद–दैन्ये रक् । १रोगे २दरिद्रे च उज्ज्वल० । “वलिता पर्वतानां खिद्रं बिभर्षि पृथिवि ।”अथ०५।८४।१।

**खिद्वन्** त्रि० खिद–अन्तर्भूतण्यर्थे क्वनिप् । खेदकारके । “कस्ते कियो दप्र खिद्वः” ऋ० ६।२२।४। “खिद्वः ! शत्रूणां खेदयितः ।” भा० ।

**खिन्न** त्रि० खिद–क्त । १दैन्ययुक्ते, २अलसे,३खेदयुक्ते च । “खिन्नः कार्ये लघो भूप !” मनु० “तयोपचाराञ्जलि-खिन्नहस्तया” रघुः ।

**खिरहिट्टी** स्त्री महासमङ्गायाम् राजनि० ।

**खिल** कणश आदाने तुदा० पर० सक० सेट् । खिलति अखेलीत् । चिखेल ।

**खिल** त्रि०खिल–क । इगुपधत्वात्कादिना १अक्षष्टे क्षेत्रादौ२सारतः संक्षिप्ते पूर्वोक्तानुक्तपरिशिष्टे, यथा ऋग्वेदे श्रीसूक्तादि, यजुर्वेदे शिवसंकल्पादि, महाभारते हरिवंशः । खिलेषु हरिवंश इति पुष्पिकाव्याख्याने “खिलो नारायणः प्रोक्तस्तद्गुणा इमम् स्मृता” इति नीलकण्ठेनोक्ते: ४नारायणे पु०। तत अभूततद्भावे भूधातुना कृधातुना च समासः । खिलीभवति खिलीकरोति त्रि० । “खिलीभूते विमानानां तदापातभयात् पथि” कुमा० । “तौ सुकेतु-सुतया खिलीकृते” रघु० । “पीडयिष्यति न मां खिली कृता स्वर्गपद्धतिरभोगलोलुपम्” रघु० । “विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा.” माघ । “धर्मशास्त्राणि चैव हि । व्याख्यानानीतिहासाश्च पुराणानि खिलानि च” मनु० । “अलं दशार्द्रं मर्टीते खिलानां शिवमस्तु वः” भाग० ६।४।१५ ।

**खिल्य** त्रि० खिले भव यत् । खिलभवे लवणादौ । “यथा सैन्धवखिल्यः उदके प्रास्त उदकमेवानुविलीयेत” शतब्रा०१४,५,४।१२।“स्यन्दनात् सिन्धुरुदकं तस्य विकार-स्तत्रभवो वा सैन्धवः सचासौ खिल्योलवणशकलश्चेति सैन्धवखिल्य” भा०। २खिले परिशिष्टे पठिते च । “इदानीं खिल्यान्युच्यन्ते वेददी०। तानि च “अग्निश्च पृथिवी च समेते” इत्यादीनि यजु० २६अ० गतानि । एवम्-ग्वेदे खिल्यानि दशमखण्डे द्रष्टव्यानि ।

**खिलेषु** पु० खिलस्य हरेर्दृगुणो यत । हरिवंशे । तत्र हरिगुणाधिक्यवर्णनात्तथात्वम् । “खिलेषु हरि-वंशे” हरिवंशस्याध्यायसमाप्तिपुष्पिका ।

**खील** पु० कील+पृषो० । कीलके । “त्रीणि शतानि श्रद्धन-पदिः खीला अविषाचला ये” अथ०१०।८।४ । [चुखुले ।

**खु** ध्वनौ भ्वा० आत्म० अक० अनिट् । खवते अखोष्ट ।

**खुङ्गाह** पु० खुमित्यव्यक्तं शब्दं कृत्वा गाहते गाह–अच् । कृष्णपिङ्गलवर्णे तवर्णेऽश्वे हेमच० ।

**खुज** स्तेये भ्वा० पर० सक० सेट् । खोजति अखोजीत् । चुखोज उदित् खोजित्वा खुक्त्वा खुग्न० ।

**खुज्जा(ज्ञा)क** पु० खुज–वा० आक वा० नुगागमो कमा-गमो वा । देवतालवृक्षे रत्नमा० ।

**खुड** खञ्जे इदित् भ्वादि० आत्म०अक० सेट् । खुण्डते अखु-ण्डिष्ट । चुखुण्डे । खुण्ड्यते।

**खुड** भेदने चुरा० उभ० सक० सेट् । खोडयति–ते अचूखु-डत्–त । खोडयाम् बभूव मास चकार चक्रे ।

**खुड** भेदे चुरा० इदित् उभ० सक० सेट् । खुण्डयति ते अचुखुण्डत् त ।

**खुडक** पु० खुलक लस्य डः । गुल्फभागभेदे खुलकशब्दे दृश्य. “न्यस्ते तु विषमे पादे रुज कुर्यात् समीरणः । वातकण्टक इत्येष विज्ञेयः खुडकाश्रित.” सुश्रु०” भावप्र० तु “रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्” स-मानप्रकरणे खुडकाश्रित इत्यस्य स्थाने गुल्फाश्रयतोक्ते-स्तस्य गुल्फांशार्थता ।

**खुट्ट** भेदने सक० पर० अनिट् । खोदति अखोदीत् चुखोद । “चोदयत खुटत वाजसातये” ऋ० १०।१०१।१२ । माधवस्तु खर्दधातोरेव तद्रूपमुक्त्वा रलोपश्छान्दस इत्याह वोपदेवधातुपाठे तु अयं धातुर्नास्ति ।“चनीखुदद्यथा सपम्”आश्व०श्रौ० २।१०।१४। [ खुर. ।

**खुर** विलेखने तुदा०पर०सक०सेट् । खरति अखोरीत चुखोर

**खुर** पु० खुर–क । १शफे पशूना पादस्योर्द्धस्थिते नखाधारे पदार्थे २कोलदले ३नखीनामगन्धद्रव्ये मेदि० । करणे घञर्थे क । ४नापितास्त्रभेदे शब्दर०। ५खट्वापादे(खाटेर खुरा ) धरणी । “उद्धातृक्वणानुमकवेणु सुराभिघातान्” माघ । “रज.कणैः खुरोद्धृतै” रघु० । खुरगन्धस्य वक्षा०ङीष् वा खुरी । तेन क्रीतमण्वय ।

**खुरक** पु० खुर इव कायति कै–क । तिलवृक्षे शब्दच० ।

**खुरणस्(स)** त्रि० खुर इव नासिकाऽस्य नसादेशः टच्

सता० चलच्च । चिपिटनासिके । अमरः । [स्वामी ।
खुरप्र पु० खुर इव माति–पूरयति प्रा–क । क्षुरप्रशब्दार्थे
खुरली स्त्री खुर इव लाति–ला–क गौरा० ङीप् । १शरा-
भ्यासे त्रिका०। शस्त्रप्रयोगे २अभ्यासमात्रे च । "खुरली
कलहे गजानाम्" महावीरच० ।
खुराक पु० स्त्री खुर–आकन् । पर्य्यो उणा० ।
खुरालक पु० खुर इवा चति पर्य्याप्नोति अल–एवुल । लौह-
मयवाणे शब्दमा० ।
खुरालिक पु० खुराणामालिमि कायति प्रकाशयते कै–क ।
(भाड)१नापिताक्षमाण्डे,२नाराचास्त्रे ,३उपधाने च मे०
खुरासान पु० "हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि ।।
खुरासानाभिधो देशो म्लेच्छमार्गपरायणः" इत्युक्ते देशभेदे
खु(खू)र्द्द क्रीड़ायां भ्वा०आ० अक० सेट् । खु(खू)र्द्दते अखु-
(खू)र्द्दिष्ट चुखु(खू)र्द्दे ।
खुलक पु० खुर–कुन् स्वार्थे क । गुल्फाष्टमभागे "आ गुल्फ-
कक्ष्यात् सुमितस्य जन्तोस्त्वष्टाष्टभागं खुलकाहिमस्य" सुश्रु०।
खुल्ल न० खुद्–सम्पत्क्रिप् तां लाति ला–क पृषो० । १नखी-
नामगन्धद्रव्ये शब्दच०। २क्षुद्रे ३अल्पे ४कनिष्ठे च त्रि०
स्वार्थे क । तदर्थे निष्ठुरे दरिद्रे खले च अमरः ।
खुल्लतात पु०खुल्ल कनिष्ठस्तातस्य नि०पूर्वनि०। पितृ कनिष्ठ-
भ्रातरि शब्दच०एव खुल्लपितामहादयोऽपि पितामहादेः
कनिष्ठभ्रातरि ।
खुल्लम पु०खुल्लेन मीयते मा या० घञर्थे क । पथि त्रिका० ।
खुगल न० तनुत्राणे "खुगलेव विसम पातमसात्" भा०
२।२६।४ । खुगला "तनुत्रिकाया रचत" भा० "पिशङ्गे
स्कन्धे खुगल तटा बध्नन्ति वेधसः" ऋग्० ३।८।२ ।
खेखीलक पु० खे आकाशे खीलक इव लस र' । शब्दवत्यां
यष्टयाम् हारा० [ कराटविहगे शब्दमा० ।
खेगमन पु स्त्री खे व्याकाशे गमनमस्य अलुक् स० । काक-
खेचर पु० खे चरति चर–ट अलुक्स०। १शिवे, शब्दर०
२विद्याधरे जटा० ३पारदे राजनि० ४सूर्यादिग्रहे,
५आकाशगामिमात्रे त्रि० । स्त्रियां ङीप् । ६हस्वे
न० रत्ना० हस्तस्य वाक्यया खे गतिमत्त्वात्तथात्वम् ।
७गोटके पु स्त्री शब्दरत्ना० दक्षोगाङ्गे मुद्राभेदे स्त्री
यथाह काशीख० ४०अ० । "कपालकुहरे जिह्वा
प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति
खेचरी । न पीड्यते स रोगेण न च लिप्येत कर्मणा ।
बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम् ।
चित्तं चरति खे यस्मात् जिह्वा चरति खे गता ।
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता । याव-
द्विन्दुः स्थिरोदेहे तावत् कालभयं कुतः । यावद्बद्धा
च सा मुद्रा तावद्विन्दुर्न गच्छति" इत्यन्योक्ते पूजाङ्गे
मुद्राभेदे यथा "मध्यन्त्रिकादेशेषु मध्यदेशे तु दक्षि-
णम् । नाङ्गुष्ठाना महादेवि । हस्तौ द्वौ परिवर्त्तयेत् च ।
कनिष्ठानामिके देवि । युक्तं तेन क्रमेण च । तर्ज्ज-
नीभ्याम् समाक्रान्ते सर्वोर्द्ध्वमपि मध्यमे । अङ्गुष्ठौ
महेशानि ! सरलौ वापि कारयेत् ।' इय सा खेचरी
नाम्ना मातिवरभामयोजिता"तन्त्रसा०। १०मेषादिराशौ
पु० । "खेचराः सर्वे" ज्यो० त० । सर्वे राशयः ।
खेट भोजने चद० पु० उभ० सक० सेट् । खेटयति ते अ-
चिखेटत् त ।
खेट पु० खेटति खट–अच् खिट–अच् वा । १सूर्य्या-
दिग्रहे, "यत्किन्नृक्षे स्थिताः खेटाः" इति ज्यो०त० ।
२अधिने त्रि० मित्र । ३अधमे त्रि० अमरः
४कर्षकग्रामे पु० मेदि०"खेटखर्वटवाटीव ग्रामान् प्रवभाजि
भाग० १,७,११ । "खेटा कर्षकग्रामा" श्रीधरः ।
५अस्त्रभेदे पु०"यष्टिकेव खेट । समरिसंहारकारक ।
देवीहस्तस्थितोनित्यम्" तत्पूजा मन्त्र । स्वार्थे क ।
तदर्थे पु०न० "दिव्याम्बरधरा देवीं खड्ग खेटकधारिणीम्"
मा० वि० ह्रष० । "अनयो स्त्रियौ च कार्य्ये खेटक-
निस्त्रिंशधारिणौ" ह०सं० । अनयोः साम्बप्रद्युम्नयोः,
"खेटकं पूर्णचापञ्च" दुर्गाध्यानम् । "खेटकासन्तु हस्त-
स्थितमेवारीन् हन्ति यथाह "हस्तत्रोविश्वावसुनानि"
यजु० १६,५१ । "हस्ते स्थितोहन्ति हस्तघ्न खेटक"
वेददी० स च यष्टिरूपः । ६चर्मणि मेदि०। खिट भये
करणे घञ् । ७मृगयायाम् पुं न० आखेटकम् । कर्त्तरि
अच् । ८तृणे न० हेमच०। कु(क)लपास्त्रस्याधःस्थिते
दफलकाकारे काष्ठभेदे न० तन्मानमुक्तं हेमा०परि०ख०
लक्षणसमुच्चये "तत्र खेटकमपि कु(क)लपस्य त्रिविधस्तम्
द्वादशाङ्गुलं दशाङ्गुलं मध्यमष्टाङ्गुलं निकृष्टम् बाला-
नामेतत् खटकमबालानान्तु विंशत्यङ्गुलमुत्तममष्टादशाङ्गुलं
मध्यमं षोडशाङ्गुलं निकृष्टमिति" यौवनमीति' ।
१०बलदेवशीविनि त्रि० हारा० ११बलदेवगदायामि-
त्यन्ये, १२कफे मेदिनि० ।
खेटाङ्ग खेटकाङ्ग वस्त्र । अमङ्गलकजन्तुभेदे, "डाकिनी
शाकिनीभूतप्रेतवेतालराक्षसाः । चण्डखड्गखेटाङ्गाः

कालकर्णी शिशुपका॰। ज्वरापस्मारविस्फोटतृतीयक चतुर्थकाः। सर्वे प्रशममायान्ति शिवतीर्थजलोक्षणात्" काशीख॰ ११ अध्या॰।

खेटितान पु॰ खेऽटति खिट-इन् खेऽटति अट–इन् वा खेटि-तानोऽस्य। वैतालिके बोधकरे शब्दमा॰।

खेटिन् पु॰ खिट-णिनि। १नागरे २कामिनि शब्दमा॰।

खेड भक्षणे अद॰ चु॰उभ॰सक॰सेट्। खेडयति ते अचखेडत्

खेद पु॰ खिद–भावे घञ्। १शोके हेम॰ २अवसादे-जटा॰। खिद–णिच् कर्त्तरि अच्। ३रोगे कैयट॰। "खेदो-रत्यध्वगत्यादेः श्वासनिद्रादिलक्षणम्" सा॰द॰ तत्र रति-मार्गगत्यादिकार्य्यता श्वासनिद्रादिकारणता चोक्ता "रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः" सा॰द॰। "नि-यमितपरिखेदा तच्छिरश्चन्द्रपादैः" कुमा॰।

खेदि पु॰ खिद–अपादाने इन्। १किरणे शिघण्टुः।

खेदिन् त्रि॰खिद–णिच्–णिनि। १दैन्यकारके स्त्रियां ङीप् सा च २अशनपर्णीलतायाम् शब्दच॰।

खेय त्रि॰खन–कर्मणि यत् टेरेत्। १खननीये २परिखायां न॰ अमर। ३सेतुभेदे "सेतुश्च द्विरिधोऽखेयः खेयो बन्ध्यस्तथैव च। तोयप्रवर्त्तनात् खेय"मिता॰नारद॰। सेतुशब्दे विवृतिः। "नाऽखेयः सागरोऽप्यन्यस्तस्य सदृश्यत्यशासिनः" भट्टिः।

खेल चलने अक॰गत्यां सक॰ भ्वा॰पर॰सेट्। खेलति अखे-लीत्। ऋदित् अचिखेलत् त। "माऽस्मिन् खलः खेलतु" नैष॰। खेला खेलनम् खेलः। "लीला-खेलमनुप्रापुर्महोक्षास्तस्य विक्रमम्" रघुः "खे खेल-गामी तमुवाह वाहः" कुमा॰। खेलितम् "स्फुट-कमलोदरखेलितखञ्जनयुग्मम्" गीतगो॰।

खेलन न॰खेल–ल्युट्। १क्रीडायाम् हलायु॰। आधारे ल्युट् ङीप्। २शारिफलके (छक) स्त्री हेम॰। करणे ल्युट्। ३क्रीडासाधने।

खेला विलासे कण्ड्वा॰प॰अक॰सेट्। खेलायति अखेलायीत् खेलाया बभूव आस चकार। "खेलायन्निव नापि सन्तु क्षत्य रतिं वसेत्" भट्टि॰।

खेला स्त्री खेल–भावे अ। क्रीडायाम् अमरः।

खेऽलि स्त्री खे आकाशे अलति अल–इन्। १शरे २बाणे ३सूर्ये ४विहगे च पु॰ ५आकाशगामिमात्रे त्रि॰।

खेव सेवने भ्वा॰आ॰सक॰सेट्। खेवते अखेविष्ट ऋदित् अचि-खेवत् त।

खेसर पु॰स्त्री खे आकाश इव शीघ्रगामित्वात् सरति सृ-ट अलुक् स॰। गर्द्दभात् स्त्रीजाते अश्वात् गर्द्दभीजाते वा अश्वतरे पशुभेदे राजनि॰। [खायति-अखासीत् चखौ।

खै स्थैर्य्ये अक॰ खनने हिंसायाञ्च सक॰ भ्वा॰पर॰ अनिट्।

खैमख पु॰खे आकाशे कर्त्तव्यः मखः स्वार्थे अण्। आकाश-कर्त्तव्ये यज्ञभेदे "खमखाद खैमखाद मध्ये तद्गुरि" अथ॰ ४।१५।१५। खैमखे इत्यत्र खोभयोगात् अन्ने इत्यत्र अग्नाइ इति तद्रूपम्। [कादौ।

खैलायन त्रि॰ खिल+चतुरर्थ्यां पक्षा॰ फक। खिलनिर्वृ-

खोङ्गाह पुंस्त्री। श्वेतपिङ्गलवर्णे अश्वे हेमच॰।

खोट गतिप्रतिघाते भ्वा॰पर॰अक॰सेट्। खोटति अखोटीत्। चुखोट खोटः खोटनम् खोटितम्। ऋदित् चङि ह्रस्वः। अचुखोटत् त। [खोटत् त।

खोट क्षेपे अद॰चुरा॰ उभ॰सक॰ सेट्। खोटयति ते अचु-

खोटि(टी) स्त्री खोट–इन् वा ङीप्। १चतुरनार्य्यां २पाखण्डीद्भवे च शब्दच॰।

खोड गतिप्रतिघाते भ्वा॰पर॰अक॰सेट्। खोडति अखोडीत् चुखोड। ऋदित् णिचि चङ्यह्रस्वः अचुखोडत् त।

खोड क्षेपे अद॰चु॰उभ॰सक॰सेट्। खोडयति ते अचुखोडत् त

खोड त्रि॰ खोड–गतिप्रतिघाते अच्। खञ्जे। (खोंडा)। कडारा॰ कर्म॰वा पूर्व्वनिपातः। बालखोडः खोडबालः।

खोडकशीर्षक न॰खोड क्षेपे ल्युट् तथाभूत शीर्षमस्य कप्। कपिशीर्षके त्रिका॰।

खोर गतिवैकल्ये भ्वा॰ पर॰ अक॰ सेट्। खोरति अखो-रीत्। चुखोर। ऋदित् चङि अह्रस्वः अचुखोरत् त।

खोर त्रि॰ खोर–अच्। खञ्जे हेमच॰ संज्ञायां कन्। खोरक छयानां ज्वरे ज्वरशब्दे विवृतिः।

खोल गतिवैकल्ये भ्वा॰ पर॰ अक॰ सेट। खोलति अखो लीत् चुखोल ऋदित् च अह्रस्वः अचुखोलत् त।

खोल त्रि॰ खोल–अच्। खञ्जे शब्दसा॰।

खोलक पु॰ खोल–अच् संज्ञाया कन्। पाकपात्रभेदे (खोला) २शिरसो भागभेदे (खोपडा)३वल्मीके ४गुवा-कफलकके मेदि॰।

खोलि स्त्री खोल–इन्। तूणे शब्दमा॰। [मङ्गलग्रहे त्रिका॰।

खोल्मुक पु॰ खे आकाशे उल्मुक इव रक्तवर्णत्वात्।

ख्या प्रसिद्धौ दीप्तौ अक॰कथने प्रकाशने ज्ञाने च सक॰ अद॰ पर॰अनिट्। ख्याति अख्यत्। आर्द्धधातुके चक्षिङ आदेशः ख्याधातुस्तु उभ॰। अख्यत् अख्यात-अख्यास्त। चख्यौ चख्ये। ख्यात ख्यातिः ख्यानम्। ख्येयम्। ख्याता

तत्र कथने “अख्यन्मुनिस्तस्य शिवं समाधेः” भट्टिः। कर्म्मणि ख्यायते अख्यायि। “हिरण्यपुरमित्येव ख्यायते नगरं परम्” भा०। खपुरशब्दे दृश्यम्। “विभीषणेन सोऽख्यायि” भट्टिः। “शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति सा ख्याता कुलकोटीः समुद्धरेत्” ति० त०। [२२।१४।

अति+अतिक्रम्य कथने। “परोरुद्रावतिख्यतम्” ऋ० ८। अनु+अनुकर्षणे। “अनु पूर्वाणि चख्ययुर्युगानि” ऋ० ७। ७०।४। “अनुचख्युः अनुलक्षयन्तावनुप्रकाशयेम्” भा०। अनुवादे च। [२१८ पृ० दृश्यम्।

अनु+आ+तात्पर्य्यांशधारणार्थं व्याख्याने अन्वाख्यानशब्दे

अभि+आभिमुख्येन दर्शने “स्तोक सुमना अभिख्यम्” ऋ० ७। ८६।२। “अभिख्यमभिपश्येयम्” भा०। “अभिख्याय तं तिग्मितेन विध्य” ऋ० २।१०।६। “अभिख्याय संवीक्ष्य” भा०। अभितः ख्यातौ च “पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत!” भा० अनु० ८६ अ०। दीप्तौ अक० अभिख्या। “कान्त्यभिख्या तयोरासीत्” रघुः।

अव+अवाङ्प्रेक्षणे। “अव हि ख्यताधिभूत्यादितस्याः” ऋ० ८।४७।२। न्यक्कारेण दर्शने च “यदा मा ख्यत् स मरणम्” ऋ० १०।२७।२। “अवाख्यत् अवाङ्नं न्यक्कृतमहं पश्यामि” भा०।

आ+कथने। ‘आख्याहि मे कोभवानुग्ररूपः” गीता। आख्यातमाख्यातेन क्रियासातत्ये” पा०। “स दृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम्” रघुः। “अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्” याज्ञ०। “सैषा स्तुतिराख्याता” मनु। [१।१।२।४

उद्+आ+उदाहरणे। “दश वीर्य्याण्युदाख्याय” शत० ब्रा०

उप+आ+पुरावृत्तकथने। उपाख्यानम्। उत्तरदानेन व्याख्याने च। “यदुताह त्वया पृष्टो वैराजात् पुरुषादिदम्। यदासीत् तद्‌—उदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः” भाग० २।८।४५।

प्रति+आ+निवारणे “यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद!” भा० व० ५६ अ०। “अभिप्रेतमनापन्नः प्रत्याख्यातुमनीश्वरः” भाग० ३।३१।२५।

वि+आ+विवरणे शब्दान्तरेण तदर्थकथने। “अथातः पुत्रपरिग्रहविधिं व्याख्यास्यामः” शौनकः। “व्याख्यातं कुशलाः केचित् पञ्चानां धारयितं परे” भा० आ० १अ०। विशेषेण कथने च “व्याख्यातरत्नैव शुभं प्रशस्तम्”।

अनु+वि+आ+। उक्तस्य पुनः व्याख्याने “एतं त्वेव ते भूयोऽनुव्याख्यास्यामि” छा० उप०।

उप+वि+आ+उपासनादिविभूतिफलकथने “ओमित्युद्गायति तस्योपव्याख्यानं भवति” छा० उ०। “तस्याक्षरस्योपव्याख्यानमेवस्तुयावत् एवं विभूति एवं फलमित्यादि कथनमुपव्याख्यानम्” भा०। “अस्यैतस्यैवाक्षरस्योपव्याख्यानम्” छा० उ०।

सम्+आ+ सम्यक्कथने। “तिथयः समाख्याताः षोडशैव वरानने!” स्कन्दपु० प्रभासख०।

परि+परितः सर्वतो वा ख्यातौ “शतपुत्र! यथा तत्र मार्गस्य महात्मनः। अयनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः” भा० आ० ५अ०। “अञ्जनेति परिख्याता पत्नी केशरिणः कपे” रामा० सु० २।१४।

सम्+परि+सम्यक् सर्वतः ख्यातौ। “यथावत् संपरिख्यातो गन्धर्वाप्सरसां तथा” भा० आ० ६५ अ०।

प्र+प्रकर्षेण कथने। “वसु देव महर्षीणु प्रख्याताः सप्तभिर्गुणैः” भा० व० ३५ अ०।

वि+विशेषेण ख्यातौ “प्रह्लाद इति विख्यातः प्रह्लादस्तासुजस्तु वः” भा० आ० ६७ अ०।

सम्+सम्यक् कथने “दश पितामहान् सोमपान् संख्याय” शत० ब्रा० ४।३।२। एकादिसंख्याभेदेन गणने “संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप!” भा० व० ७अ०। अन्यादिपूर्वकस्य सम् तदुपसर्गद्योत्यार्थविशिष्टसंख्याने “अतः कार्य्यं प्रसंख्याय संख्यामेकस्य विनिर्दिशेत्” स० सि०। प्रतिसंख्या प्रत्येकसंख्या प्रतीतसंख्या वेत्यर्थः।

ख्यात त्रि० ख्या—क्त। १कथिते २विश्रुते च अमरः। भावे क्त। ४कथने ५घोषणायाम् न०। “तथा ख्यातविधानस्य योगसञ्चार एव च” भा० शा० ५६ अ०। “अज्ञातमभिमन्त्रितदुन्दुभिनादेन प्रकाशकथनम्” नीलक०।

ख्यातगर्हण त्रि० ख्याता गर्हणा निन्दाऽस्य। प्रसिद्धनिन्दे अपगीते अमरः।

ख्यातगर्हित त्रि० गर्हितं गर्हणं भावे क्त ख्यातं गर्हितमस्य। प्रसिद्धनिन्दे जटा०।

ख्याति स्त्री ख्या+क्तिन्। १प्रथायाम्, २प्रसिद्धौ ३कथने च अमरः। ४प्रकाशे ५ज्ञाने च। “ख्यातिश्च सत्त्वपुरुषान्यतयाऽधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्” माघः। “सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन भिन्नो भिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ

भिन्नाविति ज्ञात्वेत्यर्थः प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसारः विवेकात् मुक्तिरिति साङ्ख्याः । अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति वृत्तिरूपान्तां निवर्त्य स्वरूपप्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः" मल्लि० । ज्ञानरूपा ख्यातिश्चतुर्विधा असत्ख्यातिशब्दे ५२१ पृ० दर्शिता । "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" पात०सू०। "यदायं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदस्ततोऽपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारवीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्ममेघनामसमाधिर्भवति"भा० । "मनोमहान् मतिर्ब्रह्मा पूर्बुद्धि ख्यातिरीश्वरः" इति सा०भा० दर्शिते हिरण्यगर्भबुद्धिरूपे इमहत्तत्त्वे च । "स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी" साङ्ख्यप्रवचनभाष्यधृतवाक्यम् ।

**ख्यापक** त्रि० ख्या—ज्ञाने प्रकाशे णिचि ण्वुल् । १ज्ञापके २प्रकाशके "नित्यपुरुषख्यापकान् हेतून्" सुश्रुतः ।

**ख्यापन** न० ख्या—प्रकाशे णिच्—भावे ल्युट् । प्रकाशने "ख्यापनेनानुतापेन तपसा धारणेन च । पापकृन्मुच्यते पापात् तथा दानेन चापदि" मनुः ।

इति वाचस्पत्ये खकारादिशब्दार्थ सङ्कलनम् ।

---

२४६१पृष्ठस्य क्रोड़पत्रम् खड्गिधेनुशब्दस्यपूर्व्वमिदम्

**खड्गकोष** पु० खड्ग इव कुष्णाति कुष—अच् । खड्गाकारपत्रे लताभेदे शब्दचि० । ६त० । ( खाप ) इति ख्याते खड्गावरके काष्ठचर्म्मादिनिर्म्मिते २पदार्थे चत्रार्थे तावन्मात्रोऽपि ।

**खड्गट** पु० खड्गे इव टलति अत्र टल—विक्लवे वा० आधारे क । १इक्कटाख्ये हारा० तस्याग्रस्पर्शे असिवत् पीडाकरत्वात्तथात्वम् ।

**खड्गधेनु** स्त्री खड्गो धेनुरिव यस्याः। छुरिकायाम् तस्या असि[?]विशुलिकात्वात्तथात्वम् । खड्गा गण्डकी धेनुः जातित्वात् पोटेत्यादिना पा० कर्म्मधा० पूर्व्वनिपातः पुंवद्भावश्च । २धेनुरूपगण्डक्यां मेदि० । [लताभेदे शब्द० ।

**खड्गपत्र** पु० खड्ग इव तीक्ष्णं पत्रमस्य । खड्गलताख्ये

**खड्गपरीक्षा** स्त्री खड्गस्य परीक्षा । खड्गस्य रूपघटनादिना शुभाशुभज्ञानोपयोगिन्यां परीक्षायाम् सा च युक्तिकल्पतरौ उक्ता यथा"खड्गरूप तथा जातिर्नेत्रारिष्टे च भूमिका । ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानात्मकं शुभम् । अभिन्ने दृश्यते यादृक् विच्छिद्य घटिते तथा । यदेव दृश्यते चिह्नं तदङ्गं सम्प्रचक्षते । नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते । तेनैव यत् प्रतीत स्यात् तत् जातिरिति गद्यते । अङ्गातिरिक्तं यज्जातिस्तन्नाङ्गात्मनोपसूचकम् । तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदः। अङ्गातिरिक्तं खड्गादेर्यच्छुभत्वाशुभचकम् । तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम् । यः खड्गे जायते शब्दोनखदण्डादिमाहते । स ध्वनिस्तुलना मानम् ज्ञानमङ्गविधन्विदम् । प्रज्ञाद्या निपुणैः खड्गे समाख्यान्तेऽपि कृत्रिमाः । अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति । शतमङ्गानि चत्वारि रूपाणि जातयस्तथा । त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च । भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मत । मानन्तु द्विविधं प्रोक्तमित्येषां सङ्ग्रहो मत"। अभिक्रमसिशब्दे दृश्यम् ।

**खड्गपिधान** न० खड्गोऽपिधीयते आच्छाद्यतेऽनेन अपि+धा—करणे ल्युट् अपेरल्लोप । (खाप) असिकोषे हलायु० । स्वार्थे क । तत्रार्थे हेम० ।

**खड्गपुत्रिका** स्त्री खड्गस्य पुत्रिकेव । छुरिकायां मेदि० ।

**खड्गफल(क)** पु०खड्ग. फलमिव त्वगावृतत्वात् मध्ये यस्य वा कप् । (खाप) इति ख्याते असिपिधाने त्रिका० ।

**खड्गमुद्रा** स्त्री "कनिष्ठानामिके बद्धा स्वाङ्गुष्ठेनैव दृश्यते । शिष्टाङ्गुली तु प्रसृते संश्लिष्टे खड्गमुद्रिका" तन्त्रसारोक्ते शक्तिपूजनाङ्गे मुद्राभेदे ।

**खड्गारीट** पु० खड्गस्यारिरिव रटति गच्छति इट—गतौ क । ( ढाल ) ख्याते चर्म्ममये फलके । खड्गं तद्धाराग्रत्यग्रतमाच्छति आ+ऋ—गतौ कीटन् । असिधाराव्रतधारिणि त्रि० मेदि० । तच्च व्रतमसिधाराव्रतशब्दे ५५० पृ० दर्शितम् ।

**खड्गिक** पु० खड्गं खड्गाकारोऽस्त्यस्य ठन् । महिषीक्षीरफेने तस्य खड्गाकारवत् शुभ्रतया तथात्वम् । खड्गेन चरति ठन् । १यौगिके खड्गयौ च मेदि० ।

## ग

गकारः व्यञ्जनवर्णभेदः तस्योच्चारणस्थानं जिह्वामूलरूपकण्ठदेशः, आभ्यन्तरप्रयत्नः जिह्वामूलस्पर्शः, बाह्यप्रयत्नाः संवारनादघोषा अल्पप्राणश्च। मातृकान्यासेऽस्य दक्षिणमणिबन्धे न्यासः। अस्य ध्येयरूपदेवतादिकं कामधेनुतन्त्रे उक्तं यथा "गकारं परमेशानि! पञ्चदेवात्मकं सदा। निर्गुणं त्रिगुणातीतं निरीहं निर्मलं सदा। पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये!। तरुणादित्यसङ्काशं कुण्डली गन्धास्यकम्"। हृदयस्थद्वादशदलकमलस्य कादिठान्तद्वादशवर्णयुततया अस्य तन्मध्यगत्वम्। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा "गो गौरी गौरव गङ्गा गणेशो कुलेश्वर। गान्धर्वी पञ्चात्मको गाथा गन्धर्वः सर्वगः स्मृतिः। सर्वसिद्धिः प्रभा धूम्रा द्विजास्यः शिवदर्शनः। विश्वात्मा गौ पृथग्रूपा मणिबन्धस्त्रिलोचन। गीतं सरस्वती विद्या भोगिनी नकुलीधरा। तेजस्वती च हृदयं ज्ञानं जालन्धरो जयः"। काव्यादिरचनायामस्य प्रयुक्ततया प्रथमविन्यासे लक्ष्मी फलम्। "क्व योगोवत लक्ष्मीम्" प्रयुक्तं चेह न स्यात् सुखभरणपटुर्वर्गविन्यासयोगः। पद्यादौ गद्यशब्दे वर्णानि च सकले मातृकादौ सभोऽयमिति" वृ॰र॰टी॰ सर्वशेषतयोक्तेः।

ग त्रि॰ गै—क। १गाने २गणेशे ३गन्धर्वे पु॰ एकाक्षरको॰ ४गुरुवर्णे "म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः" वृत्तर॰। "गुरुरेको गकारस्तु लकारो लघुरेकक" छन्दोम॰। "यरामन्तगतौ सतौ" "गौ स्त्री" वृत्तर॰। सुप्युपपदे गमेर्डः। हृद्गः हृदयगामिनि कण्ठगः कण्ठगामिनि इत्याद्यर्थे त्रि॰ "हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः" मनुः। सुप्युपपदे गै—क। सामगः सामगातरि छन्दोगः छन्दोगातरि त्रि॰।

गकार पु॰ ग+स्वरूपे कार। गस्वरूपे वर्णे "गुरुरेको गकारस्तु लकारो लघुरेकक" छन्दो॰।

गगन न॰ गम—युच् गोऽन्तादेशः। अस्य प्रामादिकम् "फाल्गुने गगने फेने णत्वमिच्छन्ति वर्वराः" इत्युक्तेः। १आकाशे २शून्याङ्के। ३लग्नापेक्षया दशमराशौ तस्य उदितराश्यपेक्षया खस्वस्तिकास्थितत्वात् तथात्वं तथा हि पूर्वस्यामेव राशीनामुदयेन तत सप्तमराश्युदये तस्य अस्तम् दशमराशिस्तु तदा खस्वस्तिकस्थित इति तस्य मूर्द्धस्थाकाशस्थितत्वात् तथात्वम्। तद्धर्मादि आकाशशब्दे ५८२ पृ॰ विवृतिः। सुश्रुते देहस्य पाञ्चभौतिकत्वाङ्गीकारेण "आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता चेति" देहस्याकाशधर्मा उक्ताः "पृथिव्यप्तेजोवाय्वाकाशानां समुदायात् द्रव्याभिनिर्वृत्तिः" इत्युपक्रम्य द्रव्यगता गगनजधर्मास्तत्रोक्ता यथा "श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम् तन्मार्दवशौषिर्यलाघवकरम्"। तथाकाशगुणभूयिष्ठं संशमनम्" इत्युपक्रम्य भूतविशेषप्राबल्येन धातुविशेषसंशमनकारित्वं तस्य दर्शितं, सुश्रुतेन यथा "खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम्। वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः" "तस्याकाशगुणभूयिष्ठं मृदुत्वम्" इति च। तस्य धर्मविशेषा भा॰ शा॰ उक्ता यथा "आकाशस्य गुणः शब्दो व्यापित्वम् छिद्रमेव च। अनाश्रयमनालम्बमव्यक्तमविकारिता। अप्रतीघातिता चैव भूतत्वं विकृतानि च"। "गगनं गवाभिर्धृतिमूर्त्तिरिति" माघ॰। "अवोचदेनं गगनस्पृशा (स्वरेण) रघुः। "प्रेक्षिष्यन्ते गगनगतयो नूनमावर्जितदृष्टी" मेघ॰।

गगनगति पु॰ गगने गतिर्यस्य। १देवे २सूर्यादिग्रहे ३आकाशगामिनि त्रि॰। ७त॰। ४आकाशे गतौ स्त्री।

गगनचर त्रि॰ गगने चरति चर—ट। आकाशगामिनि देवसूर्यादिग्रहविहगादौ। तत्र विहगे "निसूदयन् बहुविधमत्स्यजीविनो बुभुक्षितो गगनचरेश्वरः (गरुडः) तदा" भा॰ आ॰ २८ अ॰। [ हेमच॰

गगनध्वज पु॰ गगनस्य ध्वज इव। १मेघे, हारा॰ २सूर्ये

गगनप्रिय पु॰ दैत्यभेदे। "प्रह्लादोऽश्वशिरा कुम्भः संह्लादो गगनप्रियः" हरि॰ ४२ अ॰।

गगनमूर्द्धन् पु॰ दानवभेदे। "तथा गगनमूर्द्धा च वेगवान् केतुमांश्च यः" भा॰ आ॰ ६५ अ॰। दनुवंशकथने। "तथा गगनमूर्द्धा च कुम्भनाभो महोदरः" हरि॰ ३ अ॰।

गगनसद् त्रि॰ गगने सीदति गच्छति सद—क्विप्। गगनगामिनि देवग्रहविहगादौ। "बलिनः इमा वा यदि गगनसदां जन्मकाले नराणाम् प्रज्ञामान्द्यम्" जातकालङ्कार। "विश्वराम् गगनसदः करोत्यहर्षिणीम्" माघ। गगनविहारिनृप्रभृतयोऽप्यत्र स्त्रियां ङीम्।

गगनसिन्धु स्त्री ६त॰। मन्दाकिन्याम् "गगनसिन्धुफेनपटलपाण्डुरस्य" काद॰। गगनसद्यादयोऽप्यत्र।

प्रत्यक्षेण तस्योपलभ्यत्वात् । उपलब्धिप्रकारमग्रे वक्ष्यति । ननु कथं ब्रह्मगुप्तादिभिर्निपुणैरपि नोक्त इति चेत् तदा स्वल्पत्वात् तैर्नोपलब्धः, इदानीं बहुत्वात् साम्प्रतैरुपलब्धः । अत एव तस्य गतिरस्तीत्यवगतम् । यद्येवमनुपलब्धोऽपि सौरसिद्धान्तोक्तत्वादागमप्रामाण्येन भगणपरिध्यादिवत् कथं तैर्नोक्तः । सत्यम् । अत्र गणितस्कन्धे उपपत्तिमानेवागमः प्रमाणम् । तर्हि मन्दोच्चपातभगणा आगमप्रामाण्येनैव कथं तैरुक्ता इति न च वक्तव्यम् । यतो ग्रहाणां मन्दफलाभावस्थानानि प्रत्यक्षेणैवोपलभ्यन्ते । तान्येव मन्दोच्चस्थानानि । यान्येव विक्षेपाभावस्थानानि तान्येव पातस्थानानि । किन्तु तेषां गतिरस्ति नास्ति वेति सन्दिग्धम् । तत्र मन्दोच्चपातानां गतिरस्ति चन्द्रमन्दोच्चपातवदित्यनुमानेन सिद्धा । सा च कियती तदुच्यते । यैर्भगणैरुपलब्धिस्थानानि यानि गणितेनागच्छन्ति तद्भगणसम्भवा वार्षिकी दैनन्दिनी वा गतिर्ज्ञेया । अन्येषं यद्यन्यैरपि भगणैस्तान्येव स्थानान्यागच्छन्ति तदा कतरस्या गतेः प्रामाण्यम् । सत्यम् । तर्हि साम्प्रतोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्तव्या । यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते । ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति । अतएवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्ननाद्यन्तेऽपि काले खिलत्वं न याति । अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्यसिद्धान्तोक्ताः । तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एवायं क्रान्तिपातः । ते गोऽङ्गर्तु नन्दगोचन्द्रा १९९६६९ उत्पद्यन्ते । अथ च ये वा ते वा भगणा भवन्तु । यदा येंऽशा निपुणैरुपलभ्यन्ते तदा स एव क्रान्तिपातः इत्यर्थः । तं विलोमगं क्रान्तिपातं ग्रहे प्रक्षिप्य क्रान्तिः साध्या । इदानीं विक्षेपपातानाह" प्रमि० । "एवं क्रान्तिविमण्डलसपाता क्षेपपाताः स्युः । चन्द्रादीनां व्यस्ताः क्षेपानयने तु ते योज्याः । मन्दस्फुटो द्राक्प्रतिमण्डले हि ग्रहो भ्रमत्यत्र च तस्य पातः । पातेन युक्ताद्गणितागतेन मन्दस्फुटात् खेचरतः शरोऽस्मात् । पातोऽथ वा शीघ्रफलविहीनं कृत्वा स्फुटात् तेन युतात्करोऽतः । चन्द्रस्य कक्षावलये हि पातः स्फुटाद्विधोर्मध्यमपातयुक्तात्" सि० शि० । "तथा क्रान्तिवृत्तविमण्डलयोः सपातः क्षेपपातस्तं ग्रहे प्रक्षिप्य क्षेपः साध्यः । एतदुक्तं भवति क्रान्तिपातः प्रसिद्धः । यथा तं ग्रहे प्रक्षिप्य क्रान्तिः साध्यते । एवं विक्षेपपातं ग्रहे प्रक्षिप्य क्षेपः साध्य इत्यर्थः । अथ विक्षेपपातो मन्दस्फुटे यत् प्रक्षिप्यते तत्कारणमाह मन्दस्फुट इति । यतः शीघ्रप्रतिमण्डले मन्दस्फुटगत्या ग्रहो भ्रमति । तत्र च वृत्ते पातोऽतो गणितागतं पातं मन्दस्फुटे प्रक्षिप्य क्षेपः साध्यते । शेषं स्पष्टम् । इदानीं ज्ञशुक्रयोर्विशेषमाह" प्रमि० "ये चात्र पातभगणाः पठिता ज्ञभृग्वोस्ते शीघ्रकेन्द्रभगणैरधिका यतः स्युः । स्वल्पाः पुरार्थमुदिताश्चलकेन्द्रयुक्तौ पातौ तयोः पठितचक्रभवौ विधेयौ । चलाद्विशोध्यं किल केन्द्रसिद्ध्यै केन्द्रे सपाते द्युचरस्तु योज्यः । अतश्चलात् पातयुताज्ज्ञभृग्वोः सुधीभिराद्यैः शरसिद्धिरुक्ता । स्फुटोनशीघ्रोच्चयुतौ स्फुटौ तयोः पातौ भगोले स्फुट एव पातः" सि० शि० । "ननु ज्ञशुक्रयोः शीघ्रोच्चपातयुतं केन्द्रं कृत्वा यो विक्षेप आनीतः स शीघ्रोच्चस्थान एव भवितुमर्हति । न ग्रहस्थाने । यतो ग्रहोऽन्यत्र वर्तते । अत इदमनुपपन्नमिव प्रतिभाति । तथा च ब्रह्मसिद्धान्तभाष्ये "ज्ञशुक्रयोः शीघ्रोच्चस्थाने यावान् विक्षेपस्तावानेव यत्रतत्रस्थस्यापि ग्रहस्य भवति । अत्रोपलब्धिरेव वासना नान्यत् कारणं वक्तुं शक्यत इति" । चतुर्वेदेनाप्यनध्यवसायोऽत्र कृतः । सत्यम् । अत्रोच्यते । येऽत्र ज्ञशुक्रयोः पातभगणाः पठितास्ते शीघ्रकेन्द्रभगणैर्युताः सन्तस्तद्भगणा भवन्ति । तथा च माधवीये सिद्धान्तचूडामणौ पठिता "अतोऽल्पभगणभवः पातः स्वशीघ्रकेन्द्रेण युतः कार्यः" । शीघ्रोच्चाद्ग्रहे शोधिते शीघ्रकेन्द्रम् । तस्मिन् सपाते क्षेपकेन्द्रकरणार्थं ग्रहः क्षेप्यः । अतस्तुल्यशोध्यक्षेपयोर्नाशे कृते शीघ्रोच्चपातयोग एवावशिष्यत इत्युपपन्नम् ।

किञ्च मन्दस्फुटोनं शीघ्रोच्चं प्रतिमण्डले चलकेन्द्रम् तत्पाते क्षेप्तुं युज्यते । एवं कृते सति विक्षेपकेन्द्रं मन्दफलेनान्तरितं स्यात् । ग्रहच्छायाधिकारे "सितज्ञपातौ स्फुटौ स्वचलकेन्द्रयुक्तौ" इत्यत्र मन्दस्फुटोनं शीघ्रोच्चं शीघ्रकेन्द्रपाते क्षिप्तम् । अतश्च मन्दफलान्तरमङ्गीकृतमित्यर्थः इतरकेन्द्रस्यानुपपत्तेः । अतो मन्दफलं पातेऽव्यस्तं देयम् । यतोऽनुपातसिद्धं चलकेन्द्रं मध्यग्रहोनशीघ्रोच्चतुल्यं भवति । यत्तु भगोले क्रान्तिवृत्तं तत् कक्षावृत्तम् । तत्र यद्विमण्डलं तत्र स्फुटग्रहः । तत्

विभक्ता, कलाश्च षष्टिविकलाभिर्विभक्तास्तेन ३६०अंशैः, २१६०० कलाभिः, १२९६०००विकलाभिर्विभक्तं भचक्रम् । भचक्रद्वादशविभागो राशिरित्युच्यते राशयश्च मेषादयः द्वादशमिताः । तेनैकैकराशौ त्रिंशदंशाः, १८०० कलाः १०८००विकलाः सन्ति । मेषादिराशयोऽपि अश्विन्यादि २७ नक्षत्रात्मकाः । तेन सपादनक्षत्रे च एकैकोराशिः प्रतिनक्षत्रं च १३।२०। विंशतिकलाधिकास्त्रयोदश अंशाः सन्ति । तथाहि अश्विनी १३।२० भरणी १३।२० कृत्तिकाद्यपदश्च ३।२० मेषः । कृत्तिकान्त्यपादत्रयम् १० । रोहिणी १३।२०। मृगशिराद्यार्द्धश्च ६।४०। वृषः । मृगशिरान्त्यार्द्धम् ६।४०आर्द्रा १३।२०। पुनर्वस्वाद्यपादत्रयं च १० । मिथुनम् । पुनर्वस्वन्त्यपादः ३।२० । पुष्यम् १३।२० अश्लेषा च १३।२० । कर्कः । मघा १३।२०। पूर्वफल्गुनी १३।२०। उत्तरफाल्गुन्याद्यपादश्च ३।२०। सिंहः । उत्तरफाल्गुन्यन्त्यपादत्रयं १० । हस्तः १३।२० । चित्राद्यार्द्धश्च ६।४० । कन्या । चित्रान्त्यार्द्धं ६।४०। स्वातिः १३।२०। विशाखाद्यपादत्रयश्च १०। तुला । विशाखान्त्यपादः ३।२० अनुराधा १३।२०। ज्येष्ठा च १३।२० । वृश्चिकः । मूलं १३।२० । पूर्वाषाढा १३।२० उत्तराषाढाद्यपादश्च ३।२०। धनुः । उत्तराषाढान्त्यपादत्रयं १० । श्रवणं १३।२० । धनिष्ठाद्यार्द्धश्च ६।४० । मकरः । धनिष्ठान्त्यार्द्धं ६।४० । शतभिषा १३।२० । पूर्वभाद्रपदाद्यपादत्रयश्च १०। कुम्भः । पूर्वभाद्रपदान्त्यपाद ३।२० । उत्तरभाद्रपदा १३।२० रेवती च १३।२० मीनः । उत्तराषाढायाः शेषपादश्रवणाद्यपञ्चदशघटिकाचतुष्टयस्याभिजित्संज्ञा कैश्चित् कार्य्यार्था । तस्य स्थानादि ९८७ पृ० उक्तम् । एते च राशयः तत्र याश्विन्यादयश्च यथा पूर्वमवस्थिताः तेषां स्वरूपमस्त्रेयागन्द्रे ४९९ पृ०, विक्षेपा ध्रुवकाश्च २४२२ पृ० दर्शिताः । वक्ष्यमाणभचक्रयोजमानि द्वादशधा विभक्तानि मेषादिराशीनां स्थानमानयोजनानि । २७विभक्तानि अश्विन्यादिनक्षत्रादीना स्थानमानयोजनानि । ३६० विभक्तानि अंशस्थानमानयोजनानि । २१६०० विभक्तानि कलास्थानमानयोजनानि । भचक्रस्य शून्याद्यूर्द्धस्थत्वात् तदाश्रितनक्षत्राणामप्यूर्द्धस्थत्वम् । भचक्रवत् भूगोलस्य तावदंशकलाद्यात्मकतया भूगोलांशकलादिस्थानसंलग्नसूत्रैकाग्रस्य निवेशने नक्षत्रकक्ष्यासंशकलाद्यात्मकस्थानेषु सूत्राग्रान्तरस्य निवेशने च तन्मध्यस्थानां शून्यादिकलायामयकलादिस्थानविभाग. सर्वकक्षाणामंशादिस्थाना धःस्थतया तत्तद्राशितरंशकलाविकलाद्यात्मकत्वं गौणम् ।

चन्द्रकक्षातोऽधः सिद्धविद्याधरघनाः क्रमेणाधोधःस्थिताः । ते च भूगोलात् द्वादशयोजनपर्य्यन्तमूर्द्धगामिनि आवहनाम्नि भूवायौ स्थितत्वात् प्रवहवाय्वसंस्थानाभावाच्च न राशिचक्रगत्या पश्चात् गच्छन्ति । तदधः भकक्षायाः समानान्तरालाकाशप्रदेशरूपकेन्द्रस्थाने भूगोलः स्थितः । भूगोलशब्दे विवृतिः । संक्षेपेणेह किञ्चिदुच्यते । स च ब्रह्मणो धारणात्मकशक्त्याश्रयत्वात् निराधार एवाकाशे स्थितः । तस्य च स्थिरत्वं भचक्रस्यैव चलत्वं च परमतनिरासेन २४२२ पृ० समर्थितम् । भूगोलमध्यगतो मेरुः स च भूगोलादूर्द्धाधोनिर्गतः । तत्र ऊर्द्धस्थे मेरौ देवानां वासः, अधःस्थे चासुराणाम् । स च भूगोलः देवासुरभागतया द्विधा विभक्तः तद्विभाजकश्च महार्णव एव । स च पृथिव्या मेखलेव चतुर्दिक्षु वेष्टनाकारेण स्थितः । मेरुमध्यात् चतुर्दिक्षु तुल्यभागेषु ९० अंशेषु समुद्रद्वीपमध्ये लङ्कादीनि भूवृत्तपाद १२४६ योजनान्तरदेशस्थितानि चत्वारि पुराणि । यथा पूर्वस्यां भद्राश्ववर्षे यमकोटी । दक्षिणस्यां भारतवर्षे लङ्का । पश्चिमायां केतुमालवर्षे रोमकपुरी । उत्तरस्यां कुरुवर्षे सिद्धपुरी । नाभ्यः पुरीभ्यः (१२५६) योजनान्तरे देवाश्रयः मेरुरुत्तरतः स्थितः । असुराश्रयश्च तथैव दक्षिणतः । विषुवस्थः सूर्य्यः तासामुपरिगो याति । तासु च विषुवच्छायापातो नास्ति न वा तदपेक्षयान्यत्राक्षस्योन्नतिः तत्रैव भचक्रस्य सर्व्वोन्नतत्वात् इत्यतस्तासां निरक्षेति संज्ञा मेर्वोरुपरिस्थितौ ध्रुवतारे, मूर्द्धस्थिते निरक्षपुरीषु च ते क्षितिसंलग्ने दृश्येते । ततस्थानात् उत्तरा गच्छतः क्रमशः उत्तरध्रुवः क्षितिजवृत्तादुन्नतो भवति दक्षिणध्रुवश्च क्षितिमध्यमविष्टो भवति । एवं दक्षिणां गच्छतः क्रमशः दक्षिणध्रुवस्योन्नतिः उत्तरध्रुवस्य नतत्वात् भूवृत्तेनाच्छादनम् । भूवृत्तस्य ३६० अंशात्मकत्वेन निरक्षस्थानेभ्यः पादान्तरितस्थानस्थितत्वेन मेरौ ९० अंशा अक्षांशाः । तदन्तरदेशेषु त्रैराशिकेनानुपातात् अक्षांशा ज्ञेयाः । यदि ९० अंशैः १२५६ योजनानि तदा १अंशे किमिति । किञ्चिन्यून १४ योजनैः एकोऽक्षांशः । सौम्ययाम्ययोः सूर्यस्य भूवृत्तपञ्चदशांश एव निरक्षस्थानात् परमक्रान्त्यंशाः २४ । तेन निरक्षस्थानात् १४ गुणिते २४ अंशे ३३६ एतद्योजनमितस्थानपर्य्यन्तं सूर्य्यस्य तयोर्दिशोरुपरिगमनम् । अवन्ती च लङ्कातः क्षितिषोडशभागे ३१४ योजनान्तरे स्थिता । तेन तत्र २२।१/२ अक्षांशाः ।